( एवं च ' तुथो वो विश्ववेदा विभजतु ' इति मन्त्रवर्णो न पाक्षिको भवति । यत्र तु एकमेव द्रव्यं दक्षिणा, यथा ' धेनुर्दक्षिणा ' इत्यादि, तत्र अविभज्यैव दानं गत्यभावात् । द्रव्यभेदे तु विभज्यैवेति ) ।

**परिक्रयाच्च लोकवत् । ५१ ॥**

**भाष्यम्**— अस्ति च परिक्रयार्थं दानम्, न धर्ममात्रम् । परिक्रयार्थे च भर्त्रा भृत्येन सह पणितव्यम् । यदि च परिषदं प्रति उच्येत, परिषच्च विभजेत, न स्वामिना सह अपणिष्यत । तत्र परिक्रय एव नाभविष्यत् । यथा लोके काष्ठवाहप्रभृतिभ्यो यद्दीयते, तत्र काष्ठवाहाः स्वामिना सह पणन्ते । तेभ्यः स्वामी विभज्य निर्दिशति, इदं तुभ्यमिदं तुभ्यमिति । तद्वदिहापि द्रष्टव्यम् । तस्माद्विभज्य दक्षिणा दातव्येति ।

**विभागं चापि दर्शयति । ५२ ॥**

**भाष्यम्**— अपिच दर्शयति विभागम्, यद् विभागाभिधायिनं मन्त्रमामनन्ति । ' तुथो वो विश्ववेदा विभजतु ' इति । ' कृष्णाजिनेन वित्रास्य दक्षिणां ददाति ' इति । तथा ' अग्नीधेऽग्रे ददाति, अग्निमुखानेव पितॄन् प्रीणाति । ब्रह्मणे ददाति, प्रस्तुतेभ्यो ददाति प्रसृत्यै । होत्रे ददाति । नेष्ट्रे ददाति । हविर्धाने आसीनेभ्य अध्वर्युभ्यो ददाति । उद्गातृभ्यो ददाति । अन्तःसदसि आसीनेभ्यो यथाश्रद्धं प्रासर्पकेभ्यो ददाति' इति । एवं विभागदर्शनमुपपद्यते । तस्माद्विभज्य दातव्यमिति ।

**शा**— **' ऋत्विक्परिक्रयार्थेन दानमेतदिति स्थितम् ( १०।२।८।२२–२८ ) । तेन तेषां प्रधानत्वाद् बहुत्वं न विवक्षितम् ॥ '** अतः प्रतिप्रधानावृत्तेः एकैकस्यैव दानम् ।

**सोम**— पूर्वेणैव विशेषचिन्तनात् संगतिः । **सूत्रार्थस्तु**— तत्र गवादिषु दानं विभागेन स्यात् प्रदानानाम् ऋत्विग्भ्यो देयानां विभागानां भिन्नत्वात् विभज्य दानं विना तेनतेन ऋत्विजा तस्यतस्य भागस्य संबन्धयितुमशक्यत्वात् इति । अत्र ( मूले ) परिषदः उद्देशेन क्रियमाणस्य दानत्वं मुख्यमेव अङ्गीकृत्य तस्य आनत्यर्थत्वम् ऋत्विगुपयोगक्षमत्वं विना न निर्वहति इति तन्निर्वाहाय प्रत्येकं दानमुपपादितम् । **प्रभाकरैस्तु** परोपकारक्षमत्वाभावेन परस्वत्वापत्तिपर्यन्तत्वाभावात् परिषदि दानं त्यागमात्रम्, न तु मुख्यं दानमित्युक्तम् ।

**वि**— ' गोदाने विहिते स्वेच्छा नियतिर्वाऽन्तिमेऽपि किम् । अविभागो विभागो वा, नियमानुक्तितोऽग्रिमः । अविभागो बहुत्वोक्तेर्, बहुत्वं न विवक्षितम् । विभागे स्वामिभिः स्वत्वसिद्धेर्लिङ्गं च दृश्यते ॥ ' ' तुथो वो विश्ववेदा विभजतु ' इति मन्त्रे विभागलिङ्गम् । ( भो गावः, वः युष्मान् तुथो नाम देवः विभजतु इति मन्त्रार्थः ) ।

**भाट्ट**— सेयं दक्षिणा ऋत्विग्भ्यो दीयमाना विभज्य देया, न वेति चिन्तायाम् । ' ऋत्विग्भ्यो दक्षिणां ददाति ' इति दानाङ्गत्वेन ऋत्विग्बहुत्वस्य विवक्षितत्वात् समुदितेभ्यः अविभज्यैव देया । न चाविभज्यदाने परस्वत्वानुत्पत्तेर्दानपदार्थानापत्तिः ' धेनुर्दक्षिणा ' इत्यादौ अविभाज्यद्रव्यैकत्वे संसृष्टपरस्वत्वोत्पत्तिवत् इहापि तथोत्पत्तिसंभवेन तदुपपत्तेः । अतस्तद्वदेव तत्कर्तृकविभागेनैव प्रत्येकस्वत्वोत्पत्तावपि न क्षतिः । वस्तुतस्तु ऋत्विजामिह उद्देश्यत्वेन तद्गतबहुत्वसाहित्ययोः अविवक्षितत्वात् ' पृषदाज्येनानूयाजान् यजति ' इतिवत् प्रतिप्रधानं गुणवृत्तिन्यायेन प्रत्येकमेकैकस्य समस्तदक्षिणासंबन्धावगतेः न विभागप्रसक्तिः । इति प्राप्ते, नात्र ऋत्विजां चतुर्थ्या भावत्वरूपोद्देश्यत्वावगतिः, तस्याः संप्रदानकारकवाचित्वेन लक्षणायां प्रमाणाभावात् । अतो ' वेदविदे गां ददाति ' इत्यत्र गोसंप्रदानोभयविशिष्टदानस्य स्वर्गार्थत्ववत् ऋत्विग्द्रव्योभयविशिष्टदक्षिणादानस्य वैमृधादिवत् पदान्तरकल्पनया ऋत्विगानमनार्थत्वप्रतीतेः ऋत्विग्गतबहुत्वसाहित्यादेर्विवक्षितत्वान्न प्रत्येकं समस्तदक्षिणाऽऽवृत्तिः । अत एवोभयत्रापि गवादिद्रव्यस्य द्विकर्मकत्वमिया सक्तुवत् करणत्वलक्षणैव । किञ्च, दक्षिणाया वाक्यान्तरे जौहवौपभृदादिवत् उत्पन्नाया एकस्या एव प्रयाजाद्युद्देशेनेव ऋत्विगुद्देशेन विनियोगात् अवयवश एव प्रत्येकान्वयः इति न प्रत्येकं समस्तदक्षिणाऽऽवृत्तिः । अतः समुदितेभ्य एव ऋत्विग्भ्यः सर्वत्र दक्षिणादानम् । अत एव अन्वाहार्योऽपि अविभज्यैव दीयते । नहि ' धेनुर्दक्षिणा ' इत्यादौ एकधेन्वादौ अविभाज्यत्ववत् अन्वाहार्यादौ

तदस्ति। येन अन्वाहार्यविभागे समुदितत्वयुक्तिर्न पुरस्क्रियेत। एवं च सर्वत्र बहुवचनबलात् समुदितेभ्य एव दाने प्रसक्ते 'तुथो वो विश्ववेदा विभजतु' इति मन्त्रवर्णबलात् 'अग्नीधे ददाति, होत्रे उद्गात्रे' इत्यादिप्रमाणबलाच्च गमकसत्त्वे विभज्यैव दानम्।

**मण्डन**— 'विभज्य दानं खलु दक्षिणायाः।'

**शंकर**— 'विभज्य दक्षिणा देया।'

**ज्योतिष्टोमे द्वादशशतदक्षिणायाः अर्धिनः तृतीयिनः पादिनः इति समाख्याऽनुरोधेन विभागः कर्तव्यः॥**

**समं स्यादश्रुतत्वात्। १०।३।१३।५३॥**

**भाष्यम्**— ज्योतिष्टोमे समाम्नायते 'गौश्चाश्वश्चाश्वतरश्च' इति। तत्रायमर्थः समधिगतः विभज्य दातव्यमिति। इदमिदानीं सांशयिकं किं समो विभागः, उत कर्मकृतं वैषम्यम्, उत शब्दकृतमिति। किं प्राप्तम्? समो भागः स्यात्, अश्रुतित्वाद्विशेषस्य। यत्र विशेषो न श्रूयते, तत्र समो विभागो भवितुमर्हति। कथमिव? एकस्मै सर्वं दातव्यं प्राप्नोति, यदि अपरस्मै दातव्यं न भवति। तत्र यावति एकस्मै दीयमाने नान्यः संविभज्यते, तावत्तस्मै एकस्मै न दातव्यम्। अविशिष्टं दातव्यम्। एवमेकैकस्मै। तस्मात् विशेषाश्रवणात् समं देयमिति।

**टुप्**— समं स्यादश्रुतत्वात् इति प्रसक्तानुप्रसक्तेन विभागोपोद्बलकं च।

**अपिवा कर्मवैषम्यात्। ५४॥**

**भाष्यम्**— अपिवेति पक्षव्यावृत्तिः। न समं स्यात्। कर्मकृतं वैषम्यं भवेत्। यो बहु कर्म करोति, तस्मै बह्वी भृतिर्दीयते। तस्मात् कर्मानुरूप्येण वैषम्यमिति।

**अतुल्याः स्युः परिक्रये, विषमाऽऽख्या विधिश्रुतौ, परिक्रयान्न कर्मण्युपपद्यते, दर्शनाद् विशेषस्य तथाऽभ्युदये। ५५॥**

**भाष्यम्**—न चैतदस्ति कर्मकृतं वैषम्यमिति। किं तर्हि? उपकारकृतम्। स उपकारः श्रुत्या विज्ञायते। तस्माच्छ्रुतिकृतं वैषम्यम्। तेन अतुल्याः परिक्रये भवेयुः। विषमा हि एषामाख्या। के चिदर्धिनः, के चित् तृतीयिनः, के चित् पादिनः। येषामर्धं ते अर्धिनः। कथं च तेषामर्धं भवति। यदि तेभ्योऽर्धं दीयते। एवं तृतीयिनः पादिन इति च दीक्षाविधिश्रुतौ समाख्यायन्ते। सा परिक्रयात् कर्मकृते वैषम्ये नोपपद्यते। क्व पुनरयं विशेषो दृश्यते। अभ्युदये। अभ्युदयः इति अभ्युदयफलम्। ऋद्धिफलं द्वादशाहं ब्रूमः। 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारम्, ततो होतारम्। ततस्तं प्रतिप्रस्थाता दीक्षयित्वा अर्धिनो दीक्षयति, ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारमुद्गातुः, मैत्रावरुणं होतुः। ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति, अग्नीधं ब्रह्मणः, प्रतिहर्तारमुद्गातुः, अच्छावाकं होतुः। ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति, पोतारं ब्रह्मणः, सुब्रह्मण्यमुद्गातुः, ग्रावस्तुतं होतुः। ततस्तमन्यो दीक्षयति, ब्रह्मचारी वाऽऽचार्यप्रेषितः इति अर्धिनः, तृतीयिनः, पादिनः इति द्वादशाहे अनुवादः। यदि प्रकृतौ यथासमाख्यम् अमीषामिमे भागाः, ततो द्वादशाहे दर्शनमुपपद्यते। तस्मात् अर्ध्यादिभिः समाख्यानात् समाख्याश्रुतिकृतं वैषम्यं भवितुमर्हतीति।

**सोम**— पूर्वाधिकरणे विभागे प्रतिपादिते तन्निर्वाहकत्वेन इदं चिन्त्यते इति संगतिः।

**वि**— 'स विभागः समो नो वा, विशेषाश्रवणात् समः। वैषम्यं स्याद् यथाऽऽयासम्, मैवं तत् स्यात् समाख्यया॥'

**भाट्ट**— विभागोऽपि असति नियामके सर्वत्र समानः एव। प्रयासानुरूप्यादिनियामकसत्त्वे तदानुरूप्येण। सोमे तु सत्रस्थदीक्षाक्रमविधायके वाक्ये 'अर्धिनस्तृतीयिनः पादिनः' इति श्रुतसमाख्याबलकल्प्यविध्यन्तरेण प्रतिप्रस्थात्रादिसाधारण्येन अर्ध्यादिसमाख्यायाः याज्ञिकप्रसिद्धत्वाच्च महर्त्विजां यो विभागः (१२-१२ गावः), तदर्धं प्रतिप्रस्थात्रादीनामर्धिनाम् (६-६ गावः), तृतीयांशः तृतीयिनां नेष्ट्रादीनाम् (४-४ गावः), तच्चतुर्थांशः (३-३ गावः) पादिनामुन्नेत्रादीनामित्येवं क्रमेण बोध्यः। अयं च द्वादशशता-

दावेव, तत्रैव विभागविधानात् । अश्वादौ तु समुदितेभ्यो दानम्, तैः स्वेच्छया साम्येन प्रयासानुरूप्येण वा विभागः कार्यः । एवमन्वाहार्यादावपि । अधिकरणद्वयेन विभागकथनं च वक्ष्यमाणाध्वर्य्वादिभागबाधोपयोगितया ।

**मण्डन**— ' भागं समाख्याऽनुगुणं प्रकुर्यात् । '

**शंकर**— ' स विभागोऽसमो मतः । '

* ज्योतिष्टोमे धाराग्रहाः । ' धारया गृह्णाति ' । इमे ग्रहा ऐन्द्रवायवादयः । **वि. १०।५।१७.**

**ज्योतिष्टोमे धिष्ण्यविहरणम् आग्नीध्रीयादेव ॥**

' अङ्गारैर्द्वे सवने विहरन्ति ' इत्यादिना विहितं धिष्ण्यानां विहरणमौत्तरवेदिकादेव स्यात् । तदग्नीनामपि होमार्थत्वात् । **इति प्राप्ते**, ' अग्नीद् धिष्ण्यान् विहरति ' इति नियमनादाग्नीध्रीयस्यापि आहवनीयैकदेशत्वेन होमसंयोगोपपत्तेः तत एव विहरणम् । **संकर्ष. ३।२।१५.**

* ज्योतिष्टोमे नदीतरणार्थो मन्त्रः 'देवीरापः ' इति । यदा अनेकस्रोतसं नदीं तरति, तदा मन्त्रस्य नावृत्तिः आदौ एव सकृन्मन्त्रः । **भा. ११।४।१७।५० (५३).** * ज्योतिष्टोमे नवनीतेनाभ्यङ्गो दीक्षायाम् । **वि. १०।४।७**, * ज्योतिष्टोमे ' पदे जुहोति ' ' वर्त्मनि जुहोति ' । अनारभ्य ' यदाहवनीये जुहोति, तेन सोऽस्याभीष्टः प्रीतः ' । राजसूये ' वल्मीकवपायामुत्सृज्य जुहोति ' । अत्र आहवनीयः पदादिभिर्विशेषविहितैः बाध्यते । आहवनीयः सामान्यः । १०।८।८, * ज्योतिष्टोमे पयोव्रतम् अपरत्रात्रादौ अजीर्णसंभवे न कर्तव्यम् । ६।८।८, * ज्योतिष्टोमे ' पयोव्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य ' इति । १०।४।१ । क्रतुधर्मोऽयम्, न पुरुषस्य । **भा. ४।३।४।८-९** । इदं नियमादृष्टाय । तेन अन्यत् न भक्षणीयम् । **वि. ६।८।७.** * ज्योतिष्टोमे पशुः अग्नीषोमीयः । तस्य पशोः हृदयादिभिरवदानैः इज्या प्रयोजिका, न तु शकृत्संप्रक्षाधः लोहितनिरसनं वा । **भा. ४।१।१२।२७**, * ज्योतिष्टोमे पशवः अग्नीषोमीयसवनीयानुबन्ध्याः । ११।३।३।३-४, * ज्योतिष्टोमे पशूनां यूपः श्रुतः खादिरे बध्नाति, पालाशे बध्नाति, रौहितके बध्नाति इति । अग्नीषोमीये तावत् प्रयोगवचनेन गृह्यते यूपः । उत्तरयोरपि चोदकेन प्राप्यते । ११।३।३।३. * ज्योतिष्टोमे पश्वर्था अनुयाजाः आग्निमारुतशस्त्रोत्तरम् इति कालार्थः संयोगः । **वि. ४।३।१५**, * ज्योतिष्टोमे पशुत्रये यूपः तन्त्रम् । यूपन्यायः । ११।३।३. * ज्योतिष्टोमे पशुत्रये यूपसंस्कारास्तन्त्रम् । **भा. ११।३।४।५-७**, * ज्योतिष्टोमे पशुत्रये स्वरुस्तन्तम् । ११।३।५।८-१२, * ज्योतिष्टोमे पशुपुरोडाशः अदृष्टार्थः न तु देवतासंस्कारार्थः । ४।१।७। १८-२०, * ज्योतिष्टोमे पशुपुरोडाशस्य श्रपणं शालामुखीये, न शामित्रे । १२।१।५।१२, * ज्योतिष्टोमे पशुपुरोडाशस्य सवनीयपुरोडाशानां सौम्यचरोश्च निर्वापः हविर्धानशकटाभ्यां भिन्ने शकटे कर्तव्यः । न तु हविर्धानशकटयोरन्यतरस्मिन् । १२।१।७।१४-१६, * ज्योतिष्टोमे पात्नीवतग्रहशेषे भक्ष्यमाणे इन्द्रवाय्वादयः पूर्वदेवता भक्षमन्त्रे नोपलक्षणीयाः । ३।२।१३। ३३-३४. * ज्योतिष्टोमे पात्नीवतभक्षमन्त्रे त्वष्टा नोपलक्षणीयः । कृत्वाचिन्ता । **वि. ३।२।१४.** * ज्योतिष्टोमे पात्नीवतभक्षमन्त्रे पत्नीवानग्निरेवोपलक्षयितव्यः, न तु याज्यामन्त्रस्थाः त्रयस्त्रिंशद्देवताः । **भा. ३।२।१५।३७.** * ज्योतिष्टोमे पाशुकहविष्कृदाह्वानेन सवनीयपुरोडाशादिषु हविष्कृदाह्वानस्य प्रसङ्गसिद्धिः । कृत्वाचिन्ता । **वि. १२।२।३.** * ज्योतिष्टोमे पुनरभ्युन्नीतचमसेषु इन्द्रस्य मित्रावरुणादीनां चेति सर्वेषामुपलक्षणं भक्षमन्त्रे कर्तव्यम्, न तु इन्द्रस्य अनुपलक्षणम् । **भा. ३।२।१२।३०-३१**, * ज्योतिष्टोमे ' पुरोडाशशकलम् ऐन्द्रवायवस्य पात्रे निदधाति, धाना आश्विनपात्रे, पयस्यां मैत्रावरुणपात्रे ' इति । सवनीयपुरोडाशेषु विद्यमानानामेव अयम् एकदेशस्य संयोगो नान्यस्य । ३।८।१८।३३.

**ज्योतिष्टोमे पूर्वयोः सवनयोः आज्येन सोमेन वा व्याघारणम् ॥**

' तेषां ये नेदिष्ठं पर्यविशन्ते सोमपीथं प्राप्नुवन् आहवनीय आग्नीध्रीयो होत्रीयो मार्जालीयः ' इति प्रकृत्य ' तस्मात्तेषु जुह्वति ' इति विधानात् तेषामेव सोमेन व्याघारणमन्येषां त्वाज्येन । **इति प्राप्ते**, ' अतिहाय

वषट् करोति वि ह्येते सोमपीथेन ऋध्यन्ते' इति निन्दाऽर्थवादेन सोमनिषेधस्यापि उन्नयनादाज्येन सह विकल्पः। तृतीयसवने त्वाज्यविधिर्नियमार्थः। संकर्ष. ३।२।१८.

* ज्योतिष्टोमे पृष्ठानि सप्तदशानि इति पृष्ठशब्दः नामधेयम्, न गुणविधिः। भा. १।४।२।३. * ज्योतिष्टोमे 'प्रउगं शंसति, निष्केवल्यं शंसति, आज्यैः स्तुवते, पृष्ठैः स्तुवते' इति स्तुतशस्त्रयोः प्रधानकर्मत्वमेव, न गुणकर्मत्वम्। प्रधानकर्मत्वेऽपि अपूर्वजनकत्वमस्त्येव। स्तुतशस्त्राधिकरणम्। वि. २।१।५. * ज्योतिष्टोमे प्रतिपदोः 'युवं हि स्थः, एते असृग्रम्' इत्यनयोः यजमानद्वित्वबहुत्वसंबन्धिन्योः कुलाययागे सत्रे च उत्कर्षः। द्वित्वबहुत्वाधिकरणम्। भा. ३।३।९। १७-१९. * ज्योतिष्टोमे प्रवर्ग्यं प्रकृत्य श्रूयते 'न प्रथमयज्ञे प्रवृञ्ज्यात्' इति। अयं प्रवर्ग्यनिषेधः अनूचानव्यतिरिक्तकर्तृके अग्निष्टोमप्रथमप्रयोगे एव। प्रथमयज्ञः अग्निष्टोमः। 'अग्निष्टोमे प्रवृणक्ति' इति विधिः। विधिनिषेधयोरधिकारिभेदेन व्यवस्था। तथा च श्रूयते 'कामं तु योऽनूचानः स्यात् तस्य प्रवृञ्ज्यात्' इति। वि. ३।३।१७, * ज्योतिष्टोमे प्रातःसवने ऐन्द्रवायवादयो ग्रहाः, माध्यंदिने मरुत्वतीयादयः, तृतीयसवने च आदित्यादयः। ग्रहधर्मास्तु सवनत्रयेऽपि कर्तव्याः। ३।६।९, * ज्योतिष्टोमे प्रातःसवने गायत्रं साम। बहिष्पवमाने त्रिवृत् स्तोमः, आज्येषु पञ्चदशः स्तोमः, ऐन्द्रवायवादयो ग्रहाः। माध्यंदिने च पवमानसूक्तानि त्रीणि, तदुत्तरं पृष्ठस्तोत्राणि चत्वारि। तेषु सप्तदशः स्तोमः। १।४।३, * ज्योतिष्टोमे प्रातःसवने बहिष्पवमानेन स्तोष्यमाणाः ऋत्विजः शालायाः बहिः प्रसर्पन्ति 'अध्वर्युं प्रस्तोता संतनुयात्, प्रस्तोतारमुद्गाता, उद्गातारं प्रतिहर्ता, प्रतिहर्तारं ब्रह्मा, ब्रह्माणं यजमानः, यजमानं प्रशास्ता' इति पुरतो गन्तुः कच्छं गृहीत्वैव (इयं तु याज्ञिकानां रूढिः। स्पर्श एव तु विहितः) पृष्ठतोऽन्यो गच्छति इति पिपीलिकापङ्क्तिवत् प्रसर्पणम्। तत्रापच्छेदः स्पर्शनाशः विच्छेदः न केनापि कर्तव्यः। ६।५।१७. * ज्योतिष्टोमे 'प्रायणीयस्य निष्कासे उदयनीयमनुनिर्वपति' निष्कासे निर्वापोऽयमर्थकर्म न कर्मान्तरं नापि प्रतिपत्तिः। भा. ११।२।१६।६६-६८. * ज्योतिष्टोमे प्रायणीये अदितिदेवताकचरुपयसि प्रदेयधर्मा न कर्तव्याः। आदित्यपयोऽधिकरणम्। वि. ९।४।१०.

⌛ ज्योतिष्टोमे प्रायणीया पूर्वशंय्वन्ता, आतिथ्या च पूर्वेडाऽन्ता ॥

प्रतिषेधार्थवत्त्वाच्चोत्तरस्य परस्तात् प्रतिषेधः स्यात्। १०।७।१३।४०॥

भाष्यम्— इदमेवोदाहरणम् 'शंय्वन्ता प्रायणीया संतिष्ठते, न पत्नीः संयाजयन्ति' इति। 'इडाऽन्ता आतिथ्या संतिष्ठते, नानुयाजान् यजति' इति। तत्र द्वौ शंयू, द्वे इडे इति। तत्रायमर्थः सांशयिकः किं परेण शंयुना शंय्वन्ता संतिष्ठते, उत पूर्वेण। एवं किं परया इडया इडाऽन्ता संतिष्ठते, उत पूर्वेणेति। किं प्राप्तम्? पूर्वाभ्यां शंय्विडाभ्यामिति। कुतः? पूर्वाभ्यामपि संस्थापयता श्रुत्यर्थः कृतो भवतीति। कृते च शब्दार्थे कस्मादुत्तरान् पदार्थान् कुर्यादिति। उच्यते। उत्तराभ्यामपि संस्थापयन् शब्दार्थमेव करोति। तत्र श्रमात् पूर्वाभ्यां संस्थापयन्न शब्दार्थं परिच्छिन्द्यात्। शब्दार्थं परिच्छेत्स्यामः। यदि उत्तराभ्यामपि संस्थापनं शब्दो वक्ष्यति, ततस्ताभ्यां संस्थापयन् भूयांसमुपकारं लप्स्यते। तस्मादनियमः, पूर्वाभ्यामुत्तराभ्यां वेति। एवं प्राप्ते, ब्रूमः। उत्तराभ्यामिति। कुतः? प्रतिषेधार्थवत्त्वात्। तदैव पत्नीसंयाजस्य अनुयाजस्य च प्रतिषेधोऽर्थवान् भवति, यदि उत्तराभ्यां न संस्थाप्येत, नैव पत्नीसंयाजानुयाजौ प्राप्नुतः। तस्मादुत्तराभ्यामिति। ननु च प्रतिषेधस्य नित्यानुवादत्वमुक्तम्। उच्यते। न सत्यां गतौ तत् न्याय्यम्। तस्मान्न पूर्वाभ्यामिति। उच्यते। लिङ्गमेतदुपदिष्टम्। न च लिङ्गं साधकं भवति। प्राप्तिरुच्यतामिति। पक्षेऽपि हि लिङ्गस्य अर्थवत्ता स्यात्। अत्रोच्यते। इयं प्राप्तिः, यदा विशेषो नावगम्यते, शंयुरन्ते यस्या अङ्गरीतेः, सा शंय्वन्ता। एवम् इडाऽन्ता। सैषा अङ्गरीतिर्विधीयते शंय्वन्ता, इडाऽन्ता च। सा च विधीयमाना अन्यान्यङ्गानि परिसंचष्टे। कथम्? शंय्वन्तया अङ्गरीत्या, इडाऽन्तया च संकीर्त्य-

मानया एकवाक्यतायां च सत्याम् अन्यान्यङ्गानि नाकाङ्क्ष्यन्ते । अनाकाङ्क्ष्यमाणानि च नैकवाक्यतां यान्ति । अतः अप्राप्तानीति गम्यते । ननु एवं सति पूर्वाभ्यां शंय्विडाऽन्तता न कंचिदर्थम् अभ्यधिकं साधयतीति । उच्यते । नैष दोषः । नहि तस्यार्थे पृथग् वाक्यम्, यस्यानर्थक्यं परिजिहीर्ष्यते । अस्य वाक्यस्य उत्तरान्तता प्रयोजनम् । तस्मात् उत्तराभ्यां संस्था स्यादिति ।

टुप्— शंय्वन्ता अङ्गरीतिर्विधीयते । सा च (क्लृप्तोपकारा विधीयमाना) आज्यभागवत् निराकाङ्क्षीकरोति प्रायणीयाम् । तस्यां च ( विधीयमानायाम् ) द्वे शंय्वन्ते ( अविशेषेण ) परिप्लवेते । तत्र पूर्वस्याम् ( शंय्वन्ततायाम् ) गृह्यमाणायामुत्तरस्य शंयोः प्राक् ये पदार्थाः कर्तव्या अवगताः, ते बाध्येरन् । उत्तरस्यां तु ( गृह्यमाणायां ) न किञ्चित् बाधितं भवति, शब्दार्थश्च संपादित एव । पत्न्यनुयाजप्रतिषेधार्थवत्त्वं च (एवं सति भविष्यति । इतरथा अनुवादमात्रमनर्थकं स्यात् ) संतिष्ठतिश्चानुवादः ।

**प्राप्तेर्वा पूर्वस्य वचनादतिक्रमः स्यात् । ४१ ॥**

भाष्यम्— नैतदस्ति , उत्तराभ्यां शंय्विडाभ्यां संतिष्ठते इति । पूर्वाभ्यामेव । कुतः ? नेह शंय्वन्ताया अङ्गरीतेर्भावो विधीयते, इडाऽन्तायाश्च । किं तर्हि ? संस्था विधीयते । शंय्विडाऽन्ता संतिष्ठते । प्रवर्तमाना शंय्विडाऽन्ता च जाता संतिष्ठते, न प्रवर्तते । तिष्ठत्स्वेव कर्तृषु संतिष्ठतीत्युच्यते । तत्र पूर्वाभ्यामुत्तराभ्यामिति विशेषे अवगम्यमाने पूर्वाभ्यां च न प्रवर्तेत उत्तराभ्यां च । तदेव तत्र पूर्वाभ्यामेव संस्थाने कृतं भवति । प्रतिषेधश्च नित्यानुवाद इत्युक्तम् ।

टुप्— ' प्राप्तेर्वा पूर्वस्य वचनादतिक्रमे स्यात्' ( इति लिखिते सूत्रम् ) । नात्र अङ्गरीतिर्विधीयते । किं तर्हि ? संपूर्वस्तिष्ठतिः । एवं ( धात्वर्थविधानात् ) श्रुत्यर्थः अनुगृहीतो भविष्यति । इतरथा शंय्वन्ततायाः प्रायणीयायाश्च संबन्धं कर्तुं संतिष्ठतिरुच्चार्येत, तत्र अत्यन्तं वाक्यं स्यात्, त्रिविधाऽपि श्रुतिः उत्सृज्येत ( नहि तदा धात्वर्थस्य विधानम्, न च तस्य अन्यत्र, नापि तत्र अन्यस्य । तेन संतिष्ठतिरेव उपरमात्मको विधीयते ) । संतिष्ठतिविधाने ( च ) चोदकः अङ्गानि प्रापयति ( एव ) । तत्र ( एवं सति ) पूर्वा शंय्वन्ततां अतिलङ्घ्य यो गच्छेत्, तेन आगमो बाधितः स्यात् (तस्मात् पूर्वेणैव शंयुना शंय्वन्तता, ततः परेषां बाधः) ।

**प्रतिषेधस्य त्वरायुक्तत्वात्, तस्य च नान्यदेशत्वम् । ४२ ॥**

भाष्यम्— इतश्च पूर्वाभ्यां ( शंय्विडाभ्यां ) परं न कर्तव्यमिति । कुतः ? त्वरायुक्तो हि प्रतिषेधोऽयं कृतः । कथम् ? ' देवासुराः सत्यमभजन्त । अर्धं देवाः सत्यस्याभजन्त, अर्धमसुराः । तदसुरैः सत्यमनूच्यमानं देवानपाक्रामत् । ते प्रायणीयं निरवपन् । तत् शंय्वन्तमासीत्, अथासुरा यज्ञमायन्, ततो यज्ञस्त्वरे इति । तमेवं कृत्वा त्वरितमाद्रियन्ते ' इति । तथा ' आतिथ्यं निरवपन्, तदिडाऽन्तमासीत्, अथासुरा यज्ञमायन्, ततो यज्ञस्त्वरे इति । तदिडाऽन्तमेव कृत्वा त्वरितमाद्रियन्ते ' इति । त्वराकृतश्च पूर्वमपेक्षन्ते नोत्तरम् । तस्मात् नान्यो देशः प्रतिषेधस्य । तस्माच्च पूर्वाभ्यामेव शंय्विडाभ्यां परं न कर्तव्यमिति ।

सोम— पूर्वोक्तस्तुत्यर्थत्वाक्षेपात् संगतिः । सूत्रार्थस्तु— पत्नीसंयाजानूयाजप्रतिषेधार्थत्वात् उत्तरस्य शंय्विडस्य परस्तात् यत् कर्तव्यं तस्य प्रतिषेधः स्यात् इति ।

वि— ' तत्रैव शंय्विडे पूर्वे परे वा स्वेच्छयाऽथवा । परे एवाऽथवा पूर्वे एवा, ऽऽद्यो द्विविधश्रुतेः ॥ निषेधस्यार्थवत्त्वाय परे एवा , ऽनुवादगीः । पूर्वोक्तवाक्यतां याति पूर्वे एवाविरोधतः ॥ '

भाट्ट— प्रकृतौ द्वौ शंयू पत्नीसंयाजानां पुरस्तादेकः परस्तादपरः । तथा इडे अपि अनूयाजानां पुरस्तादेका पश्चादपरा । तत्र पूर्वाभ्यां प्रायणीयातिथ्ययोः शंय्विडाऽन्तता , उतोत्तराभ्यामिति संदेहे, ' पर्यग्निकृतं पात्नीवतमुत्सृजति ' इतिवत् अत्र प्रायणीयाऽऽद्यनुवादेन शंय्विडाऽन्ताङ्गरीतिमात्रविधानात् तस्याश्च क्लृप्तोपकारकतया आज्यभागवत् चोदकपरिलोपकतया तदुपरितनाङ्गनिवृत्तिरार्थिकी । अत एव संतिष्ठतिरर्थप्राप्तानुवादः साधुत्वार्थः । तत्र च तद्गुणसंविज्ञानबहुव्रीहिणा शंय्विडा-

ऽन्तपदार्थविधानात् पूर्वशंय्विडोत्तरपदार्थानामपि उत्तरशंय्विडाऽन्तत्वाविशेषेण विधानावगतेः तदुत्तरभाविनामेव निवृत्तिः। अत एव पत्नीसंयाजादीनामपि उत्तरशंय्विडापूर्वभाविपदार्थत्वात् करणप्रसक्तौ 'न पत्नीः संयाजयन्ति' इत्यादिः तत्पर्युदासविषया शंय्विडाऽन्तत्वविध्येकवाक्यताऽऽपन्नः सन् अर्थवान्। अतः पत्नीसंयाजानूयाजवर्जम् उत्तरशंय्विडाऽन्तं सर्वं कार्यम्। इति प्राप्ते, नात्र शंय्विडाऽन्ताङ्गरीतिविधिः। तथात्वे धातोः अत्यन्तपारार्थ्यापत्तेः। अपितु शंय्विडाऽन्तत्वे निमित्ते प्रायणीयाऽऽद्युद्देशेन प्रयोगोपरमरूपा संस्थैव धात्वर्थो विधीयते। पात्नीवतवाक्येषु तु पर्यग्निकरणे निमित्ते प्रयोगोपरमरूपोत्सर्गविधाने यागस्यापि अकरणापत्तेः तत्र त्यागरूपोत्सर्गानुवादेन पर्यग्निकरणान्ताङ्गरीतिविधानमेवाश्रितम्। प्रकृते तु धात्वर्थविधिलिप्सया प्रयोगोपरमस्यैव शंय्विडाऽन्तत्वे निमित्ते विधानात् पूर्वयोरपि शंय्विडयोः कृतयोर्निमित्तस्य संजातत्वेन कर्तव्य एवोपरमः। पत्नीसंयाजादिप्रतिषेधस्तु नित्यानुवादत्वेन अर्थवादमात्रम्, औचित्येन शंय्विडाऽन्तत्वस्तुत्यर्थे न विरुध्यते। अतः पूर्वाभ्यामेव शंय्विडाऽन्तता।

**मण्डन**— 'पूर्वेडयैवोपरमो यजेः स्यात्।'

**शंकर**— 'साऽन्तता पूर्वतो भवेत्।'

**ज्योतिष्टोमे प्रायणीया शंय्वन्तैव आतिथ्या च इडाऽन्तैव ॥**

**शंयूविडान्तत्वे विकल्पः स्यात्, परेषु पत्न्यनुयाजप्रतिषेधोऽनर्थको हि स्यात्। १०।७।१२।३८॥**

**भाष्यम्**— ज्योतिष्टोमे श्रूयते 'शंय्वन्ता प्रायणीया संतिष्ठते, न पत्नीः संयाजयन्ति' इति। 'इडान्ता आतिथ्या संतिष्ठते, नानुयाजान् यजति' इति। तत्र संशयः प्रायणीया किं शंय्वन्ता कृत्स्नसंस्था वा, उत शंय्वन्तैव। तथा आतिथ्या किमिडान्ता कृत्स्नसंस्था वा, उत इडान्तैव। किं प्राप्तम्? शंय्विडान्तत्वे विकल्पः स्यादिति। कुतः? पत्न्यनुयाजस्य प्रतिषेधात्। 'शंय्वन्ता संतिष्ठते' इति तावत् व्यक्तमेव वचनम्। अपरमपि वचनम्, न पत्नीः संयाजयन्ति इति। यदि शंय्वन्तैव नित्यम्, पत्न्यनुयाजप्रतिषेधोऽनर्थकः स्यात्। तस्मात् पत्न्यनुयाजप्रतिषेधेन कृत्स्नसंस्थानमुच्यते। कथम्? प्रायणीयायां पत्नीसंयाजान् केवलान् न करोति, नान्यं न करोतीति। तथा आतिथ्यायामनुयाजान् केवलान् न करोति, नान्यं न करोतीति। अकर्तव्यपरिसंख्यानार्थमेव इदं भिन्नमेव वाक्यद्वयं पूर्वाभ्यां वाक्याभ्यामिति।

**नित्यानुवादो वा कर्मणः स्यादशब्दत्वात्। ३९॥**

**भाष्यम्**— न त्वेतदस्ति, विकल्प इति। एक एव कल्पः शंय्विडाऽन्तत्वम्। तत्र हि विस्पष्टं वचनम्। द्वितीयः कल्पो नास्त्येव। नहि तस्य वचनमस्ति। न च पत्न्यनुयाजप्रतिषेधकं कृत्स्नसंस्थानवाचकम्। किं तर्हि? तन्नित्यानुवादः। नित्यप्राप्तमनुवदति। यथा 'नान्तरिक्षे न दिवि अग्निश्चेतव्यः' इति। पूर्वाभ्यां सह एकवाक्यतैव अनयोः 'शंय्वन्ता प्रायणीया संतिष्ठते, न पत्नीः संयाजयन्ति' इति। तथा 'इडाऽन्ता आतिथ्या संतिष्ठते, नानुयाजान् यजति' इति। अत्र यत्नलाघवेन स्तुतिः। ननु प्रतिषेधवचनः कृत्स्नसंस्थानं वदेत्, य एव हि श्रुतस्यार्थस्योत्सर्गे दोषः, स एव अश्रुतकल्पनायाम्। तस्मात् शंय्विडाऽन्ततैव स्यादिति।

**शा**— 'वाक्यभेदो हि न न्याय्यो विकल्पश्चाष्टदोषभाक्। त्रिदोषा परिसंख्या च तस्मात् स्तुत्यैकवाक्यता ॥' तस्मात् नियमेन शंय्विडाऽन्ते एव प्रायणीयाऽऽतिथ्ये।

**सोम**— यथा अनुवादस्य आनर्थक्यात् स्विष्टकृद्वचनं परिसंख्यापकम्, एवम् 'न पत्नीः संयाजयन्ति' इत्यादिकमपि इत्युत्थानात् संगतिः। सूत्रे आनर्थक्यं स्यात् कृत्स्नसंस्थाविध्यभावे पत्नीसंयाजनिषेधवचनम् अनुवादमात्रमनर्थकं स्यात् इत्यर्थः।

**वि**—'प्रायणीयाऽऽतिथ्ययोः किं विकल्पः शंय्विडाऽन्तयोः। नियमो वा, विकल्पः स्यान्निषेधपरिसंख्यया ॥, शंय्विडाऽन्तत्ववाक्याच्च नियमो विधिमात्रतः। नित्यानुवादो नञ्वाक्यं दोषबाहुल्यमन्यथा ॥'

**भाट्ट**— ज्योतिष्टोमे 'शंय्वन्ता प्रायणीया संतिष्ठते, न पत्नीः संयाजयन्ति' 'इडाऽन्ता आतिथ्या संतिष्ठते, नानुयाजान् यजति' इति श्रुतम्। तत्र किं प्रायणीयाऽऽतिथ्ययोः शंय्विडाऽन्तत्वं नियतम्, उत पक्षे पत्नीसंयाजा-

नुयाजवर्जं कृत्स्नसंस्थत्वमपीति चिन्तायाम्, आद्यवाक्याभ्यां शंय्विडाऽन्तत्वे विहिते तदुत्तरभाव्यङ्गपरिसंख्याऽवगतेः सर्वेषां तेषामकरणे प्राप्ते, पत्नीसंयाजानुयाजमात्रे अकरणपुनःश्रवणं तद्भिन्नाङ्गेषु सूक्तवाकसमिष्टयजुरादिषु अकरणपरिसंख्याऽर्थम्। अतश्च तेषामपि पक्षे करणम्। इति प्राप्ते, अकरणबोधकशास्त्रस्य प्रत्यक्षत्वेन अप्राप्तपरिसंख्यात्वायोगात् प्राप्तपरिसंख्यायां च त्रैदोष्यापत्तेः अष्टदोषदुष्टविकल्पापत्तेश्च शंय्विडाऽन्तत्वमेव नियतम्। एवं च 'न पत्नीः संयाजयन्ति' इत्यादेर्नित्यानुवादत्वादिना तदेकवाक्यतयैव उपपत्तेर्न वाक्यभेदाङ्गीकारोऽपि।

मण्डन—'कर्तव्यमातिथ्यमिडाऽन्तमेव।' १२.

शंकर—'शंय्विडाऽन्तादि नित्यं स्यात्।' १२.

* ज्योतिष्टोमे प्रायणीयाऽऽदिषु ऐष्टिकं जागरणं दीक्षाजागरणादन्यकाले पृथक् कर्तव्यम्। जागरणन्यायः। वि. १२।१।८.

ज्योतिष्टोमे प्रायणीयाऽऽदिषु दार्शिकं व्रतं नानुष्ठेयं प्रसङ्गात् सिद्धेः॥

तथा व्रतमुपेतत्वात्। १२।१।११।२०॥

भाष्यम्— तत्रैव दार्शपौर्णमासिकं व्रतं चोदकप्राप्तं तथैव न क्रियते, यथा अग्न्यन्वाधानम्, उपेतत्वात्। न ह्युपेतमनपवृक्तं सत् शक्यमुपेतुम्। अप्राप्तस्य हि प्रापणमुपगमनम्। तत् प्राप्तस्य न शक्यम्।

विप्रतिषेधाच्च। २१॥

भाष्यम्— 'अग्ने व्रतपते व्रतं चरिष्यामि' इति चरतो वचनं विप्रतिषिद्धं वर्तमानस्य भविष्यद्वचः।

सत्यवदिति चेत्। २२॥

भाष्यम्— अथ सत्यवत् कस्मान्न भवति। यथा सत्यवचनं व्रतं पुरुषधर्मत्वादनुवर्तमानमपि दर्शपूर्णमासयोः पुनरुपेयते इति। स्थितायां प्रतिज्ञायां सूत्रेण चोदयति।

न, संयोगपृथक्त्वात्। २३॥

भाष्यम्— नैतत्तेन तुल्यम्, संयोगपृथक्त्वात्। तत्र पुरुषसंयोगः कर्मसंयोगश्च। पुरुषार्थमुपेतं कर्मार्थे पुनरुपेयते। नन्विहापि संयोगपृथक्त्वात् सोमार्थमुपेतमैष्टिकार्थे पुनरुपेयते इति। नेह पुनरुपगमनेनार्थः। यत् सोमार्थे तदेवेतरत्र प्रसङ्गात् कार्यं साधयति। नन्विहापि तद्वदेव साधयिष्यति। साधयेत्, यदि कर्मार्थता तस्य ज्ञाता भवेत्। सा त्विहैव ज्ञाप्यते। ऐष्टिकानां तु प्रकृतौ ज्ञाता। तस्मात् सत्यवदित्यदृष्टान्तः। कर्मार्थत्वज्ञानस्य तु प्रयोजनं प्रायश्चित्तविशेषस्तृतीयेऽध्याये व्याख्यातः।

शा— प्राकृतं व्रतोपायनं कर्तव्यं नेति विचारे, कर्तव्यमिति प्राप्ते, सोमार्थेऽपि तेनैव व्रतेन सत्यवदनब्रह्मचर्यादिसंकल्परूपेण आ समाप्तेः अविसृष्टेन प्रसङ्गात् सिद्धेः, न पुनरुपायनं कर्तव्यम्।

सोम— अन्वाधानस्य दृष्टार्थत्वात् अकर्तव्यत्वेऽपि व्रतोपायनस्य अदृष्टार्थत्वात् कर्तव्यम्, इत्युत्थितेः संगतिः।

वि— 'व्रतोपायनमेष्वस्ति न वा, चोदकतोऽस्ति तत्।, उपेतस्यापरित्यागे विरोधान्नास्ति तत् पुनः॥'

भाट्ट— दर्शपूर्णमासयोरेव 'अग्ने व्रतपते'-इतिमन्त्रेण व्रतग्रहणमाम्नातम्। व्रतं नाम सत्यवदनब्रह्मचर्यादिसंकल्परूपम्। सत्यवदनं हि 'स वै सत्यमेव वदेत्' इति शतपथे विहितम्, स इति क्रतूपादानेन क्रतूपयुक्तपुरुषधर्मः। अत एव 'नानृतं वदेत्' इति शुद्धक्रतुधर्मत्वात् संयोगान्तरम्। अन्यतरेणान्यतरस्य वैयर्थ्यशङ्का तु शाखाऽन्तरीयत्वादपास्ता। एवम् 'स ब्रह्मचारी अमधुमांसाशी स्यात्' इति ब्रह्मचर्यविधावपि ज्ञेयम्। स्त्र्युपगमनमांसप्रतिषेधस्तु शाखाऽन्तरीयः इति न विरोधः। तदिदमपि व्रतं सोमाङ्गेष्टिपश्वादिषु न कार्यम्, दीक्षणीयोत्तरं सोमार्थं कृतेनैव दीक्षारूपव्रतग्रहणेन आऽवभृथमविसृष्टेन प्रसङ्गसिद्धेः। न चैष्टिकसौमिकव्रतकरणयोः विजातीयादृष्टजनकयोः कथं प्रसङ्गः, विजातीययोरपि तन्त्रेण परिपालितयोः विजातीयादृष्टजनकत्वोपपत्तेः। अत एव सत्यवदननियमादिपरिपालनस्य तन्त्रत्वेऽपि सोमार्थं कृतेनैव तत्संकल्पेन तत्कार्यसिद्धेः न पृथक्संकल्पकरणम्, सकृत् संकल्पितस्य पुनःसंकल्पवैयर्थ्यात्, व्रतवर्तमानदशायां 'व्रतं चरिष्यामि' इति मन्त्रलिङ्गानुपपत्तेश्च। न च यावज्जीवं पुरुषार्थे सत्यवदननियमसंकल्पे कृतेऽपि यथा दर्शपूर्णमासज्योतिष्टोमादौ पुनस्तत्संकल्पकरणम्, तथा

सोमार्थतया कृतेऽपि तत्संकल्पे तदङ्गेष्टयादिषु पुनस्तत्संकल्पकरणं न विरुध्यते इति वाच्यम्। पुरुषार्थतया कृतस्यापि संकल्पस्य क्रत्वर्थतया पुनःकरणे बाधकाभावात्, सत्यवदननियमसत्त्वेऽपि ब्रह्मचर्यादिसाधारणव्रतसामान्यसंकल्पे बाधकाभावाच्च। प्रकृते तु सामान्यसंकल्पस्यैव कृतत्वात् इष्टयाद्यर्थं पुनःकरणं विरुद्धमिति विशेषः। न च एवमपि सोमार्थस्य व्रतस्य कर्तृसंस्कारद्वारा अङ्गप्रधानसाधारणतया इष्टयाद्यर्थत्वस्यापि सत्त्वात् महावेदिवदौपदेशिकेन व्रतसंकल्पेन ऐष्टिकस्य बाध एव स्यात् न प्रसङ्गः इति वाच्यम्। 'दीक्षाः सोमस्य' इति वचनेन यमनियमपरिग्रहरूपव्रतसंकल्परूपायाः दीक्षायाः प्रधानमात्रार्थत्वेन अङ्गसाधारणत्वाभावात्। अतो युक्त एव प्रायणीयाऽऽदिषु प्रसङ्गः। दीक्षणीयायां तु सोमार्थव्रतसंकल्पस्य दीक्षणीयोत्तरत्वात् प्रसङ्गानुपपत्तेर्युक्तौ ऐष्टिकव्रतग्रहणतद्विसर्गौ। बोधायनादयस्तु तस्यामपि तौ नेच्छन्ति।

**मण्डन**-- 'सोमाङ्ग इष्टौ न पुनर्व्रतग्रहः।'

**शंकर**-- 'तथा व्रतोपायनं च।' १२.

* ज्योतिष्टोमे फलचमसः (क्षत्रियवैश्ययोः)। फलचमसाधिकरणम्। **भा.** ३।५।१९।४०-५१. * ज्योतिष्टोमे बहिष्पवमानं नाम स्तोत्रं प्रातःसवने। **वि.**१।४।३.

* ज्योतिष्टोमे बहिष्पवमाने (उद्गात्रादेः) अपच्छेदे प्रायश्चित्तम्। अपच्छेदः विश्लेषः। **भा.** ६।५।१७-२१। ४९-५६, * ज्योतिष्टोमे 'बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य'। अत्र अभीवर्तो ब्रह्मसाम इति नित्यार्थम्। इतराणि तु नैमित्तिकानि। (ब्रह्मसाम ब्राह्मणाच्छंसिशस्त्रार्थं साम)। ४।३।२।४.

**ज्योतिष्टोमे बृहतीविष्टारपङ्क्त्योरेव प्रग्रथनेन संपादिते बार्हते तृचे रौरवयौधाजयसाम्नोर्गानम्॥**

**प्रागाथिकं तु। ९।२।६।२५ वर्णकं २॥**

**भाष्यम्**-- एवं वा। अस्ति ज्योतिष्टोमः 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति। तत्र 'त्रिच्छन्दा आवापो माध्यंदिनः पवमानः पञ्चसामा, गायत्रामहीयवे गायत्रे तृचे भवतः, रौरवयौधाजये बार्हते तृचे, औशनमन्त्यं त्रिष्टुप्सु' इति। यदेतत् रौरवं यौधाजयं च द्वे सामनी, तयोः पूर्वा बृहती 'पुनानः सोम धारयापो वसानो अर्षसि। आ रत्नधा योनिमृतस्य सीदस्युत्सो देव हिरण्ययः॥' इति। उत्तरा विष्टारपङ्क्तिः 'दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नं सधस्थमासदत्। आपृच्छ्यं धरुणं वाज्यर्षति नृभिर्धूतो विचक्षणः॥' (इति) तदत्र संशयः किमन्ययोः उत्पत्तिबृहत्योः आगमं कृत्वा समासु गानं कर्तव्यम्, उत याऽसौ पूर्वा बृहती उत्तरा च विष्टारपङ्क्तिः, तयोः प्रग्रथनेन तृचकर्म कृत्वा बृहतीकारं गानं कर्तव्यमिति। किं प्राप्तम्? अन्ये बृहत्यौ आगमयितव्ये इति। कुतः? एवमृचामुत्पत्तिरर्थवती भविष्यतीति। **एवं प्राप्ते ब्रूमः**। प्रागाथिकं तु। तुशब्दः पक्षं व्यावर्तयति। प्रागाथिकं सामगानं कर्तव्यं नोत्पत्तिबृहत्यौ आगमयितव्ये। प्रकृतयोरेव प्रग्रथनं कर्तव्यम्। एवं हि स्मरन्ति 'बार्हतः प्रगाथः' इति। उत्पत्तिबृहत्योरानीयमानयोः प्रगाथो न स्यात्। तत्र स्मृतिर्बाध्येत। तस्मात् प्रकृतयोः प्रग्रथनं कर्तव्यमिति।

**स्वे च। २६॥**

**भाष्यम्**-- एवं च स्वे छन्दसि प्रकृते गानं भविष्यति। न प्रकृतहानम् अप्रकृतप्रक्रिया। तस्मादपि नान्ये बृहत्यौ आगमयितव्ये इति।

**प्रगाथे च। २७॥**

**भाष्यम्**-- एवं च प्रगाथशब्द उपपन्नो भविष्यति। स हि प्रकर्षे गानस्य भवति। प्रकर्षश्चेह पुनः पादे उपादीयमाने भवति। तस्मादपि नान्यबृहत्यौ उपादातव्ये इति।

**लिङ्गदर्शनाव्यतिरेकाच्च। २८॥**

**भाष्यम्**-- अव्यतिरेकेण च लिङ्गं दर्शयति। किं लिङ्गं भवति? एवमाह, 'षड्भिस्त्रिष्टुभो माध्यंदिनं सवनम्' इति। कथं कृत्वा लिङ्गम्? यदि प्रग्रथनेन बृहतीकारं गानं क्रियते, ततः सर्वस्मिन् सवने या ऋचः समाम्नाताः, ताः षड्भिर्भवन्ति। इतरथा उत्पत्तिबृहत्योः आनीयमानयोः अभ्यधिका भवेयुः। तदिदं निर्दिश्यते 'गायत्रामहीयवे गायत्रे तृचे भवतः' ताः षड् गायत्र्यः। 'रौरवयौधाजये बार्हते' ता अपि षड् बृहत्यः। 'औशनमन्त्यं त्रिष्टुप्सु'

ता अपि तिस्रस्त्रिष्टुभः। अथ होतुः पृष्ठे बृहति रथंतरे वा सप्तदशस्तोमे क्रियमाणे पञ्च बृहत्यो भवन्ति। द्वादश च ककुभः। कथम्? एषा हि तत्र विष्टुतिः 'पञ्चभ्यो हिं करोति स तिसृभिः, स एकया, स एकया। पञ्चभ्यो हिं करोति स एकया, स तिसृभिः, स एकया। सप्तभ्यो हिं करोति स एकया, स तिसृभिः, स तिसृभिः' इति। तत्र बृहतीभिस्तिसृभिः प्रथमम् एकया च ककुभा पुनश्च एकया ककुभा। ततः पुनरेकया बृहत्या तिसृभिः ककुब्भिः, एकया च ककुभा। एवं चतस्रो बृहत्यः षट्ककुभः। ततः पुनरेकया बृहत्या, पुनश्च तिसृभिः ककुब्भिः, पुनश्च तिसृभिः ककुब्भिः इति। एवं पञ्च बृहत्यः द्वादश ककुभः इति। ताभिश्च बृहतीभिः सह एकादश बृहत्यो भवन्ति। ततः षण्णां गायत्रीणां चतस्रो गायत्र्यः द्वादशभिः ककुब्भिः द्वादश बृहत्यो भवन्ति, एवं त्रयोविंशतिर्बृहत्यः। ततो वामदेव्ये सप्तदशका गायत्र्यः, पावमानीभ्यां द्वाभ्यां गायत्रीभ्याम् अवशिष्टाभ्यां सह एकोनविंशतिगायत्र्यो भवन्ति। ततो नौधसकालेययोः एकत्र सप्तदश बृहत्यः, एकत्र सप्तदश, ततश्चतुस्त्रिंशत्। पूर्वसंकलिताभिः त्रयोविंशत्या बृहतीभिः सप्तपञ्चाशत् बृहत्यो भवन्ति। यास्ता एकोनविंशतिगायत्र्यः, तासां सप्तपञ्चाशता गायत्रीपादैः सह सप्तपञ्चाशत् बृहत्यः सप्तपञ्चाशत् त्रिष्टुभो भवन्ति। पावमानीभिः त्रिष्टुब्भिः सह षष्टिस्त्रिष्टुभः इति सिद्धं भवति।

अथ बृहद्रथंतरयोः उत्पत्तिककुभोरागमः क्रियते, ततो याः सवने समाम्नाताः, न ताः षष्टिर्भवन्ति। ये ते द्वे सवने ककुभौ असमाम्नाते आनीयेते तयोर्द्वादशकृत्वः प्रयोगः। तेन सा षष्टिः पूर्यते। यास्ता ऋचः सवने समाम्नाताः, ता इह सवनशब्देनोच्यन्ते, न कर्मणि सवनशब्दप्रयोगः। तत्र हि त्रिषु सवनेषु बह्व्यः त्रिष्टुभो भवेयुः। न षष्टिस्त्रिष्टुभो माध्यंदिनं सवनमिति। तस्मात् याऽसौ पूर्वा बृहती उत्तरा च विष्टारपङ्क्तिः, तत्र प्रग्रथनं कृत्वा गातव्यमिति।

**टुप्**— 'षष्टिस्त्रिष्टुभो माध्यंदिनं सवनम्, (इत्येतत् दर्शनं प्रग्रथने अवकल्पते, नोत्पत्तिबृहत्योः आनयने)। 'न अत्र कर्मणि सवनशब्दः' ('न कर्मणि सवनशब्दप्रयोगः' इति तु भाष्यवाक्यं दूरस्थम्। तत् व्याचष्टे-) यदि कर्मणि (कर्माङ्गभूतासु ऋक्षु) सवनशब्दः (वर्तेत) तथा सति (सवनशब्दस्य सवनत्रयवाचित्वात्) ज्योतिष्टोममात्रे प्रवृत्तः न माध्यंदिनेन (शब्देन) विशेष्टुं शक्यते। तत्र अयं प्रयोगः (एव) न स्यात् ('षष्टिस्त्रिष्टुभो माध्यंदिनं सवनम्' इति, बह्वीनां त्रिष्टुभां भावात्)। यदि सवनशब्दो न कर्मणि (वर्तते किन्तु लक्षणया सवनाङ्गभूतासु ऋक्षु), तथा सति (त्रिष्टुप्शब्दस्य सवनशब्देन) सामानाधिकरण्यमुपपद्यते। यदि च (त्रिष्टुप्शब्दस्य) लक्षणया कर्मणि सवनशब्दः (वर्तेत षष्टित्रिष्टुप्संबन्धि माध्यंदिनं सवनमिति) तथा सति आध्वर्यवे हौत्रे औद्गात्रे च बह्व्यः त्रिष्टुभो भवेयुः (माध्यंदिने सवने), तथा सति 'षष्टिस्त्रिष्टुभो माध्यंदिनं सवनम्' इति (प्रयोगः) न स्यात्। (तस्मात् याः सामवेदे माध्यंदिनप्रकरणे समाम्नाता ऋचः तदभिप्रायमिदं वचनम्)। अपिच 'षष्टिस्त्रिष्टुभो माध्यंदिनं सवनम्' इति सवनशब्दः (कर्माङ्गभूतासु) ऋक्षु श्रूयमाणः आम्नातासु (एव) वर्तते। यदि च उत्पत्तिबृहत्यौ आनीयेयाताम्, (ततः) दाशतयीभ्यः आगमः स्यात्, (तत्र) तयोः प्रकरणसंबन्धः कर्तव्यः। न च प्रमाणमस्ति। प्रगाथसामर्थ्याच्च अवश्यं प्रग्रथनं कार्यम्। तच्च उत्पत्तिबृहत्योः आनीयमानयोः 'षष्टिस्त्रिष्टुभः' इति असंबद्धम् (स्यात्,) प्रगाथवचनं च (असंबद्धं स्यात्)।

**सोम**— माध्यंदिनसवने पवमानस्तोत्रमेकं, चत्वारि पृष्ठानि इत्येवं पञ्च स्तोत्राणि। तत्र पवमानः पञ्चदशस्तोमः, पृष्ठानि सप्तदशस्तोमकानि। तथाच त्र्यशीतिस्तोत्रीयाः। तासां काश्चित् पठिताः, काश्चित् प्रग्रथनलब्धाः काश्चिदभ्यासलब्धाः। तत्र द्वादश ककुभः अष्टाविंशत्यक्षराः, त्रयोविंशतिर्गायत्र्यः चतुर्विंशत्यक्षराः, पञ्चचत्वारिंशत् बृहत्यः षट्त्रिंशदक्षराः, तिस्रः त्रिष्टुभः चतुश्चत्वारिंशदक्षराः। तत्र द्वादशापि ककुभः द्वादशभिर्गायत्र्यर्धैः संयोजिताः सत्यः द्वादश त्रिष्टुभः संपद्यन्ते। एवं च त्रिपदा अष्टौ गायत्र्यः व्यतीताः। अवशिष्टाः पञ्चदश गायत्र्यः, तासां पञ्चचत्वारिंशत् पादाः।

तावद्भिः पादैः पञ्चचत्वारिंशत् बृहत्यः संयोजिताः पञ्चचत्वारिंशत् त्रिष्टुभः संपद्यन्ते । आम्नाताश्च तिस्रः इत्येवं षष्टिः त्रिष्टुभः संपन्नाः ।

वि— 'यौधाजये रौरवे च बृहत्योरागमोऽथवा । ग्रथनम्, पूर्ववत् पक्षौ, षष्टिर्लिङ्गमिहोच्यते ॥' माध्यंदिनपवमाने त्रीणि सूक्तानि 'उच्चा ते जातम्' इत्येकम्, तत्र तिस्रो गायत्र्यः । 'पुनानः सोम' इति द्वितीयम्, तच्च प्रगाथरूपम् । तत्र पूर्वा बृहती उत्तरा विष्टारपङ्क्तिः । 'प्र तु द्रव परिकोशम्' इति तृतीयम्, तत्र तिस्रस्त्रिष्टुभः । पृष्ठस्तोत्रेषु 'अभि त्वा शूर' इति प्रगाथरूपं प्रथमं सूक्तम्, तत्र पूर्वा बृहती, उत्तरा पङ्क्तिः ( सतोबृहती ) । 'कया नश्चित्र' इति द्वितीयम् । तत्र तिस्रो गायत्र्यः । 'तं वो दस्ममृतीषहम्' इति तृतीयं प्रगाथरूपम्, तत्र बृहतीसतोबृहत्यौ । 'तरोभिर्वो विदद्वसुम्' इति प्रगाथरूपं चतुर्थम् । एतस्मिन् सवने सप्त सूक्तानि । तेषु नव सामानि गेयानि । प्रथमे सूक्ते गायत्रम् आमहीयवं चेति द्वे सामनी । द्वितीये रौरवं यौधाजयं च । तृतीये औशनम् । चतुर्थे रथंतरम् । पञ्चमे वामदेव्यम् । षष्ठे नौधसम् । सप्तमे कालेयम् ।

भाट्ट— एवं वा । ज्योतिष्टोमे एव माध्यंदिनपवमाने 'त्रिच्छन्दा आवापो माध्यंदिनः पवमानः पञ्चसामा' इति श्रुतम् । तदर्थविवरणानि च 'गायत्रामहीयवे गायत्रतृचे भवतः, रौरवयौधाजये बार्हते तृचे भवतः, औशनमन्त्यं त्रिष्टुप् ( त्रिष्टुप्सु )' इति । तत्र रौरवयौधाजययोः पूर्वा बृहती उत्तरा विष्टारपङ्क्तिः समाम्नाता । तदिह विशिष्यैव 'बार्हते तृचे' इति बार्हततृचत्वाम्नानात् उत्तरे द्वे बृहतीछन्दस्के एव समानेतव्ये । इति प्राप्ते, नात्र रौरवयौधाजयोद्देशेन बार्हतविधिः, योनेस्तादृश्याः प्राप्तत्वात् । नापि तृचाधिकरणत्वविधिः, प्राप्तत्वादेव । नापि बार्हततृचाधिकरणत्वविधिः, विशिष्टस्य अव्युत्पन्नत्वात् । अत एव न विशिष्टोद्देशेन सामद्वयविधिः । तत्र तृचोद्देशेन बृहतीछन्दस्कत्वविधिः परं भवेत्, सोऽपि अवच्छेदकावच्छेदेन वा सामानाधिकरण्येन वा उभयथाऽप्यसंभवः । अवच्छेदकावच्छेदेन आश्रीयमाणे प्रगाथस्मरणसमाख्योत्तरापाठादिबाधप्रसङ्गाऽऽपत्तेः । तदनुरोधेन सामानाधिकरण्येनैव आश्रीयते । एवं च वस्तुतस्तस्य प्राप्तत्वात् एतानि वाक्यानि पूर्ववाक्यार्थविवरणार्थानि अनुवादकानि इत्येव ध्येयम् । नहि एतानि उत्तरासु सामप्राप्त्यर्थानि इति केषांचिदुक्तं युक्तम्, 'यद्योन्याम्' इत्यनेनैव तत्प्राप्तेः । सर्वथा सिद्धमत्रापि प्रग्रथनम् । न चैवं 'बार्हते' इति वचनस्य योनिबृहतीत्वेनैव उपपत्तेः प्रग्रथने प्रमाणाभावः, तृचसंपत्तिप्रग्रथनस्मरणादिनैव तत्सिद्धेः । एवं च प्रग्रथितबृहतीत्वस्य अवच्छेदकावच्छेदेन विशेषणत्वोपपत्तावपि लक्षणाऽऽपत्तेः तथा नाश्रितमिति ध्येयम् । तत्र आद्यां बृहतीं षट्त्रिंशदक्षरां पठित्वा तदन्त्यपादस्य द्विरावृत्त्या उत्तरायाः विष्टारपङ्क्तेः चत्वारिंशदक्षरायाः आद्यार्धर्चेन एका बृहती, तदन्त्यपादस्य द्विरावृत्त्या द्वितीयार्धर्चेन अपरा, इत्येवंरूपं प्रग्रथनं बोध्यम् । अत्र सर्वत्र अल्पान्तरत्वात् किञ्चिदक्षरन्यूनत्वेऽपि न तच्छन्दस्कत्वविघातः ।

यत्तु भाष्यकारेण ( इत्युक्तम् इति दूरमन्वयः ) "षष्टिस्त्रिष्टुभो माध्यंदिनं सवनम्' इति लिङ्गमपि प्रग्रथने एवोपपद्यते । तथाहि, माध्यंदिने सवने पञ्च स्तोत्राणि एको माध्यंदिनः पवमानः पञ्चदशस्तोमकः, सप्तदशानि चत्वारि पृष्ठानि । तत्र पवमाने गायत्र— आमहीयवसाम्नोः षड् गायत्र्यः, रौरवयौधाजययोः षड् बृहत्यः, औशनसाम्नः तिस्रः त्रिष्टुभः । होतुः पृष्ठे पञ्च बृहत्यः द्वादश ककुभः, विष्टुतिप्रकारे तथैवाम्नानेन तृचस्य तावद्वारमभ्यासात् । मैत्रावरुणपृष्ठे सप्तदश गायत्र्यः, ब्राह्मणाच्छंस्यच्छावाकपृष्ठयोरपि सप्तदशसप्तदश बृहत्यः एकैकतृचाभ्यासेनैव । एवं पञ्चचत्वारिंशद् बृहत्यो मुख्याः, षण्णां गायत्रीणां चतुर्विंशत्यक्षराणां त्रिपदानां मध्ये चतसृणां गायत्रीणां द्वादशभिरष्टाक्षरैः पादैः सहिता द्वादश । पूर्वोक्ता अष्टाविंशत्यक्षराः ककुभो द्वादश षट्त्रिंशदक्षरात्मिका बृहत्यो भवन्ति । तदेवं सप्तपञ्चाशत् बृहत्यः । ता एताः षण्णां गायत्रीणां मध्ये अवशिष्टाभ्यां द्वाभ्यां गायत्रीभ्यां सह सप्तदशभिः गायत्रीभिः एकैकेन पादेन मिलिताः सप्तपञ्चाशत् बृहत्यः चतुश्चत्वारिंशदक्षरात्मिकाः सप्तपञ्चाशत् त्रिष्टुभो भवन्ति ।

एत्रमाद्याभिः तिसृभिः त्रिष्टुब्भिः षष्टिस्त्रिष्टुभः । तदेतत् लिङ्गं प्रग्रथने एवोपपद्यते । अन्यथा पवमाने अन्यासां बृहतीनाम्, होतुः पृष्ठे च अन्यासां ककुभां दाशतयीभ्यः समानयने षष्टिसंख्यानुपपत्तेः । अत्र हि न 'षष्टिस्त्रिष्टुभो माध्यंदिनं सवनम्' इति यथाश्रुतं सामानाधिकरण्यमुपपद्यते, बाधात् । अतो जघन्यमाध्यंदिनसवनपदे एव लक्षणामङ्गीकृत्य माध्यंदिनसवनाङ्गभूता याः सामवेदे समाम्नाताः, ताः षष्टिः इत्यर्थावगतेः दाशतयीभ्यः समानयने लिङ्गानुपपत्तिः" इत्युक्तं तत् लक्षणाया आवश्यकत्वे लाघवात् माध्यंदिनसवनस्तोत्रीयाणामेव लक्षणात् आनीतानामपि तत्त्वोपपत्तेः उपेक्षितम् ।

मण्डन—'नोत्तरोत्पत्तिर्बृहती ।' ९.

शंकर—'यौधाजयमुखेषु च ।' प्रगाथः स्यात् । ९.

♜ ज्योतिष्टोमे बृहद्रथंतरयोः स्वयोन्युत्तराप्रग्रथनेन संपादितयोः ककुभोरेव गानम् ॥

प्रागाथिकं तु । ९।२।६।२५ ॥

भाष्यम्— ज्योतिष्टोमे श्रूयते 'बृहत् पृष्ठं भवति' 'रथंतरं पृष्ठं भवति' इति । रथंतरस्य योनिर्बृहती 'अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः । ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥' (इति) । उत्तरा पङ्क्तिः 'न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते । अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥' (इति) । बृहतो योनिर्बृहत्ये 'त्वामिद्धि हवामहे साता वाजस्य कारवः । त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥' (इति) । उत्तरा पङ्क्तिरेव 'स त्वं नश्चित्र वज्रहस्त धृष्णुया महः स्तवानो अद्रिवः । गामश्वं रथ्यमिन्द्र सं किर सत्रा वाजं न जिग्युषे ॥' इति । तयोर्वैच्छन्दस्कं (भिन्नच्छन्दस्कं) गानमाम्नायते 'न वै बृहद्रथंतरमेकच्छन्दो यत् तयोः पूर्वा बृहती ककुभावुत्तरे' इति । तत्रायमर्थः सांशयिकः किमन्ये उत्पत्तिककुभौ आगमय्य गातव्यम्, उत याऽसौ पूर्वा बृहती उत्तरा च पङ्क्तिः, तयोः प्रग्रथनेन तृचकर्म कृत्वा ककुबुत्तराकारं गानं कर्तव्यमिति । किं प्राप्तम्? उत्पत्तिककुभौ आगमयितव्ये इति । कुतः? एवमन्यासां ककुभाम् उत्पत्तिरर्थवती भविष्यति, यदि ताः ककुप्कार्ये प्रयुज्यन्ते । आह, ननु वाचःस्तोमे तासामर्थवत्ता भविष्यति । उच्यते । सत्यम् अर्थवत्ता तत्र भविष्यति, ककुप्कार्यार्थताऽपि तु गम्यते । सा नापह्नोतव्येति । एवं प्राप्ते, ब्रूमः । प्रागाथिकं तु । तुशब्दः पक्षं व्यावर्तयति । प्रागाथिकं सामगानं कर्तव्यमिति । याऽसौ पूर्वा बृहती उत्तरा च पङ्क्तिः, तयोः प्रग्रथनं कर्तव्यम् । एवं हि स्मरन्ति । 'काकुभः प्रगाथः' इति । आह, ननु ककुभि अनाद्यायां 'काकुभः' इति न प्राप्नोतीति । उच्यते । 'तस्येदम्' इति, 'तत्र भवः' इति वा न दोषः ।

टुप्—'एवं हि स्मरन्ति काकुभः प्रगाथः' इति । एतदयुक्तम् । बार्हत एवायं प्रगाथः छन्दोगैः स्मर्यते । अतो भ्रान्त्या परिचोदनापरिहारौ ।

स्वे च । २६ ॥

भाष्यम्— एवं च स्वे छन्दसि गानं कृतं भवति । उत्तरापाठेन हि अत्रैषा पङ्क्तिरुपदर्शिता तृचकर्मणि ।' तत्र प्रकृतहानमप्रकृतप्रक्रिया च न कृता भविष्यति । तस्मादपि तयोः प्रग्रथनं कर्तव्यमिति ।

प्रगाथे च । २७ ॥

भाष्यम्— एवं चात्र प्रगाथशब्द उपपन्नो भवति । प्रकर्षं हि प्रशब्दो द्योतयति । प्रकर्षेण यत्र गानं स प्रगाथः । कश्च प्रकर्षः? यत् किञ्चित् पुनर्गायति । तस्मादपि प्रकृतयोः प्रग्रथनं कर्तव्यमिति ।

लिङ्गदर्शनाव्यतिरेकाच्च । २८ ॥

भाष्यम्— अव्यतिरेकेण च सर्वत्र लिङ्गं दर्शयति । कथमिदम् अव्यतिरेकेणेति । यत् प्रकृतयोरेव प्रग्रथनमुपपद्यते, न प्रकृतव्यतिरेकेणेति । किं लिङ्गं भवति? एवमाह, 'एषा वै प्रतिष्ठिता बृहती या पुनःपदा, तद्यत् पादं पुनरारभते, तस्माद्वत्सो मातरमभि हिं करोति' इति । पुनःपादारम्भः प्रग्रथने उपपद्यते, नान्यथा । तस्मात् याऽसौ पूर्वा बृहती, उत्तरा च पङ्क्तिः, तयोः प्रग्रथनेन तृचकर्म कृत्वा ककुबुत्तराकारं गानं कर्तव्यमिति ।

सोम—प्रग्रथनप्रकारस्तु, 'अभि त्वा...तस्थुषः' इति पठितायां बृहत्यां प्रथमतो रथंतरं गेयम् । सैका स्तोत्रीया । ततः 'ईशानमिन्द्र तस्थुषः' इति पादं पुनरादाय 'न

त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते' इत्युत्तरस्या अर्धेन सह गातव्यम्, सा त्रिपदा अष्टाविंशत्यक्षरा ककुप् द्वितीया स्तोत्रीया। ततः 'न जातो न जनिष्यते' इति पादं पुनरादाय 'अश्वावन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे' इति उत्तरस्या अवशिष्टार्धेन सह गाने अपरा ककुप् संपद्यते, सा तृतीया स्तोत्रीया। एवं बृहत्यपि योज्यम्।

वि— 'रथंतरे ककुब् ग्राह्या ग्रथ्या वा, ऽऽद्योऽर्थवत्त्वतः।, पुनःपदाप्रसिद्ध्यादेरन्योऽर्थोऽन्यत्र वीक्ष्यताम्॥'

भाट्ट— ज्योतिष्टोमे बृहद्रथंतरे सामनी बृहत्योरुत्पन्ने। तयोरुत्तराग्रन्थे एकैकस्य एकैका पङ्क्तिच्छन्दस्का उत्तरा। तत्रेदं वचनम् 'न वै बृहद्रथंतरमेकं छन्दः, यत् तयोः पूर्वा बृहती, ककुभावुत्तरे' इति। तत्र किं पङ्क्तिच्छन्दस्कामुत्तरां परित्यज्य द्वे द्वे ककुभौ दाशतयीभ्यः समानेतव्ये, उत बृहतो योनिम् उत्तरां च पङ्क्तिं प्रग्रथ्य ककुभावुत्तरे संपादनीये इति चिन्तायाम्, प्रग्रथनेन मुख्यककुप्संपत्त्यभावात् अक्षरसाम्यमात्रेण मुख्यककुप्-शब्दस्य गौणत्वापत्तेः जघन्योत्तराशब्दस्यैव असंबन्धिशब्दत्वं परित्यज्य कार्यलक्षणां योन्युत्तरकाललक्षणां वा अङ्गीकृत्य ककुब्-विध्यङ्गीकारात् स्वाभाविकककुभोरेव आनयनम्। एवं च मुख्यतृचगानसंपत्तिरपि। इति प्राप्ते, तथात्वे 'पादं पुनरारभते' इत्यस्य वैयर्थ्यापत्तेः। ककुप्पदमेव गौणमङ्गीकृत्य उत्तरोद्देशेन ककुप्त्वविधानात् तयोरेव प्रग्रथनेन ककुप्त्वसंपादनम्। एवं वैदिकानां प्रग्रथनस्मरणं बार्हतप्रगाथसमाख्या उत्तराग्रन्थे पङ्क्तेः पाठश्च उपपन्नो भवति। तृचत्वोपपत्तिः सामान्यविधित्वात् तथा अनुपपन्नाऽपि न दुष्यति। प्रग्रथनं च आद्यां बृहतीं सकृत् पठित्वा तस्या अन्त्यपादेन सह द्वितीयाया अर्धर्चं पठित्वा तदन्त्यपादेन सह द्वितीयान्त्यार्धर्चपठनरूपं बोध्यम्। तेन द्वितीया ककुप् अष्टाविंशत्यक्षरैव। आद्यायाः सप्तविंशत्यक्षरत्वेऽपि अल्पान्तरत्वान्न दोषः।

मण्डन— 'प्रग्रन्थेनोत्तरा ककुप्।' ८.

शंकर— 'पृष्ठसाम्नोः प्रगाथः स्यात्।' ८.

* ज्योतिष्टोमे भक्षानुवाकः ग्रहणावेक्षणसम्यग्जरणेषु यथालिङ्गं विनियोक्तव्यः, न तु कृत्स्नो भक्षणे एव। भा. ३।२।९।२५–२६, * ज्योतिष्टोमे भक्षानुवाके गायत्रच्छन्दसः इत्युच्यते। स मन्त्रांशः अनेकच्छन्दस्केऽपि स्यात्। ३।२।१८।४२–४३, * ज्योतिष्टोमे भक्षानुवाके मन्द्रादिः भक्षयाम्यन्तः एक एव मन्त्रः, न तु तृप्यतु इत्येवमन्तः। स च भक्षणे। ३।२।१०।२७, * ज्योतिष्टोमे भक्षमन्त्रः ऐन्द्रेषु अनैन्द्रेषु च, न तु अनैन्द्राणाममन्त्रकं भक्षणम्, नापि यथादेवतमूहः। इन्द्रपीतपदं सवनविशेषणम्। १०।३।११।२८–२९,३९,४४.

**ज्योतिष्टोमे भृतिवननं सोमक्रयश्च नियतौ॥**

**याच्ञाक्रयणमविद्यमाने लोकवत्। ६।८।७।२६॥**

भाष्यम्— इदं समाम्नायते ज्योतिष्टोमे 'द्वादश रात्रीर्दीक्षितो भृतिं वन्वीत' इति (द्वादशदिनानि सोमयागोपयुक्तं नानाविधं द्रव्यं याचनेन संपादनीयम् इति)। तथा 'सोमं क्रीणाति' इति। तत्र संदेहः किं यस्य न विद्यते भृतिः, तेन वनितव्या, यस्य च न विद्यते सोमः तेन क्रेतव्यः, उत उभयथाऽपि सति च असति च। किं प्राप्तम्? याच्ञाक्रयणम् अविद्यमाने भृतिधने सोमे च स्यात्। कस्मात्? द्रव्यसंभवार्थं याच्ञाक्रयणमर्थवत् भविष्यति। तत् विद्यमाने अनर्थकम्। अनर्थकं च उक्तमपि न कर्तव्यम्। तस्मात् अविद्यमाने भवेत्। लोकवत्। यथा यस्य लोके नास्ति द्रव्यम्, स याचते क्रीणाति च। एवमिहापि द्रष्टव्यम्।

टुप्— 'यैस्तु द्रव्यं चिकीर्ष्यते' (इत्यनेन न्यायेन याच्ञायाः) द्रव्योपादानार्थत्वात् द्रव्यं चिकीर्षितम्। तत् तत्प्रयुक्तं तन्निमित्तं च। इति पूर्वपक्षः।

**नियतं वाऽर्थवत्त्वात् स्यात्। २७॥**

भाष्यम्— नियतं वा याच्ञाक्रयणम्। तत् विद्यमाने अविद्यमाने च द्रव्ये स्यात्। एवं याच्ञाक्रयणमर्थवत् भवति। ज्योतिष्टोमप्रयुक्तं हि तत् श्रूयते, न द्रव्यप्रयुक्तम्। तच्च नित्यं ज्योतिष्टोमस्य। नैवं वचनं भवति 'यदा द्रव्यं नास्ति तदा कर्तव्यम्' इति। ज्योतिष्टोमस्य च नित्यमङ्गमुक्तम्, द्रव्याभावो निमित्त-

मुक्तम् इति परिकल्प्येत। कल्पनायां शब्दो बाध्येत। अतो याच्ञाक्रयणसंस्कृतं द्रव्यम् इहोपयोक्तव्यम्। अन्यथा वैगुण्यं भवति। तस्मात् सति च असति च द्रव्ये याच्ञाक्रयणमनुष्ठातव्यमिति। अथ यदुक्तं लोकवदिति, लोके कर्म अर्थलक्षणं भवति, न शब्दलक्षणम्। यथा अर्थः, तथा क्रियते, न यथा शब्दः। वेदे तु शब्देनैव अर्थः अवगम्यते, तथैव अनुष्ठेयमिति। तस्मात् विद्यमानेऽपि कर्तव्यम्।

टुप्— प्रकरणाम्नानात् अपूर्वप्रयुक्तं तन्निमित्तं च इति उत्तरः (पक्षः)।

सोम—इहापि सामान्यश्रुतेः विशेषेषु अविरोधात् विशेषविषयत्वम् इति प्रत्यवस्थानात् संगतिः। इत्थमार्जितमेव द्रव्यमपूर्वं साधयति, नान्यत् इति नियमः।

वि— 'याच्ञाक्रयावभावे स्तो विद्यमानेऽपि वा, ऽग्रिमः। द्रव्यार्थत्वा, दपूर्वार्थे कुर्यात् तौ द्रव्यवानपि॥' (क्रयौ अभावे इति च्छेदः)।

भाट्ट— 'दीक्षितो भृतिं वन्वीत' इति याच्ञा यस्यापि दक्षिणादानार्थं द्रव्यमस्ति तेनापि कार्या, न त्वविद्यमानद्रव्येणैव। नित्यवच्छ्रवणेन सर्वदैव क्रतुना अपूर्वेण च प्रयुक्तत्वात्। न च अस्याः द्रव्यप्राप्तिद्वारा द्रव्यसंस्कारकत्वात् द्रव्यसत्त्वे च तत्प्रापणोपायवैयर्थ्यात् असत्यपि निमित्तत्वश्रवणे प्रयोजनवशादेव आकाङ्क्षितविधिन्यायेन नियमविधित्वोपपत्तिरिति वाच्यम्। अनाकाङ्क्षितविधानस्य फलकल्पकत्वेन दोषत्वात् प्रकृते चाविद्यमानद्रव्यस्थले द्रव्यप्राप्तिरूपफलवत् विद्यमानद्रव्यस्थलेऽपि तत्फलत्वाविशेषात् कल्पनाऽभावेन दोषत्वाभावात्, याच्ञाप्राप्तद्रव्यस्यैव क्रत्वपूर्वेण ग्रहणात् नित्यत्वोपपत्तेः। एवं विद्यमानेऽपि सोमे क्रयस्यावश्यकत्वम्। ६.

मण्डन—' याच्ञाक्रीती द्रव्यभावेऽपि कार्ये। ' ८.

शंकर—' नित्यौ याच्ञाक्रयौ सोमे। ' ८.

* ज्योतिष्टोमे 'मन्द्रं प्रातःसवनम्' इतिस्वरेण तत्प्रधानमवरुद्धम्। सु. पृ. ११८०. * ज्योतिष्टोमे माध्यंदिनपवमानोत्तरं चत्वारि पृष्ठस्तोत्राणि भवन्ति अभि त्वा शूर, कया नश्चित्र, तं वो दस्म, तरोभिर्वो इति। तानि च क्रमेण रथंतर–वामदेव्य–नौधस–कालेयसामभिः गीयन्ते। वि. १।४।३, * ज्योतिष्टोमे मुष्टीकरणवाङ्नियमौ सर्वयागाङ्गम्। आनन्तर्याधिकरणम्। ३।१।१४. * ज्योतिष्टोमे मैत्रावरुणाय दण्डदानं संस्कारकमर्थकर्म, न प्रतिपत्तिः। दण्डदानन्यायः। भा. ४।२।६।१६–१८.

## ज्योतिष्टोमे मैत्रावरुणादिग्रहेषु श्रयणार्थेषु पयआदिषु प्रदेयधर्माः न कर्तव्याः॥

**श्रयणानां त्वपूर्वत्वात् प्रदानार्थे विधानं स्यात्। ९।४।१२।४५॥**

भाष्यम्— ज्योतिष्टोमे श्रूयते 'पयसा मैत्रावरुणं श्रीणाति, सक्तुभिर्मन्थिनम्, धानाभिर्हारियोजनम्, हिरण्येन शुक्रम्, आज्येन पात्नीवतम्'। तत्र संशयः किं श्रयणानां प्रदेयधर्मा भवन्ति, उत नेति। कुतः संशयः? यदि प्रदेयानि श्रयणानि, तत एषु प्रदेयधर्मा भवन्ति, अथ न प्रदेयानि, न भवन्तीति। किं प्राप्तम्? प्रदेयानि प्रदेयधर्मैः संबध्येरन्निति। श्रयणाद्धि द्रव्यं जायते पयोमिश्रश्च सोमो भवति, संमिश्रे च हूयमाने पयोऽपि होमेन संबध्यते। यदि पयोमिश्रश्च सोमो भवति, तत्र सोमस्य पयसा मिश्र्यमाणस्य न कंचिदुपकारं पश्यामः। यागस्य तूपकारो भवति निर्वृत्तिर्नाम। यदि होमेन संभन्त्स्यते इति मिश्रणाभिप्रायः, तत उपकारकं मिश्रणं दृष्टेनोपकारेण। अतो हि गुणवान् यागः प्रत्यक्षः पयसा निर्वर्त्यते इति। सोमोपकारः कल्प्यः स्यात्। तस्मात् पयसा सोमो मिश्र्यते। स मिश्रितः प्रयोगवचनेन कथं संबध्यते इति। न च प्राकृतं मिश्रणं केनचित् द्रव्येण प्राप्तम्, यत्रेदं द्रव्यान्तरं पयो विधीयते इति अपूर्वत्वात् सोमस्य। तस्मात् प्रदानार्थस्य पयसो विधानं स्यात्। प्रदेयपयोधर्माश्चात्र कर्तव्या इति।

**गुणो वा, श्रयणार्थत्वात्। ४६॥**

भाष्यम्— वाशब्दः पक्षं व्यावर्तयति। गुणभूतं पयः स्यात् सोमस्य, न प्रदेयद्रव्यम्। प्रदेयत्वेन अश्रवणात्। सोमार्थेन च श्रुतत्वात्।

**अनिर्देशाच्च। ४७॥**

भाष्यम्—न होमेन प्रयोगवचनेन वा अस्य संबन्धः। अनिर्देशः परार्थत्वात्। न च प्रत्यक्षेणापि पयस्यागे यागनिर्वृत्तिः पयसा। प्रत्यक्षदेवतासंबद्धो हि त्यागो

यागः। न चात्र पयसो देवतासंबन्धः। मैत्रावरुणं ग्रहं गृह्णातीति वचनम्, न मैत्रावरुणं पय इति। तस्मात् दृष्टोपकाराभावात् अदृष्टः सोममिश्रणे सोमसंस्कारोऽभ्युपगम्यते। तस्मान्न प्रदेयधर्मैः संबध्यते इति।

**श्रुतेश्च तत्प्रधानत्वात्। ४८॥**

**भाष्यम्**— इतश्च सोमार्थं पयः। कुतः? श्रुतिर्हि सोमप्रधाना भवति। द्वितीयाविभक्तिः श्रूयते। तस्मात् श्रयणेन सोमः एवेप्स्यते इति।

**अर्थवादश्च तदर्थवत्। ४९॥**

**भाष्यम्**— अर्थवादश्च श्रयणस्य सोमार्थस्य भवति। 'स मित्रोऽब्रवीत्, पयसैव मे सोमं श्रीणन्' इति। नहि भवति पयो मे दद्युरिति। कथं तर्हि? सोमं पयसा संस्कुर्युरिति। तस्मादपि सोमार्थं श्रयणम्।

**संस्कारं प्रति भावाच्च तस्मादप्यप्रधानं स्यात्। ५०॥**

**भाष्यम्**— संस्कारं प्रति श्रयणवचनं भवति। यत्र संस्काराः श्रूयन्ते, तत्रेदं श्रूयते पयसा मैत्रावरुणं श्रीणातीत्येवमादि। तस्मात् संस्कारप्राये श्रवणात् अयमपि संस्कार एवेति गम्यते। भवति हि प्रायोवृत्त्या तद्बुद्धिः। यथा अग्न्यप्राये लिखितः अग्रयः इति गम्यते। तस्मात् प्रदेयधर्मैर्न संबध्यते इति।

**शा**— 'द्वितीयया प्रधानत्वं सोमस्यात्रावगम्यते। तृतीयया च तादर्थ्यं पयसः प्रतिपाद्यते॥ श्रुते चादृष्टसंस्कारकल्पना नैव दुष्यति। तस्मात् प्रदेयधर्माणां न पयःप्रभृतौ क्रिया॥' १३.

**सोम**— पशुकामस्थले पयसि प्रदेयधर्माभावेऽपि श्रयणेषु तद्धर्मप्राप्तिः इत्युत्थितेः **संगतिः**। **सूत्रार्थस्तु**— श्रयणानां पयःप्रभृतीनां प्रदानार्थं विधानं स्यात्। न चात्र प्रकृतितः प्राप्तं श्रयणमनूद्य पयःप्रभृतेर्द्रव्यस्य विधानमित्युपपत्तिरस्ति सोमयागस्यापूर्वत्वात् इति।

**वि**—'मिश्रणे पयआदीनां सोमधर्मा न वा, ऽग्रिमः। प्रदातुं मेलना, न्मैवं संस्कारार्थत्वतः श्रुतेः॥' १३.

**भाट्ट**— सोमे 'पयसा मैत्रावरुणं श्रीणाति, सक्तुभिर्मन्थिनम्' इत्यादौ तृतीयया पयःप्रभृतीनां श्रयणं प्रति गुणत्वावगमात् सत्यपि सोमसंसर्गे देवतासंबन्धाभावेन प्रदेयत्वानुपपत्तेः, न प्रदेयधर्माः क्रयादयः। न च प्रयाजशेषन्यायेन श्रयणस्य सोमसंस्कारकत्वे अदृष्टार्थत्वप्रसङ्गात् पयःसंस्कारकत्वावगतेः, तदन्यथाऽनुपपत्त्या यागे तस्य विनियोगकल्पनेन प्रदेयत्वावगतिः। पयःसंस्कारकत्वेऽपि अदृष्टार्थत्वस्य तुल्यत्वात् उत्पत्तिशिष्टसोमावरोधे पयसो निवेशनानुपपत्तेश्च। निषादस्थपत्यधिकरणन्यायेन तृतीयाऽऽदौ लक्षणायां प्रमाणाभावाच्च। प्रयाजशेषवत् उपयुक्तत्वाभावेन अस्मदुक्तप्रयाजशेषन्यायाभावाच्च। तस्मान्नात्र प्रदेयधर्माः। ११.

**मण्डन**— 'श्रयणं स्यादधर्मकम्।'

**शंकर**— 'ग्रहेषु श्रयणे तथा।' न प्रदेयता। १३.

* ज्योतिष्टोमे 'य एवं विद्वान् षोडशिनं गृह्णाति'। अयं षोडशी ग्रहः राजन्यार्थं प्रकृतौ एव। 'अग्निष्टोमे राजन्यस्य गृह्णीयात्'। स चायम् अत्यग्निष्टोमः इत्युच्यते। ब्राह्मणस्य अग्निष्टोमः अत्यग्निष्टोमश्चापि। वि. १०।५।९। स च उक्थ्यग्रहणोत्तरमाग्रयणपात्राद् ग्राह्यः। १०।५।१०। स च तृतीयसवने एव ग्राह्यः, न पूर्वसवनयोः। १०।५।११, * ज्योतिष्टोमे यजमान एक एव। सत्रे तु नाना। ३।३।१४, * ज्योतिष्टोमे यजमानस्य संस्कारा वपनादयो नाङ्गार्थाः, किन्तु ग्रहैः सोमहोमरूपमुख्यार्थाः। ३।७।२. * ज्योतिष्टोमे यज्ञायज्ञीये गिरापदस्य इरापदेन बाधः। भा. ९।१।१८।५०-५३, * ज्योतिष्टोमे यज्ञायज्ञीये गिरापदस्थानापन्ने इरापदे गानं कर्तव्यम्। ९।१।१९।५४-५८. * ज्योतिष्टोमे 'यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्य च' इति। तत्र आतिथ्योपसदग्नीषोमीयास्त्रयोऽपि बर्हिषः प्रयोजकाः। वि. ४।२।१३. * ज्योतिष्टोमे 'यदि कामयेत वर्षेत् पर्जन्यः इति, नीचैः सदो मिनुयात्' इति कामः याजमानः एव, नार्त्विजः। वचनात्तु ऋत्विजामपि स्यात् यथा 'उद्गाता आत्मने वा यजमानाय वा यं कामं कामयते, तमागायति' (बृउ. १।३।२८) इति। भा. ३।८।५।१३-१४. * ज्योतिष्टोमे 'यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामा आग्रयणाग्रान्' अनेन ज्योतिष्टोमे एव पृष्ठस्तोत्रे रथंतरसामत्वे ऐन्द्रवायवाग्रत्वम्, बृहत्सामत्वे

शुक्राग्रत्वम्, जगत्सामत्वे चाग्रयणाग्रत्वं गुणो विधीयते। तत्र जगत्सामत्वे आग्रयणाग्रत्वं विषुवति द्रष्टव्यम्। वि. २।३।१. * ज्योतिष्टोमे याजमानाः धर्माः भोक्तृत्वांशेन केवलप्रधानार्थाः, न तु कर्तृत्वांशेन अङ्गप्रधानार्थाः। चा. ३।७।२।६ पृ. १०७७.

**ज्योतिष्टोमे याजमानमन्त्राणां न परिसंख्या॥**

ज्योतिष्टोमे ये दर्शपूर्णमासविकाराः, तेषु याजमानमन्त्राणां नातिदेशः, 'यज्ञो बभूव स आ बभूव' इति याजमानमन्त्रस्य पुनर्विधानेन गृहमेधीयाज्यभागन्यायेन तदितरपरिसंख्यासिद्धेः। इति प्राप्ते, स्तुतशस्त्रानुमन्त्रणार्थत्वेन तस्य पुनर्विधानेऽपि आज्यभागयोरिव प्रकृतिक्लृप्तोपकारार्थत्वेन तदभावान्न परिसंख्यात्वम्। संकर्ष. २।२।४.

* ज्योतिष्टोमे 'युवं हि स्थः स्वर्पती' इति 'द्वयोर्यजमानयोः प्रतिपदं कुर्यात्, एते असृग्रमिन्दवः इति बहुभ्यो यजमानेभ्यः' इति। ज्योतिष्टोमात् उत्कृष्टव्ये एते प्रतिपदौ, न तु ज्योतिष्टोमे एव निविशेते। भा. ३।३।९।१७–१९, * ज्योतिष्टोमे यूपस्य स्वरुं करोति। स च पशुत्रयस्य तन्त्रेण। ११।३।५।८–१२, * ज्योतिष्टोमे यूपैकादशिन्यां चोदकप्राप्ता यूपाहुतिस्तन्त्रम्। ११।२।७।२६–२९.

**ज्योतिष्टोमे यूपैकादशिनीपक्षे अञ्जनादिपरिव्याणान्तेन काण्डेन अनुसमयः कर्तव्यः॥**

**वचनात्तु परिव्याणान्तमञ्जनादि स्यात्। ५।२।५।७॥**

भाष्यम्— ज्योतिष्टोमे अग्नीषोमीयपशौ यूपस्याञ्जनाद्याः पदार्थाः श्रूयन्ते। तेषु यूपैकादशिन्यां प्राप्तेषु संशयः किम् अञ्जनादीनामेकैकेनानुसमयः, उत अञ्जनादिना परिव्याणान्तेनेति। किं प्राप्तम्? परिव्याणान्तम् अञ्जनादि स्यात्। कुतः? वचनात्। वचनमिदं भवति। 'अञ्जनादि यजमानो यूपं नावसृजेदापरिव्याणात्' इति। न च शक्यं बहुषु अञ्जनादिना अनुसमयः कर्तुम्, न चानवस्रष्टुम्। तस्मात् परिव्याणान्तेन अनुसमयः।

**कारणाद्वाऽनवसर्गः स्याद्, यथा पात्रविवृद्धिः। ८॥**

भाष्यम्— सहत्वस्य प्रापकः प्रयोगवचनः अनुग्रहीष्यते इति पदार्थेन अनुसमयः। अनवसर्गश्च प्रकृतौ अर्थात् कृतः साहाय्यं यजमानेन अध्वर्योः। एवं दृष्टार्थता अनवसर्गस्य। (अवसर्गः त्यागः स्पर्शाभावः, तदभावः अनवसर्गः)। इतरथा अदृष्टार्थता स्यात्। न च अर्थात् कृतं चोदकः प्रापयति। तस्मात् यूपान्तरेण उच्छ्रयितव्येन कारणेन अवसृजेत्। यथा 'पृषदाज्येन अनुयाजान् यजति' इति अर्थात् तस्य धारणार्थं पात्रं भिद्यते।

**न वा, शब्दकृतत्वात्, न्यायमात्रमितरदर्थात् पात्रविवृद्धिः। ९॥**

भाष्यम्— न वा एतत् पदार्थेनानुसमयः इति। परिव्याणान्तेन पदार्थकाण्डेन अनुसमयः स्यात्। शब्दकृतं हि प्रकृतौ अनवसर्जनम्। शक्नोति हि ऋतेऽपि यजमानात् अध्वर्युः यूपमुच्छ्रयितुम्। सौकर्यमिति चेत्, विधिशब्दो बाध्येत। दृष्टार्थता एवं हि नियम्येत भोजने प्राङ्मुखतेव। अतः असंभवात् पदार्थकाण्डेन अनुसमयः। प्रयोगवचनस्य च न्यायमात्रत्वम्। चोदकस्ततो बलीयान्। पात्रविवृद्धिस्तु अर्थात् कर्तव्या।

शा— पूर्वेण न्यायेन पदार्थानुसमये प्राप्ते, 'नैवं नियमतोऽप्राप्तेरनुत्सर्गो विधीयते। वाक्यं चार्थवदेवं स्याद् वादमात्रं त्वनर्थकम्॥ गणेऽपि चोदकेनातः प्राप्यतेऽनवसर्जनम्। तेनाञ्जनादिसंघोऽत्र संघेनानुसमीयते॥'

वि— 'यूपाञ्जनादिरेकैकः संघो वाऽनुसमीयते।, एकैकः पूर्ववत्, न्मैवं वचनात् काण्डसंगतेः॥'

भाट्ट— यूपधर्मा अञ्जनोच्छ्रयणसंमानपरिव्याणादयो यूपगणे अतिदेशप्राप्ताः पृथक्पदार्था अपि न प्रत्येकमनुसमेयाः 'अञ्जनादिपरिव्याणान्तं यजमानो यूपं नावसृजेत्' इति प्रकृतौ अनवसर्गस्य विहितस्य इहापि अतिदेशात्। न चानेन रागप्राप्ते कादाचित्के यूपसंयोगे सति त्यागनिषेधविधिः, पाक्षिकत्वाद्यापत्तेः। अपितु संयोगाभावरूपसंयोगाख्यस्य अनवसर्गस्यैव सहायार्थं नियमविधिः। अतश्च तदनुरोधेन सत्रातिरिक्ते यूपगणे तावत् काण्डस्यानुसमयः। सत्रे तु येनकेनापि

यजमानेन धारणसंभवात् पदार्थानुसमय एव । अन्यत्रापि तावत् अतिरिक्तपदार्थानां प्रत्येकमेवानुसमयः ।

**मण्डन**— 'क्रमः परिव्याणयुतेऽञ्जनादौ ।'

**शंकर**— 'यूपानैक्येऽञ्जनादिषु ।' काण्डानुसमयः ।

* ज्योतिष्टोमे रशना द्वितीयाऽपि यूपार्था । वि. ४।४।९, * ज्योतिष्टोमे राजन्यार्थं गृह्यमाणः षोडशिग्रहः उक्थ्येभ्यः परस्तात् अस्तमयकाले गृह्यते 'समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति' । ५।१।१८, * ज्योतिष्टोमे राजन्यवैश्ययोः फलचमसः होमभक्षयोः । फलचमसाधिकरणम् । ३।५।१९.

**ज्योतिष्टोमे रात्रिगतकृत्स्ननिद्रार्थम् आदौ सुकृदेव मन्त्रः अवान्तरनिद्राभेदेऽपि, एवं नदीतरणे अभिवर्षणे अमेध्यदर्शने च ॥**

**स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम् । ११।४।१७।५० ॥**

**भाष्यम्**— ज्योतिष्टोमे स्वप्नार्थो मन्त्रः 'त्वमग्ने व्रतपा असि' इति । तत्रैव नदीतरणार्थः 'देवीरापः' इति । तथा अभिवृष्टस्य 'उन्दतीरोजो धत्ते' इति । अमेध्यप्रतिमन्त्रणश्च 'अबद्धं चक्षुः' (अबद्धं मनो दरिद्रं चक्षुः) इति । स यदा पुनः प्रतिबुद्धः स्वपिति, अनेकस्रोतसं वा नदीं तरति, संतानेन वा अभिवृष्यते, अनेकं वा अमेध्यमेककालं पश्यति, तत्र चिन्ता किं मन्त्रस्यावृत्तिः, अथवा सकृदेव प्रयोगः इति । तत्र विशेषग्रहणात् आवृत्तौ प्राप्तायामुच्यते । स्वप्नादिषु चैवम्, यथा कण्डूयने सकृत् प्रयोगः इत्यर्थः । कृत्स्नां रात्रिमसौ उद्दिश्य स्वप्नमन्त्रं प्रयुङ्क्ते, नैकां निद्राम् । तथा सर्वस्रोतांसि तितीर्षुः, सर्वाभिवर्षणानि, सर्वामेध्यानि च । युगपत् सर्वेषामुपगमात् तत्र न गृह्यते विशेषः । तस्मात् अनावृत्तिर्मन्त्रस्य ।

**सोम**— स्वप्नादीनां भेदात् आनन्तर्येण विशेषग्रहणात् भेदः इति मन्वानं प्रति पूर्वोक्तातिदेशात् संगतिः । एकस्मिन् देशे अनेकामेध्यदर्शने 'अबद्धं मनः' इति नावर्तते, देशान्तरे तु आवृत्तिः इति कपर्द्युक्तिः चिन्त्या ।

**वि**— 'स्वप्नादिमन्त्र आवर्त्यो नो वा, ऽऽद्योऽस्त्वन्तरायतः । , कृत्स्नोद्देशप्रवृत्तत्वान्निमित्ताभेदतः सकृत् ॥' १८.

**भाट्ट**— सोमे स्वापार्थो मन्त्रः 'त्वमग्ने व्रतपा असि' इति । संपूर्णां रात्रिं निद्रामुद्दिश्यैव मन्त्रपाठात्, सकृत्पठितमन्त्रजन्यस्मृत्यविच्छेदाच्च मध्येमध्ये प्रतिबुध्य पुनःपुनः स्वापेऽपि सकृदेव मन्त्रः । तथा 'देवीरापः' इति नदीतरणमन्त्रोऽपि स्रोतोभेदेऽपि सकृदेव । तथा अभिवृष्टे 'उन्दतीः' इति मन्त्रः वर्षधाराभेदेऽपि सकृदेव । तथा 'अबद्धं मनो दरिद्रं चक्षुः' इत्यमेध्यदर्शने प्रतिमन्त्रणमन्त्रोऽपि युगपदनेकामेध्यदर्शने न भिद्यते ।

**मण्डन**— 'मन्त्रः स्वप्नादिके सकृत् ।' १८.

**शंकर**— 'स्वप्नादावेवमेव च ।' सकृत् । १८.

* ज्योतिष्टोमे वपनादिसंस्काराः याजमानाः, वचनविशेषात्तु ऋत्विजामपि । वपनाधिकरणम् । भा. ३।८।२।३–८. * ज्योतिष्टोमे वरणकाले 'कच्चित् कल्याण्यो दक्षिणाः' इति ऋत्विजां प्रश्नः । वि. १०।२।१०, * ज्योतिष्टोमे वरणकाले सोमाभिधानं क्रियते 'ज्योतिष्टोमेनाग्निष्टोमेन सोमेन रथंतरपृष्ठेन गवां द्वादशशतदक्षिणेनाहं यक्ष्ये, तत्र त्वमुद्गाता भव' इत्यादि । १०।२।११. * ज्योतिष्टोमे वर्त्महोमो वर्त्मन्येव । भा. १०।८।८।१६, * ज्योतिष्टोमे वषट्कर्तुः प्रथमभक्षः एकपात्रे । ३।५।१३।३६–३९.

**ज्योतिष्टोमे वषट्कारोऽपि पृथक् सोमभक्षकारणम् ॥**

**वषट्काराच्च भक्षयेत् । ३।५।१०।३१ ॥**

**भाष्यम्**— अथ किं समाख्यैव एका भक्षकारणम् ? नेति ब्रूमः । वषट्काराच्च भक्षयेत् । वषट्कारश्च भक्षणे निमित्तम् । कथम् ? वचनात् । एवं हि श्रूयते 'वषट्कर्तुः प्रथमभक्षः' इति । भक्षणस्य अप्राप्तत्वात् न प्राथम्यविधानार्थं एष शब्दः प्राथम्यविशिष्टं भक्षणमेव विदधाति इति ।

**वा**— इदमपरं वचनम् 'वषट्कर्तुः प्रथमभक्षः' इति । तत् किं वषट्कारं निमित्तीकृत्य प्राथम्यविशिष्टं

भक्षणं विधत्ते, उत भक्षणमनूद्य प्राथम्यमात्रं विधत्ते इति विचारः। किं प्राप्तम्? 'न चेदन्येन शिष्टाः' (१।४।६।९) इति (न्यायेन) कथञ्चित् अनुवाद्यत्वे संभवति विशिष्टविधानानुपपत्तेः, प्राथम्यस्य च अप्राप्तत्वात् तदनुवादेन भक्षविधानासंभवात्, एवं वचनं व्यज्यते 'यो वषट्कर्तुर्भक्षः, स प्रथमः' इति। ननु च अप्राप्तत्वात् भक्षोऽपि अनुवदितुं न शक्यते (उत्तरम्–) समाख्यया प्राप्तत्वात् अनुवादो गम्यते। अस्ति हि तस्य (वषट्कर्तुः) समाख्यया चमसेषु भक्षः, स शक्यः अनुवदितुम्। तेषां च (चमसिनां मध्ये) यो यदा वषट् करोति, स तदा प्रथमो भक्षयेत्। तत्र एतत् स्यात्, ग्रहेषु चमसान्तरेषु च प्राप्त्यभावात् अनुवादो नोपपद्यते इति। नैष दोषः। नहि अवश्यं यदेव सर्वत्र प्राप्तम्, तदेव अनुवदितव्यम्, सर्वानुवादानां यथासंभवं प्राप्त्यपेक्षत्वात्। न च ग्रहचमसान्तराणां वषट्कर्तृभिः अभक्ष्यमाणानां किञ्चिन्न सिध्यति। प्रतिपत्तिरिति चेत् (प्रतिपत्तिर्न सिध्यति इति शङ्का), वेदविहितप्रतिपत्त्यभावे लौकिकप्रतिपत्तिसिद्धेः। वक्ष्यमाणनिमित्तद्वारेण (अनन्तराधिकरणे, होमाभिषवरूपेण) वा भक्षणोपपत्तिः। अथोच्यते, समाख्यया विप्रकृष्टा प्राप्तिः न शक्यते शीघ्रप्रवर्तिन्या श्रुत्या अनुवदितुम्। अतः प्राप्त्यभाववेलायां श्रुतिः प्रवर्तमाना यत्रयत्र वषट्कृतम्, तत्रतत्र अविशेषेण विधास्यति इति। तदयुक्तम्। तत्र हि संनिकर्षविप्रकर्षौ अपेक्ष्येते, यत्र विरोधः कश्चित्। इयं तु श्रुतिः अनेकार्थविधिक्लेशभयात् (श्रूयमाणविधिना प्राथम्यविशिष्टभक्षणान्तरविधाने विशेषणविधानार्थं विध्यन्तरकल्पनात् क्लेशः) यथाकथञ्चिदपि प्राप्नुवन्तं भक्षं प्रतीक्षते। यदा 'केन चिदपि प्रमाणेन नास्ति प्राप्तिः' इति अवगम्यते, तदा विशिष्टविधानमङ्गीकरोति। तथाच प्रकरणादिप्राप्तार्थानुवादेन श्रुतयो गुणानां विधात्र्यः इष्टाः। तस्मात् प्राथम्यमात्रनिमित्तत्वात् न वषट्कारो भक्षकारणम्। इति प्राप्ते, उच्यते।

'समसार्थाद् विनिष्कृष्य नैकांशोऽनूद्यते यतः।
त्र्यङ्गवत् तेन सर्वोऽयमपूर्वोऽर्थो विधीयते ॥'

यथैव 'त्र्यङ्गैः स्विष्टकृतं यजति' इत्यत्र न अङ्गानि अनूद्य त्रित्वं विधीयते, किं तर्हि पूर्वनिष्पन्नः समासार्थो विधेयो भवति, तथा इहापि परिपूर्णस्य पदस्य पदान्तरयोगात् एकदेशनिष्कर्षे च सामर्थ्याभावात् अशक्यमेव अनुवदितुम् 'यो वषट्कर्तुर्भक्षः' इति। नहि प्राक् समासात् भक्षस्य वषट्कर्तृसंबन्धो युक्तः, सापेक्षत्वे सति समासानुपपत्तेः। ननु च 'भवति वै प्रधानस्य सापेक्षस्यापि समासः' इति सत्यपि वषट्कर्तृसंबन्धे समासः अवकल्पिष्यते। भवेदेतदेवम्, यदि भक्षः एवैकः सापेक्षः स्यात्, इह तु प्राथम्यमपि वषट्कर्तृसंबन्धित्वात् सापेक्षम्। नहि प्राथम्यस्य भक्षो निमित्तम्, किं तर्हि वषट्कर्तृत्वम्, अतो 'वषट्कर्तुः प्रथमः' इत्येवं संबन्ध आपद्येत। ततश्च विस्पष्टमसामर्थ्यं स्यात्। 'यो वषट्कर्तुर्भक्षः' इति चानूद्यमाने विशिष्टानुवाददोषः, भक्षमात्रेण वषट्कर्तुरनाक्षेपात्। वषट्कर्तृत्वस्य च क्रियाऽन्तरेष्वपि अनैकान्त्यात्। अन्यतरानुवादे तु सर्वभक्षाणां प्राथम्यं विधीयेत, सर्ववषट्कर्तृव्यापाराणां च। तच्चाशक्यं कर्तुम्। अतो वषट्कर्तृप्राथम्यविशिष्टापूर्वभक्षविधानमेतत्। तयोश्च परस्परनियमात् अत्यन्तसमानविषयत्वम्। अतो यावति विषये वषट्कारः, तावत्येव प्रथमभक्षः। कथं पुनः वषट्कारो निमित्तभूतः सन् उपादीयते, कथं च अनुपादीयमानस्य नियमः अवकल्पते? उच्यते। 'नियमः सर्वथा तावदेककर्मनिमित्तकः। उपादानानुपादाने न विशेषः प्रतीयते ॥' न च वषट्कर्तृत्वमनुपादेयम्। नहि अत्र यदिशब्दसप्तम्यादिकृतं निमित्तत्वम्। किं तर्हि वषट्कर्तरि क्रियाऽङ्गत्वेन उपादीयमाने अर्थात् निमित्तत्वं भवति। तस्माददोषः। ननु च 'तस्मादेकं साम तृचे क्रियते स्तोत्रीयम्' इति समासस्थामपि ऋचमनूद्य त्रित्वविधानं दृष्टम्, तथा प्राथम्यविधानमपि सेत्स्यति। न। तत्रापि समासार्थस्यैव विधानाभ्युपगमात्। सर्वस्तोत्रसाम्नां हि तृचा एवोपादीयन्ते। तत्र यदि सकलः समसार्थो न प्राप्तः स्यात्, ततः सर्वविधिर्भवेत्। सर्वत्र च ऋचः सामचोदनयैव पाठक्रमेण च प्राप्ता दृश्यन्ते। तेन 'न चेदन्येन शिष्टाः' (१।४।६।९) इत्येवं न विधीयन्ते। 'वषट्कर्तुः

प्रथमभक्षः' इत्यत्रापि यावद्वषट्कारं समासार्थो विधीयते। तत्र यदि ऋग्वदेव सर्वत्र भक्षः प्राप्तः स्यात्, ततो विधिशक्त्या मुच्येत। स तु नवसु चमसेषु ग्रहेषु चाप्राप्तो निमित्तत्वेन चोपनीतो न ह्यातुमनुवदितुं वा शक्यते। यदि तु ऋचामपि क्वचिदप्राप्तिर्भवेत्, ततः समासे विशेषाभावात् भवेदेव विधिः। सर्वस्तोत्रसामसु तु ताः प्राप्ताः। अपिच त्रित्वं ऋचां विधीयते। ताश्च प्रधानत्वात् सापेक्षत्वेऽपि समस्यन्ते। न तु इह प्राथम्यं भक्षमात्रसंबन्धि इत्युक्तम्। तस्मात् वषट्कारनिमित्तं भक्षं पूर्वं कृत्वा भूयः समाख्याभक्षः कर्तव्यः, न तस्यैव प्राथम्यम् इति सिद्धम्।

वि— 'आद्यभक्षे वषट्कर्तुर्विधिः प्राथम्य एव किम्। किंवा तद्युक्तभक्षे स्याद्, वषट्कारनिमित्तके ॥ अप्राप्तेरग्रिमो, मैवं समासस्थित्यसंभवात्। विशिष्टस्य विधिस्तस्माद् वषट्कारोऽपि कारणम् ॥'

भाट्ट— सोमे एव 'वषट्कर्तुः प्रथमभक्षः' इति श्रुतम्। तत् किं भक्षान्तरवचनम्, किंवा समाख्याऽऽदिप्राप्तभक्षानुवादेन प्राथम्यमात्रविधिरिति चिन्तायाम्, भक्षान्तरत्वे प्रमाणाभावात् प्राथम्यमात्रविधिः। न च वषट्कर्तुरपि विधेयत्वे वाक्यभेदः, वषट्कारे निमित्ते भक्षोद्देशेन प्राथम्यविधानात्, रथंतरे निमित्ते ग्रहोद्देशेन ऐन्द्रवायवाग्रत्वविधिवच्च विजातीयानेकोद्देशे वाक्यभेदाभावात्। अतश्च यत्र चमसे हारियोजने वा अध्वर्य्वादेरन्यस्य वषट्कर्तुश्च समाख्यया होमाभिषवाभ्यां लिप्सावचनेन वा भक्षप्राप्तिः, तत्र वषट्कर्तुः प्रथमं भक्षः ततोऽन्यस्येति वचनार्थः। इति प्राप्ते, 'प्रथमभक्षः' इति समासरूपे एकस्मिन् पदे एकांशेनोद्देश्यत्वे एकांशेन विधेयत्वे च अङ्गीक्रियमाणे एकप्रसरताभङ्गापत्तेः कर्मान्तरमेवेदम्। न च तस्मिन् दूषकताबीजाभावः, सामर्थ्यभङ्गस्यैव तद्बीजत्वात्। तथाहि सर्वत्रोद्देश्यविधेयभावस्थले उद्देश्ये विधेयान्वयात् पूर्वमुद्देश्यस्योद्देश्यत्वेन क्रियाऽन्वयोऽवश्यं वक्तव्यः। अत एव 'यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्' इत्यपि संगच्छते। प्राथम्यं तत्त्वेन प्रथमं क्रियाऽन्वयः, अन्यस्य अतिप्रसक्तत्वात्। तदत्र यत्र भिन्नपदस्थले यागेन स्वर्गं भावयेदित्यादौ तत्तत्पदात् पदार्थोपस्थित्यनन्तरं स्वर्गस्योद्देश्यत्वेन यागस्य च विधेयत्वेन क्रियाऽन्वये प्रथमावगते, पश्चादेव विधेयस्य यागस्योद्देश्ये स्वर्गे अन्वय इति स्थितिः। तद्वच्च इहापि एकपदस्थले भक्षे प्राथम्यान्वयात् पूर्वं भक्षस्य क्रियाऽन्वयोऽभ्युपगन्तव्यः। ततश्च क्रियाऽन्वयात् पूर्वं भक्षप्राथम्ययोर्विशेषणविशेष्यभावानवगमात् एकार्थीभावलक्षणसामर्थ्यभङ्गात् अपरिपूर्णस्य समासपदस्य पदान्तरेण आख्यातेनापि अन्वयायोगात्। यद्यपि च अस्मन्मते वैयाकरणवत् विशिष्टार्थवाचकत्वं न सामर्थ्यम्, तथापि क्रियाऽन्वयात् पूर्वं विशिष्टार्थबोधकत्वमेव तदिति बोध्यम्। अत्र च क्रियाभिन्नं विधेयं बोध्यम्। क्रियाऽऽत्मके विधेये तदन्वयात् पूर्वमुद्देश्यस्य तत्त्वेन क्रियाऽन्वयस्य वक्तुमशक्यत्वात्। अत एव 'विविदिषन्ति यज्ञेन' इत्यादौ विविदिषोद्देशेन यज्ञादिभावनाविधानेऽपि न क्षतिः। अतश्च एकप्रसरताभङ्गभिया भक्षान्तरमेव विधेयम्। अत एव 'लोहितोष्णीषाः' इत्यादौ अतिदेशात् पूर्वमेव लोहितोष्णीषविशिष्टकर्तार एव प्रचारोद्देशेन विधीयन्ते विशेषणमात्रविधिफलका इति तत्रतत्र एकप्रसरताभङ्गपरिहारप्रकारो वक्ष्यते। अतश्च प्रकृते एकप्रसरताभङ्गभिया प्राथम्यस्य पूर्वकर्मणि अनिवेशात् गुणादेव वषट्कर्तृप्राथम्योभयविशिष्टं भक्षान्तरमेव विधीयते सोमसंस्कारार्थम्। तत्र च यागार्थत्वेन वषट्कारस्य क्लृप्तत्वात् कर्तुः उपलक्षणमात्रत्वेन अर्थान्निमित्तत्वावगतेः वषट्कारनिमित्तकमिदं भक्षणं ग्रहेषु चमसेषु वा अविशेषात् सिद्धं भवति।

मण्डन—'वषट्कर्ता च भक्षयेत्।' १०.

शंकर—'वषट्कारो भक्षहेतुः।' १०.

* **ज्योतिष्टोमे** वाग्यमः। स च अङ्गप्रधानोभयाङ्गम्। तेन जिह्वाचापल्यनिवारणम्। वि. ३।१।१४, * ज्योतिष्टोमे वाग्विसर्गः हविष्कृदाह्वानकाले श्रुतः। वाङ्नियमश्च प्रणीताप्रणयनकाले। राजसूये नानाबीजेषु तु चरमे काले कर्तव्यः। ११।३।७. * ज्योतिष्टोमे 'वाससि मिनोति' 'वाससोपावहरति' इति वचनात् सोममानोपावहरणे वासःसाधनके। भाट्ट. १०।६।१९. * ज्योतिष्टोमे वेदिः प्रधानहविषामङ्गहविषां च कृते, न

प्रधानहविषामेव कृते । भा. ३।७।३।७,९, * ज्योतिष्टोमे वैश्वदेवो ग्रहयजिर्वर्तते । तत्र सर्वदेवता इज्यन्ते । तन्मध्ये अङ्गदेवता अपि । १२।१।१२।२६.

**ज्योतिष्टोमे वैसर्जनादिहोमेषु आज्यमेव, न सोमः ॥**

' वैसर्जनानि जुहोति ' इत्यादिभिर्विहितानां सौमिकानां दर्विहोमाणां द्रव्याकाङ्क्षत्वात् प्रकृतः सोम एव बह्वर्थत्वात् नियम्यते । इति प्राप्ते, सोमद्रव्यस्य कतिपयकार्येषु आहत्यविधानेन तदितरेषु तदभावध्वननात् आज्यस्यैव कोशादौ हविःपदेन निर्देशेन तस्य अनादिष्टद्रव्ये प्रवृत्तेः, ' आज्यं हविरनादेशे ' इति स्मृत्या अनुमतेराज्येनैव ते होमा भवेयुः । अत एव धिष्ण्यव्याघारणसंतापेन ' आज्येन पात्नीवतं श्रीणाति ' इत्यत्र आज्यस्य सिद्धवत्कृत्य अनुवाद उपपन्नः । संकर्ष. ३।२।२०.

* ज्योतिष्टोमे ' व्रतं कृणुत ' इति मन्त्रः पयःपानरूपव्रतसंपादनप्रैषे अन्वितः, न तु वाग्विमोके । ' व्रतं कृणुतेति वाचं विसृजति ' इति तु वाग्विसर्गकाले प्रैषपाठः इति कालो विधीयते । वि. ३।२।४.

**ज्योतिष्टोमे शालामुखीयादेव आग्नीध्रप्रणयनम् ॥**

आग्नीध्रीयाग्नेरपि यज्ञतन्वादिहोमाधिकरणत्वेन आहवनीयत्वावश्यम्भावात् औत्तरवेदिकादेव तस्य प्रणयनम् । इति प्राप्ते, शालामुखीयादेव प्रणयनम् । ' अग्निप्रथमाः प्राञ्चोऽभिप्रव्रजन्ति सोमप्रथमा वा ' इति श्रुतौ प्राञ्च इति प्रागाभिमुख्येन गमनविधानात् । ' अग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहि ' इत्यत्र द्वंद्वावगतस्य अग्निप्रणयनसोमराजप्रणयनयोः साहित्यस्य चानुरोधेन शालामुखीयसमीपवर्तिसोमलताया इव तदन्तर्वर्तिन एव अग्नेः प्रणयनं गार्हपत्यापादानकत्वादेव आग्नीध्रीयस्यापि आहवनीयैकदेशत्वमेवेति न तस्य होमाधिकरणत्वभङ्गः । औत्तरवेदिकाग्निप्रणयनोत्तरमपि आग्नीध्रीयप्रणयनपर्यन्तम् आहवनीयांशस्य इह सत्त्वादेव आहवनीयात् इत्यपादानत्वेनोक्तिः । ' एषोऽत ऊर्ध्वम् ' इति स्मृतिरपि आग्नीध्रीयप्रणयनोत्तरकालपरेति तु भाष्यम् । संकर्ष. ३।२।१४.

* ज्योतिष्टोमे ' शुक्राग्रान् ग्रहान् गृह्णीयादभिचरतः, मन्थ्यग्रान् गृह्णीयादभिचर्यमाणस्य ' अत्र शुक्रादीनां न धाराग्रहत्वम् । तथा चापकर्ष एव शुक्रादीनाम् । वि. १०।५।१९ । स चापकर्षो धाराग्रहादौ न तु सर्वादौ । १०।५।२० । ग्रहणापकर्षवत् सादनस्याप्यपकर्षः । १०।५।२१ । सादनापकर्षेऽपि प्रदानस्य नापकर्षः । १०।५।२२, * ज्योतिष्टोमे शुक्राग्रत्वं बृहत्सामत्वे ' यदि बृहत्सामा शुक्राग्रान् ' ग्रहान् गृह्णीयात् । २।३।१. * ज्योतिष्टोमे षोडश कर्तारो वरीतव्याः । तावत्कर्तृकश्च सोमः स्यात् । भा. ३।७।९।२१–२४, * ज्योतिष्टोमे षोडशी तृतीयसवने एव ग्राह्यः । १०।५।११।४४. * ज्योतिष्टोमे षोडशी श्रुतः अग्निष्टोमे एव निविशते, न विकृतौ । वि. १०।५।९, * ज्योतिष्टोमे षोडशिसंस्थे प्रातरग्निहोत्रप्रभृति प्रतिहोमानामनुष्ठानम् । ६।५।१४. * ज्योतिष्टोमे संतर्दनं श्रुतं संस्थासु अहीनेषु सत्रेषु च निविशते, न प्रकृतौ । वा. ३।३।११।२४–३१

**ज्योतिष्टोमे ' स वैव स्यात् ' इति प्राजहितवादः ॥**

' यस्यैष धिष्णियो विह्रियते सोऽनुध्यायति ' इत्यादिना ' यजमानं वा एतद्विकर्षन्ते यदाहवनीयात् पशुश्रपणं हरन्ति, स वैव स्यान्निर्मन्थ्यं वा कुर्याद् यजमानस्य सात्मत्वाय ' इत्यन्तेन पशुश्रपणार्थोऽग्निर्नियम्यते । तत्र स वैव स्यात् इत्यनेन आहवनीय एवोच्यते । ' यजमानो वा आहवनीयः ' इत्युपक्रान्तत्वेन तस्यैव बुद्धिस्थत्वात् । इति प्राप्ते, प्राजहित एव तत्पदेनोच्यते, निर्मन्थ्येन सह तुल्यकोटिकविकल्पोक्तिसामर्थ्यात् । सर्वत्र कोटिद्वये साधारणधर्मावश्यकत्वात् । प्राजहितस्यापि मन्थनजन्यत्वेन लौकिकनिर्मन्थ्यसाम्यात् । वैदिकनिर्मन्थ्य एव वा स्याल्लौकिकनिर्मन्थ्यो वेति तदर्थात् । आहवनीयहरणे यजमानस्यैव विकर्षणं स्यादिति विनिन्द्य यजमानस्य आत्मलाभाय विधीयमानस्य अग्नेः आहवनीयातिरिक्तत्वावश्यम्भावाच्च । अन्येनान्यस्य सात्मत्वसंभवात् । तस्मात् प्राजहितस्यैवायं वादः । संकर्ष. ३।२।२१.

* ज्योतिष्टोमे सत्यवचनादिव्रतेन दार्शिकं व्रतं प्रसङ्गसिद्धम् । वि. ११।१।११, * ज्योतिष्टोमे सदसो नीचमानादौ वृष्ट्यादिकामना याजमानी, न तु आर्त्विजी। काण्डाग्निकरणम्। तथाकामाधिकरणम्। ३।८।६, * ज्योतिष्टोमे सदोमण्डपोपस्थानं प्रकृतया ऐन्द्या ऋचा कर्तव्यम्, न तु दाशतयीस्थया कयाचित् । आग्नेयीन्यायः । ३।२।८, * ज्योतिष्टोमे सप्तमपदग्रहणादि सोमक्रयण्यानयनस्य न प्रयोजकम् । अक्षाभ्यञ्जनन्यायः । ४।१।१०, * ज्योतिष्टोमे सर्वस्वदक्षिणाऽपि द्वादशशतेनानमनाभावे दातव्या । ६।७।९, * ज्योतिष्टोमे सवनीयपशौ अनुयाजाः पश्वङ्गम् । तेषां च 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति उत्कर्षः। ४।३।१५, * ज्योतिष्टोमे सवनीयपशुपुरोडाशानां सवनीयपशुतन्त्रमध्यपातित्वात् पशुः तन्त्री, पुरोडाशस्तु प्रसङ्गी । तेन आग्निमारुतादूर्ध्वमुत्कृष्टैरपि पश्वर्थानूयाजैः प्रातःसवनिकपुरोडाशार्थानूयाजानामपि प्रसङ्गसिद्धिः । १२।२।१२. * ज्योतिष्टोमे सवनीयपुरोडाशानां पाशुकतन्त्रेण प्रसङ्गसिद्धिः । सवनीयादिन्यायः । भा. १२।२।१२। ३०-३२. * ज्योतिष्टोमे सवनीयपुरोडाशानां सवनत्रयगतानां कालभेदेनानुष्ठानभेदात् तदीयहविष्कृदाह्वानमन्त्रस्य आवृत्तिः । वि. ११।४।२१, * ज्योतिष्टोमे सवनीयपुरोडाशेषु अनूयाजैः सह पिष्टलेपफलीकरणहोमयोर्नोत्कर्षः । ५।१।१५.

* ज्योतिष्टोमे सादनसंमार्गादयो ग्रहधर्माः सवनत्रयेऽपि कर्तव्याः । ग्रहधर्माधिकरणम् । वि. ३।६।९. * ज्योतिष्टोमे सुत्या पर्वणि, दीक्षणीयेष्टिस्तु ततः पूर्वम् अपर्वणि कर्तव्या । अङ्गगुणविरोधन्यायः । भा. १२।२। ९।२९, * ज्योतिष्टोमे सुब्रह्मण्याऽऽह्वानार्थे निगदे 'इन्द्रागच्छ, हरिव आगच्छ, मेधातिथेर्मेष, वृषणश्वस्य मेने, गौरावस्कन्दिन्, अहल्यायै जार' इत्यादिर्मन्त्रः ऐन्द्रः। विकृतौ तु अग्निष्टुति आग्नेयी सुब्रह्मण्या भवति । तेन तत्र 'अग्न आगच्छ' इति ऊहः कर्तव्यः सभवेतार्थत्वात् । 'हरिवः, मेधातिथेर्मेष०' इत्यादौ तु नोहः असमवेतार्थत्वेऽपि स्तुतिपरत्वात् । याज्ञिकास्तु 'अग्न आगच्छ रोहिताश्व बृहद्भानो धूमकेतो जातवेदो विचर्षणे' इति ऊहं कुर्वन्ति । ९।१।१६।४४.

## ज्योतिष्टोमे सोमेन धिष्ण्यव्याघारणं परिप्लुपात्रेण ॥

'शूर्पेण जुहोति' इत्यत्र प्रकृतशूर्पस्येव धिष्ण्यानां व्याघारणेऽपि प्रकृतत्वात् ग्रहचमसान्यतरस्मिन् करणत्वेन प्राप्ते, 'द्रोणकलशात् परिप्लवया राजानमादाय प्रत्यङ्ङासीनो धिष्ण्यान् व्याघारयति' इति श्रुतौ आदानकरणत्वेन उपस्थितायाः परिप्लवाया एव व्याघारणेऽपि करणत्वम् । अन्यथा परिप्लवायामादानस्य अदृष्टार्थत्वापत्तेः । संकर्ष. ३।२।१९.

* ज्योतिष्टोमे 'सोमेन यजेत' अत्र यजतिः अपूर्वस्य कर्मणो विधायकः न तु 'ऐन्द्रवायवं गृह्णाति' 'मैत्रावरुणं गृह्णाति' इत्यादीनां कर्मणां समुदायस्यानुवादकः । भा. २।२।६।१७-२०, * ज्योतिष्टोमे 'सोमेन यजेत' 'दाक्षिणानि जुहोति' 'हिरण्यमात्रेयाय ददाति' इत्यत्र प्रतिशब्दम् अपूर्वभेदः । २।२।१।१.

## ज्योतिष्टोमे सोमस्य मानमुपावहरणं च वाससा कर्तव्ये ॥

**वाससि मानोपावहरणे प्रकृतौ सोमस्य वचनात् । १०।६।२०।७७ ॥**

भाष्यम्— ज्योतिष्टोमे मानोपावहरणे समाम्नाते । तत्र संशयः किं यत्रक्वचित् मानं येनकेनचित् उपावहरणं कार्यम्, उत वाससि मानं वाससा च उपावहरणमिति । किं प्राप्तम् ? अर्थात् यत्रक्वचित् मानम्, येनकेनचित् उपावहरणम् । एवं चानियमे लाघवं प्रयोगप्राशुभावश्च भविष्यतीति। एवं प्राप्ते, ब्रूमः। वाससि मानम्, वससा चोपावहरणं कार्यम् । कुतः ? वचनात् । वचनमिदं भवति । 'वाससि मिनोति, वाससा चोपावहरति' इति । वचनस्य सामर्थ्यान्नियम्येत । अथवा, नैवात्र संशयः । वचनात् वाससि मानम्, वाससा चोपावहरणम् । एवं प्राप्तमुत्तरविवक्षया कीर्त्यते विशेषं चिन्तयितुम् । यच्च प्राप्तमुत्तरविवक्षया कीर्त्यते, न तत्र पूर्वोत्तरपक्षाभ्यां प्रयोजनमिति ।

सोम— प्राप्तिसूत्रत्वादेव न पृथक् संगतिः ।

वि— ' उपावहरणं मानमपि क्वाप्युत वाससि ।, क्वापि स्यात् प्रांशुताभावाद्, वचनाद् वाससोभयम् ॥ '

भाट्ट— ( २०-२१-२३ इति त्रीण्यपि भाष्यस्थानि अधिकरणानि अत्र एकीकृतानि इति ज्ञेयम् ) ज्योतिष्टोमे ' वाससि मिनोति, वाससा चोपावहरति ' इति वचनात् सोममानोपावहरणे वासःसाधनके । अहर्गणे च प्रत्यहं सोमोपावहरणार्थं वासोभेदः स्यात् । हविर्धानशकटे हि स्थापितः सोमः यावान् एकस्याह्नः पर्याप्तः, तावान् प्रत्यहं वाससा उपावहर्तव्यः । अवशिष्टश्च शकटे एव वाससा उपनद्धः स्थाप्यः । तस्मात् इह अर्थात् वासोऽन्तरं प्रागुत्तमात् उत्पादितव्यम्, उत्तमे तु प्रकृतिवत् मानवस्त्रेणैव । न च प्रागुत्तममपि एकमेव मानवस्त्रात् भिन्नं वस्त्रमुपादाय तेनैव प्रत्यहमुपावहरणं कर्तव्यमिति वाच्यम् । उपावहरणवस्त्रस्य ग्रावस्तुते दानविधानात् । तस्य च मैत्रावरुणदण्डदानन्यायेन ( ४।२।६ ) ग्रावस्तोत्रीयाऽनुब्रुवाणग्रावस्तुदुत्साहजनकत्वेन प्रात्यहिकत्वावश्यम्भावात् । वस्त्रान्तराण्यपि च न मानकाले एव उपादेयानि । प्रकृतौ हि सौकर्यात् क्रयकालीनमानवाससैव उपनद्धस्य अभिषववेलायां तेनैव वाससा उपावहरणं कृतम्, न तु स एव शास्त्रार्थः अतश्चेह मानकाले तावद्वस्त्रग्रहणे प्रमाणाभावात् उपावहरणकाले एव तदुपादानम् । आर्थिकस्यापि वस्त्रैकत्वस्य बाधात् अध्यायोपयोगिता ।

मण्डन— ' मानोपावहरणे वस्त्रे । '

शंकर— ' मानाहृती वाससा स्तः । ' २९.

* ज्योतिष्टोमे सोमालाभे पूतीकाः आदाराः फाल्गुनानि वा प्रतिनिधिः । तत्र सोमस्य पूतीकादीनां च न वैकल्पिकत्वम् । किंतु प्रतिनिधित्वनियमः पूतीकादीनाम् । वि. ६।३।१३, * ज्योतिष्टोमे सोमक्रयः अजाहिरण्यादिभिः दशभिर्द्रव्यैः क्रियते । १२।४।३, * ज्योतिष्टोमे सोमद्रव्यस्य अर्थापत्त्या पाक्षिकप्राप्तस्य ' सोमेन यजेत ' इति नियमविधिः । ४।२।९. * ज्योतिष्टोमे सोमप्रवहणे ' अनड्वाहौ युनक्ति ' इति द्विवचनं विवक्षितमेव । भा. ४।१।५।११-१६.

ज्योतिष्टोमे सोमभक्षः अनुज्ञापूर्वकः एकपात्राणामेव ॥

तदेकपात्राणां समवायात् । ३।५।१७।४३ ॥

भाष्यम्— इदं संदिह्यते किं यःकश्चित् अनुज्ञापयितव्यः, उत समानपात्रः इति । अविशेषाभिधानात् यःकश्चित् । इति प्राप्ते, उच्यते । तत् खलु अनुज्ञापनमेकपात्राणां स्यात् । कुतः ? अनुज्ञापनमिह अङ्गम् । अनुज्ञापनस्य च एतत् रूपम्, यत्र अन्येन कर्तव्यम् अन्यश्चिकीर्षेत्, सः ' अनुमन्यस्व ' इति ब्रूते, सहभोजनादि वा आचरितुकामः चित्तमन्यस्य अनुकूलयति ( इति ) । तदेतत् नानापात्रेषु नैव संभवति । नहि तत्र अन्येन कर्तव्यम् अन्यो वा चिकीर्षति, सहभोजनादौ वा पदार्थे संमानयति । एकपात्रे तु सोमे साधारणे संस्कर्तव्ये, न्यायेन समो विभागः प्राप्नोति । तत्र अविभज्य पीयमाने कदाचित् अन्येन पातव्यम् अन्यः पिबेत् । तत्र अनुज्ञापनं संभवति ' त्वया अर्धं पातव्यं मया अर्धम्, कदाचित् अहम् अभ्यधिकं न्यूनं वा पिबेयम्, तत् अनुज्ञातुमर्हसि ' इति । ' एकपात्रे वा पानं त्वया सह आचरन् अहं तव चित्तप्रसादनं व्याहन्याम् ' । इति संभवति अनुज्ञापना । तस्मात् एकपात्रेष्वेव एतत् स्यादिति ।

वा— यदि एतदत्यन्ताप्राप्तं विधीयेत, ततो यतःकुतश्चित् प्रार्थ्येत । लौकिकमेव तु एतन्नियम्यते । तस्य यादृशे विषये प्राप्तिः, सा न निवार्यते । समानपात्राणां तु ' समं स्यादश्रुतत्वात् ' इत्यनेन न्यायेन समविभागे सति वैषम्यप्रसक्तौ अनुज्ञाप्य कार्यम् । सत्यपि सोमेन अनुच्छिष्टत्वे तत्कृते चादृष्टदोषाभावे, प्रत्यक्षेणैव सहभोजनात् व्यलीकोत्पत्तेरुपपत्तेः । अतोऽनुज्ञाऽवसरो भवति । तस्मादेकपात्राणामिति ।

सोम— प्रकृतानुज्ञानविषयत्वात् संगतिः । सूत्रार्थस्तु— तत् अनुज्ञानम् एकपात्राणमिव स्यात् । तत्रैव प्रयोजनसमवायात् इति ।

वि— ' उपह्वानमशेषाणामुत स्यादेकपात्रिणाम् ।, अदृष्टहेतोराद्यः स्याद्, दृष्टाधिक्यादितोऽन्तिमः ॥ '

**भाट्ट**—सेयमनुज्ञा यस्य एकस्मिन्नेव पात्रे भक्षप्रसक्तिः तस्यैव ग्राह्या दृष्टार्थतालाभात्, भागाधिक्यादिप्रसङ्गनिमित्तकलहशङ्कानिवृत्त्यर्थत्वात्। उपायान्तरेणापि तन्निवृत्तौ अस्य नियमविधित्वात्। अन्यस्यानुज्ञाने तु अदृष्टार्थत्वमपूर्वविधित्वं दोषः। अत एव यत्र एकस्मिन् पात्रे एक एव भक्षयिता, तत्र नैव अनुज्ञाग्रहणम्। एवं अन्तिमस्यापि भक्षयितुर्न अनुज्ञाग्रहणं प्रयोजनाभावात्। याज्ञिकास्तु आचरन्ति। १३.

**मण्डन**— 'समपात्रस्त्वनुज्ञाप्यः।'

**शंकर**— 'पात्रैक्ये चोपहूतता।'

**ज्योतिष्टोमे सोमभक्षे अनुज्ञायाः याचने दाने च अर्थानुसारेण मन्त्रक्रमः॥**

**तत्रार्थात् प्रतिवचनम्। ३।५।१६।४२॥**

**भाष्यम्**— एतदवगतम् 'तदुपहूत उपह्वयस्व' इत्यनेन अनुज्ञापयेत् इति। अथ प्रतिवचने संदेहः किं लौकिकं प्रतिवचनम्, उत एतदेवेति। किं प्राप्तम्? एतत् वैदिकं प्रश्ने विनियुक्तम्। लौकिकमन्यत् प्रतिवचनं भवितुमर्हति। एवं प्राप्ते, ब्रूमः। तत्र एतदेव प्रतिवचनमिति। ननु प्रश्नलिङ्गमेतत् उपह्वयस्व इति। उच्यते। यत् अस्य पूर्वम् 'उपहूतः' इति प्रतिवचनस्य समर्थम्, तत् प्रतिवचनकार्ये भविष्यति। आह, विपरीतमेतत् समाम्नानम्। पूर्वं हि प्रश्नेन भवितव्यम्, ततः प्रतिवचनेन। उच्यते। अर्थात् पूर्वं प्रतिवचनकार्ये भविष्यति। अर्थो हि क्रमात् बलीयान् इति।

**वा**— वदनम् इति वा पाठः (सूत्रे)। समस्तमेव, प्रश्नप्रतिवचनयोरेकत्र वा लौकिकः प्रयोगः। इति प्राप्तौ, उच्यते। अर्थक्रमेण पाठक्रमं बाधित्वा 'उपहूतः' इत्येवम् अभ्यनुज्ञायां प्रयोक्तव्यः।

**सोम**— मन्त्रेण अनुज्ञाने उक्ते तत्र मन्त्रनियमविचारात् संगतिः। सूत्रार्थस्तु— तत्र 'उपहूत उपह्वयस्व' इत्यत्र। प्रतिवचनं अर्थात् सामर्थ्यानुसारात् 'उपहूतः' इत्यनेन कर्तव्यमिति।

**वि**— 'उपह्वयस्वोपहूत इत्यशेषो द्वयोर्भवेत्। अनुज्ञाऽनुज्ञपनयोरथवाऽसौ विभज्यते॥, विभागकरणाभावादशेषश्चे, न लिङ्गतः। उपह्वयेत्यनुज्ञप्तावनुज्ञाने तथेतरः॥'

**भाट्टग्रन्थो** गतः पूर्वाधिकरणे।

**मण्डन**— 'प्रत्युक्तिः पूर्वमन्त्रभाक्।'

**शंकर**— 'तन्मन्त्रस्य विभागः स्यात्।'

**ज्योतिष्टोमे सोमभक्षे होमाभिषवौ समुच्चितौ कारणम्॥**

**होमाभिषवाभ्यां च। ३।५।११।३२॥**

**भाष्यम्**— अपरमपि कारणं होमाभिषवौ। कथम्? 'हविर्धाने ग्रावभिरभिषुत्य आहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्ति' इति। न तावदेष क्रमो विधीयते होमे निर्वृत्ते ततो भक्षणमिति। भक्षणस्य अप्राप्तत्वात्। द्वयोश्च क्रमयोर्विधानात्, अभिषुत्य हुत्वेति वाक्यं भिद्येत। अर्थेन च प्राप्तत्वादस्य क्रमस्य। नहि अकृते प्रयोजने कश्चित् प्रतिपादनमर्हति। न च भक्षणाङ्गभावेन होमाभिषवौ चोद्येते अभिषवस्य होमार्थत्वात्, होमस्य च फलार्थत्वात्। तस्मात् होमाभिषवयोः कर्तॄणां भक्षणं विधीयते। ये अभिषुण्वति जुह्वति च, ते भक्षयन्तीति।

**वा**— किं एतावद्भिरेव निमित्तैर्भक्षः? नेत्युच्यते। होमाभिषवाभ्यामपरो भक्षः। कथम्? एवं हि आह 'हविर्धाने ग्रावभिरभिषुत्य आहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्ति' इति। तत्र होमाभिषवौ तावत् सगुणौ प्राप्तौ न विधीयेते। दीक्षावाक्यवत् ('अध्वर्युर्यजमानं दीक्षयित्वा ब्रह्माणं दीक्षयति' इत्यादिवाक्यवत्) क्रमार्था श्रुतिः इति चेत्, तच्च नास्ति। अर्थादेव अस्य क्रमस्य सिद्धत्वात्। नहि हुतस्य अभिषवः संभवति, न च भक्षितस्य होमः। आहवनीयदेशाच्च सदः (द्वितीयान्तमिदम्) आगच्छन्तः प्रत्यञ्चः एव प्रतिपद्यन्ते। होत्रादीनां च सदसि कर्मप्रवृत्तेः अवश्यं वषट्कारसमाख्यानिमित्तभक्षार्थं सदः (सदसि इत्यर्थः) सोमा आनेतव्याः। अध्वर्युणा च उपहवो दातव्यः। तेन सदसि इत्यनूद्यते।

केवलं तु भक्षणमप्राप्तं विधीयते। तत्र हुत्वा अभिषुत्य इत्येतदुपादानस्य एतत् प्रयोजनम्, कथं नाम तत्समानकर्तृको भक्षः सिध्येदिति। नहि निर्ज्ञातप्रयोजनयोः होमाभिषवयोः भक्षणाङ्गत्वं संभवति। भक्षस्य च सोमसंस्कारत्वमवगतमेव इति नाङ्गत्वार्थमितरसंबन्धश्रवणम्। अतश्च अर्थात् होमाभिषवयोः निमित्तत्वं ज्ञातम्। अतो होमाभिषवकारी अपि सोमं भक्षयेदिति।

वि—'आख्या–वचो–वषट्कारा एव किं भक्षहेतवः। किंवाऽभिषवहोमौ च, तत्राद्योऽस्तूक्तया दिशा॥, हविर्धानेऽभिषुत्याथ हुत्वा सदसि भक्षयेत्। इति श्रुतत्वतस्तौ च भक्षहेतू यथेतरे॥' (हेतुः इत्येकवचनमावश्यकम् 'इति हेतुस्तदुद्भवे' इति काव्यप्रकाशवत्)।

भाट्ट— इदमपरं भक्षस्य निमित्तम् 'हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्ति' इति। अत्र हविर्धानादीनां सर्वेषां गुणानां विध्यन्तरात् अर्थाच्च प्राप्तत्वात् केवलं होमाभिषवसमानकर्तृकत्वं भक्षमात्रे अप्राप्तं विधेयम्। यद्यपि च हारियोजनादौ होमाभिषवसमानकर्तुरपि भक्षणं प्राप्तम्, तथापि अवयुत्यानुवादे वाक्यवैयर्थ्यापत्तेः तस्य विधेयता। सा च न पूर्वविहितभक्षेषु, सर्वत्र उत्पत्तिशिष्टविशेषविहितकर्त्रन्तरावरोधात्। अतश्च होमाभिषवसमानकर्तृकं भक्षणान्तरमेवेह विधीयते, कर्तृरूपगुणानुरोधेन वा अवेष्टिवत् वषट्कारभक्षस्यैव प्रयोगभेदमात्रम्। न च उत्पत्तौ नियामकाभावः, प्राथम्यस्यैव उत्पत्त्यन्वयिनो वषट्कारवाक्ये नियामकत्वात्। प्राथम्यस्यापि प्रयोगान्वये तु कर्मान्तरमेव इति ध्येयम्। अत्र च होमे अभिषवसमानकर्तृकत्वस्य आध्वर्यवसमाख्याबलादेव प्राप्ते प्रधानान्वयस्य अभ्यर्हितत्वाच्च भक्षे एव अभिषवसमानकर्तृकत्वं होमसमानकर्तृकत्ववत् विधीयते। होमाभिषवयोश्च क्लृप्तफलकत्वात् वषट्कारवदेव अर्थान्निमित्तत्वम्। तयोः समुच्चितयोर्निमित्तता इति षष्ठे (६।४।७) वक्ष्यते। अतश्च यो यदभ्यासे होमाभिषवोभयकर्ता अध्वर्युः प्रतिप्रस्थाता अन्यो वा ग्रहे चमसे वा, स तत्र भक्षयेत्।

मण्डन—'होमाभिषवकर्ता च।' भक्षयेत्।

शंकर—'होमश्चाभिषवस्तथा।' भक्षहेतुः।

## ज्योतिष्टोमे सोमभक्षनिमित्तानां समुच्चयः॥

**प्रत्यक्षोपदेशाच्चमसानामव्यक्तः शेषे। ३।५। १२।३३॥**

भाष्यम्— इदं श्रूयते 'प्रैतु होतुश्चमसः, प्र ब्रह्मणः, प्रोद्गातॄणाम्' इति। तत्र संदेहः चमसेषु होमाभिषवयोः कर्तारो वषट्कर्तारश्च किं भक्षयेयुः, उत नेति। किं प्राप्तम्? न भक्षयेयुः। प्रत्यक्षोपदेशाच्चमसानां चमसिनः प्रति 'प्रैतु होतुश्चमसः' इत्येवमादिभिर्विशेषवचनैः, होमाभिषवादिकारिणां सामान्यवाक्येन 'यः सोमो भक्षणेन संस्कर्तव्यः, स चमसेषु चमसिभिः' इति। अथेदानीमन्यन्निमित्तं क्व भविष्यति। अव्यक्तः सामान्यनिमित्तः। क्व, शेषे भविष्यति, यत्र न चमसिनः।

वा— अथ यत्र निमित्तसंपातो भवति, तत्र किमन्यनिमित्तको भक्षः समुच्चीयते, अथ विकल्प्यते, अथवा बाध्यते इति। तुल्यार्थत्वात् विकल्पप्राप्तौ अभिधीयते। प्रैतु होतुरित्यादिना विशेषसंयोगात् अविशेषशास्त्रं होमाभिषवसंबद्धं ग्रहेषु चरितार्थं शक्यं बाधितुम्। अतः शेषे तत् स्यादिति। (अनेन भाष्यं व्याख्यातम्)।

**स्याद्वा, कारणभावादनिर्देशश्चमसानां कर्तुस्तद्वचनत्वात्। ३४॥**

भाष्यम्— स्याद्वा चमसेषु वषट्कर्त्रादीनां भक्षः। प्राप्यते हि तेषां तत्र कारणम्। न च प्रतिषिध्यते। ननु चमसिनां प्रत्यक्षोपदेशात् निवर्तेरन्। उच्यते। अनिर्देशश्चमसानां कर्तुस्तद्वचनत्वात्। प्रैतु होतुश्चमसः इत्येवमादयः शब्दा न शक्नुवन्ति वषट्कर्त्रादीन् प्रतिषेद्धुम्। उपदेष्टारो हि ते, न प्रतिषेद्धारः। तस्मात् वषट्कर्त्रादयोऽपि चमसेषु भक्षयेयुः।

वा— स्याद्वा प्राप्तिर्निमित्तत्वात्। वषट्करणादिनिमित्ते सति प्रत्यक्षोपदेशेनैव वषट्कारादिसंबन्धेन प्राप्तिः। न च तस्य सामान्येन प्रवृत्तिः। वषट्कृतेषु सोमेषु विशेषरूपेणैव प्रत्यक्षशिष्टत्वात्। कामं वा समाख्या विप्रकृष्टत्वात् दुर्बला स्यात्। साऽपि तु अनवकाशत्वात् अवश्यमङ्गीकर्तव्या। तथा सति च प्राप्तिमात्रेऽसौ व्याप्रियते, नान्यन्निवर्तते। संभवति हि सावयवस्य द्रव्यस्य अनेकेनापि

भक्षणम्, विशेषतस्तिक्तकटुकस्य सोमस्य । श्रूयते च 'अल्पं भक्षयेत्' इति । न च निःशेषभक्षणे अल्पत्वमवकल्पते । सशेषे च प्रतिपत्त्यपेक्षिणि, भवति भक्षान्तरस्यावकाशः । तस्मात् समावेशः कर्तव्य इति ।

चमसे चान्यदर्शनात् । ३५ ॥

**भाष्यम्**— चमसे च अन्यांश्चमसिनो दर्शयति । 'चमसांश्चमसाध्वर्यवे प्रयच्छति । तान् स वषट्कर्त्रे हरति' इति । एको हि स्वश्चमसो वषट्कर्त्रे ह्रियते । तेन बहुहरणदर्शनं नावकल्पते, यदि वषट्कर्त्रादयो न चमसेषु भक्षयेयुः । तस्मात् भक्षयन्तीति ।

**सोम**— प्रासङ्गिकी संगतिः । **सूत्रार्थस्तु**— चमसानां चमसिनः प्रत्यक्षतो विशेषतः उपदेशात् तेन बाधितः अव्यक्तः सामान्यविषयत्वात् चमसविषयत्वेन अस्फुटः वषट्कारादिनिमित्तको भक्षः चमसव्यतिरिक्ते स्यात् इति ।

**वि**—'हेतुसङ्घे विकल्पः किं बाधो वाऽथ समुच्चयः।, साम्याद् विकल्पो बाध्यन्तां सावकाशाः समाख्यया ॥, नैव वाचनिकं बाध्यं भक्षणेऽत्र विभागशः । सिद्धे विकल्पो नो युक्तः स्वीकार्योऽतः समुच्चयः ॥'

**भाट्ट**— अथ यत्र एकस्मिन् पात्रे अनेकेषां भक्षकर्तॄणाम्, एकस्मिन् कर्तरि वा अनेकेषां वषट्कारहोमाभिषवसमाख्याऽऽदिकारणानां समवायः, तत्रैकशेषप्रतिपत्त्यर्थत्वाद्भक्षाणां विकल्पे, प्रत्यक्षशिष्टानामपि वषट्कारादिभक्षाणां सामान्यविहितत्वात् कल्प्ययाऽपि समाख्यया विशेषनिष्ठया प्रमेयबलाबलन्यायेन बाधात् ग्रहविषयत्वावगतेर्भिन्नविषयत्वे वा प्राप्ते, 'अल्पं भक्षयति' इति वचनेन कृत्स्नस्य शेषस्य एकभक्षणप्रतिपाद्यत्वासंभवात् एकेन भक्षणेन प्रतिपादितेऽपि शेषे अवशिष्टशेषस्य भक्षणान्तरेण प्रतिपत्तिसंभवात्, प्राथम्यविधेश्च समुचयः । ननु एवं कर्तृभेदेन अनेकेषां भक्षाणां पृथगनुष्ठानेन समुचयोपपत्तावपि, यत्र एकस्मिन्नेव कर्तरि कारणानेकत्वम्, तत्र प्रयोगविध्यवगतसाहित्यसंपत्त्यर्थं तन्त्रत्वोपपत्तेर्न पृथगनुष्ठानेन समुच्चयः । वस्तुतस्तु समाख्यायाः ब्रह्मोद्गातृयजमानसदस्यचमसेषु कारणान्तरेण एतत्कर्तृकभक्षस्य अप्राप्तत्वात् विधायकश्रुतिकल्पकत्वेऽपि होत्रकचमसेषु वषट्कर्तृकत्वेनैव तेषां तत्र भक्षस्य प्राप्तत्वात् क्लृप्तप्रवृत्तिनिमित्ततया न विधिकल्पकत्वावकाशः । एवं हारियोजनेऽपि येषां कारणान्तरेण न भक्षप्राप्तिः, तत्प्राप्तिफलक एव सर्वत्वविधिरिति न तत्रापि कारणद्वयस्य एकस्मिन् कर्तरि समवायः इति चेन्न, मैत्रावरुणादिहोत्रकचमसेषु वषट्कारात् तेषामिव होतुरपि वषट्कर्तृत्वात् होतृचमससाधारण्येन च अध्वर्योरपि होमाभिषवकर्तृत्वात् होत्रादीनामपि तद्भक्षणप्राप्तेः, विशिष्य तत्तच्चमसः इत्येवंविधसमाख्यायाः तत्तत्कर्तृकभक्षणान्तरविधिमन्तरेण अनुपपत्तेः । अत एव तन्त्रानुष्ठाने विधिफलाभावेन तन्त्रत्वमपि न । न चैवमपि एकस्मिन्नेव कस्मिंश्चिदभ्यासे समाख्यानिमित्तभक्षकरणमात्रेण समाख्योपपत्तौ न चमससाध्याभ्यासमात्रे तदापत्तिः, समाख्याकल्प्यश्रुतौ अविशेषात् प्रकृतापूर्वसाधनचमसस्थसोमसंस्कारार्थत्वेन तत्तत्कर्तृकभक्षणस्य विधेयत्वेन सर्वत्रैव चमससाध्याभ्यासे तत्प्राप्तेः । अतः सर्वत्रैव एकपात्रे कर्तृभेदे इव एककर्तरि कारणभेदेऽपि युक्तो भक्षणस्य पृथगनुष्ठानेन समुच्चयः । हारियोजने तु माऽस्तु समुच्चयः । याज्ञिकानुष्ठानं चेत्तर्हि तेनास्तु सः । १०.

**मण्डन**— 'परस्य चमसेऽपि तौ ।' होमाभिषवकर्तारौ ।

**शंकर**— 'समुच्चयो भक्षणानाम् ।'

* ज्योतिष्टोमे सोमभक्षमन्त्रे अनुवषट्कारदेवता अग्निः नोपलक्षणीयः । अनुवषट्काराधिकरणम् । वि. ३।२।१६.

## ज्योतिष्टोमे सोमविक्रयी ऋत्विग्भ्यो भिन्नः ॥

विक्रयी त्वन्यः कर्मणोऽचोदितत्वात् । ३।७। १५।३१ ॥

**भाष्यम्**— अस्ति सोमविक्रयी । तत्र संदेहः स किम् अध्वर्य्वादीनामन्यतमः, उत एभ्योऽन्यः इति । किं प्राप्तम् ? तेषां संकीर्तनात् तेषामन्यतमः । इति प्राप्ते, ब्रूमः । विक्रयी त्वन्यः स्यादिति । विक्रयो न चोद्यते, क्रयश्चोद्यते, तत्र अर्थात् विक्रयः । ज्योतिष्टोमस्य च

पदार्थान् कर्तुम् अध्वर्य्वादयः उत्पाद्यन्ते । न तु विक्रयो ज्योतिष्टोमस्य श्रूयते । तस्मात् नाध्वर्य्वादीनां अन्यतमः इति ।

वि— ' सोमविक्रय्येक एषु न वा , वरणवर्जनात् । एकः, क्रत्वर्थता नास्ति विक्रयस्येति भिद्यते ॥ '

भाट्ट— सोमविक्रयी तु अन्य एव । वरणादिकं हि क्रत्वर्थत्वात् तदङ्गपदार्थकरणाय पुरुषानुपादातुं क्रियते । विक्रयस्तु अविहितत्वात् विहितक्रयान्यथाऽनुपपत्त्या आवश्यकोऽपि दोषस्वीकारेण रागतः प्रवृत्तपुरुषकर्तृकविक्रयोपजीवनेनापि क्रयसिद्धेः नाक्षेपाच्च अनङ्गम् । अतस्तत्र वृतानामप्राप्तेः अन्य एवेति ।

मण्डन— ' विक्रयी प्रकृतेभ्योऽन्यः । '

शंकर— ' सोमविक्रय्यन्य इष्टः । '

ज्योतिष्टोमे सोमशेषभक्षविधानात् अस्ति सोमभक्षः ॥

**सोमेऽवचनाद् भक्षो न विद्यते। ३।५।६।१९॥**

भाष्यम्— ज्योतिष्टोमे समामनन्ति सोमान् । तेषु संदेहः किं तेषां शेषो भक्षयितव्यः, उत नेति । किं प्राप्तम् ? सोमे भक्षो न विद्यते । कस्मात् ? अवचनात् । न शक्यमसति वचने अध्यवसातुं भक्षणम् । तस्मात् सोमशेषो न भक्षयितव्यः इति ।

वा— ऐन्द्रवायवे तावत् विशिष्टविधानादपि भक्षो भवेत् । अथेतरग्रहगते चमसस्थे च सोमे संदेहः किं भक्षोऽस्ति नेति । तत्रापि ' सर्वतः परिहारमाश्विनं भक्षयति ' इत्यादिषु ऐन्द्रवायवन्याय एव स्यात् । इदं तु सर्वथा तत्रापि विचार्यते, किं प्राप्ते भक्षे विशेषणमात्रं वचनेन विधीयते, उत विशिष्टविधानमेतदिति । कश्चात्र विशेषः । स यदि वाचनिकः, ततो यावद्वचनमेव कर्तव्यः, अथ तु अन्यतः कुतश्चित्, तत् एकदेशस्थमपि लिङ्गं स्थालीपुलाकन्यायेन समस्तद्योतकं भविष्यति । त्रयश्चेह पक्षाः संभवन्ति । किमन्यार्थदर्शनानां प्राप्त्यपेक्षत्वात् अविधानाच्च नैव भक्षः, उत प्राप्त्यभावात् अन्यार्थदर्शनान्येव वचनीकृत्य यावद्वचनं भक्षः, उत समाख्यावषट्कारहोमाभिषवनिमित्तोऽपि भक्ष इति । किं प्राप्तम् ? आज्यसाकंप्रस्थायीयसौत्रामणीग्रहणवत् समस्तहोमसंयोगात् शेष एव नास्ति, कुतः पुनर्भक्ष इति । न चात्र प्रकृतितः प्राप्तिः, न च प्रत्यक्षोपदेशः । योऽप्युपदेश इव, सोऽपि अन्यपरत्वात् असमर्थः । तस्मान्नास्ति भक्ष इति ।

**स्याद्वाऽन्यार्थदर्शनात् । २० ॥**

भाष्यम्— भवेद्वा भक्षः । अन्यार्थे हि वचनं ( सर्वतः परिहारविधानार्थम् । सर्वतः परिहारो नाम स्वमस्तकस्य समन्तात् चमसस्य प्रदक्षिणीकरणम् ) भक्षं दर्शयति । ' सर्वतः परिहारमाश्विनं ( ग्रहं ) भक्षयति ' ' भक्षिताप्यायितान् ( भक्षितान् आप्यायितांश्च ) चमसान् दक्षिणस्यानसोऽवलम्बे ( अनसः ईजधस्तात् ) सादयन्ति ' इति । नासति भक्षणे एवंजातीयका भक्षविशेषाः संभवन्ति ।

वा — यदि अन्यार्थदर्शनानि भवेयुः, ततोऽन्यत्रापि प्राप्तिः स्यात् वचनानि त्वेतानि । तस्माद्यथोपदेशं भक्षोऽयं नान्यत्रेति ।

**वचनानि त्वपूर्वत्वात्, तस्माद् यथोपदेशं स्युः । २१ ॥**

भाष्यम्— ननु दर्शनमिदम्, प्राप्तिर्वक्तव्या । उच्यते । वचनानि तर्हि भविष्यन्ति । ' सर्वतः परिहारमाश्विनं भक्षयति ! तस्मात् सर्वा दिशः शृणोति ' इति विशिष्टं भक्षणं विधीयते । अपूर्वत्वात् भक्षानुवादो नावकल्पते । अपिचैवम् अपूर्वमर्थं विदधतः अर्थवत्ता भविष्यति । तस्मात् यत्रैव विशिष्टं भक्षणं श्रूयते तत्रैव भवति, नातिप्रसज्यते ।

शा— तदिदं अतःप्रभृति होमाभिषवाभ्यां च इत्येवमन्तम् एकमधिकरणम् ( १९-३२ सू. ) । तत्र ' भक्षणं नास्ति सोमस्य निःशेषं हूयते यतः । शेषे सत्यपि नैवात्र भक्षणं विध्यभावतः ॥ ' इति पूर्वः पक्षः । ( प्राभाकरमतमनूद्य निरस्यति— ) यस्तु अग्रबिन्दुनिपातमात्रेण शास्त्रार्थस्य कृतत्वात् न अशेषहोमः इत्याह, तस्य सौत्रामण्यादावपि तथैव स्यात्, उपांशुयाजे च जौहवस्य शेषः स्यात् । अथ शेषकार्यवशात् शिष्येत, ततः तेषामपि प्रयोजकत्वात् शेषनाशदोषापहारादावपि स्विष्टकृदादावपि हविरन्तरागमः स्यात् । तस्मात् अशेषत्वादभक्षणम् ( पूर्वपक्षे ) ।

सोम— वचनात् ऐन्द्रवायवस्य द्विर्भक्षणम् इत्युपवर्णनापरिहार: अनुपपन्नः, सोमभक्षणस्यैव अभावात् इति प्रत्यवस्थानात् संगतिः। सूत्रे अवचनात् इति छेदः।

वि–'सोमेष्वभक्षो भक्षो वा, न भक्षो ग्रहहोमतः।, अल्पोक्तेरस्ति शेषोऽस्य भक्षोऽपूर्ववचोबलात्॥'

भाट्ट— ज्योतिष्टोमे उत्पत्तिशिष्टोऽपि सोमः अभिषवादिसंस्कारविधिबलात् रसप्रकृतिः। रस एव तु ग्रहचमसादिपात्रवृत्तिः इन्द्रवाय्वादिदेवतासंबन्धात् हविः इति सर्व एव त्यज्यते। अस्य च 'अल्पं जुहोति' इति वचनेन अल्पोद्देशेन प्रक्षेपरूपप्रतिपत्तिविधिः द्यवदानवत्। तत्र च 'ग्रहैर्जुहोति' इत्यादिना पात्रविधिरिति स्थितिः। अतः शेषसत्त्वात् भक्षणं तत्प्रतिपत्तिः। तत्प्रमाणं च समाख्या वचनं च। तत्र समाख्या तावत् 'प्रैतु होतुश्चमसः प्र ब्रह्मणः' इत्यादिका वेदे, याज्ञिकानां सोमचमसः इत्यादिका। अदनार्थस्य चमेर्धातोः अधिकरणवाचके औणादिके असच्प्रत्यये कृते चमसशब्दनिष्पत्तिः। सोमश्चम्यते अस्मिन् इति व्युत्पत्त्या सोमभक्षणसाधनत्वावगतेः तत्समाख्याकल्पितश्रुत्या होत्रादिकर्तृकभक्षणस्य सोमप्रतिपत्त्यर्थत्वसिद्धिः। यदि तु उणादयः अव्युत्पन्ना इति पक्षाश्रयणम्, तदा चमसशब्दस्य पात्रे रूढत्वेन योग्यतयैव होतृचमसादिसंबन्धो भक्ष्यभक्षकत्वादिसंबन्धेनैवेति तया भक्षणसिद्धिरविकला। अतश्च होतृब्रह्मोद्गातृयजमानमैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकाग्नीध्राणां स्वस्वचमसेषु समाख्यया भक्षः। सदस्यपक्षे तस्यापि स्वचमसे। वचनं तु अग्रे निरूपयिष्यते।

मण्डन— 'ज्योतिष्टोमेऽस्ति भक्षणम्।'

शंकर— 'सोमे भक्षो भवत्येव।'

* ज्योतिष्टोमे सौत्येऽहनि वैकल्पिकी पश्वेकादशिनी समाम्नाता। भाट्ट. ७।४।२. * ज्योतिष्टोमे सौभरं साम नित्यं नैमित्तिकं काम्यं चेति त्रेधा। तत्र षोडशिसंस्थायां 'सौभरमुक्थ्यानां ब्रह्मसाम भवति' इति नित्यतया विहितम्। उक्थ्यस्तोत्राणां मध्यमं ब्रह्मसाम। अतिरात्रसंस्थायां नैमित्तिकम्। षोडशिसंस्थायामेव च पुनः काम्यमपि। वि. ९।२।१३, * ज्योतिष्टोमे सौमिकवेदिः सर्वाङ्गप्रधानार्था, न तु प्रधानार्थैव। चिकीर्षाऽधिकरणम्। ३।७।३, * ज्योतिष्टोमे सौम्यचरोः सवनीयपुरोडाशानां च ऐष्टिकैः पात्रैर्होमः, सौमिकैः पात्रैर्न प्रसङ्गसिद्धिः। 'प्रसङ्गो न' इति बिन्दौ अधिकरणम्। १२।१।४, * ज्योतिष्टोमे सौम्यचर्वादिषु हविष्कृदाह्वानं न कर्तव्यम्। १२।२।४, * ज्योतिष्टोमे स्तोत्रशस्त्रे प्रधानकर्मणी, न देवतासंस्कारके। स्तुतशस्त्राधिकरणम्। २।१।५, * ज्योतिष्टोमे स्तोमाश्चत्वारः– 'त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः' इति। ४।४।१२. * ज्योतिष्टोमे स्त्रीसद्वितीयस्य एकस्यैव पुंसः अधिकारः न तु द्वयोः पुंसोः। आधानाधिकरणम्। भा. ६।१।५।२२–२३, * ज्योतिष्टोमे स्वप्नार्थो मन्त्रः 'त्वमग्ने व्रतपा असि' इति। स यदा पुनः प्रतिबुद्धः स्वपिति तदापि नावृत्तिर्मन्त्रस्य। कृत्स्नां रात्रिमुद्दिश्य असौ स्वप्नमन्त्रं प्रयुङ्क्ते। ११।४।१७।५०. * ज्योतिष्टोमे हविर्धानमण्डपादेरुपस्थाने प्रकृता का चित् वैष्णव्यादिः ऋक् ग्राह्या। वि. ३।२।८. * ज्योतिष्टोमे हविष्कृत्–अग्निगुप्रैष–पुरोऽनुवाक्या–मनोतानां प्रतिपशु कालभेदे आवृत्तिः। भा. ११।४।२०।५७–५९, * ज्योतिष्टोमे 'हस्ताववनेनिक्ते' इति हस्तावनेजनं कृत्स्नप्रकरणार्थम्, न तु उलपराजिस्तरणार्थमेव। ३।१।१४।२४–२५. * ज्योतिष्टोमे होत्रकचमसभक्षमन्त्रेषु मित्रावरुणादिभिः सह इन्द्रोऽपि उपलक्षणीयः। वि. ३।२।१२.

**ज्योतिष्टोमे होमाभिषवौ सहितौ एकं भक्षनिमित्तम्॥**

**होमाभिषवभक्षणं च तद्वत्। ३।४।७।२४॥**

**भाष्यम्**— ज्योतिष्टोमे श्रूयते 'हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्ति' इति। तत्र अन्येन वचनेन अभिषव उक्तो यजतिना होमः। तौ तावन्न विधीयेते। न च तयोः क्रमः। अर्थादेव हि स प्राप्तः। तस्मादेककर्तृकं होमाभिषवाभ्यां भक्षणं विधीयते। अभिषवे कृते होमे च तत्कर्तृभिर्भक्षणं कर्तव्यमिति। तत्र एष संदेहः किमुभयं यः कुर्यात् स एव भक्षयेत्, उतान्यतरेणापि भक्षणमिति। किं प्राप्तम्? होमाभिषवभक्षणं च तद्वत्। तद्वदेव स्यात्, यद्वत् हविष

आर्तिः । कथम् ? नैतदेवं संबध्यते, अभिषुत्य ततो हुत्वा ततो भक्षयेदिति । नानेन अभिषवस्य होमस्य च क्रमः कीर्त्यते, अभिषुत्य ये जुह्वति, ते भक्षयन्तीति । वाक्यं ह्येवं भिद्येत, अभिषुत्य भक्षयन्ति, हुत्वा भक्षयन्तीति । तस्मात् होमाभिषवयोः परस्परेण संबन्धो नास्तीति एकेनापि भक्षणं संबध्येत, अपरेणापि अभिषुत्य भक्षयन्तीति । तस्मादन्यतरेण निमित्तेन भक्षणं भवतीति ।

टुप्— ( हविर्धाने ग्रावभिरभिषुत्य इत्यादि वाक्यम् अभिषवहोमसमानकर्तृकभक्षणविधायकमिति तृतीये [ ३।५।११।३२ ] साधितम्, इह च तदेव उपोद्घातत्वेन स्मारयति— ) सत्यपि पदार्थाभिधाने ( यद्यपि बहवः पदार्थाः होमाभिषवतत्क्रमप्रत्यग्गमनादयः अभिधीयन्ते तथापि ) होमाभिषवयोः क्रमो न विधीयते ( होमाभिषवौ तत्क्रमश्च न विधीयन्ते इत्यर्थः ), अर्थप्राप्तत्वात् । (यजतिना होमः इति भाष्यम् आक्षिपति—) ननु यागहोमयोर्भिन्नत्वात् होमो विधीयते । उच्यते । वाक्यान्तरेण ( यद् ग्रहान् जुहोति इत्यादिना ) विहितत्वात् अविधेयः। सदसि भक्षयन्ति इत्यपि अविधेयम् अर्थप्राप्तत्वात् देशस्य ( सदोरूपस्य ), प्रत्यक्त्वमपि ( अविधेयम् अर्थप्राप्तत्वात् । यदि ' हुत्वा प्रत्यञ्चः परेत्य ' इति क्रमो विधीयेत, तत्राह—) होमोत्तरकालं भक्षणम्, होमोत्तरकालम् ( एव ) प्रत्यक् गमनम् । उभयस्य ( अभिषवस्य होमस्य प्रत्यग्गमनस्य च ) क्रमो न विधीयते । ( पारिशेष्यात् ) भक्षः अभिषवकर्तुः होमकर्तुश्च विधीयते । ( पूर्वपक्षमाह— ) कर्तृसंस्कारत्वात् भक्षस्य (कर्तृगतं) साहित्यम् अविवक्षितम् ( उद्देश्याङ्गत्वात् ) । ननु अभिषुत्य इति ( अपि ) साकाङ्क्षत्वात् उत्तरेण ( हुत्वा इत्यनेन ) क्त्वाऽन्तेन सह संबध्यते (एवं च हुत्वा इत्यनेनापि अभिषवसमानकर्तृकहोमाभिधानात् ) उभयविशिष्टेन कर्त्रा संबन्धात् भक्षस्य न एकक्रियाकर्तुर्भक्षः । उच्यते । नास्ति क्त्वाऽन्तानां परस्परसंबन्धः । कुतः ? यतः अभिषुत्य इति ( अपि ) साकाङ्क्षम्, उत्तरमपि क्त्वाऽन्तत्वादेव साकाङ्क्षम् ( न च साकाङ्क्षयोर्मिथः संबन्धो युक्तः ) । तस्मात् यत् निराकाङ्क्षीकरणसमर्थम् ( आख्यातम् ) तदेव ( द्वयमपि ) अभिलपति ( इति ) सर्वान्त्येन (भक्षयन्ति इत्यनेन द्वयोरपि ) संबन्धः । एवं (उभयोरपि आख्यातेन) चेत् ( संबन्धः, तथा सति ) अभिषुत्य ( भक्षयन्ति ) हुत्वा भक्षयन्ति इति नास्ति ( होमाभिषवयोः परस्परं ) संबन्धः । प्रत्ययेन ( परस्परं ) संबन्धे क्रियमाणे वाक्यभेदः ( स्यात् ) । तस्मात् एकैकेन भक्षणम् इति पूर्वः पक्षः ।

## उभाभ्यां वा, नहि तयोर्धर्मशास्त्रम् । २५ ॥

भाष्यम्— उभाभ्यां वा निमित्ताभ्यां भक्षयेत् । न भक्षणं होमाभिषवयोर्धर्मो विधीयते । किं हि स्यात् ? यदि तयोर्धर्मो विधीयेत, ततो होमाभिषवौ प्रधानमिति भक्षणं गुणः प्रतिप्रधानं भिद्येत । अथ पुनरुभाभ्यां निमित्ताभ्यां भक्षणं विधीयते, तस्मिन् विहिते एकोऽर्थो विहितो भवति, तेनैकं वाक्यम् । तदेतावति पर्यवसितं भवति, अभिषुत्य हुत्वा भक्षयन्तीति । तत्रैतदवान्तरं वाक्यं हुत्वा भक्षयन्तीति । न च महावाक्ये सति अवान्तरवाक्यं प्रमाणं भवति, पदान्तरस्य बाधनात् । यथा ' नोद्यन्तमादित्यमीक्षेत ' इति प्रतिषेधो गम्यते महावाक्यात्, अवान्तरवाक्यात् ईक्षणविधानम् । तस्मात् अन्यतरनिमित्तं भक्षणमश्रुतम् । महावाक्यात् इदमवगम्यते, द्वे निमित्ते भक्षणस्येति । भक्षणं चान्यथा कुर्वन् श्रुतं परित्यजेत् । तस्मादुभाभ्यां निमित्ताभ्यां भक्षणमिति ।

टुप्— भक्षस्य द्रव्यसंस्कारत्वेन विधिना कर्तुर्गुणभावः । तस्मात् ( कर्तुः गुणभूतत्वेन उपादेयत्वात् ) उभयक्रियासंयुक्तता विवक्षिता । अत उभयनिमित्तो भक्षः ।

शा— ' उद्देश्यत्वान्न साहित्यं तयोः शक्यं विवक्षितुम् । ततः प्रत्येकमेवाभ्यां भक्षणं प्रतिभूयते ॥ ' अतः प्रत्येकमेव निमित्तम् । उच्यते । ' निमित्तत्वे भवेदेवमेकैकस्य निमित्तता । होमाभिषवकर्ता तु भक्षाङ्गत्वेन चोद्यते ॥ ' अतो येन उभयमनुष्ठितम्, स एव भक्षयेत् ।

सोम— हविष उभयत्वेनेव होमाभिषवयोरपि न परस्परेण विशेषणम्, इति प्रत्यवस्थानात् संगतिः। सूत्रे – तद्वत् आर्तिवत् इत्यर्थः।

वि— ' अभिषुत्य ततो हुत्वा खादेदेकैकहेतुता। संहत्य वा निमित्तोक्तौ, साहित्यविधितोऽग्रिमः ।।, होमाभिषवकर्ताऽत्र भक्षाङ्गत्वेन चोद्यते। निमित्तताऽऽर्थिकी तस्मात् साहित्यं हेतुगं मतम् ।। '

भाट्ट—सोमे 'हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति ' इत्यत्र हविर्धानाधिकरणकग्रावकरणकाभिषवस्य आहवनीयाधिकरणकहोमस्य प्रत्यग्गमनस्य सदोऽधिकरणत्वस्य च प्राप्तत्वात् होमाभिषवसमानकर्तृकं भक्षान्तरमेवेदं गुणात् विधीयते इत्युक्तम्। तत्र च होमाभिषवयोः क्लृप्तप्रयोजनयोरेव कर्त्रुपलक्षणत्वात् निमित्तत्वमिति तद्विशेषणस्य एकवाक्योपादानलभ्यसाहित्यस्य अविवक्षितत्वम्। यदि तु अत्रार्थिकं निमित्तत्वं होमाभिषवकर्तुरेव तु उपादेयत्वात् तद्विशेषणं साहित्यं विवक्षितमित्याशङ्क्येत, तथापि प्रयाजशेषाभिघारणन्यायेन भक्षस्य तद्गतकर्तृनियमस्य वा कर्तृसंस्कारकत्वात् हविर्विशेषणस्येव तद्विशेषणस्यापि अविवक्षा। अभिषवमात्रकर्त्रा नेष्टृनेत्रादिना होममात्रकर्तृभिश्चमसाध्वर्य्वादिभिरपि स भक्षः कर्तव्यः। इति प्राप्ते, नियमं प्रति कर्तुः संस्कार्यत्ववादिनः पार्थसारथेर्मते तदापत्तावपि आर्थिकेन विधिना भक्षं प्रति संस्कार्यत्वे उच्यमाने श्रूयमाणेऽपि विधौ कर्तृणामुपादेयत्वात् विशेषणविवक्षोपपत्तौ आर्थिकेन विधिना विशेषणविशिष्टस्यैव कर्तुरुद्देश्यत्वाङ्गीकारेण साहित्याविवक्षाऽनापत्तिः। अतोऽत्र मिलितयोरेव होमाभिषवयोरार्थिकं निमित्तत्वम्। यदि तु क्त्वाप्रत्ययस्य द्वितीयक्त्वाप्रत्ययान्तपदोपात्तक्रियायामपि अन्वयो नाव्युत्पन्नः, इत्यभिषवसमानकर्तृकत्वं होमे एव विशेषणम्, विशिष्टहोमसमानकर्तृकत्वस्य च भक्षभावनायामन्वय इत्युच्यते, तदा सुतरां विशेषणविवक्षा। इतरथा अभिषवस्यापि अविवक्षाऽऽपत्तेः।

मण्डन— होतुस्तु भक्षोऽभिषवे सहोमे। '

शंकर— ' होमाभिषवयोर्न सा। ' अविवक्षा।

* ज्योतिष्टोमातिरात्रः ( ज्योतिरतिरात्रः ) ऋद्धिकामस्य कातीये। बाल. पृ. ३४. * ज्योतिष्टोमादिः अनिषिद्धफलः अर्थः। ऋजु. पृ. २९. * ज्योतिष्टोमादिः प्रतिनियतजन्मान्तरफलः। वि.१।१।५. * ज्योतिष्टोमादौ उपगातारः ऋत्विग्यजमानेभ्यो न भिन्नाः। भा. ३।७।१४।३०, * ज्योतिष्टोमादौ दक्षिणादानम् ऋत्विगानत्यर्थम्। दक्षिणान्यायः अयम्। १०। २।८।२३–२९. * ज्योतिष्टोमादौ ' यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैः सदो मिनुयात् ' इति वृष्ट्यादिफलं याजमानमेव। तादृशी कामना तु ऋत्विजाम्। क्व चित्तु वाचनिकम् ऋत्विजां फलम्। वि. ३।८।६.

**ज्योतिष्टोमादौ वर्त्मादिना विशेषविहितेन आहवनीयस्य सामान्यविहितस्य बाधः ।।**

**अविशेषेण यच्छास्त्रमन्याय्यत्वाद् विकल्पस्य, तत् संदिग्धमाराद् विशेषशिष्टं स्यात्। १०।८। ८।१६ ।।**

भाष्यम्— इदं समामनन्ति ज्योतिष्टोमे 'वर्त्मनि जुहोति ' इति ( वर्त्मनि हविर्धानशकटस्य )। राजसूये ' वल्मीकवपामुपगृह्य जुहुयात् ' इति। इदमपि श्रूयते ' यदाहवनीये जुहोति, तेन सोऽस्याभीष्टः प्रीतो भवति' इति। तत्र एषोऽर्थः सांशयिकः किं ज्योतिष्टोमे वर्त्मनि होतव्यम्, राजसूये वल्मीकवपायाम्, उत विकल्प एतयोः आहवनीयेन इति। किं प्राप्तम्? होमार्थत्वात् तावत् वर्त्मवल्मीकवपयोः समुच्चयो न प्राप्तः, अन्यतरेण होमनिर्वृत्तेः कृतत्वात्। होमार्थता चैतयोः प्रतिज्ञायेत। कुतः? भूतभव्यसमुच्चारणे भूतं भव्यार्थं भवति। न च बाधः अत्यन्तमेव वर्त्मविषयः। आहवनीयहोमः अपह्नुतो भवति विकल्पे, पक्षे तावदनुगृह्यते इति। एवं प्राप्ते, ब्रूमः। अविशेषेण यच्छास्त्रं तस्य आरात् विशेषशिष्टं स्यात्। यत् विशेषेण शिष्यते, तदस्य दूरं स्यात् असंबद्धमित्यर्थः। संदिग्धं हि तत्। कथमिव? यदि सामान्यं विशेषलक्षणार्थम्, ततो विशेषेऽपि प्राप्तम्। अथ न लक्षणार्थम्, ततो न प्राप्तम्। एवं संदिग्धम्। अथवा सामान्यं विशेषेण विरुध्यते, न विरुध्यते इत्येवं

संदिग्धम् । अथवा सामान्यं तस्मिंश्च विशेषे अन्यस्मिंश्च इत्येवं संदिग्धम् । तत् सामान्यविधानं विशेषविधौ न स्यात् । किं कारणम् ? अन्याय्यत्वाद् विकल्पस्य । कथमन्याय्यो विकल्पः ? अत्रोच्यते । यदि वर्त्माद्यधिकरणता एषु होमेषु श्रूयते, सा पक्षे न भवति इति विकल्पमाश्रयता प्रमाणापेक्षा कल्पयितव्या । अथ वर्त्माद्यधिकरणता एषु न श्रूयते, ततः पक्षे सा भवति इति प्रमाणापेतैव । वर्त्मग्रहणं च श्रूयमाणमविवक्षितं स्यात् । अथोच्येत अर्थात् पक्षे भावः, स चार्थो होमनिर्वृत्तिः आहवनीयेनेति, तन्न । यदि होमनिर्वृत्तिमात्रं कर्तव्यम्, तत आहवनीयेनापि अर्थात् सिध्येत् । इह तु वर्त्माद्यधिकरणताऽपि विधीयते । सा आहवनीये उपादीयमाने नोपसंह्रियेत । अनुपसंहारे च प्रयोगवचनो बाध्येत ।

अत्रोच्यते । यद्यपि वर्त्माद्यधिकरणताऽपि विधीयते होमे, गुणभूतत्वात् होमं समीचीनं करोतीति । तत्रानुपसंहारेऽपि न दोषः । अधिकरणान्तरेण समीचीनो भविष्यतीति । तस्मात् विकल्प एवेति । नेत्युच्यते । वर्त्मादिहोमसंबन्धोऽत्र विधीयते । स च प्रधानभूतः, न होमः । तस्मिन् अनुपसंह्रियमाणे, न यथाश्रुतं कृतं स्यात् । अत्रोच्यते । संबन्धेऽपि विधीयमाने द्वयं विधीयते एकं साध्यम्, एकं साधनम् । यत् साध्यम्, तत् प्रधानम् । स च होमः । तस्मात् विकल्पः । संबन्धेऽपि च श्रूयमाणे अवश्योपादातव्यो भवति होमः । होमश्चेत्, आहवनीयः प्राप्नोत्येवेति । तन्न । आहवनीयस्य अनङ्गत्वात् । कथमनङ्गत्वम् ? विशेषेषु अप्राप्तेः । कथमप्राप्तिः ? वर्त्माद्यधिकरणतायां सत्याम् आहवनीयाधिकरणताया ज्ञानं करणं च प्रति असंभवात् । यद्धि वर्त्माद्यधिकरणमिति ज्ञायते, न तदाहवनीयाधिकरणं शक्यं ज्ञातुं कर्तुं वा । आह । यथा शक्यते तथा कर्तव्यम्, इत्याख्यातार्थो भविष्यति । तस्मात् वर्त्मादि बाधित्वा आहवनीयो भविष्यतीति । उच्यते । स्यादेतदेवं यदि वर्त्मादिबाधामन्तरेण आहवनीयोपदेशो नावकल्पेत । द्वेधा हि शक्यते कर्तुं वर्त्मादि बाधित्वा, परिहृत्य वा । तत्र बाधायां 'वर्त्मनि' इति प्रत्ययः अपह्नोतव्यो भवति । तस्मात् परिहारः श्रेयानिति । आह, परिहारेऽपि 'आहवनीये भवति' इति प्रत्ययः अपह्नूयेत । अपह्नोष्यामहे, भवति आहवनीयप्रत्ययः । अशक्योऽसौ कर्तुमित्यपि किं न भवति । अशक्यं न करिष्यते । आह, योऽयं सामान्यप्रत्यय उच्यते स सर्वेषु विशेषेषु कार्यमासञ्जति । एवं चेत् वर्त्मादिहोमेषु चान्यत्र च तेन आहवनीयो विहितः । तत्र यो वर्त्मादिहोमे आहवनीयप्रत्ययः, स न शक्यः परिहर्तुम् । अतो वर्त्मादिहोमं बाधित्वा अवतिष्ठेतेति । अत्रोच्यते । नैतदेवम् । नहि सामान्यवाची शब्दो विशेषानभिवदति । यदि चाभिवदेत्, अग्रजाते गवि नावकल्पेत, पूर्वदर्शनाभावात् । सामान्ये च दृष्टपूर्वत्वात् अवकल्पते । तस्मान्न सामान्यं विशेषानभिवदति । तस्माच्च वर्त्मादिहोमे आहवनीयप्रत्ययः । अभिवदन् वा न मुख्यया वृत्त्या अभिवदेत् । कथं तर्हि ? लक्षणया । लक्षणा च श्रुत्या बाध्येत । तस्मात् वर्त्मादिहोमे श्रुत्या वर्त्मादिषु प्राप्तेषु अशक्य आहवनीयो विज्ञातुं कर्तुं चेति । आह । ननु विपरीतमपि एतत् स्यात्, आहवनीये प्राप्ते वर्त्मादिप्रत्ययो न शक्य इति । भवेदेवम्, किन्तु विशेषे वर्त्मादिप्रत्ययः श्रौतः, आहवनीयप्रत्ययो लक्षणया । तत्र श्रुतिप्रत्ययो बलीयानित्युक्तम् । ननु सामान्येऽपि आहवनीयप्रत्ययः श्रौतः । उच्यते । वर्त्मादिप्रत्ययोऽपि सामान्ये श्रौतः । होमे हि स विशिष्टे विधीयते, न अहोमे एतत् विशेषयति । तस्माद्वर्त्मादिहोमं वर्जयित्वा अन्येषु होमेषु आहवनीयः करिष्यते इति ।

टुप्— ( गतो नञ्प्रसङ्गः । इदानीं प्राप्तबाधसामान्यात् सामान्यस्य विशेषेण बाधश्चिन्त्यते ) ननु अदृष्टार्थत्वात् पदाहवनीययोः न विकल्पः, न बाध्यबाधकभावः ( किन्तु समुच्चय एव विरोधाभावात् तेन अनारभ्यमधिकरणम् ) । कथम् ( अदृष्टार्थता ? उत्तरम्– ) याग आधारं नाक्षिपति, विनाऽप्याधारेण सिध्यमानत्वात् । यदि च (आधारम्) आक्षिपेत्, ( तथा सति ) आहवनीयो नियम्येत । यथा 'आग्नेयोऽष्टाकपालो भवति' इति ( अष्टाकपालेन यत्किञ्चित् प्रकृति- ) द्रव्यमाक्षिप्तम्, तत्र व्रीहयो नियम्यन्ते । इह ( तु ) आधारः वचनसामर्थ्यात् विधीयते ( न तु आक्षिप्तो

नियम्यते । तेन अदृष्टार्थता ) । तस्मात् यथा प्रयाजाः ( अदृष्टेन उपकुर्वन्तः ) नोपहोमादिभिः ( सह ) विकल्प्यन्ते, न च बाध्यबाधकभावः । एवमिहापि ( पदाहवनीययोः) । तथा च न देवताऽग्निशब्दक्रियाणां प्रतिनिधिः इत्युक्तम् ( ६।३।५।१० ) । ( दृष्टार्थत्वे हि स्यादेव प्रतिनिधिः ) । तेन प्रतिनिधिकाण्डन्याये स्थिते ( ६।३।४।१३–१७ ) ( समुच्चयस्यैव युक्तत्वात् ) कथमिदम् ( अधिकरणं ) आरभ्यते ? उच्यते, सत्यम् । 'आग्नेयोऽष्टाकपालो भवति' इति ( अनेन ) यथा द्रव्याक्षेपः, तथा न ( यागेन ) आक्षिप्त आहवनीयः, तथापि न अनाकाङ्क्षितः संबध्यते । ( तथाहि ) 'यदाहवनीये' इति ( सप्तम्यन्तम् ) साकाङ्क्षम् 'जुहुति' इति ( अनेन ) निराकाङ्क्षीक्रियते, जुहुति इत्यपि ( साकाङ्क्षम् ) आहवनीयेन ( निराकाङ्क्षीक्रियते ) । यदि ( हि अत्र ) आकाङ्क्षा न स्यात् ( तथा सति 'यदाहवनीये जुहुति' इति ) संबन्ध एव न स्यात् ( तेन आधाराधेयत्वेन आकाङ्क्षावशात् संबन्धः । ततः ) स च ( आहवनीयः ) विधीयमानः ( होमस्य ) दृष्टेनैव उपकरोति, द्रव्यवदानस्य आधारतां प्रतिपद्यते । ( तेन दृष्टार्थयोरपि पदाहवनीययोः आधारत्वात् तस्य च दृष्टत्वात् न समुच्चयः इति । दृष्टार्थतां मत्वा चोदयति ) एवं वर्ण्यमाने सिध्यतो बाधविकल्पौ, प्रतिनिधिस्तु प्राप्नोति ( दृष्टार्थत्वात् ) द्रव्यान्तरवदिति । उच्यते । युक्तं द्रव्यान्तरेषु । तत्र ( हि ) 'आग्नेयोऽष्टाकपालो भवति' इति यागः फले चोदितः । ( तत्र ) यदा व्रीहयो न सन्ति प्रक्रान्ते कर्मणि, तदाऽपि यागचोदना ( तन्निर्वृत्त्यर्थम् ) द्रव्यमाक्षिपति । ( सति चाक्षेपे युक्तः प्रतिनिधिः ) । यदा तु ( प्रक्रान्ते कर्मणि ) आहवनीयो नास्ति, तदा ( यागचोदना ) नाक्षिपत्याहवनीयम् ( विनाऽपि तेन यागस्योपपत्तेः ) । तेन नाहवनीयस्य प्रतिनिधिः । ननु अनेन न्यायेन ( यागचोदनया अनाक्षिप्तत्वात् न प्रतिनिधिः इति ) देवतायाः प्रतिनिधिः प्राप्नोति ( यागेन आक्षिप्तत्वात् ) । तत्र ( के चित् ) वर्णयन्ति । सादृश्येन प्रतिनिधिः । यदि ( मुख्य- )देवताशब्दो न स्मर्यते ( ततस्तस्य ) सादृश्यमेव न ज्ञायते ( इत्यशक्यत्वान्न प्रतिनिधिः ) । अथ ( तु ) स्मर्यते ( तथा सति लब्धे मुख्ये ) स एवोच्चारणीयः ( न प्रतिनिधिरिति । इदं मतं दूषयति– ) एवं वर्ण्यमाने यदा व्रीहयो नष्टाः प्रक्रान्ते कर्मणि ( तत्र ) वचनसामर्थ्यात् यागः अवश्यं समापनीयः, न च व्रीहीन् स्मरति, तेषां चास्मरणात् न शक्नोति सादृश्यं संपादयितुम्, ईदृश्यामवस्थायां यागो नैव कार्यः । न च ईदृशी अवस्था नास्ति इति ( प्रत्यवस्थातव्यम् । ) कदा चित् विद्यते (चित्तभ्रमेण) । तस्मात् ( सादृश्याभावात् देवतायाः प्रतिनिधिर्नास्ति इति- ) एतदयुक्तम् । तेन अन्या उपपत्तिः ( देवतायाः प्रतिनिध्यभावे ) वक्तव्या । सा च षष्ठे वर्णिता ( ६।३।५ अधिकरणे) । ( प्रकृतमुपसंहरति– ) तेन (अदृष्टार्थत्वात् ) आहवनीयस्य ( यागचोदनया ) अनाक्षेपात् प्रतिनिधिकाण्डेन नेदं विरुद्धम् । अपिच आहवनीयः पदनिरपेक्षः सप्तम्या आधारत्वं प्रतिपद्यते, पदमपि आहवनीयनिरपेक्षम्, (तस्मादपि असमुच्चयः) । यथा 'व्रीहिभिः' इति ( करण- )विभक्तिः व्रीहीन् यवनिरपेक्षान् प्रतिपादयति यागसाधनत्वेन, तथा 'यवैः' इति । तत्र यः समुच्चयं कुर्यात्, नासौ पुरोडाशं न निर्वर्तयति ( शक्यो हि मिश्रैरपि पुरोडाशो निर्वर्तयितुम् ) किन्तु वाक्येन योऽर्थः प्रतिपादितः ( नैरपेक्ष्यरूपः ) तं बाधेत ( तेन शब्दादेव तत्र विकल्पः, न वस्तुस्वभावात् ) । एवमिहापि । अपिच व्रीहियवाभ्याम् ( मिश्राभ्यामपि ) पुरोडाशो निर्वर्तते (एव), न (तु) प्रत्यक्षविरोधः ( कश्चिदस्ति ) । पदाहवनीययोस्तु समुच्चये ( सति ) पदे वा आहवनीयो निक्षिप्येत, आहवनीये वा पदम् । यदा आहवनीयः (पदे निक्षिप्तः होमस्य ) अधिकरणम् ( भवति ) तदा पदमधिकरणं न स्यात् । एवं पदेऽपि ( होमाधारे वक्तव्यम् ) तस्मात् न वस्तुतो न शब्देन पदाहवनीययोः समुच्चयो घटते ।

उदाहरणे तु चोद्यते । 'पदे जुहोति' 'वर्त्मनि जुहोति' इति जुहोतिश्रवणं तुल्यमाहवनीयपदयोः । एवमत्रापि होमसामान्यमेव अन्यत्रापि तदेव । तस्मादत्र ( सामान्यविशेषभावाभावात् ) बाध्यबाधकभावो न घटते । अन्यच्च

उदाहरणं मृग्यम् । तत् उच्यते । 'गार्हपत्ये पत्नीसंयाजान् जुहोति ' अत्र पत्नीसंयाजशब्दो ( याग- ) विशेषं ब्रूते । ' यदाहवनीये जुहोति ' इत्यत्र सामान्यमेव श्रुत्या ( न विशेषः । तेन ) अत्र बाध्यबाधकभावो घटते । यथा ' दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय ' इति । ( न्यायं दृष्टान्ते तावत् दर्शयति- ) तत्र ब्राह्मणशब्देन ( ब्राह्मण- )जातिः वर्णैरुपात्ता ( व्यक्तयस्तु लक्ष्यन्ते ) कौण्डिन्ये व्यक्तिरेव ( वर्णैरुपात्ता ) । न च कौण्डिन्ये ( किञ्चित् ) सामान्यं विद्यते । यथा गोत्वम् अश्वादिभ्यो व्यतिरिच्यते शाबलेयादीन् अन्वेति । ( नैवमत्रास्ति इति वैधर्म्योपन्यासः । कथमित्यत आह- ) तच्च ( गोत्वं ) प्रत्यक्षेणोपलभ्यते । न च ( ईदृशम् ) कौण्डिन्ये वस्तु विद्यते ( अवान्तरसामान्यम्, ) यत् प्रत्यक्षेण गृहीत्वा शब्दः प्रवर्तेत । तस्मात् कौण्डिन्यशब्देन विशेष एवोच्यते । अपिच वाक्यार्थे पदवचनमिदं ( ' कुण्डिनस्यापत्यं गोत्रम् ' इति ) वाक्यार्थश्चेत् (पदस्य वाच्यः, तथा सति ) न ( इदं ) सामान्यं प्रतिपादयति । (वाक्यार्थस्य विशेषरूपत्वात् । नहि जातिः कुण्डिनस्यापत्यं भवति) तस्मात् विशेष एव (अनेन) शब्देनोच्यते। तत्र च अनन्तरमेव कार्यम् (अभिधेयं हि शब्दस्य अनन्तरमव्यवहितम् ) । इतरस्मिन् ( सामान्यशास्त्रे ) सामान्येन (कार्ययोगी) विशेषः ( पश्चात् लक्षणया ) प्रकरणादिभिः ( सहायैः ) अवच्छेत्तव्यः । तस्मात् तत्र विप्रकर्षः, इह तु संनिकर्षः। (दार्ष्टान्तिके न्यायं योजयति-) अनेन न्यायेन ( पत्नीसंयाजेषु विशेषश्रुतेन ) गार्हपत्येन आहवनीयो बाध्यते । अथवा इदमेवोदाहरणम् ( संभवति, अत्रापि अस्त्येव बाध्यबाधकभावः असत्यपि सामान्यविशेषशब्दे)। आहवनीयः ( हि ) पवमानेष्ट्यादिभिः उत्पादितः प्रयोजनमपेक्षते । तस्य अनारभ्यवादेन अधिकरणभावः होमेषु विधीयते (सामान्येन)। इह तु पदविशिष्टः (एव) होमः उत्पद्यते । तत्र आहवनीयो न शक्यते विधातुम्, पदेन होमस्य व्याप्तत्वात् । आहवनीयो विधीयमानः उत्पत्तिवाक्येन यादृशा होमा अवगताः,ताननूद्य विधीयते । तत्र शुद्धेषु ( आधारविधुरेषु होमेषु ) विधातुं आहवनीयो युज्यते, योग्यत्वात् । अधिकरणोत्पन्नेषु ( ये साधिकरणा एवोत्पन्नाः , तेषु ) न घटते अयोग्यत्वात् । तस्मात् अत्रापि अस्त्येव बाधः, इति आहवनीयशास्त्रं विषयान्तरपरं भवति ।

शा— ' **सामान्यस्यापि लब्धत्वात् प्रत्यक्षेण विशेषवत् । नास्ति लिङ्गादिवद् बाधो नापि बाधोऽतिदेशवत् ॥**' इति (पदाहवनीययोस्तुल्यबलत्वात् विकल्प एव युक्तः । इति प्राप्ते, ब्रूमः । ' **प्राप्तिः सामान्यशिष्टस्य विशेषे लक्षणावशात् । श्रुत्या विशेषे शिष्टस्य तस्मादस्ति बलाबलम् ॥** ' पत्नीसंयाजादिषु श्रुत्या शीघ्रप्राप्तं गार्हपत्यादिकम्, लक्षणया मन्थरप्राप्तमाहवनीयं निरुणद्धि इति बाधः ।

**सोम— सूत्रार्थस्तु-** अविशेषेण यच्छास्त्रं तस्य आरात् दूरे विशेषशिष्टं स्यात्, विशेषविषये सामान्यशास्त्रं न प्रवर्तते इति यावत् । यतः सामान्यशास्त्रं किं यावद्विशेषविषयम् इत्येवं संदिग्धत्वेन विलम्बितम्, विकल्पस्यान्याय्यत्वाच्च इति ।

वि— ' विकल्पितो बाध्यते वाऽऽहवनीयः पदादिभिः ।, सामान्यस्य विशेषेण प्रत्यक्षोक्तित्वसाम्यतः ॥ लिङ्गचोदकवद् बाधो नास्ति तेन विकल्पितः ।, विशेषार्थे लक्षणा स्यादतो मुख्येन बाध्यते ॥ '

भाट्ट—सामान्यशास्त्रस्य क्लृप्तत्वेऽपि तद्विहिताहवनीयाद्यपेक्षया विशेषशास्त्रविहितपदादेः प्राबल्यमेव । न च होमस्याधारं विनाऽपि प्रक्षेपमात्रतया उपपत्तेः पदाहवनीयादीनामदृष्टार्थत्वात् समुच्चयोपपत्तौ बाधानापत्तिः, सत्यपि अदृष्टार्थत्वे सप्तम्यन्तत्वेन अधिकरणतयैव तज्जननात् उभयोश्च निरपेक्षयोः प्रमितहोमाधिकरणत्वान्यथाऽनुपपत्त्या विरोधस्यावश्यकत्वेन सामान्यशास्त्रस्य तद्विषये बाधोपपत्तेः । सामान्यशास्त्रं हि जुहोतेः होमत्वसामान्यवाचित्वात् व्यक्तिलक्षणया तदवच्छिन्नव्यक्तिमात्रे आहवनीयं विदधत् शक्यसंबन्धालोचनेन निर्ज्ञातसंबन्धसकलव्यक्तिलक्षणापूर्वकं यावत् पदहोमव्यक्तिं लक्षयेत् तावत् विजातीयहोमे पदस्य विहितत्वात् तेनैव निराकाङ्क्षः पदहोमो नाहवनीयं गृह्णाति । यद्यपि च विजातीयहोमोऽपि जुहोतिना लक्ष्य एव, लक्ष्यताऽवच्छेदकवैजात्यस्यापि तत्र लक्षणा, जुहोतेः व्यापकीभूतहोमत्वसामान्यवाचित्वात्

इत्यधिकं गौरवम्। तथापि तस्य विधिबलेनैव झटित्युपस्थितत्वात् प्राबल्यम्। अत्र हि पदविशिष्टो विजातीयहोमः एव विधीयते। अतश्च पदस्य उत्पत्तिशिष्टत्वादपि प्राबल्यम्। यद्यपि च वाक्यान्तरेण होमप्राप्तिर्भवेत् तथापि तन्मात्रानुवादेन प्राकरणिकवाक्येन पदविधानात्, प्राकरणिकत्वादपि तस्य प्राबल्यम्, निरवकाशत्वादपि च तत्। अतश्च आहवनीयः सामान्यविहितः उत्पन्नशिष्टः अनारभ्यविहितः सावकाशश्चेति दुर्बलः। अतो वस्तुतः तच्छास्त्रं पदहोमातिरिक्तविषयमेव। भ्रान्तिमात्रं तु एतत् वाक्यादर्शनजनितम्, तद्वाक्यदर्शने सति बाध्यते इत्यसकृदापादितः।

एवं विशेषविधिना सामान्यविधिवत् सामान्यनिषेधोऽपि बाध्यते इति बोध्यम्। अत एव 'न हिंस्यात्' इति निषेधो विहितहिंसायां न प्रवर्तते, तस्य विहितातिरिक्ते सावकाशत्वात्। ननु निषेधस्य संकोचे प्रमाणाभावः, तेन हिंसामात्रस्य पापसाधनत्वावगतावपि विधिना वैधहिंसायां सर्वत्र उपकारात् हि साधनत्वावगतौ बाधकाभावात्। नहि अनर्थसाधनत्वावगतौ प्रवर्तनाविषयत्वं विरुध्यते। तादृशानर्थे बलवद्द्वेषाभावदशायां स्वर्गादौ रागमात्रेण प्रवृत्त्युपपत्तेः। अत एव लौकिकहिंसायामपि तादृशानर्थे च बलवद्द्वेषाभावदशायां तात्कालिकेष्टे रागौत्कट्यमात्रेण दृश्यते एव प्रवृत्तिः। सर्वत्रैव हि प्रवर्तनायास्तद्विषये यागादौ वस्तुतो यो रागौत्कट्यविषयः स्वर्गादिः तत्साधनत्वमात्रमनुमीयते। निषेधेन च स्वविषये हिंसादौ वस्तुतो यो द्वेषौत्कट्यविषयः पापादिः, तत्साधनत्वमात्रमनुमीयते। रागद्वेषयोरौत्कट्यं तु जन्मान्तरीयकर्मवशात् कादाचित्कमिति न तत्र विधिनिषेधयोर्व्यापारः। तद्व्यापारभूतयोश्च पापसाधनत्वस्वर्गसाधनत्वयोः तात्कालिकसुखदुःखसाधनत्ववत् नैव कश्चिद्विरोधः। अतो दैक्षवायव्यादिपशुहिंसायाः सत्यपि प्रत्यवायसाधनत्वे क्रतूपकारभूत्यादिसाधनत्वाविरोधात् न निषेधस्य तद्व्यतिरिक्तविषयत्वम्। यत्रापि नित्यपशुयागस्थले अकरणे प्रत्यवायश्रवणम्, तत्रापि करणे स्वल्पः प्रत्यवायः अकरणे भूयान्, इत्येवं कल्पनात् प्रवृत्त्युपपत्तेः न कोऽपि विरोधः। अत एव 'जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते॥' इति मनुस्मृतौ (२।८७) जपादिप्रशंसाऽप्युपपद्यते। मैत्रः हिंसादिरहितः। अत एव साङ्ख्यानाम् अयमेव सिद्धान्त इति चेत्। सत्यम् अयमभिप्रायो जैमिनिव्यासप्रभृतीनाम्, 'धर्मेण पापमपनुदति'' प्रवृत्तिसंज्ञके धर्मे फलमभ्युदयः परः। न हि धर्माद्भवेत् किञ्चित् पापं नरकदं क्व चित्॥' 'नहि कल्याणकृत्कश्चित् दुर्गतिं तात गच्छति।'' धर्मः प्रज्ञां वर्धयति क्रियमाणः पुनःपुनः॥ वृद्धप्रज्ञस्ततः पश्चात् पापं नारभते नरः। धर्मनिर्धूतपापानां संसिध्यन्ति मनोरथाः॥ अधार्मिकाणां पापानामाशु पश्यन् विपर्ययम्॥' इत्याद्यसंकुचद्वृत्तिश्रुतिस्मृतिपुराणेतिहासवशात् पापाजनकत्वव्याप्यं धर्मत्वम्, पापजनकत्वव्याप्यं चाधर्मत्वं प्रतीयते। अत एव कैश्चिन्नैयायिकैः यथाक्रमं विधिनिषेधस्थले तस्य लिङ्वाच्यत्वमपि अङ्गीक्रियते। अतश्च विधिस्थले प्रवर्तनया इष्टसाधनत्वानुमानवत् तेन पापाजनकत्वस्याप्यनुमानात् तद्विरोधेन निषेधः तद्व्यतिरिक्तविषयः एव पापजनकत्वं कल्पयन् तदतिरिक्तविषयः संपद्यते, इति सिद्धोऽत्रापि विशेषविधिना सामान्यनिषेधस्य संकोचात्मको बाधः। विशेषनिषेधेन परं सामान्यविधेर्न संकोचः, अपितु विकल्पः इत्युक्तम्, न तु वैपरीत्येऽपि। अत एव व्याससूत्रं 'अशुद्धमिति चेन्न शब्दात्' (३।१।२५ ब्रसू.) इति।

मण्डन—'होमेऽग्निं बाधते वर्त्म।' ९.

शंकर—'बाधो विशेषात् सामान्यस्य।' १०.

* ज्योतिष्टोमादौ साग्निचित्ये 'अग्नीषोमीयस्य पशुपुरोडाशमनु देवसुवां हवींषि निर्वपति' एषामष्टानां हविषां पुरोडाशधर्मैः प्रसङ्गसिद्धिः, न तु हविषां स्वधर्मानुष्ठानम्। वि. १२।३।१२.

**ज्योतिष्टोमादिषु पयोव्रतादीनि नित्यानि॥ तथा भक्षप्रैषाच्छादनसंज्ञप्तहोमद्वेषम्। ६।८।८। २८॥**

**भाष्यम्**— ज्योतिष्टोमे श्रूयते 'पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इति। तथा दर्शपूर्णमासयोः प्रैषः 'प्रोक्षणीरासादय, इध्माबर्हिरुपसादय,

स्रुवं च स्रुचश्च समृड्ढि, पत्नीं संनह्याज्येनोदेहि' (आज्येन उदेहि) इति । तथा वाजपेये श्रूयते, 'दर्भमयं वासो भवति' इति । पशौ संज्ञप्तहोमः, 'यत्पशु-र्मायुमकृतोरो (अकृत उरः) वा पद्भिराहते, अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः' इति । तथा 'योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' इति वचनम् । एतान्युदाहरण-वचनानि । तेषु संदेहः किं यस्यापरं भोजनं न विद्यते, स पयो व्रतयेत् यवागूमामिक्षां वा, उत विद्यमानेऽपीति । तथा, यः अप्रेषितः प्रैषार्थं न प्रतिपद्यते, स प्रेषितव्यः, उत प्रतिपद्यमानोऽपीति । तथा, यस्य सूत्रमयं वासो नास्ति, स दर्भमयं परिदधीत, उत विद्यमानेऽपीति । तथा यस्य पशुर्मायुं कुर्यात्, उरो वा पद्भिर्हन्यात्, स एतेन मन्त्रेण जुहुयात्, उतान्योऽपीति । तथा यो द्वेष्टि कं चिदन्येन च द्विष्यते, स एव मन्त्रं ब्रूयात् योऽस्मान् द्वेष्टीति, उताद्विषन् अद्विष्यमाणश्चापीति । तत्राधिकरणा-तिदेशोऽयम् । तत्र यः पूर्वस्मिन्नधिकरणे पूर्वः पक्षः, स इह पूर्वः पक्षः । यस्तत्र सिद्धान्तः, स इह सिद्धान्तः । अविद्यमाने कुर्यादिति पूर्वः पक्षः । नियतं वाऽर्थवत्त्वा-दित्युत्तरः । स एवात्र न्यायः यः पूर्वत्र ।

वि— 'अन्याभावेऽथ भावेऽपि पयोभक्षादयो, ऽग्रिमः । निमित्ते सत्यनुष्ठानात्, नियमाद्दृष्टतो-ऽन्तिमः ॥' ७.

**भाट्ट**— एवं पयोव्रताद्यपि विद्यमाने अविद्यमानेऽपि भक्षान्तरे स्यात् । 'अग्नीदग्नीन् विहर' इति च प्रैषः अन्यतोऽनवबुद्धे अवबुद्धेऽपि स्यात् । बुद्धेऽप्यर्थे एत-द्बोधजन्यनियमादृष्टसिद्ध्यर्थं प्रैषावश्यकत्वात् । अत एव प्रैषजन्यबोधानुष्ठितेनैव फलसिद्धिरिति कल्पनमपि प्रामा-णिकम् । प्रैषग्रहणं च मन्त्रमात्रोपलक्षणम् । तथा दर्भ-मयं वासो वाजपेये वासोऽन्तरसत्त्वेऽपि परिधेयमेव ; तथा 'यत् पशुर्मायुमकृतोरो वा पद्भिराहते । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥' इति मन्त्रेण विहितस्य संज्ञप्तहोमस्यापि पशुयागे नित्यं करणम् । न च संज्ञप्त-होमस्य मान्त्रवर्णिकशब्दकरणादिजन्यदोषनिर्घातार्थत्व-प्रतीतेः तदनुरोधेन मायुपदवाच्यशब्दकरणादावेव होम इति वाच्यम् । शब्दादिकरणस्य दोषजनकत्वे प्रमाणा-भावेन मान्त्रवर्णिकफलकल्पनाऽनुपपत्तेः । एतत्फलेनैव दोषकल्पने गौरवाच्च । किञ्च नात्र शब्दादिकरणादेव दोषः, अपितु तदनुकूलप्रयत्नरूपात् आख्यातार्थात्, तस्य च प्रतिबन्धकवशात् शब्दाद्यनुत्पत्तावपि उत्पत्त्यावश्यकत्वेन संज्ञप्तहोमस्य नित्यत्वम् । तथा 'योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' इति मन्त्रोऽपि द्वेष्यनिश्चयसत्त्वे असत्त्वे वा सर्वदैव प्रयोक्तव्यः । न च मन्त्रलिङ्गवशेन प्रकरण-संकोचः, परकर्तृकद्वेषस्य अयोग्यत्वेन तदभावनिश्चया-योगात् । स्वनिष्ठद्वेषविषयस्य अन्ततः पापादेरपि संभवेन मन्त्रलिङ्गाविरोधात् । ७.

**मण्डन**—'भक्षप्रैषाच्छादनार्थं च नित्यम् ।' ९.

**शंकर**—'द्वेषप्रैषव्रतादि च ।' नित्यम् । ९.

* **ज्योतिष्टोमादिषु** 'य एवं विद्वान् अग्निं चिनुते' इत्यनेन गुणविधिः । अग्निशब्दश्च ज्वलनद्रव्यवचनः, न तु यागवचनः । न चेदं यागान्तरम् । भा. २।३।१०।२१-२३.

**ज्योतिष्टोमोत्कर्षे प्रतिहोमा नानुष्ठेयाः ।** विस्तरे तु ज्योतिष्टोमे अवभृथोत्कर्षे दीक्षाया अनुवृत्तत्वात् होमादिनिषेधानुवृत्त्या प्रतिहोमाभावः ॥

तत्र प्रतिहोमो न विद्यते, यथा पूर्वेषाम् । ६।५।११।४० ॥

**भाष्यम्**— तत्र उत्कृष्यमाणे ज्योतिष्टोमे, अकृतेषु होमेषु किं परिसंख्याय होमाः कर्तव्याः, उत नेति । किं प्राप्तम् ? परिसंख्याय होमाः क्रियेरन् । किं कारणम् ? अवश्यकर्तव्यतया हि ते विहिता होमाः । अतिपन्ना अपि कर्तव्या एव । तथाहि एषामवश्यकर्तव्यता अनुगृहीता भविष्यति । प्रधानमात्रे तु नियतम्, नात्र कालानुरोधः कर्तव्यः, नदीवेगस्थानीयत्वात् । यद्यपि अतिक्रान्ताः कालाः, (तथापि) अतिक्रान्तानां परिसंख्याय प्रधान-मात्राणि कर्तव्यानि । यथा अवश्यकर्तव्यं भुक्तिभृतक-दानादि यदि अतिक्रान्तं भवति, तत् परिसंख्याय क्रियते, एवमिदमपीति । एवं प्राप्ते, ब्रूमः । तत्र प्रतिहोमो न विद्यते, यथा पूर्वेषाम् । कर्तव्यमकृत्वा कुर्यात्, नाकर्तव्यम् । अकर्तव्याश्चैते, प्रतिषिद्धत्वात् । यथा

पूर्वेषामसति कालातिक्रमे अकृतानां न प्रतिहोमः, एवमेषामपीति ।

कालप्राधान्याच्च । ४१ ॥

भाष्यम्— कालप्राधान्यं च भवति, निमित्तत्वेन तस्य श्रुतत्वात् । तदभावे विहितमेव न भवति । प्रधानमात्रं यद्यपि नियम्येत, तथापि निमित्ते काले । स च नदीवेगस्थानीयः कालः अतिक्रान्तः । अतो न प्रतिहोमः कर्तव्य इति ।

सोम— अवभृथोत्कर्षे माऽस्तु अग्निहोत्रानुष्ठानम्, तथापि प्रतिहोमः कर्तव्यः इति प्रत्यवस्थानात् संगतिः । अतिपन्नस्य प्रतिक्रुष्य होमः प्रतिहोमः । भवनाथस्तु प्रतिहोमो वा प्रायश्चित्तं वा यथाश्रुति कर्तव्यमिति पूर्वपक्षतात्पर्यमाह । सूत्रार्थस्तु– तत्र पुरुषापराधात् अवभृथोत्कर्षे पुरुषापराधप्रभृति अवभृथपर्यन्तकालेषु प्रतिहोमो न विद्यते यथा पुरुषापराधात् पूर्वेषां दीक्षाकालानां तद्वत् इति ।

वि— 'दीक्षाऽनुवृत्तौ कर्तव्यः प्रतिहोमो न वाऽग्रिमः । पुंदोषात्, न तथाप्यस्य दीक्षायां शास्त्रवारणात् ॥'

भाट्ट— दीक्षायां सत्यां सोमाङ्गत्वेन अग्निहोत्रप्रतिषेधेऽपि अग्निहोत्रवाक्ये दीक्षितभिन्नस्य कर्तृत्वाश्रुतेः काले तदकरणनिमित्तप्रत्यवायस्य आवश्यकत्वात्, तत्परिहारार्थं गौणकाले प्रायश्चित्तपूर्वकं कार्यः एव अग्निहोत्रहोमः । दैवापराधकृतदीक्षोत्कर्षे तु सुतराम् । इति प्राप्ते, यावज्जीवादिवाक्ये कालावच्छिन्नस्य जीवनादेर्निमित्तत्वम्, इत्यविवादम् । तेषां च न सायंकालत्वशुचित्वादिना तत्त्वेनावच्छेदकत्वं गौरवात्, अपितु शब्दतोऽर्थतो वा यो निषिद्धः कालः, तद्भिन्नकालत्वेन । सायमादिकालविधेर्हि नियमविधित्वात् तदितरकालनिवृत्तिरार्थिकी । एवं शुचित्वादिना अशुचिकालादिनिवृत्तिरपि । निषेधोऽपि चात्र न विधेयक्रियाङ्गभूत एव विवक्षितः, अपितु अन्याङ्गभूतोऽपि, अविशेषात्, तस्मिन् सति विधेयक्रियाया अकरणस्य तत्रापि आवश्यकत्वाच्च । अतश्च यथैव पश्वर्थेनापि गोदोहनेन अवरुद्धस्य न प्रणयनस्य चमसप्रयोजकत्वम्, तस्मिन् सति तस्य कर्तुमशक्यत्वात् । अत एव न तदभावकृतं वैगुण्यमपि । एवं सोमाङ्गभूतेनापि निषेधेन अवरुद्धस्य दीक्षाकालावच्छिन्नजीवनस्य नैमित्तिकानुष्ठापकत्वानुपपत्तेः न तदकरणे प्रत्यवायादि । अतः अपशुकामस्यैव चमसे अधिकारवत् अदीक्षितस्यैव अग्निहोत्रादौ अधिकारो निषेधपक्षेऽपि फलितो भवति । यदा तु 'दीक्षितो न जुहोति' इत्यस्य अग्निहोत्रादिविध्येकवाक्यतया पर्युदासत्वमङ्गीक्रियते, तदा स्पष्ट एव दीक्षितस्य तत्र अनधिकारः । अतश्च मुख्यकाले अनधिकारात् गौणकाले करणमनाशङ्क्यम् । एवं दैवादिना अवभृथोत्कर्षेऽपि दीक्षावत्त्वस्य कथमपि अविशेषात् मुख्यकाले अनधिकारस्य तुल्यत्वेन गौणकाले न प्रतिहोमकरणम् । १२.

मण्डन— 'नात्र लोपे पुनः क्रिया ।' अत्र अवभृथोत्कर्षे दीक्षानियमानुवृत्तौ ।

शंकर— 'प्रतिहोमस्तत्र नास्ति ।'

* ज्योतिष्टोमगतोक्थ्यादिस्तोत्राणामतिदेशः शतोक्थ्यादिषु संस्थागणेषु । भा. ८।३।५।१०–११.

* ज्योतिष्टोमगतौदुम्बरीसर्ववेष्टनस्मृतिः न सर्वांशे प्रमाणम् । वि. १।३।२.

* ज्योतिष्टोमगतपयोव्रतादीनां क्रत्वर्थता । पयोव्रताधिकरणम् । भा. ४।३।४।८–९. * ज्योतिष्टोमधर्मातिदेशः विश्वजिति अभिजिति द्वादशाहे च । वि. ८।१।९. * ज्योतिष्टोमपश्वाद्यावित्वं सर्वसोमानाम् । सु. पृ. ९९९. * ज्योतिष्टोमप्रकरणम् अग्निष्टोमस्यैवासाधारणम्, नोक्थ्यादिसर्वसंस्थासाधारणम् । वि. ३।६।१६, * ज्योतिष्टोमप्रकरणे दीक्षणीयाऽऽदय उपदिष्टाः, ते तदङ्गम् । ७।१।१, * ज्योतिष्टोमविकारो वाजपेयः । ३।७।२३, * ज्योतिष्टोमशब्दः ऐन्द्रवायवादिसोमयाग-दीक्षणीयाऽऽदीष्टि-अग्नीषोमीयादिपशुरूपसर्वयागसाधारणोऽपि ज्योतिष्टोमनाम्ना सोमयागानामेव फलसंबन्धावगमात् सोमयागानामेव प्राधान्यम्, इष्टयः पशवश्चाङ्गानि । ४।४।१२. * ज्योतिष्टोमशब्दस्य सोमयागपरत्वम् अर्थवादप्रामाण्याधीनम् । सु. पृ. ६६, * ज्योतिष्टोमसमाप्तिः उदवसानीयया । पृ. १५३९. * ज्योतिष्टोमीयकर्मसु

स्वरनिवेशक्रमः। प्रथमं तावत् दीक्षणीयायाः याजुर्वेदिकत्वात् साङ्गाया उपांशुत्वं प्राप्तम्, तच्च चोदकप्राप्तेन प्राक् स्विष्टकृतः प्रथमस्थानेन, मध्यमेन इडायाः, शेषं तृतीयस्थानेन इत्यनेन बाध्यते। तदपि 'यावत्या वाचा कामयेत' इत्यनेन बाध्यते। यद्यपि उभयोरपि वाचनिकत्वं विशेषविषयत्वं च तुल्यं यत्किञ्चिच्छब्दस्य प्रातिस्विकरूपेणैव अशेषपदार्थवाचित्वात्, तथापि यत्किञ्चिदित्यस्य सावकाशत्वात् निरवकाशेन 'यावत्या' इत्यादिस्वरेणैव बाधो युक्तः। तथाच दीक्षणीयादिशब्दानां प्रधानमात्रवाचकतया तन्मात्रे एव 'यावत्या' इति स्वरः, अङ्गेषु तु यत्किञ्चिच्छब्दप्रापितोपांशुत्वमेव भवति। 'उच्चैः प्रवर्ग्येण' इति स्वरस्तु तृतीयानिर्देशात् प्रवर्ग्यकरणकभावनाऽन्वयितया साङ्गप्रवर्ग्यार्थः, न तु दीक्षणीयावाङ्नियमवत् प्रधानमात्रार्थः। एवं च यत्किञ्चिदित्यनेनैव उपांशुत्वे प्राप्ते 'उपांशूपसत्सु' इति दीक्षणीयास्वरस्तुल्यार्थो नित्यानुवादः इति। सोम. ९।१।६ पृ. ५८६.

ज्योतिष्मतीष्ट्यधिकरणम्। दर्शपूर्णमासार्थोद्धृताग्निनाशे ज्योतिष्मतीष्टेर्नानुष्ठानम्॥

**प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात् तदर्थे हि विधीयते। ९।४।६।२८॥**

**भाष्यम्**— अस्त्यग्निहोत्रं 'य एवं विद्वानग्निहोत्रं जुहोति' इति। तत्रेदमाम्नायते 'अग्नये ज्योतिष्मतेऽष्टाकपालं निर्वपेत् यस्याग्निरुद्धृतः अहुतेऽग्निहोत्रे उद्वायेत्' इति। यदि तु दर्शार्थेन पौर्णमासार्थेन वा अग्निरुद्धृतः अहुते अग्निहोत्रे उद्वायेत् किं ज्योतिष्मती कर्तव्या नेति। किं प्राप्तम्? कर्तव्येति। कुतः? उपसंप्राप्तं हि निमित्तम्, भवितव्यं नैमित्तिकेनेति। अग्निरसौ उद्धृतः, अहुते अग्निहोत्रे उद्वातः, एतावच्च निमित्तं ज्योतिष्मत्याः। तस्मात् सा कर्तव्येति। न चात्र शब्दोऽस्ति, अग्निहोत्रार्थम् उद्धृते उद्वाते कार्येति। तस्मादपि कर्तव्या। एवं प्राप्ते, ब्रूमः। प्रासङ्गिके एवंलक्षणके अग्नौ अनुगते प्रायश्चित्तं न कर्तव्यम्। परार्थं हि तदुद्धरणं कृतं दर्शपूर्णमासार्थम्। अग्निहोत्रार्थे चोद्धृते व्यापन्ने तदाम्नातम्। तस्मान्न कर्तव्यम्। आह, ननूक्तं नास्त्यत्र शब्दः अग्निहोत्रार्थमुद्धृते अनुगते प्रायश्चित्तमिति। अत्रोच्यते। यद्यपि नास्ति एवंजातीयकः शब्दः तथापि अग्निहोत्रार्थमेव उद्धृते अनुगते प्रायश्चित्तं गम्यते। कथम्? अग्निहोत्रप्रकरणे एतदाम्नातमिति। आह, अग्निहोत्रप्रकरणे आम्नानात् तस्योपकारकमिति गम्यते, नाग्निहोत्रविशिष्टमुद्धरणम्। स्वार्थे हि सर्वं क्रियते न परविशेषणार्थेन। अत्रोच्यते। अग्निसंबद्धमेतत् प्रायश्चित्तमुच्यते नोद्वानसंबद्धम्। किमतो यद्येवम्? यदि उद्वानसंबद्धं भवेत् उद्वानस्यानङ्गत्वात् नैतदुद्वानार्थमिति गम्यते। प्रकृतेनाग्निहोत्रेण प्रयोजनेन संबध्यते। अग्निसंबन्धे पुनः गुणत्वादग्नेः तेनैव प्रायश्चित्तस्य प्रयोजनसंबन्धः। तत्रैवम् उद्धृतो व्यापन्नो भवति, यदि स प्रयोजनं नाभिनिर्वर्तयति। तत्र अग्निहोत्रार्थस्योद्धरणस्य अग्निहोत्रनिर्वृत्तिः प्रयोजनम्। दर्शपूर्णमासार्थस्य दर्शपूर्णमासनिर्वृत्तिः। उद्धृतं चानुगतं स्वस्मै प्रयोजनाय अयोग्यं प्रायश्चित्तेन योग्यं क्रियते। तच्च योग्यं कुर्वत् प्रायश्चित्तम्, अग्निहोत्रस्योपकरोति। यस्तु उद्धृतः दर्शपूर्णमासप्रयोजनः, तं योग्यं कुर्वन् नाग्निहोत्रस्योपकुर्यात्। यस्तु अग्निहोत्रार्थमुद्धृतः तं योग्यं कुर्वत् अग्निहोत्रायोपकरोति। तस्मादग्निहोत्रार्थमुद्धृते प्रायश्चित्तम्। कथं पुनर्ज्ञायते अग्निना प्रायश्चित्तस्य संबन्धः, नोद्वानेनेति। अग्निविशिष्टेन उद्वानेन संबन्धः इति श्रुत्या गम्यते। उद्वानपरीतेन अग्निना इति वाक्येन। श्रुतेः वाक्याद् बलीयस्त्वात् उद्वानसंबन्धः प्राप्नोतीति। उच्यते। उद्वानसंबन्धस्य अपरिहार्यत्वात्, यस्योद्वायात् इति अविवक्षितमेव प्राप्नोति। अदृष्टार्थत्वाच्च अनाकाङ्क्षितेन संबन्धः। तत् उद्वानपरीतेऽग्नौ प्रायश्चित्तेन संबध्यमाने व्यापत्तौ सत्याम् आकाङ्क्षितेन संबन्धो दृष्टार्थता च। तस्मात् उद्वानपरीतोऽग्निः प्रायश्चित्तेन संबध्यते इति। दर्शपूर्णमासार्थमुद्धृतः यत्रानुगच्छति तत्राग्निहोत्रस्य परकीयोऽग्निर्व्यापन्नः, परकीयं चोद्धरणमिति तत्र प्रायश्चित्तं न स्यात्। अपि च लिङ्गं भवति। किमिति? यस्याग्निरुद्धृतः अग्निहोत्रे इत्यनुवादः। विधौ हि एतस्मिन् सति वाक्यभेदप्रसङ्गः। यदि अग्निहोत्रप्रयोजनमुद्धरणम्, ततः अकृतप्रयोजनमिति विवक्षायाम् अहुते अग्निहोत्रे

इति वचनमनुवदितुमुपपद्यते । तस्मादपि अग्निहोत्रप्रयोजने उद्धृते अनुगते प्रायश्चित्तं भवितुमर्हति इति । किं तर्हि तदा कर्तव्यम् ? अविशेषविहितम् अग्नेरुपशमे प्रसज्यात् इति ।

टुप्— दर्शार्थे अग्नौ उद्धृते अनुगते (ज्योतिष्मती) इष्टिः कर्तव्या न वेति (चिन्त्यते)। कुतः संशयः ? (उत्तरम्–) वाक्यात् पदाद्वा। (वाक्यशब्देन निमित्तसंबन्धिनैमित्तिकविधायकं कृत्स्नं वाक्यमुच्यते, तदेकदेशो निमित्तप्रतिपादकं पदमुच्यते। तत्र वाक्यात् संशयमाह–) किमुद्दानम् अग्निविशिष्टं निमित्तम्, अथवा अग्निः उद्दानविशिष्टः इति। (अत्रैव उद्दानमेव निमित्तम् इति पूर्वपक्षमाशङ्क्य सिद्धान्तमाह–) तत्र उद्दाने निमित्ते आश्रीयमाणे सत्तया (अग्नौ सद्भावमात्रेण उद्दान–) क्रिया निमित्तं स्यात्। अग्न्येकदेशे (अपि) वर्तमाना (क्रिया निमित्तं स्यात्) पटदाहवत्। न च काष्ठावयवेषु अग्नियुक्तेषु कदाचित् (अपि) उद्दानं नास्ति इति अविशेषणमेव (उद्दानं स्यात्)। अग्निस्तु (भवति) निमित्तम् (उद्दान–) विशेष्यः। स कदाचित् (एव उद्दानक्रियया व्याप्यते) इति युक्ता निमित्तता। (एवं पदात् संदेहं तत्र सिद्धान्तश्चोक्तः। अथ वाक्यात् संदेहमाह–) वाक्येनापि (संशयः। तथाहि,) अफलं चेदं कर्म, (तत् किं) प्रकरणात् अग्निहोत्रस्य उपकुर्वत् (अग्निविशिष्ट–) उद्दाननिमित्तकम् आरादुपकारकं प्रयाजवत् स्यात्। (किमिति आरादुपकारकमित्यत आह–) नहि विशेषणस्य अग्नेः तत् (संस्कारकं) भवितुमर्हति। सामवायिकं वा स्विष्टकृद्वत् वाक्येन अग्न्यर्थम्। (कथं तादर्थ्यमित्याह–) विशेष्यः प्रधानं तदा अग्निः, (अतः) शक्यः (उभयेनापि) संबन्धयितुम् उद्दानेन इष्ट्या च। (किमुद्दानं निमित्तम् आरादुपकारिका इष्टिः, उत अग्निः उद्दानविशिष्टो निमित्तम्, तदुत्पादिका इष्टिः इति) एवं संदेहे, उद्दानं निमित्तमाराद्वृत्तिः। दर्शार्थेन कर्मवत् इति पूर्वः पक्षः। (एवं संदेहे इत्यारभ्य एवं पाठः आनन्दाश्रमीये। लिखितं तु अस्मदीयं नवमतृतीयचतुर्थपादयोर्गलितमेव। तन्त्ररत्ने तु 'एवं संदेहे उद्दानं निमित्तं श्रौतत्वात् नैमित्तिकम् आराद्वृत्ति आरादुपकारकम्। अतो दर्शार्थेऽपि उद्वृत्ते अग्नौ कर्म इदं भवेत् इति पूर्वः पक्षः' इति पाठः)। 'आरादुपकारकेभ्यः सामवायिकानि गरीयांसि' इति उद्दानव्याप्तस्य अग्निहोत्रार्थस्य आहवनीयस्य उत्पत्त्यर्थम् इति सिद्धान्तः।

शा— किं प्राप्तम् ? 'उद्वायेदिति लिङ्श्रुत्या धात्वर्थस्य निमित्तताम्। वदत्यग्नेस्तु वाक्येन तस्मादाराद्रुपक्रिया ॥' इति प्राप्ते, ब्रूमः। 'उद्वानस्याग्नियुक्तस्य नित्यत्वान्न निमित्तता। न च तत्राग्निना व्याप्तिः कदाचिदपि विद्यते ॥' तस्मात् दर्शार्थेन अग्नौ उद्धृते उद्वाने नैतत् प्रायश्चित्तम्। ९।४।७.

सोम— ऊहसिद्धयर्थमग्निगुप्रैषगतपदानां अवान्तरकार्यं प्रस्तुतमिति तत्प्रसङ्गात् इष्टेः किमपूर्वं कार्यम्, उत अग्निसंस्कारः इति निरूपणात् संगतिः इति तन्त्ररत्ने।

वि—'ज्योतिष्मती भवेन्नो वा दर्शार्थोद्धृतलोपने।, निमित्तसत्त्वात्स्या, न्नाग्निहोत्रार्थोद्धृतिवर्जनात् ॥' इति।

भाट्ट— अग्निहोत्रे 'अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेत् यस्याग्निरुद्धृतः अहुते अग्निहोत्रे उद्वायेत्' इति श्रुतम्। तत्र किमिदं प्रायश्चित्तं दर्शाद्यर्थं प्रणीतस्याग्नेः अग्निहोत्रकाले उद्वाने भवति, नेति चिन्तायाम्, यच्छब्दसमभिव्याहृतेन लिङा पदश्रुत्या निमित्तत्वमुद्वानस्य प्रतीयते। न च तदुद्वानमात्रस्य नाशापरपर्यायस्य संभवति, यत्किञ्चिन्नाशस्य सर्वदा सत्त्वेन कादाचित्कत्वव्याप्यनिमित्तत्वस्यासंभवात्। अतो हविरार्तिन्यायेन (६।४।६) प्रतियोगितासंबन्धेन अग्निविशेषणम्। तत्रापि च अग्नेरवयवशो नाशस्य सर्वदा सत्त्वात्, अग्नित्वावच्छिन्नजगतीतलवर्तिसर्वाग्निनाशस्य च कदाऽप्यसंभवात् अवश्यं करिष्यमाणाग्निहोत्रप्रयोगोपयोग्यग्नित्वावच्छिन्नप्रतियोगिताकनाशस्यैव प्रकरणादिना निमित्तत्वावसायात् उक्तप्रयोगोपयोग्यवयविनाशे एव इदम्। अवश्यं चायमर्थो भेदनहोमादावपि वक्तव्यः एव, प्रकृतप्रयोगोपयोगिकपालनाशस्यैव निमित्तत्वात्। अतस्तद्वदेव इदं आरादुपकारकं अग्निहोत्राङ्गम्। अस्तु वा नष्टस्याग्नेः उत्पादकाकाङ्क्षायां वैमृधन्यायेन पदा-

न्तरकल्पनया अस्य अग्निहोत्रापेक्षिताद्दष्टरूपाग्न्युत्पादकत्वकल्पनया संनिपत्योपकारकत्वमेव । भेदनहोमस्य दृष्टरूपकपालजनकत्वस्य बाधितत्वात् आरादुपकारकत्वमिति विशेषः । अत एव अग्न्युत्पादनप्रयोजनाभावात् अग्निहोत्रे हुते एतत्प्रायश्चित्तवैयर्थ्यापत्तेः ' अहुते अग्निहोत्रे ' इत्यनुवादः । भेदनहोमस्तु कपालकार्ये निष्पन्नेऽपि उद्वासनात् पूर्वं भवत्येवेति विशेषः । सर्वथा दर्शार्थं प्रणीतस्यापि अग्नेः अग्निहोत्रोपयोगित्वात् निमित्तसंस्कार्ययोः उभयोरपि सत्त्वेन तदर्थं कर्तव्यैव इष्टिः । न च तथापि दर्शादौ वैधसमन्त्रकोद्धरणाभावात् उद्धृताग्निनाशाभावेन निमित्ताभावः, उद्धृतत्वस्य हविरुभयत्ववत् अग्निविशेषणत्वेन अविवक्षितत्वात् । इति प्राप्ते, नात्र उद्धृतत्वं उद्देश्यविशेषणम्, करिष्यमाणप्रयोगोपयोग्युद्धृतत्वावच्छिन्नप्रतियोगिताकविनाशस्यैव निमित्तत्वात् । वैधस्यैवोद्धरणस्य निमित्तकोटिप्रवेशाच्च नातिप्रसङ्गः । उद्धृतश्चाग्निरेव इति अग्निपदं नित्यानुवादः । इतरथा अजस्रपक्षे उद्धृतत्वाभावात् उद्धृतः इत्यस्य पाक्षिकानुवादत्वापत्तेः । गार्हपत्याग्निनाशेऽपि ज्योतिष्मतीष्ट्यापत्तेश्च । अतश्च दर्शार्थं प्रणीतेनैव अग्निहोत्रानुष्ठानात् उद्धरणस्य प्रसङ्गसिद्धकार्यतया लोपेन निमित्ताभावादेव न नैमित्तिकानुष्ठानम् । अपितु अन्वाहिताग्निनाशप्रायश्चित्तमेव । अत्र च पूर्वपक्षे उद्धृताग्न्यभावमात्रेण अन्यथात्वात् भाक्तोहप्रसक्तेः, सिद्धान्ते तदपवादात् संगतिः ।

मण्डन— ' अग्निहोत्रार्थोद्धृते यजिः । '

शंकर— ' ज्योतिष्मत्यग्निसंस्क्रिया । '

* ज्यौतिषस्य वैदिककर्मप्रयोगोपयोगितिथ्यादिज्ञानद्वारा वेदोपकारकत्वम् । मणि. पृ. ५.

**ज्वलितं न हिरण्यरेतसम्, चयमास्कन्दति भस्मनां जनः । ' इति न्यायः ।** ( भारविः २।२० ) जनः प्रदीप्तमग्निं नास्कन्दितुं शक्नोति भस्मनां चयं कामं आस्कन्दति । तस्मात् पुरुषेण तेजस्विना भाव्यम्, न मृदुनेति न्यायार्थः । **साहस्री. ९६८.**

* ' ज्वालादेरपि नाशित्वं नैव सिद्धं प्रतिक्षणम् । लघवोऽवयवास्तत्र यान्ति देशान्तरं लघु ॥ श्लो. वा. शब्दाधिकरणे ( १।१।६ ) ४३४ ॥ प्रभूतं वर्तिदेशे हि तेजस्तिष्ठति पिण्डितम् । तत्र यावद् व्रजत्यूर्ध्वं तावज्ज्वालेति गम्यते । ४३५ ॥ ततोऽपि यदतिक्रम्य याति तत् स्यात् प्रभात्मकम् । ततः परं तु यद् याति, तत् सौक्ष्म्यान्नावधार्यते । ४३६ ॥ उत्तरावयवै रुद्धे मार्गे, पूर्वे न यान्ति च । यथोत्तरे विमुञ्चन्ति पूर्वे यान्ति तथातथा । ४३७ ॥ ' * ज्वालादीनां नित्यत्वे स्थिरत्वे अङ्गीक्रियमाणे अनुमानविरोधः । ज्वालायां प्रभामण्डलवितत्या तेजोऽवयवानां विशरणमवगम्यते । विशीर्णावयवश्च अवयवी विनष्टः पुनरुपलब्धिश्च ज्वालान्तरस्य उत्पन्नत्वात् इत्यनुमानेन ज्वालादीनां अन्यत्वमवसीयते इत्यनुमानविरोधात् भेदाग्रहणनिबन्धन एव एकावगमभ्रमः, न प्रत्यभिज्ञा । ऋजु. पृ. १९२

---

## ट.

**टिट्टिभन्यायः ।** अयं पञ्चतन्त्रे विवृतः । तथाहि, कस्य चित् टिट्टिभाख्यपक्षिणोऽण्डानि स्वतटस्थानि समुद्रः स्ववीचिना अपजहार । स च पक्षी स्वसाहसेनैनं शोषयिष्यामीति प्रवृत्तो भार्यादिभिर्बहुधा वार्यमाणोऽपि नोपरराम, प्रत्युत तानपि वव्रे । तांश्च पतनोत्पतनाभ्यां बहुधा क्लिश्यतः सर्वानवलोक्य कृपालुर्नारदस्तत्समीपे गरुडं प्रेषयामास । ततस्तत्पक्षवातेन शुष्यन् समुद्रो भीतोऽण्डान्यानीय पक्षिणे ददाविति । तथा च यथा दृढाध्यवसायस्य पक्षिणो गरुडसाहाय्यादण्डलाभः, तथा दृढबुद्धेर्जिज्ञासोः अतिदुर्लभस्यापि तत्त्वज्ञानस्य ईशानुग्रहात् सुखेन लाभो भविष्यतीति । **साहस्री . ३९०.**

**टिट्टिभाण्डन्यायः ।** टिट्टिभन्यायार्थक एवायम् । **संग्रहः.**

---

## ण.

* **णमुल् धातुसंबन्धविहितः** ' अभिक्रामं जुहोति ' इत्यादौ विनियोक्त्री श्रुतिः भट्टसोमेश्वरमते । क्रियाऽन्तरसमभिव्याहारे एव णमुलादेः साधुता, यथा क्रियायोगे एव प्रादेरुपसर्गता । अभिक्रमणाधिकरणवार्तिकेऽपि ( ३।१।१०।१९-२० ) अभिक्रमणं प्रकृतक्रियामात्राङ्गं होमाङ्गमेव वा इति भाष्यकृन्मते संशयमुक्त्वा

संयुक्तश्रवणात् तमाक्षिप्य तद्धेतुं वदता 'कर्मणः अमूर्तत्वात् वाक्येन च संबन्धोपादानात्' इति वाक्यीयमङ्गत्वमुक्तम्, न श्रौतम्। तत्रत्यसिद्धान्तेऽपि 'सर्वथा तावत् अभिक्रामं न क्रियाऽन्तरमन्तरेण निराकाङ्क्षीभवति' इत्येवोक्तम्, न 'क्रियासंबन्धं ब्रवीति' इति। तथा यावज्जीवाधिकरणवार्तिके (२।४।१।१-७) यावत्पदाख्यातश्रुतिवृत्तत्वसंभवो मत्पक्षे, भवतस्तु अत्र लक्षणावृत्तता भवेत् इति यावदव्ययजीवधातुश्रुतिभ्यामेव निमित्तत्वसिद्धान्तः उपपादितः, न तु णमुल्श्रुत्येति। **बाल. पृ. ४५,४६.** * **णमुलादिवत्** शतृप्रत्ययेन निमित्तत्वाभिधानात्। **भाट्ट. ४।१।३.** * **णमुल्प्रत्ययार्थो** भावनान्वयी। **मणि. पृ. ११३.**

* **णिच्प्रत्ययः।** स्वतन्त्रस्य कर्तुः प्रयोजके हेतुसंज्ञकेऽपि कर्तरि प्रयोजकव्यापारं प्रति स्वातन्त्र्यलक्षणकर्तृत्वसद्भावात्, तत्र च हेतुत्वविवक्षायां प्रयोजकत्वलक्षणत्वाद्धेतुत्वस्य, प्रयोजकव्यापाराख्यं च तत्समर्थाचरणं विना प्रयोजकत्वायोगात्, हेतुमन्तं तत्समर्थाचरणाख्यं प्रयोजकव्यापारं वक्तुम् 'हेतुमति च' इतिसूत्रविहितः णिच्-प्रत्यय उत्पद्यते। **सु. पृ. १५०४.**

* **ण्वुल्प्रत्ययः** 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' (पा० ३।३।१०) इति विहितः विनियोक्त्री श्रुतिः 'याजको याति' इत्यादौ इति भट्टसोमेश्वरः। पार्थसारथिमते तु तत्र वाक्यीयो विनियोगो न श्रौतः। **बाल. पृ. ४५,४७.**

---

## त.

**तक्रकौण्डिन्यन्यायः।** अन्यथा 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इत्यत्र तक्रदानेन दधिदानस्य बाधो न स्यात्, तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चारितार्थ्यसंभवात् (**शेखर. पृ. २४१**)। "नैवेश्वर आज्ञापयति, नापि धर्मसूत्रकाराः पठन्ति' 'अपवादैः उत्सर्गाः बाध्यन्ताम्' इति। तद्यथा 'सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयताम्, तक्रं कौण्डिन्याय' इति सत्यपि संभवे तक्रदानं दधिदानस्य निवर्तकं भवति" इत्युक्तम् ('मिदचोऽन्त्यात्' इति सूत्रे भाष्ये) (**भूतिः २४१**)। 'इकारोच्चारणसामर्थ्यात्' इत्यस्य तक्रकौण्डिन्यन्यायेन तद्बाधात् इत्यर्थात्। (**भूतिः पृ. १७६**)। वार्तिककारमते तक्रन्यायासत्त्वेन। भाष्यमते तक्रन्यायेन अपवादत्वेऽपि। (**भूतिः पृ. २०२**)। तत्र (अनड्वान् इत्यत्र) आत् इत्यधिकारसामर्थ्यात् (नुमा आमः) बाधाभावः। उपजीव्यविरोधाच्च आकारमुपजीव्य जायमानो नुम् कथं तद्बाधकः स्यात्। एवं च सामर्थ्यादत्र तक्रकौण्डिन्यन्यायाप्रवृत्त्या न विरोधः, नापि लक्ष्यविसंवादः। (**तत्त्वप्रकाशिका पृ. २०२**).

तक्रकौण्डिन्यन्यायेन द्वितीयबाधबीजेन तदप्राप्तियोग्ये अचारितार्थ्ये सति कृते चारितार्थ्ये इत्यनेन बाधस्वीकारे (एकाचः इत्यस्य) 'ईं घ्राध्मोः' 'हन्तेर्हिंसायाम्' इत्यादिभिर्द्वित्वबाधापत्तिः। (**भूतिः पृ. २३९**)।

तक्रन्यायेन हि विशेष्यविशेषणदलप्रविष्टयावत्पदार्थसंकुचितव्याप्यताऽवच्छेदकरूपावच्छिन्नातिरिक्तत्वेन संकोचः (अनचि चेत्यस्य) आवश्यकः। (**भूतिः पृ. २३९**)।

'क्वचिदपवादविषयेऽपि०' इत्यत्र अपवादशब्दस्य बाधकपरत्वेऽपि अन्यत्र अपवादशब्दः तक्रकौण्डिन्यन्यायरूपयेननाप्राप्तेति न्यायपर एव इति केचित्। तन्न शोभनम्। (**भूतिः पृ. २४४**)।

तत्रकौण्डिन्यन्यायस्य अनित्यत्वेन। (**तत्त्वप्रकाशिका पृ. ७६**).

* **तक्रकौण्डिन्यन्यायः।** अयं सामान्यशास्त्रस्य विशेषशास्त्रेण बाधे एव प्रवर्तते। यथा 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इत्यत्र कौण्डिन्यस्यापि ब्राह्मणत्वात्। **साहस्री. २२२.** * **तक्रकौण्डिन्यन्यायः।** क्तस्य मत्याद्यर्थेभ्यो विशिष्य वर्तमानार्थे वार्तिकविधानात् तक्रकौण्डिन्यन्यायेन भूतार्थत्वबाधः स्यात् इति न च वाच्यम्। **परिमल. १।१।१ पृ. २.** * **तक्रकौण्डिन्यन्यायः।** 'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय' इति। अत्र ब्राह्मणजातिर्वर्णैरुपात्ता तदुपलक्षिता तु व्यक्तिर्न वर्णोपात्ता कौण्डिन्ये तूपात्ता व्यक्तिः। तत्र यद् दधिदानं अवर्णे (ब्राह्मणपदवाच्यजातिलक्षितव्यक्त्युद्देशेन विधीयमानं लाक्षणिकम्) कौण्डिन्ये प्राप्नोति तत् वर्णेन

( व्यक्तिविशेषोद्देशेन विधीयमानेन श्रौतेन ) तक्रदानेन विरोधात् बाध्यते । टुप्. १०।८।१।१ पृ. २०५७. ❋ तक्रकौण्डिन्यन्यायः । 'ननु चाकृतिपक्षेऽपि व्यक्तावेव क्रियाक्रिये । शब्दार्थे संभवात्तेन किमर्थैषा विचारणा ॥ यद्यप्येवं न भेदोऽस्ति वेदार्थकरणे नृणाम् । दधि विप्रेभ्य इत्यादौ फलं लोके भविष्यति ॥ व्यक्तिपक्षे विकल्पः स्यात् कौण्डिन्ये दधितक्रयोः । सामान्यवाक्यदौर्बल्यात् तक्रमेवेतरत्र तु ॥' वा. १।३।९।३३ पृ. ३०७, ❋ तक्रकौण्डिन्यन्यायः । नहि एकस्यैव शास्त्रस्य किञ्चित् प्रति सद्भावः, किञ्चित् प्रति असत्त्वमिति युज्यते । तेन 'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय' इत्यादौ प्रतिब्राह्मणं शास्त्राभावात् एकं शास्त्रम् । तद्यदि तक्रालोचनेन कौण्डिन्ये नास्ति इत्यवधार्यते, ततो माठरादिष्वपि अप्रवृत्तिः । अथ तेष्वस्ति, ततः कौण्डिन्येऽपि भवितव्यम् । अथ 'तं प्रति नास्ति, इतरान् प्रति अस्ति' इत्येतदपि एकवस्तुनि विप्रतिषेधान्निष्प्रमाणकम् । न चात्र प्रतिपत्तृभेदो विद्यते, येन संबन्धग्रहणाग्रहणवत् अविरोधः स्यात् । न च सकृद्गृह्यमाणत्वात् शास्त्रभेदोऽवगम्यते, येन 'अन्यस्यैव सत्त्वम् अन्यस्य चासत्त्वम्' इत्यभिधीयेत । व्यक्तिपक्षे च कदाचिदेतद्भवेत्, आकृतिपक्षे तु विषयैकत्वात् युगपदेकमेव शास्त्रं प्रवर्तते । तस्मात् शास्त्रान्तरं अनन्यगति दृष्ट्वा मृगतृष्णाऽऽदिवदेव सामान्यापहृतबुद्धेः 'ममेयं भ्रान्तिः पूर्वमेतद्विषयपरिकल्पनया जाता' इत्यध्यवस्यति । तस्मात् माठरादिप्राप्तिवेलायामुपजाताऽपि कौण्डिण्यबुद्धिः भ्रान्तिरिति निश्चित्य फलविमुक्तत्वानुबद्धमर्थं बाधितं मन्यते । ३।३।७।१४ पृ. ८६०-६१. ❋ तक्रकौण्डिन्यन्यायः । यतो भवतु एवंविधिषु 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इति । तत्र तक्रविधिर्न दधिविधिमपेक्षते प्रवर्तितुम्, इह तु ( यजतिषु येयजामहं करोति नानुयाजेषु इत्यत्र ) प्राप्तिपूर्वकत्वात् प्रतिषेधस्य येयजामहस्य चान्यतोऽप्राप्तेः तन्निषेधेन निषेध्यप्राप्तौ तद्विधिरपेक्षणीयः । भामती. ३।३।१५।२६ ब्र. सू. ❋ तक्रकौण्डिन्यन्यायः । यथा 'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय' इति । तत्र ब्राह्मणशब्देन ब्राह्मणजातिः वर्णैरुपात्ता, कौण्डिन्ये व्यक्तिरेव । न च कौण्डिन्ये सामान्यं विद्यते । ( तदेवाह- ) न च कौण्डिन्ये वस्तु विद्यते अवान्तरसामान्यम्, यत् प्रत्यक्षेण गृहीत्वा शब्दः प्रवर्तेत । तस्मात् कौण्डिन्यशब्देन विशेष एवोच्यते । अपिच वाक्यार्थे पदवचनमिदम् ( कुण्डिनस्यापत्यं गोत्रं इति ) । वाक्यार्थश्चेत् न सामान्यं प्रत्याययति । तस्माद्विशेष एव शब्देनोच्यते । तत्र चानन्तरे एव कार्यम्, इतरस्मिन् सामान्येन । विशेषः प्रकरणादिभिरवच्छेत्तव्यः । तस्मात्तत्र विप्रकर्षः । इह तु संनिकर्षः । अनेन न्यायेन विशेषश्रुतेन गार्हपत्येन ( पत्नीसंयाजेषु ) आहवनीयो बाध्यते । टुप्. १०।८।८।१६ पृ. २०७२-७३. ❋ तक्रकौण्डिन्यन्यायः । 'व्यवहारा हि दृश्यन्ते सामान्यार्थनिबन्धनाः । दधितक्रादिदानादौ कौण्डिन्यब्राह्मणादिषु ॥' विशेषेण हि सामान्यस्य बाधमाश्रयन्तो ब्राह्मणशब्दस्य सामान्यवाचित्वं मन्यन्ते । रत्नाकर. श्लोवा. वनवादे १९.

❋ तक्षाधिकरणम् । तक्षस्मृतिः । तक्षशास्त्रम् । गृहनिर्माणादि लौकिकं कर्म प्रारब्धं सत् समापनीयमेवेति न नियमः ॥

**लोके कर्माणि वेदवत् ततोऽधिपुरुषज्ञानम् । ६।२।४।१७ ॥**

भाष्यम्— केन चित् गृहमुपक्रान्तं भवति शकटं रथो वा । वीता अस्य फलेच्छा, अवाप्नोति वा फलम् । तत्र संदेहः किं तेन नियोगतः परिसमापयितव्यम्, उत इच्छया उत्स्रष्टव्यमपीति । किं प्राप्तम् ? लोके कर्माणि एवंजातीयकानि उपक्रम्य परिसमापयितव्यानि । यथैव वैदिकानि, तथैव तानि नियोगतः परिसमापनीयानि । कुतः ? ततोऽधिपुरुषज्ञानम् । ततः तत्पुरुषज्ञानं भवितुमर्हति । कुतः ? शास्त्रात् । आम्नायते हि तक्ष्णां शास्त्रम् । अत्रापि देवताव्यापारः अङ्गीक्रियते पूर्वस्यां दिशि एता देवताः इतरासु एता इति । यथा शास्त्रकृते देवताव्यापारे उपक्रम्य अपरिसमाप्यमाने शिष्टविगर्हणम्, एवमिहापि भवितुमर्हति ।

अपराधेऽपि च तैः शास्त्रम् । १७ ॥

भाष्यम्— तेषां च लौकिकानामपराधे तैस्तक्षभिः प्रायश्चित्तशास्त्रमाम्नायते । 'आरे भग्ने इन्द्रबाहुर्बद्धव्यः । पायसं च ब्राह्मणो भोजयितव्यः' इति । प्रायश्चित्तं च यदि अदृष्टार्थम्, न शास्त्रादृते । अथ प्रसङ्गपरिहारार्थम्, ततोऽपि आदृतमेव तदिति गम्यते ।

अशास्त्रा तूपसंप्राप्तिः, शास्त्रं स्यान्न प्रकल्पकं, तस्मादर्थेन गम्येताप्राप्ते वा शास्त्रमर्थवत् । १९ ॥

भाष्यम्— तुशब्दः पक्षं व्यावर्तयति । अशास्त्रा तु एषामुपसंप्राप्तिरिति ब्रूमः । स्मृतेरस्याः शास्त्रं भवता अनुमीयते । न शास्त्रमन्तरेण स्मृतिः । न च स्मृतिमन्तरेण तक्ष्णां ग्रन्थ उपपद्यते इति । अत उच्यते, भवत्यत्र स्मृतिः, एवमिदं गृहादिकर्म रमणीयं भवतीति । नास्मात् कर्मणः अदृष्टं किंचिदिति । या चासौ रमणीयता, सा अन्तरेणापि शास्त्रं शक्या ज्ञातुम् । ज्ञात्वा च स्मर्यते । तस्मान्नास्याः स्मृतेः शास्त्रं प्रकल्प्यम् । यदि अन्तरेण शास्त्रं न प्राप्येत, ततः शास्त्रमत्र अर्थवदिति प्रकल्प्येत । तस्मान्नेदं शास्त्रोक्तम् । शास्त्रोक्ते च सामिकृते त्यक्ते अत्यन्तं शिष्टा गर्हन्ते, देवताश्रये च । ननु अत्रापि देवताः परिगृहीताः, अस्यां दिशीयं देवता यक्ष्यते, अस्यामियमिति । उच्यते । पुरुषमनु देवताः शिष्टाः स्मर्यन्ते, न गृहमनु । तस्माददोष इति ।

शा—( सिद्धान्तस्तु- ) 'अशास्त्रादेव हि प्राप्तिर्दृष्टार्थेषु गृहादिषु । तेन शास्त्रं न कल्प्येत पुरुषार्था हि देवता ॥' तस्मान्न समाप्तिनियमः ।

सोम—पूर्वत्र प्रत्यवस्थानात् संगतिः । सूत्रार्थस्तु—लोके कर्माणि गृहादीनि वेदवत् समाप्यानि । पुरुषमधिकुर्वन्ति इति अधिपुरुषाणि लौकिककर्माणि, तेषां ज्ञानं तत एव शास्त्रादेव इति हेतोः इति ।

वि— 'समाप्यमसमाप्यं वा लौकिकं, शास्त्रकल्पनात् । आद्यो, नो गृहकृष्यादौ शास्त्रकल्पकवर्जनात् ॥' तस्मात् अवश्यं समापनीयमिति नास्ति नियमः ।

भाट्ट— लौकिकस्य तु गृहरथकर्मादेः अशास्त्रीयत्वात् अशास्त्रीयासमापने च शिष्टविगर्हणाभावात् प्रयोजकाभावेन असमापनम् । न च तस्यापि शिल्पश्रुतिमूलत्वात् शास्त्रीयत्वम्, तस्याः अर्थसुखादिवशवर्तितया लोकमूलकत्वेन श्रुतिमूलकत्वाभावात् । यत्तु गृहकरणाद्याश्रितं पुरुषार्थं नैमित्तिकं वास्तुशान्त्यादिकं 'आरे भग्ने इन्द्रबाहुर्बद्धव्यः, पायसं ब्राह्मणो भोजयितव्यः' इत्यादि च, तस्य शास्त्रीयत्वादिष्टमेव समापनम् ।

मण्डन— 'न लौकिकानां नियमः समाप्तौ ।'

शंकर— 'लौकिके नैष नियमः ।'

* तक्षरजकादिभृतिदाने मन्त्रो न भवति । ऋत्विग्भ्यो दाने तु मन्त्रोऽस्ति । के.

* तक्षशास्त्रम् ( ६।२।४।१६-१८ ) । गृहादिकर्मणः तक्षशास्त्रप्रतिपाद्यस्य तक्षशास्त्रानुमितवेदविहितत्वात् प्रक्रान्तानामावश्यकं समापनं इति पूर्वपक्षः । अदृष्टार्थवास्तुपूजायाः दृष्टार्थगृहकर्मार्थत्वायोगात् तदाश्रित्य पुरुषार्थतैव इति वास्तुपूजामुखेनापि गृहकर्मणो न देवताऽऽश्रयत्वम् । गृहस्यादौ आरे भग्ने इन्द्रबाहुर्बद्धव्यः इति प्रायश्चित्तविधानमपि पुरुषार्थमेव इति तद्बलादपि गृहकर्मणो न शास्त्रीयत्वं इति सिद्धान्तः । सोम.६।२।४.

* तक्षसूत्रं ( तक्ष्णः सूत्रं शास्त्रं ) न वेदमूलकम्, किन्तु अन्वयव्यतिरेककुशलपुरुषोत्प्रेक्षितमूलकम् । तदुक्तं किंचिदारब्धं तदवश्यं समापनीयमेवेति न नियमः, दृष्टदोषाभावात् । वि. ६।२।४. * तक्षस्मृतेः । भवत्यत्र स्मृतिः, एवमिदं गृहादिकर्म रमणीयं भवतीति । नास्मात् कर्मणोऽदृष्टं किंचिदिति । या चासौ रमणीयता सा अन्तरेणापि शास्त्रं शक्या ज्ञातुं ज्ञात्वा च स्मर्यते । तस्मान्नास्याः स्मृतेः शास्त्रं प्रकल्प्यम् । भा. ६।२।४।१८.

* तक्षस्मृतौ रथगृहनिर्माणादिरूपं लौकिकं कर्म प्रतिपादितम् । सा च स्मृतिर्न वेदमूला रथादौ कार्यक्षमत्वस्य रमणीयत्वादेश्च दृष्टप्रयोजनस्य अन्वयव्यतिरेकाभ्यामेव सिध्युपायावगमात् । ऊहापोहकुशलपुरुषोत्प्रेक्षामूला तु तक्षस्मृतिः । तक्षस्मृत्युक्तं च कर्म अवश्यं समापनीयमेवेति न नियमः । वि. ६।२।४.

* तक्षणं गुणकर्म यूप उत्पाद्यः । वि. २।१।४.

* तक्षणं यूपधर्मः । भा. १२।२।११।२७. * तक्षणं यूपसंस्कारः पशुभेदेऽपि तन्त्रेण कर्तव्यो यूपकाले एव ज्योतिष्टोमे । 'दीक्षासु यूपं छिनत्ति क्रीते वा राजनि'।

वि. ११।३।४. * तक्षणादीनामनुष्ठानं नास्ति साद्यस्के खलेवाल्याम्। भा. १०।२।३२।७१–७२.

* तडागं खनितव्यं इत्यादिस्मृतिः धर्मे प्रमाणम्। भा. १।३।१।१–२ पृ. १६०, * तडागानि परोपकाराय, न धर्मायेत्यवगम्यते (परोपकारस्य न धर्मत्वं वा ? के.)। १।३।२।२ पृ. १६६.

* 'तण्डुलान् पिनष्टि' इति पेषणस्य नियमविधिः, नानुवादः दर्शपूर्णमासयोः। भा. ४।२।११।२६, * तण्डुलेषु प्राकृतव्रीहियवान्यतरनियमस्य चित्रेष्टौ बाधः। १०।२।३१।७०. * तण्डुलावापमन्त्रे धान्यशब्दस्योहः (शाक्यानामयने)। मांसस्य पेषणार्थमधिवापोऽस्तीति। कृत्वाचिन्तेयम्। वृ. ९।१।१३।३७–३८ वर्णकं २. * तण्डुलनिर्वृत्तिपर्यन्तमवहननमभ्यसितव्यम्। यदि सकृदेव मुसलस्य उद्यमननिपतने कृत्वा उत्सृज्येत, यत् कार्यं तन्नैव निर्वर्त्येत। भा. ११।१।५।२७. * तण्डुलपेषणं गुणकर्म, तण्डुलाः संस्कार्याः। वि. २।१।४. * तण्डुलप्रक्षालननिनयनान्तेन कृष्णाजिनास्तरणादिना अनुसमयः नानाबीजेषु। भा. ५।२।७।१३–१५.

**तण्डुलभक्षणन्यायः। साहस्री. ११६।** दिव्यविशेषोऽयम्। तत्राह मिताक्षरायां पितामहः (२।११३) 'तण्डुलानां प्रवक्ष्यामि विधिं भक्षणनोदितम्। चौरे तु तण्डुला देया नान्यस्येति विनिश्चयः॥ तण्डुलान् कारयेत् शुक्लान् शालेर्नान्यस्य कस्यचित्। मृन्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः॥ (देव–) स्नानोदकेन संमिश्रान् रात्रौ तत्रैव स्थापयेत्। प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकम्। (देवप्रार्थनापत्रं यस्य शिरसि स्थापितं तादृशम्)। तण्डुलान् भक्षयित्वा (ण्यन्तात् णिच्) तु पत्रे निष्ठीवयेत् ततः। पिप्पलस्य तु नान्यस्य अभावे भूर्ज एव तु। लोहितं यस्य दृश्येत हनुस्तालु च शीर्यते। गात्रं च कम्पते यस्य तमशुद्धं विनिर्दिशेत्॥' इति। के.

**तदापीतेः संसारव्यपदेशात्** (४।२।८ ब्र. सू.) इति न्यायात् करणसमुदायरूपं आत्मनः उत्क्रान्त्युपाधिभूतं लिङ्गं शरीरान्तरसंचारि अङ्गीकर्तव्यम्। (तत् तेजआदि भूतसूक्ष्मं आ अपीतेः आ संसारमोक्षात् अवतिष्ठते, 'योनिमन्ये प्रपद्यन्ते' इत्यादिना संसारस्य मोक्षात् प्राक् व्यपदेशात् इति न्यायसूत्राक्षरार्थः)। पञ्चीकरणवार्तिकाभरणं ६.

**तदिष्टं विदुषां लोके समासव्यासधारणम्।** संक्षेपप्रदर्शनपूर्वकविस्तरवचने व्याख्यातुः प्रतिपादनसौकर्यं श्रोतुश्च प्रतिपत्तिसौकर्यं प्रयोजनं 'तदिष्टं विदुषां॰' इति न्यायेन स्पष्टम्। सु. पृ. ५४१.

**तदुपहूत उपह्वयस्वेत्यनेनानुज्ञापयेल्लिङ्गात्। ३।५।१५।४१॥**

सिद्धान्तसूत्रम्। ज्योतिष्टोमे सोमशेषः अनुज्ञातेन भक्षयितव्य इत्युक्तं पूर्वाधिकरणे। तत् अनुज्ञापनं किं लौकिकेन वाक्येन वैदिकेन वा इति संदेहे उच्यते। 'उपहूतः, उपह्वयस्व' इत्यनेन वैदिकमन्त्रेण तत् सोमभक्षणं अनुज्ञापयेत्। लिङ्गात् मन्त्रलिङ्गात्। मन्त्रे अनुज्ञापनलिङ्गं स्पष्टम्। के.

**तदेकपात्राणां समवायात्। ३।५।१७।४३॥**

सिद्धान्तसूत्रम्। ज्योतिष्टोमे सोमभक्षणे अनुज्ञापनं अनुज्ञानं च कर्तव्यमित्युक्तं प्राक्। तत् अनुज्ञापनं एकपात्राणामेव स्यात्। एकेनैव पात्रेण यदा अनेके भक्षयन्ति तदैव कर्तव्यमापतति। समवायात् अनेकेषां एकत्र सहसंबन्धात्। लोके सहभोजनादि आचरितुकामः चित्तमन्यस्यानुकूलयति। अत्रापि एकपात्रे सोमे पीयमाने कदाचिदन्येन पातव्यमन्यः पिबेत्। तत्रानुज्ञापनं संभवति। त्वया अर्धं पातव्यं मया अर्धम्, कदाचिदहं अभ्यधिकं न्यूनं वा पिबेयं तदनुज्ञातुमर्हसीति। एकपात्रे वा पानं त्वया सह आचरन्नहं तव चित्तप्रसादनं व्याहन्यां इति संभवति अनुज्ञापनम्। तस्मात् एकपात्रेष्वेव पिबत्सु एतत् स्यात्, न भिन्नपात्रेषु। एकं पात्रं येषां पिबतां ते एकपात्राः ऋत्विज इति बहुव्रीहिः। के.

**तद् गुणास्तु विधीयेरन्नविभागाद् विधानार्थे, न चेदन्येन शिष्टाः। १।४।६।९॥** (इति न्यायः)।

"यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति उक्त आग्नेयः किं गुणविधिः,

कर्मनामधेयं वेति विचारे सिद्धान्तमाह । तत् इति पृथक् पदम् । तुशब्दश्चार्थे । तत् यागादि कर्म गुणाश्च यागविशेषणभूता देवताऽऽदयः युगपत् विधीयेरन् उपदिश्येरन् । कुतः ? विधानार्थे लिङ्प्रत्यये अविभागात् विशेष्यविशेषणविधिविभागाभावात् द्रव्यविधिः देवताविधिः इति वा विशेषाभावात् । कस्य चिदन्येन विधाने तु अविभागेन विधानं न स्यात् । तदाह न चेत् अन्येन शिष्टाः विहिताः स्युः इति । अन्येन विधानाभावे तु एकेनैव लिङा अविभागेन विधानं स्यात् । तस्मात् आग्नेयशब्दः अग्निदेवतारूपगुणविशिष्टकर्मविधानार्थत्वात् गुणविधिरेव न कर्मनामधेयम् । अविभागात् इत्यनेन आवृत्तिलक्षण-वाक्यभेदपरिहार उक्तः । न चेत् इत्यादि तु गौरवलक्षण-वाक्यभेदपरिहारः । तथाच वर्तिकम्– 'न चेदन्येन शिष्टाः स्युर्यागाः शब्देन केनचित् । ते गुणाश्चोपदिश्येरन् विधिना ह्यविभागतः ॥' इति । के.

* तद् गुणास्तु इत्यगुणविधिपरे वाक्ये भवति अनेकगुणविधानमित्युक्तम् । भा. २।३।३।४ पृ. ५९३.

* तद् गुणास्तु विधीयेरन्० इत्यनेन न्यायेन देवतातद्धितेनैव देवतोद्देशपूर्वकद्रव्यत्यागरूपोत्सर्गविधिसिद्धिः । सु. पृ. ९४१.

**तद् गुणास्तु विधीयेरन्नविभागाद् विधानार्थे, न चेदन्येन शिष्टाः । १।४।७।९ ॥**

'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति' इत्येवमादयः श्रूयन्ते । तत्र संदेहः किं आग्नेयः अग्नीषोमीयः इत्येवमादयः गुणविधयः, कर्मनामधेयानि इति । अत्र **प्रभाकरेण** संगतिलोभादित्थमधिकरणमुपवर्णितम्, 'यदाग्नेयोऽष्टाकपालो भवति' इत्यत्र भवत्यर्थः प्रतीयते । न चासौ विधिविषयः, पुंव्यापाररूपत्वाभावात् । विधिविषयश्च नामावच्छिन्नो गुणावच्छिन्नो वा विधीयते, अतो गुणविधिनामधेयत्वयोरसंभवात् तृतीयप्रकाराभावाच्च अप्रतिपादकतया अप्रामाण्यं आग्नेयादिचोदनानामिति पूर्वपक्षः । सिद्धान्तस्तु यथाभाष्यमेवेति । **तदिदमसंगतम्**, वक्ष्यमाणपूर्वपक्षन्यायेन नामधेयत्वेनैव प्रामाण्योपपत्तेः । अप्रामाण्यपक्षोऽयं पक्षग्रहणमात्रेणैवेति यथावार्तिकमेवाधिकरणं प्रस्तूयते । सिद्धेषु नामधेयेषु इदानीं तदपवादः क्रियते । अत्रायं पूर्वपक्षिणोऽभिसंधिः ; 'यदाग्नेयोऽष्टाकपालो भवति' इत्यत्र अष्टाकपालः स्वतो भवति इति वाक्यार्थासंभवात् भावना तावदवश्यं कल्पनीया । अष्टाकपालस्य च अपुरुषार्थत्वेन भाव्यत्वानर्हत्वात् अक्रियारूपत्वेन च फलसाधनत्वासंभवात् फलभावनाऽनुरञ्जकक्रियाकल्पनायां क्रमपठितयाज्याऽनुवाक्यासमर्पिताग्निदेवतावशेन अष्टाकपालद्रव्यकयागरूपैव क्रिया कल्प्यते । सा च द्रव्यदेवताविशिष्टा पञ्चमलकारेण विधीयते । न च स्ववाक्योपात्ताग्नेयतद्धितस्यैव देवतासमर्पकत्वम्, अग्निर्देवता, अग्नेर्जातः, अग्नये हितः इति विनिगमनाऽभावेन तस्य संदिग्धार्थत्वात् । मन्त्रस्य त्वनुष्ठेयार्थप्रकाशकत्वेनासंदिग्धार्थत्वात् मन्त्रादेव देवताप्राप्तिः । तथा च आग्नेयपदं तत्प्रख्यन्यायेन नामधेयमेवेति ।

तथा 'अग्निहोत्रं जुहोति' इत्यत्राग्निहोत्रपदम् । इत्येवं **प्राप्तेऽभिधीयते** । भवेदेवं यदि अत्र आग्नेयपदं अष्टाकपालपुरोडाशसमानाधिकरणं असंदिग्धदेवताऽभिधायितद्धितान्तं प्रथममेव न श्रूयेत । न चास्य संदिग्धार्थत्वम्, विधेयीभूताकाङ्क्षितदेवतापरत्वे सति अनाकाङ्क्षितानुवाद्यार्थत्वस्यासंभवात् । ततो देवतातद्धितान्ताग्नेयपदादेव प्रथमं द्रव्यदेवतासंबन्धानुमितयागविधेः सिद्धत्वात् न तदवधीरणेन चरमभाविजघन्यतरमान्त्रवर्णिकदेवताकल्पनया यागविधानमाश्रित्य अनन्यथासिद्धस्य आग्नेयपदस्य नामधेयत्वाश्रयणमयुक्तमिति । अग्निहोत्रपदे तु यथा चतुर्थीसमासस्य विधेयीभूतदेवतापरत्वम्, तथा सप्तमीसमासस्यापि विधेयीभूतहोमाधारपरत्वात् संदिग्धत्वमेव । न **चात्रापि** 'यदाहवनीये जुहोति' इत्यनारभ्यश्रुतवाक्येनैव आधारप्राप्तेः असंदिग्ध एव चतुर्थीसमास इति वक्तव्यम् । आहवनीयाग्निमात्राङ्गत्वप्रतिपादनेनैव विध्युपपत्तौ तेनात्रावश्यं संदेहव्युदासार्थं प्रकरणानुसंधानं वक्तव्यम् । तत्र च मन्त्रवर्णादेव देवतायाः प्राप्तत्वात् भवतु अग्निहोत्रपदं नामधेयम् । न त्विह प्रथममेव देवतावाचितद्धितबलेन निःसंदिग्धदेवताभावावगमादिति । **प्रयोजनम्**– पूर्वपक्षे आग्नेयशब्दस्य कर्मवचनत्वात् 'आग्नेयं चतुर्धा करोति'

इत्याग्नेयकर्मण एव चतुरावृत्तत्वम् । सिद्धान्ते तु आग्नेयपदस्य गुणवचनत्वात् आग्नेयपुरोडाशस्यैव चतुर्धाकरणमिति । सूत्रं तु विधानार्थे तद्धितान्ते आग्नेयपदे अविभागात् तदविनाभूतत्वात् द्रव्यदेवतासंबन्धाक्षिप्तयागाख्यं कर्म गुणाश्च अग्निपुरोडाशादयो विशिष्टविधिना विधीयन्ते । तत् कर्म गुणाः ( च ) न चेदन्येन शिष्टाः विहिता इत्यर्थः । तौता.

* 'तन्नित्यं तच्चिकीर्षा हि' ( तत् नित्यम् ) ( ६।३।४।१७ ) । यत् सकलसोमधर्मासंभवे विकलान् सोमधर्माननुत्पादयेत्, तत् पूतीकगतान् इति । वक्ष्यति हि 'तन्नित्यम्' इति । वा. ३।६।१५।४०.

* तत् प्रकरणे यत् तत्संयुक्तमविप्रतिपेधात् । ३।४।१।६ ॥ प्रकरणे यत् मनुष्यसंयुक्तं कर्म तत्र निवीतं निविशते, न शुद्धे प्रकृते कर्मणि, सर्वेषां श्रुतिप्रकरणसमाख्यानामविरोधात् शुद्धप्रकृतकर्मनिवेशे श्रुतिविरोधापत्तेः इत्येवं सप्तम्यर्थे तत् इत्यव्ययाङ्गीकारेण सूत्रव्याख्या । सु. पृ. १३४८ । तत्संयुक्तशब्देन मनुष्यप्राधान्यमुक्तम् । पृ. १३४९.

**तत् प्रकृत्यर्थं यथाऽन्येऽनारभ्यवादाः । ३।६।५।१४ ॥**

अनारभ्य विहितमाधानं किं प्रकृत्यर्थम्, किंवा सर्वकर्मार्थम् इति संदेहे पूर्वपक्षं सूत्रेणाह । तत् आधानं प्रकृत्यर्थं दर्शपूर्णमासार्थमेव । कर्मान्तरे तु पुनःपुनः कार्यम् । यथा अन्ये अनारभ्यवादाः 'यस्य पर्णमयी जुहूर्भवति' इत्येवमादयः प्रकृत्यर्थाः, तथा अनारभ्य विहितमाधानमपि प्रकृत्यर्थमेव ।

**सर्वार्थं वाऽऽधानस्य स्वकालत्वात् । १५ ॥**

पूर्वपक्षस्य निरासार्थो वाशब्दः । न प्रकृत्यर्थमेव आधानम्, किन्तु सर्वार्थं सर्वकर्मार्थम् । आधानस्य स्वकालत्वात् । स्वः स्वीयः कालो यस्य तत् स्वकालम् । आधानस्य स्वातन्त्र्येण कालो विहितः वसन्तादिः ऋतुः कृत्तिकाऽऽदीनि च नक्षत्राणीति । यदि प्रकृत्यर्थं स्यादाधानम्, तदा यः प्रकृतेः कालः स एवास्यापि कालः स्यादिति न स्वातन्त्र्येण विहितः स्यात् । स्वकालत्वात्तु नेदं प्रकृत्यर्थम् । तस्मात् सर्वार्थम् । आधानमग्न्यर्थम्, अग्निश्च सर्वार्थः इति आधानस्यैव सर्वार्थत्वमुक्तं वेदितव्यम् । के.

**'तद्यथा आम्रे फलार्थे निमित्ते छाया गन्ध इत्यनूत्पद्येते एवं धर्मं चर्यमाणं अर्था अनूत्पद्यन्ते'** इत्यापस्तम्बोक्तन्यायात् स्वर्गाद्यर्थमनुष्ठीयमानेषु क्रतुषु, तत्प्रयोगमध्ये समुच्चित्यानुष्ठेयैः कैश्चन पदार्थैः अयत्नेन नान्तरीयकतया सिध्यत्सु फलेषु । परिमलः. ३।३।३६।६१ ब्र. सू.

* 'तद्योऽहं सोऽसौ, योऽसौ सोऽहम्' इत्युपनिषच्छ्रुतेः ब्रह्मणः सवित्रधिष्ठातृत्वावगतिः । सु. पृ.१०१०.

**तत् सर्वार्थमनादेशात् । ४।३।६।१३ ॥**

'पितृभ्यः पूर्वेद्युः करोति' 'यः सत्रायागुरते स विश्वजिता यजेत' इत्यादिकं कर्म किं सर्वं फलं साधयति एकमेव वा किञ्चित् साधयति इति विचारे पूर्वपक्षमाह । तत् पितृकर्म विश्वजिच्च कर्म सर्वार्थं सर्वं च तं अर्थं च सर्वार्थं स्वर्गप्रतिष्ठाप्रजास्वाराज्यादिकं साधयति अनादेशात् फलविशेषादेशाभावात् । विशेषाभावे च सामान्यपक्षपातात् ।

**एकं वा चोदनैकत्वात् । १४ ॥**

सूत्रेण पूर्वपक्षे प्राप्ते सिद्धान्तयति । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । न सर्वं फलं साधयति विश्वजिदादि कर्म । किन्तु एकं फलं किञ्चित्साधयति । चोदनैकत्वात् 'यजेत' 'करोति' इति चोदनाया एकत्वात् । एकेन फलेन एकस्याश्चोदनाया निराकाङ्क्षत्वे सति न सा अपरेण फलेन संबन्धमर्हति । तस्मात् एकदा नियतमेकमेव फलं साधयति । के.

**तत् सर्वार्थमविशेषात् । ३।३।१४।३५ ॥**

पौष्णं पेषणं प्रकृतौ श्रूयमाणं विकृतौ नेयमित्युक्तम् । तत् पेषणं च पूषदेवताकं सर्वार्थं चरौ पशौ पुरोडाशे च स्यात् । अविशेषात् पौष्णे चरौ एव इत्यादि विशेषस्य अनुक्तत्वात् । अथ वा 'अदन्तको हि' इति हेतुवादस्य सर्वत्र अविशेषात् । तस्मात् सर्वत्र पेषणं कर्तव्यम् इति पूर्वः पक्षः ।

प्रथयति' इत्यत्र तु पुरोडाशप्रथनमेव अप्राप्तं विधीयते। न च पुरोडाशान्यथाऽनुपपत्त्या प्राप्तत्वात् प्रथनमविधेयम्, अप्रथितेनापि त्वराविशेषवशात् पिष्टकनिष्पत्तिदर्शनात्। प्रथनविधौ तु तस्य अवश्यकर्तव्यत्वात् मन्त्रस्यापि लिङ्गतः तत्प्रकाशकत्वं भवति। उदाहरणान्तराणि भाष्यवार्तिकयोरेव सुगमानीति नेह प्रदर्श्यन्ते। यत्र पुनः श्रौतविनियोगवशादेव मन्त्रस्य तत्प्रकाशनसामर्थ्यं वृत्त्यन्तरेणापि कल्पनीयम्, तत्रैव श्रुतेर्विनियोजकत्वम्। यथा 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इति, 'धान्यमसि धिनुहि देवान् इति दृषदि तण्डुलानावपति' इत्यादौ। निर्वापमन्त्रादौ तु देवस्त्वादिपदानां असमवेतार्थत्वेऽपि एकवाक्यभावबलेन एवंभूतार्थप्रकाशनेनैव स्मारितानां विधेयार्थानामनुष्ठानमभ्युदयाय इति नियमादृष्टमेव अत्रापि दृष्टानुरोधात् कल्पनीयम्। यथा प्रोक्षिताभ्यामेव उलूखलमुसलाभ्यामवहतैरेव वितुषैर्व्रीहिभिः निष्पादितः पुरोडाशः अपूर्वसाधनं इति प्रोक्षणमपि नियमादृष्टांशपतितम्, तथेहापि। तेन हुमादीनामेव परं अर्थाभावेन अविवक्षितार्थत्वात् अदृष्टार्थमेव विनियोगः स्वाध्यायरक्षणार्थं चाध्ययनविधिना पाठः न तु अन्यत्रापीति।

ननु भवतु विवक्षितार्थत्वम्, प्रामाण्यं तु कथम्, विध्युद्देशावगतार्थानुवादेन अनधिगतार्थगन्तृत्वाभावात्। मैवम्। नहि प्रतिवेदवाक्यं अनधिगतार्थगन्तृत्वलक्षणं प्रामाण्यं व्युत्पादनीयम्। 'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजते' इत्यादौ अनुवादरूपत्वेन तदभावात्। किं तर्हि? धर्मप्रमित्युपयोगित्वम् (व्युत्पादनीयम्)। तच्च परंपरया विद्वद्वाक्यस्येव मन्त्रस्यास्ति इति किमनुपपन्नम्।

प्रयोजनम्— यदि अविवक्षितार्था मन्त्राः, तदा ध्यानादिभिरेव संस्मृतानामनुष्ठानम्। अथ विवक्षितार्थाः, तदा मन्त्रस्मारितानामेवेति। सूत्रे तु— नहि लौकिकवाक्यानां मन्त्रवाक्यानां च कश्चित् विशेषोऽस्ति, येन प्रतीयमानोऽप्यर्थो न विवक्ष्यते इति। 'यो नाम कश्चिदिह संकलितं प्रमेयं ग्रन्थान्तरे लिखति वा वदति स्वयं वा। मत्कर्तृतामननुकीर्त्य, स कीर्तिलोपात् निःसंततिर्जगति जन्मशतानि भूयात्॥' इति बालवलभीभुजङ्गापरनाम्नो भवदेवस्य कृतौ तौतातितमततिलके प्रथमस्याध्यायस्य द्वितीयः पादः। तौता.

## तदर्थशास्त्रात्। १।२।४।३१-१, वि. ३१॥

मन्त्राः अविवक्षितवचनाः उच्चारणमात्रेण उपकुर्वन्ति इति पूर्वपक्षे प्रथमं हेतुमाह। तदर्थशास्त्रात् मन्त्रानर्थक्यम्। तस्य मन्त्रस्य योऽर्थः स तदर्थः। तदर्थे शास्त्रं तदर्थशास्त्रं तस्मात्। अग्निचयने अभ्यादानार्था मन्त्राश्चत्वारः पठिताः। ते च लिङ्गादेव आदाने प्राप्ताः वचनेन विधीयन्ते 'तां चतुर्भिरभ्रिमादत्ते' इति। वचनेन विशेषतो विधानात् मन्त्रा अविवक्षितार्था इति ज्ञाप्यते। एवम् 'इमामगृभ्णन् रशनामृतस्य' इति मन्त्रस्य 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इति शास्त्रं विधायकम्। मन्त्रादेव प्राप्ते किं पुनर्विधानेन? । एवम् 'उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम्' इति मन्त्रस्य विनियोजकं शास्त्रम् 'उरु प्रथस्वेति पुरोडाशं प्रथयति, यज्ञपतिमेव तत् प्रथयति' इति। तदिदं मन्त्राणां विवक्षितार्थत्वे लिङ्गादेव विनियोगसिद्धेः अनर्थकम्। तस्मात् अविवक्षितार्था मन्त्रा इति पूर्वः पक्षः।

अत्र सुधायाम् 'तदर्थशास्त्रवाक्यनियमबुद्धशास्त्राविद्यमानवचनाचेतनार्थबन्धनार्थविप्रतिषेधस्वाध्यायवदवचनाविज्ञेयानित्यसंयोगान्मन्त्रानर्थक्यम्' इति सूत्रं निवेशितम्। 'ग्रन्थान्तरेष्वदर्श्यैकं सूत्रं तत्सिद्धिसूत्रवत् (१।४।२३)। व्याख्यायै खण्डशोऽकारि भाष्यकारादिभिस्त्विदम्॥' इति चोक्तम्। तेन आनन्दाश्रमीयभाष्यपुस्तकमुद्रणमनुसृत्य खण्डशो गृहीत्वा व्याख्यातमस्माभिः। सूत्रस्वरूपविषये अधिकं तु अस्मदीये मीमांसादर्शने प्रकृतप्रथमसूत्रप्रथमखण्डटिप्पण्यां द्रष्टव्यम्।

## वाक्यनियमात्। ३१-२, वि. ३२॥

पूर्वपक्षे द्वितीयं हेतुमाह। पदसमूहात्मकमन्त्रवाक्यस्य पदक्रमनियमादपि लिङ्गात् नार्थप्रकाशनार्थत्वं मन्त्राणाम्। व्युत्क्रमेण पाठेऽपि अर्थप्रकाशनसंभवात्। अदृष्टार्थत्वे तु यथाक्रममेव प्रयुक्ता अदृष्टमादधते नान्यथा, इति क्रमनियमः अर्थवान्। वाक्यनियमान्मन्त्रानर्थक्यं इत्यन्वयः।

बुद्धशास्त्रात् । ३१-३, वि. ३३ ॥

तृतीयं हेतुमाह । बुद्धशास्त्रात् मन्त्रानर्थक्यम् । बुद्धस्य शास्त्रान्तरेण ज्ञातस्यैवार्थस्य विषये शास्त्रात् शासनात् संप्रैषविधानात् 'अग्नीदग्नीन् विहर' इति । बुद्धबोधनं च व्यर्थम् । तस्मादविवक्षितार्था मन्त्राः ।

अविद्यमानवचनात् । ३१-४, वि. ३४ ॥

चतुर्थं हेतुमाह । अविद्यमानवचनान्मन्त्रानर्थक्यं अविद्यमानस्य वचनात् प्रतिपादनात् यज्ञे साधनभूतः पदार्थः मन्त्रेण प्रकाशयितव्यः । न च क्वचित् तादृशोऽस्ति पदार्थः, यादृशं मन्त्रोऽभिदधाति 'चत्वारि शृङ्गा त्रयो अस्य पादा' इत्यादिः । नहि चतुःशृङ्गं त्रिपादं द्विशिरस्कं सप्तहस्तं किञ्चित् यज्ञसाधनमस्ति । तदत्र अभिधानार्थः किमभिदध्यात् । उच्चारणार्थत्वे तु अवकल्पते ।

अचेतनार्थबन्धनात् । ३१-५, वि. ३५ ॥

पञ्चमं हेतुमाह । अचेतनार्थबन्धनान्मन्त्रानर्थक्यम् । अचेतने अर्थस्य बन्धनात् संबन्धकरणात् प्रतिपादनात् 'ओषधे त्रायस्वैनं' इति 'शृणोत ग्रावाणः' इति च । ग्रावाणोऽचेतनाः कथं नाम शृणुयुः । उच्चारणार्थे तु नैष दोषो भवति ।

अर्थविप्रतिषेधात् । ३१-६, वि. ३६ ॥

षष्ठं हेतुमाह । अर्थविप्रतिषेधान्मन्त्रानर्थक्यम् । मन्त्रप्रतिपाद्यस्य अर्थस्य विप्रतिषेधात् विरोधात् । 'अदितिर्द्यौरदितिरन्तरिक्षम्' इति । अदितिरेव द्यौः सती सैव अन्तरिक्षं इति को जातु श्रद्दध्यात् । एवम् 'एको रुद्रो न द्वितीयोऽवतस्थे' इत्युक्त्वा 'सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम्' इत्याह । तदपि अश्रद्धेयम् ।

स्वाध्यायवदवचनात् । ३१-७, वि. ३७ ॥

सप्तमं हेतुमाह । स्वाध्याये इव स्वाध्यायवत् । अवचनात् वचनाभावात् । बटोः स्वाध्यायकाले संनिधौ काचित् अवहननं करोति । माणवकः अवहन्तिमन्त्रमधीते । नासौ तेन मन्त्रेण तदभिधानमभ्यस्यति । अक्षरानुपूर्व्या अवधारणे एव यतते । येन च नाम प्रयोजनं तदभ्यसितव्यम् । अत उच्चारणाभ्यासात् उच्चारणेन प्रयोजनं इत्यवगच्छामः ।

अविज्ञेयात् । ३१-८, वि. ३८ ॥

अष्टमं हेतुमाह । विज्ञातुं योग्यः शक्यो वा विज्ञेयः । विज्ञातुमशक्यः अविज्ञेयः । केषाञ्चिन्मन्त्राणां अर्थो विज्ञातुमेव न शक्यते । यथा 'सृण्येव जर्भरी तुर्फरीतू' 'इन्द्रः सोमस्य काणुका' 'आवृदूदात् क्षेत्रियध्वगद् वृषा' इत्यादिः । उच्चारणार्थत्वे तु न दोषः । अविज्ञेयान्मन्त्रानर्थक्यं इत्यन्वयः ।

अनित्यसंयोगान्मन्त्रानर्थक्यम् । ३१-९, वि. ३९ ॥

नवमं हेतुं प्रतिपादयन् पूर्वपक्षप्रतिज्ञामुक्त्वा उपसंहरति । केषुचिन्मन्त्रेषु अनित्यानां पदार्थानां संयोगः श्रूयते । यथा 'किं ते कृण्वन्ति कीकटेषु गावः' इति । कीकटा नाम जनपदाः । नैचाशाखं नाम नगरम् । प्रमगन्दो नाम राजा । यदि अभिधानार्थाः प्राक् प्रमगन्दात् नायं मन्त्रो भूतपूर्वः इति गम्येत । अविवक्षितार्थत्वे तु न दोषः । तस्मात् मन्त्रानर्थक्यं मन्त्राणामानर्थक्यं अर्थशून्यत्वम् । उच्चारणमात्रेण तु यागोपकारकत्वं तेषाम् । इति पूर्वपक्षः । संयोगोऽत्र प्रतिपाद्यप्रतिपादकभावरूपः संबन्धः ।

अविशिष्टस्तु वाक्यार्थः । ३२ ॥

उच्चारणमात्रेण यागस्योपकुर्वन्तो मन्त्राः अविवक्षितार्थाः इति नवभिर्हेतुभिः प्राप्तं पूर्वपक्षं तुशब्देन निरस्यन् आह सिद्धान्ती । वाक्यार्थः वाक्यतः प्रतीयमानः क्रियासंबन्धरूपः लोके वेदे च अविशिष्टः न भिन्नः, किन्तु समान एव । स यथैव लोके विवक्षितः तथैव वेदेऽपि भवितुमर्हति । मन्त्राणां यज्ञाङ्गप्रकाशनमेव प्रयोजनम् । तस्मान्नानर्थका मन्त्राः । इति सिद्धान्तः ।

गुणार्थेन पुनःश्रुतिः । ३३ ॥

अभ्यादानमन्त्रविषयकपूर्वपक्षशङ्कां सिद्धान्ती निराचष्टे । अभ्यादानमन्त्राणां चतुर्णां लिङ्गादेव विनियोगे सिद्धे 'तां चतुर्भिरादत्ते' इति पुनःश्रुतिः गुणार्थेन चतुष्ट्वसंख्यारूपगुणलाभप्रयोजनाय । पाठादेव चतुष्ट्वसिद्धौ 'चतुर्भिः' इति वचनं समुच्चयसिद्ध्यर्थम् । अन्यथा विकल्पः स्यात् । गुणार्था वा इत्यपि पाठः । अर्थस्तु न भिन्नः ।

परिसंख्या । ३४ ॥

अश्वाभिधानीमन्त्रविषयकपूर्वपक्षशङ्कां सिद्धान्ती निरस्यति । ' इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते ' इति परिसंख्या । मन्त्रलिङ्गेनैव रशनाऽऽदाने प्राप्तस्य मन्त्रस्य विधानं गर्दभरशनात: मन्त्रस्य परिसंख्यार्थम् । इति न तदर्थशास्त्रवैयर्थ्यम् ।

अर्थवादो वा । ३५ ॥

' उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति ' इति मन्त्रविधिवाक्ये पूर्वपक्षिणा पुनरुक्तता दोषो दत्त:, तन्निरासार्थं सिद्धान्तसूत्रमिदम् । ' यज्ञपतिमेव तत् प्रथयति ' इत्यर्थवाद:, तदर्थं पुनरुक्ति: । वाशब्द: शङ्कानिराससूचक: । तथा च न तदर्थशास्त्रवैयर्थ्यम् ।

अविरुद्धं परम् । ३६ ॥

मन्त्राणां नियताक्षरपदक्रमवत्त्वेन अनर्थकत्वं इति पूर्वपक्षिणा यदुक्तम्, तन्निरसनार्थं सूत्रम् । परं द्वितीयसूत्रोक्तं मन्त्रेषु क्रमविशिष्टाक्षरपदाम्नानं मन्त्राणां सार्थकमपि नियमादृष्टकल्पनया पूर्वपक्षिणाऽपि स्वीकर्तव्यतया अविरुद्धं न विरुद्धम् । तस्मात् नानर्थका मन्त्रा: ।

संप्रैषे कर्मगर्हाऽनुपालम्भ: संस्कारत्वात् ।३७॥

बुद्धशास्त्रात् इति सूत्रोक्तां पूर्वपक्षशङ्कां सिद्धान्ती निराकरोति । " येयं संप्रैषे ' अग्नीदग्नीन् विहर ' इत्यत्र बुद्धबोधनासंभवात् अभिधानकर्मगर्हा अभिहिता, साऽपि अनुपालम्भ: । स्मरणसंस्कारार्थत्वात् " ( वा. ) ।

ज्ञातविषयेऽपि ' अग्नीदग्नीन् विहर ' इत्यत्र संप्रैषमन्त्रे पुनर्ज्ञापनरूपकर्मण: गर्हा निन्दा अभिहिता अनुपालम्भ: अदोष: । संस्कारार्थत्वात् अदृष्टार्थत्वात् इति यावत् ।

अभिधानेऽर्थवाद: । ३८ ॥

अविद्यमानवचनात् इति सूत्रेण अचेतनार्थबन्धनात् इति सूत्रेण च कृतस्य आक्षेपस्य निरासार्थं सिद्धान्तसूत्रम् । अभिधाने अभिधीयते अनेन इत्यभिधानम् ' चत्वारि शृङ्गा ' इति मन्त्र: । तस्मिन् विद्यमान: पदसमूह: अर्थवाद:, गौण्या वृत्त्या रूपकेण स्तुतिपर: । तस्मान्न तस्य अप्रामाण्यम् । एवम् ' ओषधे त्रायस्वैनम् ' ' शृणोत ग्रावाण: ' इत्यत्रापि अचेतनानां चैतन्यमारोप्य चेतनत्वस्य अभिधाने प्रतिपादने सति ते वाक्ये अर्थवाद: यज्ञसाधनस्तुति: । ' ओषधे त्रायस्वैनम् ' इति, प्रातरनुवाकस्तुत्यर्थम् ' शृणोत ग्रावाण: ' इति ।

गुणादविप्रतिषेध: स्यात् । ३९ ॥

अर्थविप्रतिषेधात् इति सूत्रोक्तां पूर्वपक्षशङ्कां सिद्धान्ती परिहरति । ' अदितिर्द्यौरदितिरन्तरिक्षम् ' इत्यत्र अविप्रतिषेध: स्यात् विप्रतिषेध: विरोधो नास्ति । गुणात् गुणवादात् ' त्वमेव माता च पिता त्वमेव ' इतिवत् स्तुत्यर्थत्वात् न दोष: ।

विद्याऽवचनमसंयोगात् । ४० ॥

स्वाध्यायवदवचनात् इति सूत्रोक्तां पूर्वपक्षशङ्कां सिद्धान्ती अपहस्तयति । विद्याया: अर्थज्ञानस्य अवचनं अनभ्यास: मन्त्राणामविवक्षितार्थत्वे लिङ्गं न भवति । असंयोगात् लौकिकावघातादिक्रियाया: यज्ञसंयोगाभावात् । किंवा असंयोगात् अभ्यासरूपसंयोगं विनाऽपि कर्मकालिकस्य अर्थज्ञानस्य सुकरत्वात् । दुर्ग्रहत्वात्तु अक्षराभ्यास: । तस्मान्न दोष: ।

विद्याकाले संनिहितस्यापि लौकिकावहननरूपस्य अर्थस्य यत् मन्त्रेण अवचनं अनभिधानम्, तत् तस्य कर्मानङ्गत्वात् युक्तम् । ( सु. वृ. ११० )

सत: परमविज्ञानम् । ४१ ॥

अविज्ञेयात् इति सूत्रोक्तां पूर्वपक्षशङ्कां निराकर्तुं सिद्धान्तसूत्रम् । परं इत्यव्ययं युक्तमित्यर्थे । ' सृण्येव जर्भरी तुर्फरीतू ' इत्यादौ सत: विद्यमानस्यापि अर्थस्य शास्त्राभ्यासाभावात् अविज्ञानमल्पविदां युक्तम् । निगमनिरुक्तव्याकरणादिना तु तदर्थो ज्ञातुं शक्य: ।

उक्तश्चानित्यसंयोग: । ४२ ॥

अनित्यसंयोगात् इति सूत्रेणोक्तां पूर्वपक्षशङ्कां सिद्धान्ती दूषयति । योऽयं कीकटप्रमगन्दनैचाशाखादिभि: अनित्यै: संयोग: मन्त्रानर्थक्ये लिङ्गत्वेन शङ्कित: स: अस्माभि: उक्त: निरस्त: ' परं तु श्रुतिसामान्यमात्रम् ' इत्यत्र ।

लिङ्गोपदेशश्च तदर्थवत् । ४३ ॥

मन्त्राणां विवक्षितार्थत्वे लिङ्गमाह सिद्धान्ती । चकार: पूर्वपक्षबाधकै: समुच्चयार्थ: । ' आग्नेय्या

आग्नीध्रमुपतिष्ठते ' इत्यादौ आग्नेयीत्वादिविशेषणोपादानेन मन्त्राणां अग्निदेवताप्रकाशकत्वेन लिङ्गेन उपदेशः विधिः तत् मन्त्रजातं अर्थवत् सार्थकं इति गमयति । अविवक्षितार्थत्वे तु तद्धितनिर्देशः अनुपपन्नः स्यात् । तस्मात् मन्त्राः विवक्षितार्थकाः इति सिद्धान्तः ।

तदर्थवत् । तेषामर्थः तदर्थः । सः अस्ति अस्य इति तदर्थवत् । इदं उपदेशस्य विशेषणम् । सामान्ये नपुंसकत्वम् । ' तेषां मन्त्राणां अर्थः यथा अस्ति तथा लिङ्गोपदेशो भवति ।' इति सुधा. पृ. ११२.

ऊहः । ४४ ॥

मन्त्रा विवक्षितार्था इत्यत्र सिद्धान्ती लिङ्गान्तरमाह । ऊहः तत् मन्त्रजातं अर्थवत् विवक्षितार्थकं इति गमयति । तत् अर्थवत् इति पूर्वसूत्रादनुवर्तते । ' न पिता वर्धते न माता ' इति द्विबहुपशुके अध्रिगुप्रैषे मातृपितृशब्दयोः द्विबहुवचनान्तत्वेन ऊहो निषिद्धः । तच्च मन्त्राणां सार्थकत्वे लिङ्गम् । निरर्थकत्वे तु ऊहस्य प्राप्त्यभावेन निषेधो व्यर्थ एव स्यात् ।

विधिशब्दाश्च । ४५ ॥

मन्त्रा विवक्षितार्था इति सिद्धान्ते लिङ्गान्तरमाह । विधिः ब्राह्मणाभिधः तत्रतत्र पर्यायैः अवयवान्वाख्याननिर्वचनादिभिश्च अर्थप्रकाशनपरत्वं दर्शयति इति वार्तिकम् । विधिशब्दाश्च विवक्षितार्थानेव मन्त्रान् अनुवदन्ति । ' शतं हिमाः, शतं वर्षाणि जीव्यासमित्येतदेवाह ' इत्यादयः । इति भाष्यम् । सर्वथा विवक्षितार्था मन्त्रा इति सिद्धान्तः । के.

* तदर्थशास्त्रत्वलक्षणस्य दोषस्य परिहारकं मन्त्राधिकरणे गुणविधिरूपं परिसंख्यारूपं अर्थवादरूपं चोक्तम् । सु. पृ. ७८५.

* तदर्थशास्त्रन्यायः । मन्त्राधिकरणमिदम् । भा. १।२।४।३१–४५. * यदैव ' ऐन्द्या ' इत्युक्तम्, तदैव तदर्थशास्त्रन्यायेन इन्द्रव्यतिरिक्तः कोऽपि उपस्थातव्यः, स च लिङ्गगम्येन्द्रविरोधी इत्येतत् प्रतीयते । वा. ३।३।७।१४ पृ. ८२८.

तदष्टसंख्यं श्रवणात् । ४।१।१७।४६ ॥

दर्शपूर्णमासयोः 'अष्टावुपभृति गृह्णाति' इति श्रूयते। पूर्वपक्षसूत्रमिदम् । तच्छब्देन ' औपभृतं तथेति चेत् ' इति सूत्रस्थं औपभृतं निर्दिश्यते । तत् औपभृतमाज्यं अष्टसंख्यमेव हविः स्यात्, न तु चतुर्गृहीतद्वयम् । श्रवणात् अष्टौ इति अष्टत्वश्रवणात् ।

अनुग्रहाच्च जौहवस्य । ४७ ॥

पूर्वपक्षी शङ्काविशेषं निराचष्टे । जुह्वां भवं जौहवम्, तस्य जौहवस्य आज्यस्य औपभृतेन आज्येन अनुग्रहात् अनुग्रहकरणात् प्रयाजहोमेषु सहायकरणात् हेतोः चतुर्गृहीतत्वमपि उक्तम् । न च तावता अष्टत्वनिरासः शक्यः । तस्मात् उपभृति अष्टसंख्यमेव आज्यम् ।

द्वयोस्तु हेतुसामर्थ्यं श्रवणं च समानयने । ४८ ॥

सिद्धान्तयति । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । नेदमष्टसंख्यमेकं हविः, किन्तु एकं चतुर्गृहीतं हविः पुनरपरमपि चतुर्गृहीतम् । एवं द्वयोरेव चतुर्गृहीतयोः हेतुसामर्थ्यं भवति, एवं हेतुः समर्थितो भवति । आतिथ्यायां ' चतुर्गृहीतान्याज्यानि भवन्ति ' इत्युक्त्वा ' नह्यत्रानुयाजान् यक्ष्यन् भवति ' इति हेतुरुपन्यस्तः । असत्स्वपि अनुयाजेषु अष्टगृहीतमेवौपभृतं भवेत्, यदा अष्टसंख्या गुणभूता, न तदा द्वयोश्चतुर्गृहीतयोः सतोरपि 'चतुर्गृहीतान्याज्यानि ' इति आज्येषु बहुवचनमुपपद्येत । तस्यैतस्य हेतोः सामर्थ्यं द्वयोरेव चतुर्गृहीतयोर्भवति, न तु अष्टगृहीते एकस्मिन् ।

ननु तर्हि ' अष्टौ उपभृति ' इति अष्टत्वश्रवणं कथम् ? उच्यते । श्रवणं च समानयने । समानयने उपभृति आज्यग्रहणे अष्टत्वस्य श्रवणमुपपद्यते । अष्टगृहीतं हि ग्रहणे चतुर्गृहीतं च होमे । ' चतुर्गृहीतं जुहोति ' इति सर्वहोमेषु अनारभ्य उच्यते । तस्मादष्टशब्दश्रवणमदोषः । उपभृति द्वे चतुर्गृहीते एव, तत्र एकं चतुर्गृहीतं प्रयाजार्थम्, अपरमनुयाजार्थम् । के.

तदागमे हि तद् दृश्यते इति न्यायः । पश्वेकत्वाधिकरणस्थं सूत्रम् । भा. ४।१।५।१५.

( हि यस्मात् तदागमे तस्य एकवचनाख्यस्य शब्दस्य आगमे सति तत् एकत्वं दृश्यते ' पशुमानय ' इत्यत्र ।

'पशू आनय' इत्यत्र तु एकवचनापगमे एकत्वं न दृश्यते। तस्मादेकवचनस्य एकत्वमर्थः। इत्यक्षरार्थः)।

* 'न केवलं एतावेव अन्वयव्यतिरेकौ यौ परस्परपरित्यागेन लक्ष्येते, तस्मिन्नेव हि पदे 'तदागमे हि तद् दृश्यते' इत्यनेन न्यायेन विवेकोऽवधार्यते। वा. २।१।१।१ पृ. ३८१.

अत्र सुधा— धात्वपरित्यागेऽपि प्रत्ययश्रवणकाले धातुश्रवणाभावेऽपि भावनाप्रतीतेः, धातुश्रवणकाले च प्रत्ययश्रवणाभावे तदप्रतीतेः इत्येतत् 'तदागमे हि०' इति न्यायेन निर्णयो भविष्यति इति। पृ. ५६७. * तदागमे हि दृश्यते इति न्यायः। यथा दृश्यते हि तैलादौ अनुद्भूतरूपोद्भूतस्पर्शतेजोऽवयवागमे संतापोपलब्धिरिति तद्धर्म एव न तैलादिधर्मः, तथा जाग्रदादौ बुद्धौ सत्यां दुःखादयो दृश्यन्ते, सुषुप्त्यादौ तन्निवृत्तौ नोपलभ्यन्ते अतस्तद्धर्मा एव नात्मधर्माः, सुषुप्तावपि उपलब्धिप्रसङ्गात् इति। साहस्री. ३७९. * आख्यातवाच्यैव भावना, न धातुवाच्या, प्राधान्येन प्रतीयमानस्य व्यापारस्य धात्वर्थतायाः 'तदागमे हि दृश्यते' इति न्यायविरुद्धत्वात् इति मीमांसकाः। भूषणसारः। अत्र दर्पणः 'पशुना यजेत' इति श्रूयते। तत्र एकवचनोपात्तमेकत्वं यागे विशेषणम्, उत प्रकृत्यर्थे इति संशये पशुपदार्थस्य यागं प्रति गुणत्वात् संभावितयावत्पशुकरणेन प्रधानावृत्तौ प्रधान(त्व)भङ्गापत्त्या यावद्गुणं प्रधानावृत्तेरयोगात्, एकत्वविशिष्टपशोर्विधाने तु एकत्वस्य पशुविशेषणतया यागाङ्गत्वाभावात् तदविवक्षितमेव स्यात् इत्यर्थकेन 'तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात्' इति सूत्रेण पूर्वपक्षिते 'शब्दवत्तूपलभ्यते तदागमे हि दृश्यते तस्य ज्ञानं यथाऽन्येषाम्' इति सिद्धान्तसूत्रम्। शब्दवत् शब्दवाच्यं यथा भवति तथोपलभ्यते। एकत्वं हि यतस्तदागमे एकवचनसमवधाने दृश्यते। अतस्तस्य प्राधान्येन प्रतीतिः। यथान्येषां अरुणादीनामित्यर्थः। इति। * तदागमन्यायः नाम अन्वयव्यतिरेकौ। यस्मिन् सति यत् ज्ञायते असति च न ज्ञायते स तस्यार्थः। रामौ इत्यत्र विसर्गो न श्रूयते एकत्वं च न ज्ञायते, रामः इत्यत्र विसर्गः श्रूयते एकत्वं च ज्ञायते इति सुप्रत्ययविसर्गस्य एकत्वमर्थः। रामौ इत्यत्र औकारस्य द्वित्वमर्थः। एवं यूपः कूपः सूपः इत्यादौ द्रष्टव्यम्। के. * तदागमन्यायः। पश्वेकत्वाधिकरणे। भा. ४।१।५।११-१६. * यत्र अनेकार्थप्रतीतिः, तत्र तदागमन्यायाविघातात्। सु. पृ. ५६८. * अनेकात्मकात् शब्दात् अनेकार्थबोधने सिद्धे 'यदागमे योऽर्थः, स तस्य इत्यवधार्यते' इत्यनेन अनेकशब्दोच्चारणात् अनेकार्थप्रतीतौ कस्य शब्दस्य कोऽर्थः इति विवेकमात्रस्य तदागमन्यायात्मकान्वयव्यतिरेकाधीनत्वात्। 'नान्वयव्यतिरेकाभ्यां त्वपूर्वोऽर्थोऽवगम्यते। संकीर्णेऽवगते त्वर्थे ताभ्यां शक्तिर्नियम्यते॥' सु. पृ. ५६८.

☒ 'तदादि वाऽभिसंबन्धात् तदन्तमपकर्षे स्यात्' ( ५।१।१२।२४ ) इति न्यायेन 'स ( निर्वापः ) प्रतिकृष्यमाणः ततः प्राग्भाविनामङ्गानां प्रतिकर्षे वर्तेत' ( पूर्वपक्षे इदम् )। भा. ११।२।४।१९.

* 'तदादि वा०' इति पाञ्चमिकं सूत्रम्। तत्र 'अङ्गानां मुख्यकालत्वाद् यथोक्तमुत्कर्षे स्यात्' इति पूर्वपक्षसूत्रात् उत्कर्षपदं अनुषञ्जनीयम्। ततश्च आग्निमारुतादूर्ध्वमित्यादौ उत्कर्षे तदादि स्यात्। तिष्ठन्तं पशुं प्रयजन्ति इत्यादौ अपकर्षे च तदन्तं स्यात् इति तदर्थः। सोम. ११।२।३. * 'तदादि वा०' इति ये वपाहोमोत्तरकालाः पदार्थाः तत्संनिपातिनो वा, तन्मात्रस्योत्कर्षो भवेत्, न प्राग्भाविनामुपाकरणादीनाम्। वा. ३।६।७।२२ पृ. १०४७. * 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इत्ययमपि पाशुकानामेव अनूयाजानामुत्कर्षः। तेषां हि 'अङ्गैस्तृतीयसवने' इत्यङ्गप्रचारोत्कर्षादेव तृतीयसवनसंबन्धे प्राप्ते ( तदादि वाऽभिसंबन्धात् इति न्यायात् ) प्रदेशविशेषमात्रं सुखेन विधीयते। शा. १२।२।१२. * केवलपरिव्याणोत्कर्षादेव तदादि वा० इत्येवं उपाकरणोत्कर्षसिद्धेः। वा. ३।६।७।२२ पृ. १०४८. * तदादिपदार्थानुष्ठानक्रमस्य क्लृप्तत्वात् सक्रमाणामेव पदार्थानां चोदकेन अतिदेशात् व्युत्क्रमे सति पूर्वपदार्थेनोत्तरस्य बुद्धौ अनुपस्थापितत्वात् तस्यानुष्ठानं न स्यात्। तस्मात् 'प्रयाजान्तस्य अङ्गसमूहस्य

अपकर्षः' इति ( तदादि वाऽभिसंबन्धादिति ) न्याय-शरीरम् । तस्मात् अल्पद्वादश्यां भोजनपूर्वभाव्यौपासन-होमदेवतार्चनवैश्वदेवाद्यपकर्षस्य भोजनापकर्षविधायक-वाक्यविषयतामपि दर्शयति । पुरुषार्थचिन्तामणौ एका-दश्याम् पृ. २११-१२. ✻ वाजपेये 'तान् पर्यग्निकृता-नुत्सृजति, ब्रह्मसाम्नालभते' । अत्र आलम्भोत्कर्षमात्रं विधीयते । तदा च तदुत्तराङ्गानामुत्कर्षः 'तदादि वा०' इति न्यायादेव लभ्यते । तेनात्र आरण्यन्यायासंभवात् न पर्यग्निकरणान्तानामङ्गानामावृत्तिः । भाट्ट. ११।२।११.

✻ तदादीनामुत्कर्षः अनुयाजादीनामुत्कर्षः । ज्योति-ष्टोमे सवनीये पशौ अनुयाजसूक्तवाकशंयुवाकादीना-मुत्कर्षः । भा. ५।१।१२।२३-२४.

✻ प्रकृतिप्राप्तौ धर्मे उत्कृष्यमाणः तदाद्युत्कर्षं करोति नापूर्वः इति केचित् । तदयुक्तम् । 'कृतदेशात्तु पूर्वेषाम्' ( ५।१।१०।३१ ) इत्यत्र अप्राकृतानामपि विदेवनादीनामपकर्षवर्णनेन 'तथाऽपूर्वे' ( ५।१।१६। २९) इत्यस्य विशिष्टविषयत्वव्याख्यानात् । वा. ३।६।७। २२ पृ. १०४८.

✻ तदादितदन्तन्यायः । तदादितदन्तोत्कर्षापकर्ष-न्यायः । तदाद्युत्कर्षतदन्तापकर्षन्यायः । तदाद्युत्कर्षन्यायः । तदन्तापकर्षन्यायः । अनुयाजाद्युत्कर्षप्रयाजान्तापकर्षाधि-करणम् । 'तदादि वाऽभिसंबन्धात्' इति न्यायः ॥

**अङ्गानां मुख्यकालत्वाद् यथोक्तमुत्कर्षे स्यात् । ५।१।१२।२३ ॥**

भाष्यम्— ज्योतिष्टोमे श्रूयते 'आग्निमारुतादूर्ध्व-मनुयाजैश्चरन्ति' इत्युत्कर्षः । तथा अग्नीषोमीये पशौ 'तिष्ठन्तं पशुं प्रयजन्ति' इत्यपकर्षः । तत्र संदेहः किमुत्कर्षे अनुयाजमात्रमुत्कृष्यते अपकर्षे च प्रयाज-मात्रम्, उतोत्कर्षेऽनुयाजादि अपकर्षे च प्रयाजान्तमिति । किं तावत् प्राप्तम् ? यावदुक्तमुत्कर्षापकर्षयोः स्यात् । कुतः ? अङ्गानां मुख्यकालत्वात् । एवमन्येषां प्रधान-कालता भविष्यतीति । तत्र सहत्वस्य प्रापकः प्रयोग-वचनोऽनुग्रहीष्यते ।

टुप्— प्रयाजानुयाजानाम् (यथासंख्यम्) अपकर्षो-त्कर्षौ विहितौ । ('तिष्ठन्तं पशुं प्रयजन्ति' इति अपकर्षः । 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति उत्कर्षो विहितः । तत्र ) तावन्मात्रम् ( प्रयाजमात्रमनुयाजमात्रं च ) अपकृष्यते उत्कृष्यते च, उत तदन्तं तदादि वा ( इति संदेहे ) तावन्मात्रमिति प्राप्तम् । कुतः ? प्रधानासत्तिं हि अङ्गान्यपेक्षन्ते । तत्र वचनात् यस्यापकर्षः ( कृतः, उत्कर्षो वा ) तावन्मात्रमेव अपकृष्येत (उत्कृष्येत वा) । अवशिष्टं प्रधानासत्त्यैव ( प्रधानासत्त्यनुग्रहायैव इति रत्ने ) यथाऽवस्थितम् । ( यथाप्राप्त्येवावस्थितम् इति रत्ने ) ।

**तदादि वाऽभिसंबन्धात् तदन्तमपकर्षे स्यात् । २४ ॥**

भाष्यम्— तदादि उत्कर्षे, तदन्तमपकर्षे गम्येत । कुतः ? अभिसंबन्धात् । यदनुयाजानां परस्तात् समा-म्नायते, तत् प्रधानादनन्तरं प्रयोगवचनेन प्राप्तं बाधित्वा पाठसामर्थ्यादनुयाजेभ्यः परस्तात् क्रियते । तथा यस्ततः परः, स ततः परस्तात् । एवमेक उत्कृष्यमाणः सर्वं गुणकाण्डमुत्कर्षति । तथा अपकृष्यमाणोऽपकर्षतीति ।

टुप्— पूर्वः पदार्थः (आघारादिः) उत्तरस्य ( प्रयाजादेः ) उपस्थापकः प्रकृतौ ( दृष्टः ) । तेन इहापि ( विकृतौ ) तथैव प्राप्नोति ( तेन कृत्वैव आघारं प्रयाजाः कार्याः । कृत्वैव अनुयाजान् सूक्तवाकप्रहरणम् । यत्तु प्रधानासत्तिः प्रयोगवचनात् प्राप्नोतीति, तत्राह— ) प्रयोगवचनो हि यः प्रधाना-सत्तिं प्रापयति, सः ( प्रकृतित एव प्रयाजेभ्यः पुरस्तात् अनुयाजेभ्यश्च परस्तात् कार्यत्वेन— ) अवधृतस्वरूपाणाम् ( आघारसूक्तवाकादीनाम् ) यादृशी प्रधानासत्तिः, तादृश्यैव निराकाङ्क्षीभवति, न तु अन्यादृशीं (प्रधाना-सत्तिम् ) शक्नोति कल्पयितुं प्राकृतबाधेन ।

शा—'श्रुतोत्कर्षापकर्षाभ्यां वचनस्योपपत्तितः । न तदन्ततदादीनां भवेतामप्रमाणकौ ॥ प्रधान-संनिधिश्चैवं बाधितो न भविष्यति । ऊर्ध्वपूर्व-पदार्थानामेवं प्राप्तेऽभिधीयते ॥ पूर्वेणोपस्थितं कार्यमुत्तरं कर्म चोदकात् । प्राप्तं तदन्यथाभावे क्रमलोपाद्विलुप्यते ॥' तस्मात् तदादीनामुत्कर्षः, तदन्तानां चापकर्षः ।

सोम— यथा श्रुत्यनुग्रहात् एकदिनसंबन्धिप्रातरादौ साङ्गकर्मानुष्ठानम्, एवमिहापि श्रुत्यनुग्रहात् श्रुतमात्रोत्कर्षापकर्षौ इति प्रत्यवस्थानात् संगतिः। सूत्रे उत्कर्षग्रहणमपकर्षस्याप्युपलक्षणं न्यायसाम्यात्। स्वस्थानात् पूर्वत्वमपकर्षः, ततः परत्वं चोत्कर्षः। श्रुतिर्हि प्रयाजानूयाजयोः उत्कर्षापकर्षौ बोधयति, न तु पूर्वोत्तराणां वारयति। प्रधानप्रत्यासत्तिश्च प्रयोगवचनगम्या। प्रयोगवचनश्च चोदकापेक्षया दुर्बलत्वात् चोदकावगतक्रमाविरोधिनीमेव प्रधानप्रत्यासत्तिमङ्गानां बोधयति, न तु तद्विरोधिनीमत्यन्तसंनिकर्षलक्षणाम्। तस्मात् चोदकावगतक्रमानुरोधेन तदन्तापकर्षः तदाद्युत्कर्षश्च न्याय्यः।

वि— 'प्रयाजेष्वपकर्षोऽनुयाजेषूत्कर्ष इत्यमू। श्रुतमात्रे तदन्तेषु तदाद्येषु च वा, ऽग्रिमः॥ अन्येषां मुख्यकालत्वा, न्मैवं व्युत्क्रमशक्तितः। प्रयाजान्ते ह्यनूयाजादिके चैतौ समूहके॥' (समूहकः समूह एव। एतौ अपकर्षोत्कर्षौ। प्रयाजान्ते समूहे अपकर्षः न तु केवलप्रयाजानाम्, एवं अनूयाजादिके समूहे उत्कर्षः न तु केवलानामनूयाजानाम्)।

भाट्ट— दैक्षे पशौ प्रकृतितो हविरासादनोत्तरभाविनां प्रयाजानामपकर्षः 'तिष्ठन्तं पशुं प्रयजति' इति वचनेन श्रुतः। तथा सवनीये हविरुद्वासनोत्तरभाविनामनूयाजानामुत्कर्षः 'आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति' इति श्रुतः। तौ किमुत्कर्षापकर्षौ तन्मात्रविषयौ, उत तदन्तस्यापकर्षस्तदादेश्चोत्कर्षः। इति चिन्तायाम्, प्रयाजादिग्रहणस्योपलक्षणत्वे प्रमाणाभावात् पूर्वोत्तरपदार्थानां च प्रयाजाद्यनङ्गत्वेन तदुत्कर्षापकर्षयोः उत्कर्षापकर्षशङ्काऽनुपपत्तेः, तत्तत्पदार्थानां प्रधानप्रत्यासत्तिबाधापत्तेश्च तन्मात्रस्यैव उत्कर्षापकर्षौ। इति प्राप्ते, प्रकृतौ पाठादिक्रमेण पदार्थानां क्लृप्तक्रमत्वात् पूर्वपदार्थोपस्थापितस्यैव चोत्तरपदार्थस्यानुष्ठेयत्वावगतेः श्रुतवचनयोस्तन्मात्रविषयत्वेऽपि अनूयाजोत्तरपदार्थस्य सूक्तवाकादेः अनूयाजानन्तर्यानूयाजोपस्थापितत्वादिधर्मानुग्रहलोभेनोत्कर्षः। न च प्रधानप्रत्यासत्त्यनुरोधेन तदभावः, तस्याः प्रयोगविधिना क्लृप्तप्रमाणगम्यक्रमानुरोधेनैव प्रकृताविव विकृतावपि कल्पनीयत्वात्। एवमपकर्षेऽपि प्रयाजादीनामाघारादिरूपपूर्वपदार्थानन्तर्यस्य तदुपस्थापितत्वस्य च बाधे प्रमाणाभावेन पूर्वभाविनामपि तदुपपत्तेः। न चापकर्षे पूर्वभाविनां काचित् क्षतिः, प्रधानप्रत्यासत्तेः प्रकृताविव अकिञ्चित्करत्वात्। न चापकर्षे हविरासादनानन्तरं क्रियमाणपदार्थस्य सामिधेन्यादेः तदानन्तर्यतदुपस्थापितत्वादिरूपधर्मबाधापत्तेः अपकर्षानुपपत्तिः, तद्बाधस्य उत्तरकालिकप्रतीतिकत्वेन अविरोधात्। सामिधेनीनां तु प्रयाजाङ्गत्वादपि हविरासादनानन्तर्यादिबाधेऽपि अदोषः।

मण्डन— 'तदाद्युत्कर्ष इष्यते।' १४.

शंकर—'उत्कर्षे च तदादिता।' १५. 'तदन्तस्यापकर्षः स्यात्।' १६.

⧗ तदादिन्यायेन। (सर्वनामन्यायेन इत्यर्थः)। न च नानार्थतापत्तिः तदादिन्यायेन बुद्धिविशेषादेः शक्यताऽवच्छेदकानामनुगमकस्य सत्त्वात्। भूषणसारे धात्वर्थनिर्णयः २.

* तदादिपदानां बुद्धिस्थत्वेन बुद्धित्वे शक्तिः। न च बुद्धिस्थमानय इति बोधापत्तिः, पदार्थस्मरणशाब्दबोधयोः समानप्रकारकत्वात् इति वाच्यम्। पदान्तरे तादृशनियमेऽपि तदादिपदेषु घटत्वादिरूपेणैव पदार्थोपस्थितेः। शाब्दबोधस्य कल्पनं फलानुरोधात् इति केचित्। अन्ये तु तदादेः घटत्वादिनैव शक्तिः इति नानाऽर्थतैव इत्याहुः। मणि. पृ. १६३.

* तदादिसर्वनामार्थः अननुगत एव। बुद्धिस्थत्वेन अनुगमे बुद्धेरपि अननुगमः। मणि. पृ. ११६.

⧗ तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात्। ४।२।१३।२८॥

अत्र सूत्रे होमलक्षणमुच्यते। तदुक्ते तया यजतिचोदनया उक्ते द्रव्यदेवतात्यागक्रियासमुदाये जुहोतेः हुधातोः श्रवणात् आसेचनाधिकः यजधात्वर्थः, जुहोतिः हुधात्वर्थः स्यात्। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यनेनोक्ते यागपदार्थे 'चतुरवत्तं जुहोति' इति जुहोतिः श्रुतः। तस्मात् द्रव्यं, देवता, आसेचनं अग्नौ प्रक्षेपः, त्यागश्चेति चतुर्णां समुदायो होमपदार्थः। आसेचनं अधिकं यस्मिन् स आसेचनाधिकः यागपदार्थः। के.

* 'तदुक्ते श्रवणात्' इति सूत्रकारेणोच्यमानं तत्रैव समर्थयिष्यामहे, यथा देवतोद्देशेन स्वत्वत्यागमात्रं यागः, देवतोद्दिष्टत्यज्यमानस्वत्वद्रव्यप्रक्षेपो जुहोतिः । इति । वा. ३।४।१४।४१ पृ. ९८१.

तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात् स्यात् । ९।२।१३।४० ॥

चातुर्मास्येषु पाशुकेषु मध्यमे पर्वणि 'परिधौ पशुं नियुञ्जीत' इति श्रूयते । तत्र परिधौ यूपधर्माः कर्तव्या न वेति विचारे पूर्वाधिकरणाक्षेपेण पूर्वपक्षमाह । तदुत्पत्तेः तस्य परिधेः आहवनीयपरिधानार्थत्वेन उत्पत्तेः परिधौ यूपधर्माणां निवृत्तिः स्यात् प्रवृत्तिर्न स्यात् । यूपधर्माणां तत्कृतत्वात् पशुबन्धनापूर्वप्रयुक्तत्वात् परिधेश्च अतादृशत्वात् । तस्मात् परिधौ यूपधर्मा न स्युः इति पूर्वः पक्षः ।

आवेश्येरन् वाऽर्थवत्त्वात् संस्कारस्य तदर्थत्वात् । ४१ ॥

पूर्वपक्षं वाशब्देन निरस्यन् सिद्धान्तमाह । परिधौ यूपधर्माः आवेश्येरन् निवेश्येरन् क्रियेरन् । परिधौ यूपधर्माणामर्थवत्त्वात् । पशुबन्धनोपकारसाधने हि यूपधर्मा विधीयन्ते । मध्यमः स्थूलपरिधिरपि पशुबन्धनोपकारसाधनम् । पशुबन्धनरूपस्य अर्थस्य प्रयोजनस्य परिधौ अपि सत्त्वात् । संस्कारस्य यूपधर्मात्मकस्य परिधिसंस्कारस्य तदर्थत्वात् पशुबन्धनार्थत्वात् । तस्मात् परिधौ यूपधर्माः परिधित्वाविरोधिनः कर्तव्याः । उच्छ्रयणतक्षणादयस्तु न कर्तव्याः । इति सिद्धान्तः ।

आख्या चैवं तदावेशाद् विकृतौ स्यादपूर्वत्वात् । ४२ ॥

परिधौ मध्यमे स्थूले यूपधर्माः कर्तव्या इत्युक्तम् । ननु एवं सति 'यूपायाज्यमानायानुब्रूहि' इत्यत्र 'परिधयेऽज्यमानायानुब्रूहि' इत्यूहोऽपि कर्तव्यः स्यात् । नेत्याह । नोहितव्यो भविष्यति । तदावेशात् यूपधर्मावेशात् परिधौ, एवं आख्या च यूप इत्येवं आख्याऽपि स्यात् । अपूर्वत्वात् यूपशब्दस्य संस्कारार्थत्वात् परिधावपि यूपशब्दो भवितुमर्हति । तथा च यथापठित एव प्रैषमन्त्रो भविष्यति नोहिष्यते । विकृतौ च विकृतावपि चातुर्मास्यपर्वणि प्रकृताविव परिधौ यूपशब्दो भविष्यति । अपूर्वत्वात् तदावेशात् एवं विकृतौ च आख्या स्यात् इत्यन्वयः । चकारो भिन्नक्रमः विकृतौ इत्यस्मादुपरिष्टात् संबध्यते विकृतौ अपि इत्यर्थः । तस्मात् परिधौ यूपधर्माः कर्तव्याः । इति सिद्धान्तः । के.

तदुत्सर्गे कर्माणि पुरुषार्थाय, शास्त्रस्यानतिशङ्क्यत्वान्न च द्रव्यं चिकीर्ष्यते, तेनार्थेनाभिसंबन्धात् क्रियायां पुरुषश्रुतिः । ४।१।३।३ ॥

'नेक्षेतोद्यन्तमादित्यम्' इत्यादीनि प्रजापतिव्रतरूपाणि कर्माणि क्रत्वर्थानि इति उत्सूत्रे पूर्वपक्षे सिद्धान्तसूत्रम् । तदुत्सर्गे इति तच्छब्देन पूर्वसूत्रोक्तायाः प्रीतेर्निर्देशः । नेक्षेत इत्यस्य नञः पर्युदासार्थकत्वं गृहीत्वा धातुना अन्वयः कर्तव्यः । एवं च नेक्षेत इत्यस्य अनीक्षणसंकल्पं कुर्यात् इत्यर्थः । तथा च तदुत्सर्गे तस्याः प्रीतेः उत्सर्गे अभावेऽपि कर्माणि अनीक्षणसंकल्पादीनि पुरुषार्थाय स्युः, न क्रत्वर्थाय । शास्त्रस्य पुरुषार्थताबोधकस्य 'तस्य व्रतम्' इत्यस्य अनतिशङ्क्यत्वात् अतिशङ्क्यत्वाभावात् । शास्त्रे शङ्कनीयत्वाभावादित्यर्थः । ननु एवं पुरुषार्थत्वे फलकल्पनागौरवं प्रसज्येत इति चेन्न । शास्त्रस्य अनतिशङ्क्यत्वात् । एतावता हैनसाऽयुक्तो भवति इति शास्त्रस्य 'एतावता अनीक्षणसंकल्पादिना हेतुना, एनसा पापेन अयुक्तो वियुक्तो भवति' इति पापक्षयलक्षणफलबोधकस्य वर्तमानापदेशयुक्तस्यापि अतिशङ्क्यत्वाभावात् । ननु अनीक्षणस्य पुरुषार्थत्वेऽपि क्रत्वर्थत्वमपि स्यादिति चेत् तत्राह— न च द्रव्यं चिकीर्ष्यते इति । द्रव्यं क्रतुसंबन्धि अनीक्षणादिभिः कर्मभिः न चिकीर्ष्यते न कर्तुमिष्यते न संस्क्रियते । ननु नेक्षेत इत्यस्य आख्यातस्य कर्तृवाचकत्वाभावेन पुरुषस्य उपस्थितेरभावात् कथमनीक्षणस्य पुरुषार्थत्वबोध इति चेत् तत्राह— तेनेत्यादि । यतः पुरुषार्थत्वं साधितं क्रत्वर्थत्वं च निराकृतम्, तेन हेतुना अर्थेन अनीक्षणेन पुरुषस्य भावनाऽऽक्षिप्तस्य अभिसंयोगात् कर्तृत्वेन संबन्धात् क्रियायामनीक्षणसंकल्परूपायां उपक्रमगता 'तस्य व्रतम्' इति तच्छब्दरूपा पुरुषस्य श्रुतिः उपपद्यते । तस्मात् प्रजापतिव्रतानि पुरुषार्थानि ।

**अविशेषात्तु शास्त्रस्य यथाश्रुति फलानि स्युः। ४ ॥**

पूर्वपक्षसूत्रम्। यदि प्रजापतिव्रतानि पुरुषार्थानि, तर्हि 'समिधो यजति' इत्यादेः शास्त्रस्य प्रजापतिव्रतशास्त्रेण अविशेषात् तद्वदेव समिदादौ अपि यथाश्रुति 'यत् प्रयाजानुयाजा इज्यन्ते वर्म वा एतत् क्रियते' इत्यादिश्रुत्यनुसारेण फलानि स्युः। न चेत्, न प्रजापतिव्रतान्यपि पुरुषार्थानि इति स्वीकार्यम्।

**अपिवा कारणाग्रहणे तदर्थमर्थस्यानभिसंबन्धात्। ५ ॥**

'नोद्यन्तमादित्यमीक्षेत' इत्यादीनि प्रजापतिव्रतानि न क्रत्वर्थानि किंतु पुरुषार्थानि इति प्रतिपादनार्थं सिद्धान्तसूत्रमिदम्। अपिवा इति पूर्वपक्षव्यावृत्तिः। कारणाग्रहणे प्रजापतिव्रतानां क्रत्वर्थत्वे प्रकरणादिरूपस्य कारणस्य प्रमाणस्य अग्रहणे ग्रहणाभावे दर्शनाभावे सति तदर्थं पुरुषार्थमेव तत् व्रतजातं स्यात्। प्रमाणाभावाच्च प्रजापतिव्रतरूपस्य अर्थस्य क्रतुना अनभिसंबन्धात् संबन्धाभावात्। तस्मात् तानि पुरुषार्थान्येव, न क्रत्वर्थानि।

**तथा च लोकभूतेषु। ६ ॥**

सिद्धान्तसाधकं सूत्रम्। लोकभूतेषु लोकसिद्धेषु कर्मसु प्रयोजनवत्सु उक्तेषु तत्संनिधौ यत् फलेन असंयुक्तं श्रूयते, तत् तदङ्गं विज्ञायते। 'स्नानं कुरु पाकं कुरु' इत्युक्ते स्नानं पाकार्थं इति ज्ञायते। केवलम् 'स्नानं कुरु' इत्युक्ते स्वतन्त्रफलकमेव स्नानं ज्ञायते। तथा च लोकभूतेषु कर्मसु तथा ज्ञानात् प्रजापतिव्रतानि पुरुषार्थान्येव। के.

* **तदेकदेशग्रहणे** आदितः प्रवृत्तिः। (द्यावापृथिव्याद्येककपाले अष्टाकपालस्य प्रथमकपालविध्यन्तस्य प्रवृत्तिः, आश्विनद्विकपाले आदिमकपालद्वयविध्यन्तस्य प्रवृत्तिः इतिरीत्या आदितः प्रवृत्तिः, अन्त्यस्य लोपः इत्यर्थः)। वि. १०।५।१.

**तदेकदेशभूतं तद्ग्रणेन गृह्यते इति न्यायः।** तद्यथा– गङ्गा यमुनां प्रविष्टा, अनेका नद्यः गङ्गायमुनाग्रहणेन गृह्यन्ते, तथा देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते। 'यस्मात् प्रत्ययविधिः' (पा० १।४।१३) इति सूत्रभाष्ये अयं न्याय उक्तः। साहस्री. ६२५.

* '**तत्कर्मोपार्जितैस्स्वैतैः क्रियमाणेषु कर्मसु। कर्तृता यजमानानामृत्विक् परशुकर्मवत्॥**' इत्यात्मवादोक्तन्यायवार्तिकात् शरीरात्मनोः स्वस्वामिभावव्यवस्थानात् व्यवस्था। (श्लोवा. आत्मवादे ७९। स्वैतैः इत्यत्र श्वैतैः इति मूले पाठः)। सु. पृ. ६२०.

'**तत्काला त्वावर्तेत, प्रयोगतो विशेषसंयोगात्**' (११।३।११।२२) इति न्यायेन पञ्चदशरात्रे, 'या तावत् वसतीवरीग्रहणोत्तरकाला सुब्रह्मण्या, सा प्रतिदिवसं क्रियते'। टुप्. १२।२।७।२२.

**तत्काला त्वावर्तेत, प्रयोगतो विशेषसंयोगात्। ११।३।११।२४ ॥**

पूर्वाधिकरणे उपसत्कालीनसुब्रह्माण्याविषये उक्तम्, तद्वैलक्षण्यार्थस्तुशब्दः। तत्काला प्रयोगकाला सुत्याकाला तु सुब्रह्मण्या प्रत्यहमावर्तेत द्वादशाहे। प्रयोगतः प्रयोगेण विशेषतः संयोगात् 'अद्य सुत्यामागच्छ' इति हि पठ्यते। तस्मात् आवृत्तिः इति सिद्धान्तः।

**अप्रयोगाङ्गमिति चेत्। २५ ॥**

पूर्वपक्षी आह। सुत्याकालीना सुब्रह्मण्या अप्रयोगाङ्गं प्रयोगस्य अङ्गं न भवति। तस्मात् सा तन्त्रं स्यात्। 'अद्य सुत्यामागच्छ' इत्यत्र 'अद्य' इति अनङ्गम्, 'सुत्यामागच्छ' इति तु तन्त्रेऽपि अबाधितम्।

**स्यात् प्रयोगनिर्देशात्, कर्तृभेदवत्। २६ ॥**

सिद्धान्ती आह। सुब्रह्मण्यायाः स्यादभेदः। प्रयोगनिर्देशात् 'अद्य सुत्यामागच्छ' इति सुब्रह्मण्यामन्त्रे प्रयोगस्य निर्देशात्। प्रयोगस्य च प्रत्यहं भेदात्। कर्तृभेदवत्, साकमेधेषु दक्षिणे उत्तरे च विहारे कर्तृभेदे सति उत्तरविहाराङ्गानि देशभेदात् दक्षिणे विहारे नोपकुर्वन्ति, एवं प्रकृतेऽपि कालभेदात् एकप्रयोगस्था सुब्रह्मण्या प्रयोगान्तरे नोपकरिष्यति। तस्मादावृत्तिः।

**तद्भूतस्थानादग्निवदिति चेत्, तदपवर्गस्तदर्थत्वात्। २७ ॥**

पूर्वपक्षी शङ्कते। सुब्रह्मण्यायाः आवृत्तिर्न कर्तव्या। कुतः? तद्भूतस्थानात्। तेन सकृत्कृतेनैव सुब्रह्मण्या-

ऽऽह्वानेन यत् भूतं सिद्धं संस्कृतं दैवतं इन्द्रस्वरूपम्, तस्यैव उत्तरेषु सर्वेष्वपि अहःसु स्थानात् विद्यमानत्वात्। संस्कृतस्य विद्यमानत्वात् नावृत्तिः। अग्निवत् अग्नेः स्थानात् यथा आधानस्य नावृत्तिः तद्वत्। षष्ठ्यन्तात् वतिप्रत्ययः। सकृत्कृतेन आधानेन संस्कृतस्यैव अग्नेः अग्निहोत्रादिकर्मसु विद्यमानत्वात् यथा नावर्त्यते तद्वत् सुब्रह्मण्याऽपि नावर्तनीया। इति चेत् पूर्वपक्षी ब्रूयात् तं प्रतिब्रूयात् तदपवर्गस्तदर्थत्वादिति। सकृदाह्वानजन्य-संस्कारसंस्कृतायाः विशिष्टायाः देवतायाः अपवर्गः समाप्तिर्भवति। प्रथमस्याह्नः अपवर्गे तदहःपठितसुब्रह्मण्या-जन्यसंस्कारस्यापि अपवर्गे विशेषणापवर्गेण विशिष्टाया देवताया अपि अपवर्गो भवत्येव। तदुक्तं तदपवर्गः इति। कथं तदपवर्ग इति चेत् तदर्थत्वात् इत्याह। तच्छब्देन बुद्धिस्थस्य कर्मणः परामर्शः। तदर्थत्वात् कर्मार्थत्वात् सुब्रह्मण्यायाः। ततश्च कर्मापवर्गे अपवर्गः। तस्मात् दिनान्तरे तस्या आवृत्तिरेव स्यात् इत्येव सिद्धान्तः।

**अग्निवदिति चेत्। २८ ॥**

पूर्वपक्षी आह। अग्नेः इव अग्निवत्। अग्नेः आधानं यथा सर्वकर्मसु तन्त्रं भवति, तथा उपसत्कालीनं सुब्रह्मण्याऽऽह्वानमपि सर्वाह्नार्थं तन्त्रं स्यात्। इति चेत्। पूर्वोक्तस्यैव दृष्टान्तस्यानुवादोऽयं उत्तरार्थः।

**न प्रयोगसाधारण्यात्। २९ ॥**

सिद्धान्ती आह। न सुब्रह्मण्याऽऽह्वानं आधानेन तुल्यम्। आधानस्य इष्टिपश्वादीनां सर्वकर्मणां प्रयोगेषु साधारण्यात् साधारणत्वात्। सुब्रह्मण्याऽऽह्वानं तु तत्तत्प्रयोगार्थम्। तस्मादावृत्तिः आह्वानस्य।

**लिङ्गदर्शनाच्च। ३० ॥**

सिद्धान्ती एव हेत्वन्तरमाह। 'संस्थितेसंस्थितेऽहनि आग्नीध्रागारं प्रविश्य सुब्रह्मण्य सुब्रह्मण्यामाह्वय इति प्रेष्यति' इति लिङ्गस्य दर्शनात् प्रत्यहं सुब्रह्मण्याऽऽह्वान-मिति गम्यते।

**तद्धि तथेति चेत्। ३१ ॥**

पूर्वपक्षी आह। तथाशब्देन बुद्धिस्थयूपाहुतिदृष्टान्त उपन्यस्तः, हिशब्देन तस्य बुद्धिस्थैव प्रसिद्धिः सूचिता। तत् सुब्रह्मण्याऽऽह्वानं तथा स्यात्, यथा यूपाहुतिकर्म यूपैकादशिन्यां तन्त्रं भवति, तथा प्रथमसुत्याकर्मणि क्रियमाणमाह्वानं सर्वार्थं तन्त्रं भविष्यति। इति चेत्। अथवा तत् यूपाहुतिकर्म यथा, तथा आह्वानमपि भविष्यति इति योजनीयम्।

**नाशिष्टत्वादितरन्यायत्वाच्च। ३२ ॥**

सिद्धान्ती आह। न सुब्रह्मण्याऽऽह्वानं यूपाहुतिकर्मणा तुल्यम्। अशिष्टत्वात् यूपान्तिके होमस्य अविहितत्वात् आहवनीयप्रतिषेधार्थत्वात्। सुब्रह्मण्याऽऽह्वाने तु इतर-न्यायत्वात् इतरः न्यायः 'कालभेदात् गृह्यमाणविशेषस्य आवृत्त्या भवितव्यम्' इति, अस्मिन् आह्वाने तादृशत्वात्। ततश्च यूपाहुतिदृष्टान्तो विषमः। तस्मात् आवृत्तिः।

**विध्येकत्वादिति चेत्। ३३ ॥**

कश्चिदाह। वसतीवरीपर्यन्तस्य अङ्गजातस्य सुब्रह्मण्या-ऽऽह्वानस्य च विध्येकत्वात् विधेरेकत्वात्। एकत्वमत्र सादृश्यात् ज्ञेयम्। सादृश्यं च द्वादशाहिकत्वेन। आह्वानं सकृत् स्यात् द्वादशाहिकविधिबोध्यत्वात्, वसतीवरी-पर्यन्ताङ्गजातवत्। इति चेत्।

**न, कृत्स्नस्य पुनःप्रयोगात्, प्रधानवत्। ३४ ॥**

सिद्धान्ती आह। न वसतीवरीवत् तन्त्रम्। अभि-षवपवमानग्रहचमसस्तोत्रशस्त्रादेः कृत्स्नस्य विधानस्य अहर्गणे प्रत्यहं पुनःप्रयोगात् सुब्रह्मण्याऽपि पुनःपुनः प्रयोज्या। प्रधानवत् यथा प्रधानानि प्रत्यहं क्रियन्ते तद्वत्। पूर्वपक्षानुमानं तु प्रबलप्रतिहेतुग्रस्तम्। तस्मात् अहर्गणे सुत्याकालीनसुब्रह्मण्याऽऽह्वानस्य प्रत्यहमावृत्तिः इति सिद्धान्तः। के.

* तत्कालास्तु० (११।३।४।६)। यूपसाधारण्येन 'तत्कालास्तु' इत्येवं अग्नीषोमीयकालकृतादेव (परि-व्याणात् सवनीयार्थमपि) उपकारसिद्धेः। वा. ३।६। ७।२१ पृ. १०४६.

**तत्काले वा लिङ्गदर्शनात्। ३।८।२१।४० ॥**

श्येने 'दृतिनवनीतमाज्यं भवति' इति श्रूयमाणे नवनीते विचारः। दृति चर्मपुटकम्, तत्र चिरकालधृतं यन्नवनीतम्, तत् आज्यस्थाने भवति इति वाक्यार्थः। इदं नवनीतं अङ्गेष्वेव न प्रधाने इति साधितं पूर्वाधि-

करणे । इदानीं किं सुत्याकालानामङ्गानां नवनीतम्, उत सर्वेषामिति विचार्यते । तत्र पूर्वपक्षसूत्रमिदम् । अग्निष्टोमे तावत् अग्नीषोमीयसवनीयानुबन्ध्याः त्रयः पशवो भिन्नकालस्थिताः । ते च श्येने चोदकेन प्राप्ताः । परन्तु 'सह पशूनालभते' इति विशेषविधानात् तेषां साहित्यं भवति । तच्च साहित्यं सवनीयपशुकाले एव भवति । सवनीयपशुश्च सुत्यादिने भवति इति तत्रैव साहित्यम् । इदं साहित्यदर्शनमेव सूत्रोक्तं लिङ्गदर्शनम् । तत्काले श्येनकाले श्येनप्रधानकाले अर्थात् सुत्याकाले यानि श्येनाङ्गानि, तेष्वेव दृतिनवनीतं स्यात् । यथा पशुसाहित्यं सुत्याकालीनम्, तथा नवनीतमपि सुत्याकालीनम् ।

**सर्वेषां वाऽविशेषात् । ४१ ॥**

सिद्धान्तयति । न सुत्याकालीनानामेव अङ्गानाम्, किन्तु सर्वेषां असुत्याकालीनानामपि अङ्गानां स्यात् । वाशब्दः पूर्वपक्षनिरासार्थः । सर्वेषां कुतः ? अविशेषात्, विशेषप्रमाणाभावात् । सुत्याकालीनपशुसाहित्यरूपस्य सामान्यतोदृष्टरूपस्य लिङ्गस्य 'दृतिनवनीतमाज्यं भवति' इति वाक्येन बाधितत्वात् । तस्मात् श्येने सर्वेषामङ्गानां आज्यस्थाने दृतिनवनीतं स्यात् ।

**न्यायोक्ते लिङ्गदर्शनम् । ४२ ॥**

तत्र सिद्धान्ती ब्रूते । लिङ्गदर्शनं न्यायोक्ते न्यायगम्ये अर्थे साधकं भवति । प्रधानप्रत्यासत्तिवशात् पशुसाहित्यं सुत्याकालकृतं इति लिङ्गदर्शनं क्रमानुग्रहेण न्यायेन सिद्धे सति भवेत् । परन्तु नायं न्यायः दृतिनवनीते संभवति, प्रधानप्रत्यासत्तेरनपेक्षणात् । तस्मात् श्येने दृतिनवनीतं सुत्यातदितरकालीनसर्वाङ्गार्थमिति सिद्धान्तः । **के.**

**तत्क्रतुस्तद्भवति इति न्यायस्य** व्यभिचारं शङ्कते । ( क्रतुः संकल्पः । सः क्रतुः यस्य सः । यो यस्य संकल्प सततं करोति सः तद्रूपः भवति इति तत्क्रतुन्यायवदेव शब्दार्थः । ) । ४।३।६।१५ ब्रसू.

**तत्क्रतुन्यायः** । ( ४।३।६।१५ ब्रसू. ) एते च हानोपायने सविशेषविद्यायामनुचिन्तनीये एव तत्क्रतुन्यायेन फलस्यापि सविशेषविद्यायां ध्येयत्वात् । निर्विशेषविद्यायां तु न ध्येये । ( क्रतुः संकल्पो ध्यानमित्यर्थः । जीवः इह जन्मनि यादृशं संकल्पं तात्पर्येण करोति, जन्मान्तरे तादृशं फलं लभते इति न्यायार्थः) । **आभरणं.** ३।३।१५।२६ ब्रसू. * अध्यात्मं वागादीनाम्, अधिदैवतमग्न्यादीनां च सन्ति एकोपासनात् वह्न्यादिशरीरप्राप्तिफलकानि उपासनानि । तेषु यानि शरीरान्तरेऽप्यनुवर्तमानानि इन्द्रियाणि तान्येव **तत्क्रतुन्यायादु**पासनीयानि । **परिमलः.** २।४।२।६ ब्रसू. * सिद्धान्ते प्रतीकोपासनातिरिक्तेषु तत्क्रतुन्यायात् विशेषसिद्धिः । **न्यायनि.** ४।३।६।१५ ब्रसू.

**तद्गुण उपलभ्यते इति न्यायः** । अयं 'उच्चैरुदात्तः' ( पा० १।२।२९ ) इति सूत्रमहाभाष्ये उक्तः । 'तद्यथा द्वयोः रक्तयोर्वस्त्रयोर्मध्ये शुक्लं वस्त्रं तद्गुणमुपलभ्यते । बदरपिटके रिक्तको लोहकंसः तद्गुण उपलभ्यते' इति । ( तस्य गुण इव गुणो यस्य स तद्गुणः ) । **साहस्री.** ६१७.

**तद्गुणसारत्वात् इति न्यायः** ( २।३।२९ ब्रसू. ) । प्राणं विहाय केवलस्य जीवस्य उत्क्रमणासंभवस्य तद्गुणसारत्वादितिन्यायसिद्धत्वात् । ( तस्याः बुद्धेः गुणाः इच्छाद्वेषादयः सारः प्रधानं यस्य आत्मनः संसारित्वे संभवति, स तद्गुणसारः । आत्मनः तद्गुणसारत्वात् संसारित्वव्यपदेशः इति न्यायसूत्रार्थः ) । **आभरणं.** ४।२।३।४ ब्रसू.

**तद्ग्रहणाद्वा स्वधर्मः स्यादधिकारसामर्थ्यात् सहाङ्गैरव्यक्तः शेषे । ३।७।२३।५१ ॥ इति न्यायः ।**

पूर्वसूत्रस्थपूर्ववच्छब्दनिर्दिष्टप्रत्युपस्थापितप्राकृतधर्मपरामर्शिनं तच्छब्दं चोदकप्राप्तानि अङ्गानि अधिकृत्य, वैकृतप्रयोगवचनप्रवृत्तेश्च अधिकारशब्दं चोदकवाचिनमभिप्रेत्य, प्रयोगवचनेन प्राकृतधर्मग्रहणात् प्राकृतानां च धर्माणां चोदकसामर्थ्येन नानर्त्विक्कर्तृकाणामेव प्राप्तेः स्वकीयचोदकप्राप्तनानर्त्विक्कर्तृकधर्मयुक्तः श्येनादिः स्यात् । यस्तु उद्गात्रादिः सामान्यसमाख्यानिमित्तत्वात् अव्यक्तः कर्ता, स शेषे प्राकृतधर्मव्यतिरिक्ते कण्टकवितोदनादौ अपूर्वे श्येनाङ्गे भविष्यति इति सिद्धान्तयिष्यते । **सु.**

पृ. ११७८, * तद्ग्रहणाद्वा इत्यत्र चोदकबलीयस्त्वं वक्ष्यते। पृ. ११७८.

* तद्ग्रहणाद्वा ( ३।७।२३।५१ ) इत्यधिकरणे वैकृतप्रधानं प्रयोगवचनं चोदकोपजीवकतया दुर्बलं इति वक्ष्यते। ('सामवेदोत्पन्नोऽपि श्येनयागः न उद्गातृभिरेव कर्तव्यः, यजुर्वेदोत्पन्नोऽपि च वाजपेयः न अध्वर्युभिरेव कर्तव्यः, किन्तु स्वधर्मैः स्वैः चोदकप्राप्तैर्धर्मैः संयुक्तः स्यात्, तद्ग्रहणात् प्राकृतधर्मग्रहणात्। तस्मात् सर्वैरृत्विग्भिर्मिलित्वा श्येनो वाजपेयश्च कर्तव्यः इति अक्षरार्थः )। कु. ३।३।२।८. * तद्ग्रहणाद्वा इत्येतत् बाधित्वा प्रधान-(वेद)समाख्यात एव प्रकृतौ विकृतौ च कर्ता प्राप्नोति। वा. ३।३।२।९ पृ. ८१४. * अधिकरोति इति व्युत्पत्त्या अधिकारशब्दोक्तस्य चोदकस्य बलीयस्त्वाख्यं समर्थत्वमुपपादयितुम् 'तद्ग्रहणाद्वा स्वधर्मः स्यात्' इत्यनेन न्यायेन प्रयोगवचनस्य चोदकापेक्षत्वेन दुर्बलत्वमुक्तम्। सु. ३।७ पृ. ४९. * इष्टिपशुबन्धादीनामेतस्मिन्नेव प्राकृते स्वरत्रये ( मन्द्र—मध्यम—उत्तमरूपे ) प्राप्नुवति प्रत्यक्षोपदेशवशेन प्रधानवेदस्वरप्रसक्तौ 'तद्ग्रहणाद्वा स्वधर्मः स्यात्' इत्यनेन न्यायेन प्रयोगवचनस्य चोदकापेक्षित्वेन दुर्बलत्वात् चोदकप्रापितस्वरग्रहणमेवेष्टम्। वा. ३।३।२।९ पृ. ८११, * क्व पुनरिदानीं नानावेदस्वरस्यावकाशो भविष्यति? उच्यते, 'तद्ग्रहणाद्वा०' इतिवत् कल्पनीयः। यत् प्राकृतस्वराङ्गयुक्तायां विकृतौ वेदान्तरीयं अपूर्वमङ्गं चोद्यते इति। ३।३।२।९ पृ. ८१३.

**तच्चोदकेषु मन्त्राख्या। २।१।७।३२॥**

मन्त्रगतो भावशब्दो विधायको नेति परीक्षितुं कोऽयं मन्त्रो नामेति। वेदवाक्यगतभावशब्दानां गुणकर्मप्रधानद्वैविध्ये अवधारिते तत्प्रसङ्गेन कर्मप्रतिपादकत्वरूपं तृतीयं प्रकारं प्रतिपाद्य इदानीं प्रसङ्गेनैव वेदवाक्यगतमन्त्रपदस्यार्थो निरूप्यते, कोऽयं मन्त्रो नामेति। अत्रायं पूर्वपक्षिणोऽभिसंधिः— न तावत् मन्त्रसंहितायां पाठो मन्त्रलक्षणम्, ब्राह्मणमध्येऽपि मन्त्रपाठदर्शनात्। नापि ब्राह्मणविनियोज्यत्वलक्षणम्, लिङ्गप्रकरणविनियोज्यानामपि मन्त्रत्वात्। नापि अस्यन्तादिरूपता मन्त्रलक्षणम्, ब्राह्मणेऽपि तस्य भावात्, मन्त्रेषु च केषुचिदभावात्। तेन सर्वेषामेव तद्व्यभिचारात् अनेकार्थत्वमेव मन्त्रशब्दस्येति। एवं प्राप्ते, अभिधीयते। भवेदेवं यदि अत्र वृद्धोपदेशो न स्यात्। तथाहि, येषु वाक्येषु वृद्धाः प्रयुञ्जते 'मन्त्रानधीमहे' 'मन्त्रानध्यापयामः' 'मन्त्रा वर्तन्ते' इति। अभियुक्तमूलं च शब्दार्थावधारणम्। तेन मन्त्रसंहितापाठादीनां व्यभिचारेऽपि अध्यापकवृद्धा यत्र मन्त्रशब्दं प्रयुञ्जते, ते मन्त्रा इति भवति व्यवस्था। तदुक्तम्— '**स्वाध्याये पठ्यमानेषु येषु मन्त्रपदं स्थितम्। ते मन्त्रा नाभिधानं हि मन्त्राणां लक्षणं स्थितम्॥**' इति। ('पदं स्थितम्' इत्यत्र 'पदं स्मृतम्' इति मूले पाठः।) ( वा. पृ. ४३७ )। प्रयोजनं चात्र लक्षणप्रतिपत्तिलाघवातिरिक्तमन्यन्नास्ति। तदुक्तं भाष्ये— 'आक्षेपे चापवादे च प्राप्त्यां लक्षणकर्मणि। प्रयोजनं न वक्तव्यं यच्च कृत्वा प्रवर्तते॥' इति। ( आक्षेपेष्वपवादेषु इति प्रथमचरणपाठो मूले ) (भा. पृ. ४३५)। सूत्रं तु— तदनुष्ठीयमानकर्माभिधानं प्रयोजनं येषां वाक्यानां तानि तथोक्तानि। तेषु मन्त्राख्या मन्त्रशब्दप्रयोग इत्यर्थः। एतदपि प्रायिकत्वात् स्वाध्यायकालाध्यापकत्वयोगलक्षणमेवेति। तौता.

**तच्चोदकेषु मन्त्राख्या। २।१।७।३२॥**

मन्त्रगतो भावशब्दो विधायको न वेति विचारितम्। तत्र कोऽयं मन्त्रो नाम। किञ्च 'अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रयिविदा विदुः। ऋचः सामानि यजूंषि सा हि श्रीरमृता सताम्॥' इत्यत्र मन्त्र उक्तः। कोऽयं मन्त्रो नामेति। उच्यते। तच्चोदकेषु तस्य अभिधानस्य अनुष्ठेयार्थप्रकाशनस्य चोदकेषु प्रयोजकेषु वाक्येषु मन्त्राख्या मन्त्र इति आख्या ज्ञातव्या। तथा च अनुष्ठेयार्थस्मारकवेदवाक्यत्वं मन्त्रत्वमिति मन्त्रलक्षणम्। मन्त्रत्वेन शिष्टैरुक्ता मन्त्राः इति तु सामान्यलक्षणम्। के.

**तत्तद्वचनसामर्थ्येन्यायः।** कार्यप्रवृत्तिवेलायां तत्तन्निमित्तस्य असंनिधानेऽपि तत्तद्वचनसामर्थ्यात् भूतपूर्वमपि तादृशधर्ममादाय तत्तत्कार्ये प्रवर्तनीयम्। ( भूतिः पृ. २७४ )। तत्तद्वचनसामर्थ्येन्यायसिद्धेयं

'सांप्रतिकाभावे भूतपूर्वगतिः' इति परिभाषा । (शेखर. पृ. २७४)

* **तत्त्वेन** अपरिज्ञातोऽर्थः अनुष्ठीयमानः विहन्ति अनुष्ठातारम् । ज्ञात्वा अनुष्ठितः निःश्रेयसेन संयुनक्ति । बृहती. पृ. १५.

* **तद्देशानां वा संघातस्याचोदितत्वात् । ९।१।६।२५ ॥**

'त्सरा वा एषा यज्ञस्य, तस्मात् यत्किञ्चित् प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति' इत्युदाहृत्य, यज्ञभागधर्मो वा एतदुपांशुत्वम्, पदार्थधर्मो वा इति संदिग्धे, यज्ञस्य फलवत्त्वेन धर्मप्रयुक्तसामर्थ्यात् 'यज्ञस्य यत् प्राचीनम्' इति व्यवहितेनापि यज्ञशब्देन प्राचीनशब्दस्य अन्वयप्रतीतेः श्रुत्या च प्राग्देशवाचिनः प्राचीनशब्दस्य लक्षणया तद्देशपदार्थपरत्वायोगात् यज्ञभागधर्मत्वम् (इति) पूर्वपक्षयित्वा, प्राचीनशब्दस्य वीप्सा किञ्चित्किञ्चिच्छब्दसमभिव्याहृतयच्छब्दान्वयात् वीप्सायाश्च बहुविषयत्वेन एकस्मिन् देशे अनुपपत्तेः लक्षणया अग्नीषोमीयप्राग्देशपदार्थपरत्वस्यैव न्याय्यत्वात् पदार्थधर्मता इति सिद्धान्तयितुम् 'तद्देशानाम्' इति सूत्रे अङ्गप्रधानसंघातस्य यज्ञशब्दवाच्यत्वाभावात् साङ्गप्रधानसंघातापेक्षया च प्राग्भाविनः अङ्गजातस्य यज्ञावयवत्वायोगेन प्राचीनयज्ञशब्दान्वयेऽपि अवयवव्यतिरेकजनितषष्ठ्यनुपपत्तेः तत्संबन्धितया उपांशुत्वस्य अचोदितत्वात् न यज्ञभागधर्मता इति वक्ष्यते । सु. पृ. ७३०.

* **तन्निर्धारणानियमाधिकरणे (३।३।२७।४२)** पुरुषार्थत्वमङ्गोपास्तीनामुक्तम् । इह सत्यपि पुरुषार्थत्वे समुच्चये मानं नेत्युच्यते । **न्यायनि.** ३।३।३६।६१ ब्रसू. * तन्निर्धारणानियमाधिकरणे रसतमत्वादिदृष्टीनां कर्माङ्गत्वाभावान्न कर्मसु नियम इत्युक्तम् । **आभरणं.** ३।३।३६। ६१ ब्र. सू., * कर्माङ्गसमभिव्याहृतसर्वोपासनाविषयकमिदं वाक्यं (यदेव विद्यया करोति– इति वाक्यम्) **तन्निर्धारणानियमाधिकरणे** दर्शितम् । ४।१।५।६ ब्रसू.

सिद्धे चोपास्तीनामृत्विक्कर्मत्वे **तन्निर्धारणानियमन्यायेन** स्वतन्त्रफलत्वसिद्धिः । **न्यायनि.** ३।४।४६ ब्र. सू. । तन्निर्धारणानियमस्तद्दृष्टेः पृथग् ह्यप्रतिबन्धः फलम् । ३।३।४२ ब्रसू. । यानि उद्गीथादिकर्मगुणयाथात्म्यनिर्धारणानि प्रणवः रसतमः आप्तिः समृद्धिः इत्येवमादीनि, नैतानि नित्यवत् कर्मसु नियम्येरन् । तद्दृष्टेः तस्य अनियतत्वस्य दृष्टेः श्रुतौ दर्शनात् 'तेनोभौ कुरुतो यश्चैतदेवं वेद, यश्च न वेद' इति । उपासनस्य कर्मणः सकाशात् पृथक् फलं हि यस्मात् उपलभ्यते अप्रतिबन्धः कर्मफलसिद्धेः प्रतिबन्धाभावजननं तत्समृद्धिः अतिशयविशेषश्च कश्चित् । इति न्यायसूत्रार्थः । के.

**तन्न्यायत्वाददृष्टोऽप्येवम् । १२।३।९।२३ ॥**

यो मन्त्रो मन्त्रसमाम्नाये त्रैस्वर्येण दृष्टः तस्य तथैव प्रयोगः । यस्तु तत्र न दृष्टो ब्राह्मणेन च भाषिकेण स्वरेणोपदिष्टः, यथा 'तं वै प्रोह्येद् वानस्पत्योऽसीति' इति तत्र कः स्वरः स्यात् ? उच्यते । तन्न्यायत्वात् योऽसौ न्याय उक्तः 'मन्त्रोपदेशोऽयं तद्रूपत्वाच्छब्दस्य' इति (२१ सूत्रे) तेनैव न्यायेन मन्त्राम्नाये अदृष्टोऽपि मन्त्रः मन्त्रोपदेशविषयत्वात् प्रावचनेनैव स्वरेण प्रयोज्यः । इति पूर्वः पक्षः ।

**तदुत्पत्तेर्वा प्रवचनलक्षणत्वात् । २४ ॥**

नैतत् । तदुत्पत्तेः तस्मिन् ब्राह्मणे मन्त्रस्य उत्पत्तेः प्रवचनलक्षणत्वात् प्रवचनमेव लक्षणं यस्य मन्त्रस्य स प्रवचनलक्षणः, तादृशत्वात् । भाषिकस्वर एव तस्य प्रवचनस्वरः । तस्मात् ब्राह्मणोत्पन्नानां मन्त्राणां भाषिकेण स्वरेण कर्मणि प्रयोगः इति सिद्धान्तः । के.

**तत्परातत्परविरोधे तत्परं बलवत् ।** (सविशेषत्वसूचकानां निर्विशेषत्वसूचकानां च वचनानां बहुत्वेऽपि ब्रह्मणो निर्विशेषत्वमेवेत्यत्र) इति न्यायः नियामकः । (तत्परस्य अतत्परस्य च वाक्ययोर्विरोधे तत्परं बलवत् अतत्परस्य तु अन्यथा लापनम् इत्यर्थः) । **न्यायनि.** ३।२।५।१४ ब्रसू.

* तत्पुरुषः समासः अन्तोदात्तः । **वि.** ३।२।११.

* **तत्पुरुषात्** कर्मधारयो बलीयान् इति निषादस्थपत्यधिकरणन्यायः । **बाल.** पृ. ९३. * तत्पुरुषात् बहुव्रीहौ लाघवमङ्गीकृतमिन्द्रपीताधिकरणे इत्याचार्यादयः । **मणि.** पृ. १४९, * तत्पुरुषात् । व्यधिकरणतत्पुरुषात् समानाधिकरणतत्पुरुषो ज्यायान् यथा निषाद-

स्थपतिः इत्यत्र । पृ. १५०. * तत्पुरुषस्य स्वपदार्थे प्राधान्यात् अन्यपदार्थप्रधानबहुव्रीह्यपेक्षया बलीयस्त्वम् । सु. पृ. ११४१. * 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः' ( पा० ६।२।२ तुल्यार्थाः शब्दाः, तृतीया, सप्तमी, उपमानम्, अव्ययम्, द्वितीया, कृत्यप्रत्ययाश्च सप्त एते पूर्वपदभूताः तत्पुरुषे प्रकृत्या ) । भाट्ट. ३।३।८. * निषादस्थपत्यधिकरणे लक्षणाऽऽपत्त्या तत्पुरुषापेक्षया कर्मधारयस्य प्राबल्यमुक्तम् । मणि. पृ. १४९. * तत्पुरुषलक्षणम्, तत्पुरुषार्थविचारश्च 'समासवादः' इति बिन्दौ मणिग्रन्थे द्रष्टव्यम् । के.

**तत्प्रख्यं चान्यशास्त्रम् । १।४।४ ॥**

'अग्निहोत्रं जुहुयात् स्वर्गकामः' 'आघारमाघारयति' इति च समामनन्ति । तत्र संशयः किमग्निहोत्रशब्दः आघारशब्दश्च गुणविधिः, उत कर्मनामधेयमिति । उद्भिदधिकरणे यौगिकशब्दानां ( रूढानां ) चित्राऽधिकरणे च सांविज्ञायिकशब्दानां नामधेयत्वं निरूप्य इदानीं यौगिकशब्देष्वेव केषुचित् केनचिद् विशेषेण गुणविधिमाशङ्क्य नामधेयत्वं व्युत्पाद्यते । तत्र च 'अग्निहोत्रं जुहोति' इत्युत्पत्तिवाक्यमेवोदाहरणम् । अधिकारवाक्यस्य फलसंबन्धपरस्य गुणपरत्वेऽपि उत्पत्तिवाक्यवैयर्थ्यप्रसङ्गात् भाष्यकारेण विचारविषयाग्निहोत्रपदसंबन्धितामात्रेणोदाहृतम् । अत्रायं पूर्वपक्षिणोऽभिसंधिः । भवतु उद्भिदादिपदानां मत्वर्थलक्षणाभयात् नामधेयत्वम् । अग्निहोत्रपदस्य तु सिद्धान्तेऽपि अग्नये होत्रं अस्मिन् इति मत्वर्थीयसमानार्थबहुव्रीहिसमासव्युत्पत्तेः मत्वर्थलक्षणादोषाभावात् चतुर्थ्यभिहितदेवताविधित्वमेव । सति च गुणविधित्वे 'यदग्नये च प्रजापतये च सायं जुहोति' इति 'यत् सूर्याय च प्रजापतये च प्रातर्जुहोति' इति प्रकरणप्राप्तयोर्होमयोर्मध्ये सायंहोमे अग्नेः प्राप्तत्वात् प्रातर्होमे एव अग्निदेवताविधानमिदम् । न च प्रातर्होमवाक्यमेव गुणविधायकम्, अग्निहोत्रवाक्यं चोत्पत्तिपरं इति वक्तव्यम् । यतोऽत्र अनेकगुणानामुपादानं प्रतीयते, तेषां च प्राप्ते कर्मणि विधातुमशक्यत्वात् अत्रैव विशिष्टविधिना कर्मोत्पत्तिः, अग्निहोत्रवाक्ये एव च गुणविधानमिति । ननु प्रातर्होमस्यापि उत्पत्तिशिष्टसूर्यप्रजापतिदेवताऽवरुद्धत्वात् नाग्निदेवताविधानं संभवति । मैवम् । 'यत् सूर्याय च प्रजापतये च' इति चकारद्वयमत्र श्रूयते अन्यतरसमुच्चयस्य एकेनैव चकारेण सिद्धत्वात् अगत्या सायंहोमवाक्ये चकारद्वयस्य इतरेतरसमुच्चयपरत्वम्, इह पुनः अग्निदेवतोपनायकस्य वाक्यस्य संभवात् तत्समुच्चयार्थत्वमेव द्वितीयचकारश्रवणस्य, इति नानुपपन्नं देवतान्तरविधानम् । अथवा, 'यदेकया जुहुयाद्दर्विहोमं कुर्यात्' इत्येतद्वाक्यावगतदूरस्थदेवतारहितदर्विहोमेष्वेव अग्निदेवताविधानमिति ।

तथा 'आघारमाघारयति' इत्यत्र आघार्यते इत्यनया व्युत्पत्त्या क्षरणयोग्यद्रव्यमाज्यपयःप्रभृति 'आघारः' इति प्रतीयते । तच्च 'आघारम्' इति द्वितीयाश्रुत्या आघारणक्रियासंस्कार्यत्वेनावगम्यमानं भक्षणयुक्तफलचमसवत् अभिषवयुक्तपूतीकवच्च प्रयोजनमपेक्षते, प्रकरणे चाश्रुतद्रव्यमुपांशुयाजाख्यं कर्म साकाङ्क्षमस्ति । अतः श्रुतार्थापत्तिकल्पितविनियोगविधिना तत्रैव विधीयते इति । तदुक्तं 'श्रुतसंस्कारसंबन्धं मुख्यैर्यद्यप्यसंगतम् । अन्यथा तदयोग्यत्वात् प्रकृतैर्याति संगतिम् ॥' ( वार्तिककारेणानूदितः प्राचीनः श्लोकः । वा. पृ. ३३३ ) । न च उपांशुयाजस्यापि 'सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्' इत्यनेनैव आज्यस्य प्राप्तेः निराकाङ्क्षत्वात् अनर्थकमाघारवाक्येन द्रव्यविधानमिति वाच्यम् । यतः 'सर्वस्मै वा एतद्यज्ञाय गृह्यते' इत्यस्य वाक्यस्य द्रव्यरहिताङ्गप्रधानविषयत्वेन सावकाशत्वात्, अस्य च प्रकरणेन अद्रव्यकप्रधानमात्रविषयत्वात् अनेनैव उपांशुयाजद्रव्यविधानमिति । न च वाच्यम्, द्वितीयाश्रुतिः सक्तुमारुतैककपालादिषु संस्कार्यत्वं व्यभिचरति, अतः कथं तद्बलेन आज्यपयःप्रभृतीनां संस्कार्यत्वम्, कथं च तदुपपत्त्यर्थं कार्यान्तरोपयोगित्वमिति, यतः तत्रैतत् द्रव्यं निरन्वयविनाशात् कार्यान्तरोपयोगि न संभवति । अत्र पुनः आघारणस्य द्रव्यैकदेशक्षारणरूपत्वात् क्षारितैकदेशस्य द्रव्यस्य कार्यान्तरोपयोगो नानुपपन्नः । दृष्टं चैतत् लौकिकेऽपि पानादौ उपयोक्ष्यमाणस्य द्रवद्रव्यस्य ईषत्क्षारणसंस्कारः, इत्युपांशुयाजे एव गुणविधानम् । एवं च सति प्रसिद्धार्थत्वं

अधिकार्यत्वं प्रवृत्तिविशेषकरत्वं चानुरुद्धं भवति इति गुणविधानमेवेति । **एवं प्राप्ते, अभिधीयते ।** भवेदेवं यदि अग्निहोत्रपदं अग्नये होत्रमस्मिन् इति व्युत्पत्त्या चतुर्थीसमासेनैव परिनिष्पाद्येत, किन्तु अग्नेर्होत्रम्, अग्नौ होत्रम्, इति षष्ठीसप्तमीसमासयोरपि संभावितत्वात् संदिग्धार्थमग्निहोत्रपदं न विधेयीभूताग्निदेवतासमर्पकं भवति । संभवति तु कुतश्चिद्वाक्यात् प्राप्तमग्निदेवताभूतं प्रवृत्तिनिमित्तीकृत्य होमविधौ नामधेयीभवितुम्, इति तदर्थं वाक्यान्तरमपेक्षते । अस्ति च मन्त्रवाक्यं वाक्यविनियुक्तम् 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति' इत्यग्निदेवतासमर्पकम् । अतस्तल्लब्धमेवाग्निं निमित्तीकृत्य अग्निहोत्रपदं नामधेयमिति तदवच्छिन्न एव होमो विधीयते, न त्वन्यत्र गुणो विधीयते । ननु पूर्वपक्षी प्रातर्होमे गुणविधिं मन्यते दर्विहोमे वा । प्रातर्होमे तावत् मन्त्रवर्णादग्निदेवताप्राप्तिर्न सिद्धान्तिनोऽभिमता त्रिदेवताकत्वप्रसङ्गात् । नापि दर्विहोमे, तस्य दूरस्थत्वेन मन्त्रसंबन्धाभावात् । अतः कथं तत्प्रख्यशास्त्रवशेन अग्निहोत्रपदस्य नामत्वमिति । **उच्यते ।** न ब्रूमो यत्र पूर्वपक्षवाद्यभिमतो गुणविधिः, तत्रासौ अन्येन प्राप्त इति, किन्तु यस्य गुणस्य उपादानसामर्थ्यात् धात्वर्थादुत्तार्यते विधिः, असौ श्रौतधात्वर्थविधावेव शास्त्रान्तरप्राप्तोऽग्निः नामप्रवृत्तिनिमित्तत्वेनानुवदितुं शक्यते, किं श्रुतिपरित्यागेनेति । अयमेव तत्प्रख्यशास्त्रार्थः । तदुक्तम् **'विधित्सितगुणप्राप्तिशास्त्रमन्यद् यतस्त्विह । तस्मात् तत्प्रापणं व्यर्थमिति नामत्वमिष्यते ॥'** इति (वा. पृ. ३३४ । 'प्रापि शास्त्र' इति वार्तिके पाठः) । अत एव नायं गुणविशिष्टहोमविधिः । तदुक्तम् **'विधीयतां विशिष्टं चेत् कर्मेत्येवं विकल्प्यते । न चेदन्येन शिष्टाः स्युस्तत्प्रख्यं चेति चोत्तरम् ॥'** (वा. पृ. ३३५) । अतः 'अग्निहोत्रं जुहोति' इत्येतद्वाक्यं नामावच्छिन्नकर्मोत्पादकमेव, न तु प्रातर्होमे, न च दूरस्थदर्विहोमे, नापि विशिष्टविधिना देवताविधायकमिति । **न च** 'यदग्नये च' इति वाक्यद्वयमेव होमविधायकमिति **वाच्यम् ।** असंदिग्धानन्यलभ्यगुणविशिष्टत्वेन विशिष्टविधिगोचरहेतुहोमविधानसंभवात् । किन्तु अग्निहोत्रवाक्यप्राप्तहोमानुवादेन गुणविधायकमेव । तत्रापि प्राप्ते कर्मणि अनेकगुणविधानासंभवात् अग्निसूर्ययोश्च मन्त्रवाक्यप्राप्तत्वात् सायंप्रातःकालयोश्च 'सायं जुहोति' 'प्रातर्जुहोति' इति वाक्यद्वयलभ्यत्वात् प्रजापतिरेव एको देवतात्वेन वाक्यद्वये विधीयते, अन्यत् सर्वमनूद्यते इति ।

तथा 'आघारमाघारयति' इत्यत्रापि आघार्यते इति व्युत्पत्त्या आघारणयोग्यं अनिरूपितविशेषं पयआदि द्रवद्रव्यमेव प्रतीयते । अतः संदिग्धार्थमाघारपदं अग्निहोत्रपदमिव नोपांशुयाजविषयीभूताघारद्रव्यविशेषसमर्पकं संभवति । द्रव्यविशेषावगत्यर्थं च प्रकरणनिरीक्षणे 'उपस्तृणन् अभिघारयन् आज्यस्यैव यजन्' इति वाक्यबलेन 'सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यम्' इत्यनेन वा विशेषप्राप्तौ ताभ्यामेव असंदिग्धार्थाभ्यां सावकाशत्वेऽपि उपांशुयाजे द्रव्यविशेषप्राप्तेः एतद्विधानं व्यर्थमेव संदिग्धार्थत्वादेव चाघारपदस्य नाघार्यद्रव्यविशिष्टमाघारणं विधीयते इति संभवति । तथा 'चतुर्गृहीतं वा एतदभूत् तस्याघारमाघार्य' इत्यनेनैव आज्यद्रव्यप्राप्तेः तद्विधानवैयर्थ्यं च । तदुक्तम् **'विधित्सितगुणप्रापि'** इति । संभवति च आघारणमाघारः इति भावव्युत्पत्त्या कर्मनामधेयत्वम् । अतः तदवच्छिन्नमत्रापि कर्मैव विधीयते । तच्च कर्म 'इन्द्र ऊर्ध्वोऽध्वर इत्याघारमाघारयति' इति मन्त्रविनियोगसामर्थ्यात् लब्धेन्द्रदेवतासंबन्धम् । तथा चतुर्गृहीतवाक्यावगतद्रव्यसंबद्धं सत् समरूपमेव आघारनामधेयं दर्शपूर्णमासाङ्गमिति अवधार्यते इति ।

**प्रयोजनम्**— पूर्वपक्षे प्रातर्होमस्य दर्विहोमस्य वा अग्निदेवतत्वम् । सिद्धान्ते नेति । **सूत्रं तु**— तत्प्रख्यं तत्प्रापकं अग्निहोत्रपदेन आघारपदेन च यद्विधातव्यं तद्विधायकमिति यावत् । अन्यशास्त्रं शास्त्रान्तरं चेदस्ति तेनानयोर्नामधेयत्वमेवेति । **तौता.** १।४।४।४.

**⌛ तत्प्रख्यं चान्यशास्त्रम् । १।४।३।४ ॥**

'अग्निहोत्रं जुहोति' 'आघारमाघारयति' इति अग्निहोत्रशब्दः आघारशब्दश्च किं गुणविधिः, उत कर्मनामधेयमिति विचारे सिद्धान्तमाह । विधेयतया इष्टो

यो गुणः अग्निरूपः आज्यरूपो वा, तं गुणं प्रचष्टे विधत्ते इति तत्प्रख्यम् । 'आतश्चोपसर्गे' (पा. ३।३।१०६) इति कः । विधित्सितस्य अग्न्यादिगुणस्य प्रख्यापकं विधायकं अन्यत् शास्त्रमस्ति । 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति' 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः' इति मन्त्रः 'यदग्नये च प्रजापतये च सायं जुहोति' इत्यादि वाक्यं च अन्यत् शास्त्रम् । एवम् 'प्राञ्चमाघारयति संततमाघारयति' 'इन्द्र ऊर्ध्वोऽध्वर इत्याघारमाघारयति' इति आघारविषयकमन्यत् शास्त्रम् । तस्मात् अग्निहोत्रं आघारः इति कर्मविशेषनामधेयमेव, न गुणविधायकम्, इति सिद्धान्तः । के.

* तत्प्रख्याधिकरणे वाक्यान्तरतो द्रव्यदेवतालाभस्य उक्तत्वात् । तत्प्रख्यन्यायः । सु. पृ. ७६३. * तत्प्रख्याधिकरणोक्तमार्गेण ( अग्निहोत्रशब्दे ) चतुर्थीसमासस्य व्याकरणलक्षणाननुगततया । कौ. २।२।५।१५, * 'यदग्नये च प्रजापतये च' इत्यत्र तत्प्रख्याधिकरणोक्तमार्गेण प्रजापतिमात्रविधानेन, सायंप्रातःकालीनदेवतासमुच्चयविशिष्टप्रजापतिमात्रविधानेन वा अग्निसूर्यादीनां मन्त्रवर्णैः प्राप्तिमभ्युपगम्य तृतीयविधिप्रकारोपपत्तेः । २।२।५।१६ पृ. १९९.

**तत्प्रख्यन्यायः । अग्निहोत्राघारशब्दौ कर्मनामधेयम् ॥**

**तत्प्रख्यं चान्यशास्त्रम् । १।४।३।४ ॥**

**भाष्यम्**— 'अग्निहोत्रं जुहोति स्वर्गकामः' इति, 'आघारमाघारयति' इति च समामनन्ति । तत्र संशयः किमग्निहोत्रशब्दः आघारशब्दश्च गुणविधी, उत कर्मनामधेये इति । गुणविधी इति ब्रूमः । कुतः ? गम्यते हि, अग्नये होत्रमस्मिन्निति । तथा क्षरणसमर्थं द्रव्यं घृतादि, आघारमाघारयति इति । प्रसिद्धिरेवमनुग्रहीष्यते । गुणविधिश्च दर्विहोमे, आघारश्चोपांशुयाजे । तत्र एतयोरर्थवत्ता प्रवृत्तिविशेषकरत्वं च । न च गुणविधिपक्षे लक्षणा भवति यथा उद्भिदा यजेत इति । अग्निहोत्रे समासेन अवगतं गुणविधानम् । आघारेऽपि, आघारं निर्वर्तयतीति श्रुत्यैव गुणो विधीयते । तस्मात् गुणविधी इति । एवं प्राप्ते, ब्रूमः । तत्प्रख्यं चान्यशास्त्रम् । यौ गुणौ एताभ्यां विधीयेते इत्याशङ्क्यते तौ अन्यत एवावगतौ । 'यदग्नये च प्रजापतये च सायं जुहोति' इति देवताविधानम्, 'चतुर्गृहीतं वा एतदभूत् तस्याऽऽघारमाघार्य' इत्याघारे च द्रव्यविधिः । अविदितवेदनं च विधिरित्युच्यते । विदितं चात्र अन्यतो गुणविधानम् । तस्मान्न गुणविधी, कर्मनामधेये तु संभवतः । यस्मिन् अग्नये होत्रं होमो भवति तदग्निहोत्रम् । दीर्घधारा क्षरणक्रिया प्रसिद्धः एव आघारः । तस्मात् कर्मनामधेये । प्रसिद्ध्यादयश्च उक्तोत्तराः । प्रजापतिनिवृत्त्यर्थमग्निविधानं भविष्यतीति चेत्, नैतदेवम् । अग्निं ह्येष विधातुं शक्नोति, न प्रजापतिं प्रतिषेद्धुं प्रतिषिध्यमानस्य च प्रजापतेर्विधानं अनर्थकं स्यात् । प्रजापतिर्देवतेति गम्यते । गम्यमानं च न शक्यं मिथ्येति कल्पयितुम् । अतोऽयमसमाधिः । उच्यते । 'आघारमाघारयति' इति द्रव्यपरा चोदना 'यैस्तु द्रव्यं चिकीर्ष्यते' इति । द्रव्यं हि अनया क्रियया क्षार्यते । क्षारितं च यागं साधयति । तत् कस्य प्रधानस्य कर्मणो नामधेयमिति ? उच्यते । एतदेव आघारणं प्रधानकर्म । नन्वस्य द्रव्यदेवतं नास्ति । अस्तीति ब्रूमः । 'तस्याघारमाघार्य' इत्याज्यं द्रव्यम्, मान्त्रवर्णिकी देवता । 'इन्द्र ऊर्ध्वोऽध्वर इत्याघारमाघारयति' इति मन्त्रो हि अभिदधत् कर्म तत्साधनं वा कर्मणि समवैति । एष च मन्त्र इन्द्रमभिधातुं शक्नोति । स यदि इन्द्रस्तत्साधनं भवेत् एवमनेन मन्त्रेण आघारः शक्यते कर्तुम् । तस्मादिन्द्रो देवता । द्रव्यदेवतासंयुक्तमाघारणम् । तस्माद्यजतिः, तस्य यजतेर्नामधेयमिति ।

वा— ननु सर्वत्र द्विप्रकारमेव नामपदम्, सांविज्ञायिकम् ( रूढम् ) यौगिकं च । उभयमपि च अधिकरणद्वयेन प्रतिपादितम् । किमिदानीमवशिष्यते, येन पुनर्विचार्यते ? उच्यते । यौगिकानामेव मत्वर्थलक्षणापरिहारेण अत्र चिन्ता । उत्तराधिकरणे तु सांविज्ञायिकानां वाक्यभेदासंभवात् । तत्र अग्नये होत्रं ( होमः ) अस्मिन् इति सिद्धान्तेऽपि अभ्युपगमात् अन्यसमासार्थानुपलब्धेश्च अन्तर्णीतमत्वर्थो बहुव्रीहिः अखेदेन गुणं विधत्ते । ते एव च प्रसिद्ध्यादयो हेतवः सत्यामपि च सायंहोमे अग्निप्राप्तौ तद्वर्जं प्रातर्होमे होममात्रानुवादाद्वा

सर्वदर्विहोमेषु अविहितदेवताकेषु विधास्यति वाक्यसामर्थ्यात् । तथा आघार्यते इति आघारः इति क्षारणसमर्थं द्रव्यं आज्यपयःप्रभृति अभिधीयते । तच्च द्वितीयानिर्देशात् क्षारणक्रियासंस्कार्यत्वेन अध्यवसीयमानं अनुपयुज्यमानसंस्कारानुपपत्तेः प्रयोजनमपेक्षते । धर्ममात्रं चास्य क्षारणं शब्दार्थमात्रापवर्गित्वात् नाशेषक्षारणं करोति । तत्क्षारितैकदेशेन किं कर्तव्यम् ? इति अस्त्यपेक्षा । लोकेऽपि च द्रवद्रव्याणां क्वचित् पानादौ उपयोक्ष्यमाणानां ईषत्क्षारणसंस्कारं कुर्वन्ति । तेन अभिषवयुक्तपूतीकवत् भक्षणयुक्तफलचमसवच्च संस्कार्यं द्रव्यं कर्ममात्राभिलाषि । प्रकरणवशेन दर्शपूर्णमासप्रधानानि उपसर्पति । तत्रापि च आग्नेयादीनां विहितद्रव्यकत्वात् उपांशुयाजः केवलः साकाङ्क्षः इति तादर्थ्यं प्रतिपद्यते । आह च 'श्रुतसंस्कारसंबन्धं मुख्यैर्यद्यप्यसंगतम् । अन्यथा तदयोग्यत्वात् प्रकृतैर्याति संगतिम् ॥' अथवा यत् 'करोति' इति प्रत्ययार्थमात्रं साकाङ्क्षत्वादेव उपांशुयाजभावनामनूद्य आघारद्रव्ये वाक्येन विधीयमाने तत्साध्यत्वादेव धात्वर्थः प्राप्तः अनूद्यते । ध्रौवप्राप्त्यैव वा तस्य क्षरणात्मकत्वे विज्ञाते क्षरणसमर्थमात्रपयःप्रभृतिविधिं मन्यते । न च धात्वर्थादेव सिद्धेः नाम्ना प्रयोजनम् । न च संस्कारकर्माणि क्वचित् नामवन्ति दृश्यन्ते ।

'श्रुत्यैव गुणो विधीयते' इति ( भाष्यम् ) । द्वितीयाश्रुत्यैव संस्कार्यत्वात् अवश्यं क्वचित् अस्य गुणत्वमित्यवगमाभिप्रायम् । अत्रोच्यते । 'विधित्सितगुणप्रापि शास्त्रमन्यद् यतस्त्विह । तस्मात् तत्प्रापणं व्यर्थमिति नामत्वमिष्यते ॥' ( शङ्कते– ) अत्र वदामः, 'सायंहोमे यदि ब्रूयादाघारे च परो विधिम् । ततः शास्त्रान्तरप्राप्तेर्विधिः स्यान्निष्प्रयोजनः ॥ यदा त्वदेवते होमे देवताविधिरुच्यते । द्रव्यं चोपांशुयाजस्य तदा तत्प्रख्यता कथम् ॥' उच्यते । 'विधिश्चेदग्निहोत्रं स्यात् ततोऽस्य विषयैषिणः । निवेशः प्रकृते वा स्याद् युक्तेरप्रकृतेऽपि वा ॥ अग्नेर्होत्रेण संबन्धे कृतेऽन्येन प्रवर्तनात् । अग्निहोत्रपदे स्पष्टमनुवादत्वलक्षणम् ॥ अनूद्य चापि धात्वर्थं गुणः सर्वो विधीयते । न चानुवादः प्रकृतात् कर्मणोऽन्यत्र लभ्यते ॥ प्रकृतं चेदनूद्यायं गुणो होमे विधीयते । तत्र तत्प्रख्यताऽन्यत्र न विधिस्तत्परिग्रहात् ॥ न च धात्वनुवादोऽत्र कथञ्चिदुपपद्यते । प्रकृताप्रकृताभावात् तस्मात् कर्म विधीयते ॥ सायमूर्ध्वादिसंयुक्तैर्गुणो वाक्यैर्विधीयते । शुद्धं न श्रूयते कर्म प्रकृतं नास्ति तेन तत् ॥ दूरस्थस्यानुवादश्च व्यवधानान्न युज्यते । तस्य बुद्धावनारोहात् कौण्डपायिनहोमवत् ॥ विधीयतां विशिष्टं चेत् कर्मेत्येवं विकल्प्यते ( अन्यथा पूर्वपक्षो रच्यते इत्यर्थः ) । न चेदन्येन शिष्टाः स्युस्तत्प्रख्यं चेति चोत्तरम् ॥ न चतुर्थीसमासस्य लक्षणं चात्र विद्यते । न च तेन विना शक्या देवताविधिकल्पना ॥ यः कश्चिदेव संबन्धः षष्ठीतत्पुरुषाद् भवेत् । अनुवादेऽन्यतः सिद्धे कथ्येताप्यश्वघासवत् ॥ विधातव्यश्च संबन्धो भवेत् परपदार्थयोः । प्रातर्होमेऽपि तेनैष वह्निनैव विधीयते ॥ एकदेशेऽपि च ज्ञानान्नानुवादोऽपगच्छति । आघारस्यापि संबन्धः क्लेशेनोपांशुकर्मणा ॥ सामानाधिकरण्यं च साध्यांशेनेह कर्मणः । विस्पष्टं द्रव्यनामत्वं न चाऽऽघारस्य गम्यते ॥'

शा— अत्रोच्यते 'वाक्यार्थो न विधातव्यो धात्वर्थविधिसंभवे । पदान्तरं न चानन्यगतिनामत्वसंभवात् ॥' (प्राभाकरास्तु–"प्रवृत्तिहेतुभूतकार्याभिधानं लिङादीनां व्युत्पन्नम् । प्रवृत्तिहेतुत्वं च विलक्षणकार्यस्यैव, कार्यसामान्यज्ञाने प्रवृत्त्यदर्शनात् । एवं च विशेषतः कार्यप्रतिपत्त्यर्थं अवच्छेदकापेक्षायां धात्वर्थः अवच्छेदकतया संबध्यते । यद्यपि धात्वर्थः साक्षात् कार्यमवच्छेत्तुं न क्षमते, तथापि 'यागकृतिसाध्यमपूर्वम्' इत्येवं कृत्यवच्छेदद्वारा कार्यं अपूर्वमवच्छेत्तुं शक्नोति, इति धात्वर्थः अवच्छेदकत्वेन संबध्यते । अवच्छेदकत्वमेव विषयत्वम्, इति धात्वर्थस्य यागादेः लिङाद्यर्थे कार्ये प्रतिपत्त्यनुबन्धितया विषयत्वेनान्वयः । तथा कार्यं कृतिसाध्यं भाव्यं इति पर्यायः । ततश्च भाव्यरूपापूर्वोद्देशप्रवृत्ता या कृतिः, सा भावनेत्युच्यते ।

सा च क्रियात्वात् करणमन्तरेणानुपपन्ना, इति कृतिसाध्यलक्षणकार्यस्य स्वनिष्पत्त्यर्थं स्वसाधनार्थप्रवृत्तकृतिरूपभावनामुखेन करणापेक्षायां धात्वर्थं एव उत्पत्त्यनुबन्धित्वेन करणतयाऽपि संबध्यते। परोद्देशप्रवृत्तकृतिव्याप्यत्वं हि करणत्वम्। संभवति च धात्वर्थस्य अपूर्वोद्देशप्रवृत्तकृतिव्याप्यस्य करणत्वमिति। तस्मात् धात्वर्थो विषयतया करणतया च अन्वीयते" इति वदन्ति। तन्मतं निरस्यति–) एतेन (धात्वर्थस्य करणतया साध्यतया चान्वयनिरसनेन) ये धात्वर्थस्य विषयतया करणत्वेन चान्वयं मन्यन्ते, ते निराकृताः। विषयभूतेन हि कथं करणवाचिनां नामधेयानां सामानाधिकरण्यम्? आर्थिकेन करणत्वेन सामानाधिकरण्यमिति चेत्, साध्यत्वमपि तर्हि आर्थिकमस्ति, इति गुणविधिरपि विनैव मत्वर्थलक्षणतया, विना च वैरूप्येण स्यात्, इति समस्तमेव नामधेयप्रतिपादनमनुपपन्नं स्यात् (यद्यपि तन्मते करणत्वमौपादानिकम्, न त्वार्थिकं इत्यस्ति वैषम्यम्, तथापि करणत्वं विना अनुपपद्यमानो विधिरेव साध्यत्वं विना करणत्वानुपपत्तेः साध्यत्वमपि आक्षिपेत्, इति साध्यत्वमपि औपादानिकं स्यात्, इति साम्यमिति भावः)। अथ विषयत्वद्वारेण करणत्वपर एव शब्दः ततः अन्यपरेण शास्त्रेण उपायमात्रत्वेनोपात्तं विषयत्वं न शास्त्रार्थः स्यात्, अतत्परत्वात् (शब्दान्तराधिकरणे तैर्विषयत्वस्य शास्त्रार्थत्वव्युत्पादनात् विरोधप्रसङ्गात्)। अथ शब्द एव प्रथमं विषयतया अभिधाय पुनः करणतयाऽपि अभिधत्ते, कथं सकृदुच्चरितो द्विरभिदध्यात्, अभिधाने वा साध्यत्वमपि पुनरभिदधीत, नहि नियामकमस्ति 'द्विरेवाभिधत्ते, न त्रिः' इति, 'सकृत् प्रवृत्तायाः किमवगुण्ठनेन' इति न्यायात्। ततश्च गुणविधिरपि स्यात् इत्युक्तम्। अतः करणत्वेनैवान्वयो वाच्यः, न विषयत्वेन इत्यास्तां तावत्।

कथं द्वितीयाश्रुतिनिर्देशः ('आघारमाघारयति' 'अग्निहोत्रं जुहोति' इत्यत्र) इति वक्तव्यम्। तदुच्यते। अस्ति तावदार्थिकं धात्वर्थस्य साध्यत्वम्, असाधितस्य करणत्वानुपपत्तेः। अतः साध्यत्वसाधनत्वयोर्द्वयोः एकार्थसमवायात् साध्याभिधायिनी द्वितीया साधनत्वमेव लक्षयन्ती धातुसामानाधिकरण्यं प्रतिपद्यते इत्यविरोधः।

**सोम** — इह गुणविधित्वेऽपि न वाक्यभेदः इत्युत्थानात् संगतिः। सूत्रार्थस्तु– तस्य विधित्सितगुणस्य प्रख्यं प्रख्यापकं अन्यत् शास्त्रं यत्र, तदपि नामधेयं स्यात् इति।

**वि** —'अग्निहोत्रं जुहोत्याघारमाघारयतीत्यमू। विधेयौ गुणसंस्कारावाहोस्वित् कर्मनामनी ॥, अग्नये होत्रमत्रेति बहुव्रीहिगतोऽनलः। गुणो विधेयो नामत्वे रूपं न स्यात् क्षरद्घृते ॥, संस्क्रियाऽऽघारमाघारयतीयुक्त्वा द्वितीयया। आघारेत्यग्निहोत्रेति यौगिके कर्मनामनी ॥ अग्निर्ज्योतिरिति प्राप्तो मन्त्राद् देवस्तथा घृतम्। चतुर्गृहीतवाक्योक्तं द्वितीयायास्त्वियं गतिः ॥ नासाधिते हि धात्वर्थे करणत्वं ततोऽस्य सा। साध्यतां वक्ति संस्कारो नैवाशङ्क्यः क्रियात्वतः ॥'

**भाट्ट**—इह रूढानां यौगिकानां वा संभवत्प्राप्तिकानाम् 'अग्निहोत्रं जुहोति' 'आघारमाघारयति' 'समिधो यजति' इत्यादौ अग्निहोत्रादिपदानां गुणविधित्वम्, कर्मनामधेयत्वं वेति चिन्तायाम्, प्रसिद्धेर्गुणविधित्वमेव युक्तम्। न च वाक्यभेदः, विधेयानेकत्वाभावात्। अग्निहोत्रपदे 'अग्नये होत्रमस्मिन्' इति व्युत्पत्त्या उपसर्जनार्थः अग्निर्देवता विधीयते। न च 'यदग्नये च प्रजापतये च सायं जुहोति' इत्यनेन तस्याः प्राप्तत्वादविधानम्, तत्रानेकगुणोपादानेन विशिष्टकर्मान्तरविधेरावश्यकत्वात् एतद्वाक्यविहितकर्मणि तत्प्राप्तेरभावात्। अतो यत्र दर्वीहोमादौ आग्नेयो मन्त्रः पठितः,तादृशदर्वीहोमानुवादेन देवतामात्रमनेन विधीयते। न च तेन तत्प्राप्तिसंभवः, मान्त्रवर्णिकविधेः अकल्पनीयत्वात्। विशिष्टकर्मान्तरं वा। आघारपदेऽपि द्वितीयान्ताघारपदेन क्षरणसाधनाज्यादिद्रवद्रव्यमभिधीयते। धातुना क्षरणाख्यः संस्कारः तदुद्देशेन विधीयते, अविनियुक्तस्य संस्कारायोगात्। प्रकरणकल्पितवाक्येन उपांशुयागाङ्गतया द्रवद्रव्यं विधीयते। 'चतुर्गृहीतं वा एतदभूत्, तस्याघारमाघार्य' इत्यनेन प्रयाजाङ्गभूतचतुर्गृहीतविशेषसमर्पणम्। सर्वथा आघारपदं द्रव्यपरम्, न नामधेयम्। इति प्राप्ते, मन्त्रवर्णकल्प्यविधिनैव प्राप्तिसंभवे अस्य पूर्वप्रवृत्तविधि-

वैफल्यापत्तेः । अभ्युदयशिरस्कत्वस्य च संभवति प्रथमविध्यापादकधात्वर्थविधौ अन्याय्यत्वात् न तावत् दर्वीहोमानुवादेन देवताविधिः । नापि विशिष्टकर्मान्तरविधिः 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' इति वचनेन विनियुक्तमन्त्रवर्णेनैव देवताप्राप्तेः । 'यदग्नये च प्रजापतये च सायं जुहोति, यत् सूर्याय च प्रजापतये च प्रातः' इत्यत्र सायप्रातःकालीनदेवतासमुच्चयविशिष्टप्रजापतिमात्रविधानम् । अत एव यथैव केवलदेवत्यमन्त्रलिङ्गेन केवलयोर्देवतात्वम्, तथा 'अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेति सायं जुहोति, सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातः' इति मिश्रलिङ्गकमन्त्रवर्णात् मिश्राणामपि तत् ( देवतात्वम् )। ततश्च 'यदग्नये च' इति वाक्यस्थाग्निसूर्यपदं सायंप्रातःकालीनदेवतालक्षकम् । सायंप्रातःकालपदं तात्पर्यग्राहकम् । चशब्दोपस्थितसमुच्चयस्य प्रजापतौ अन्वयस्य निपातोपसर्गार्थत्वेन व्युत्पन्नत्वात् न विधेयानेकता । अतश्च अग्नेर्देवतात्वादिना अग्निहोत्रहोमे प्राप्तत्वात् अग्निहोत्रहोमे 'अग्नेर्होमः' इति व्युत्पत्त्या नामधेयम् । एवमाघारेऽपि उपांशुयाजे 'सर्वस्मै वा एतद् यज्ञाय गृह्यते, यद् ध्रुवायामाज्यम्' इत्यनेनैव द्रवद्रव्यस्य प्राप्तत्वात् प्रयाजोद्देशेन संस्कारविधाने द्वितीयविधिप्रकारापत्तेः लाघवात् भावव्युत्पन्नमाघारपदं नामधेयम् । विधेयश्च धातुलक्ष्यो होम एव । 'इन्द्र ऊर्ध्वोऽध्वर इत्याघारमाघारयति' इति मान्त्रवर्णिकेन्द्रदेवतायाः, 'चतुर्गृहीतं वै' इत्यनेन द्रव्यस्य च लाभात् । एवं समिदादिष्वपि वक्ष्यते । सर्वत्र द्वितीया करणत्वलक्षणार्था इति न विरोधः ।

**मण्डन**— 'अग्निहोत्रपदं नाम ।'

**शंकर**— 'तत्प्रख्यन्यायतो नाम ।' ४.

* **तत्प्रख्यन्यायस्तु** कर्मान्तरसिद्ध्युत्तरकालः संभवन्नपि ततः पूर्वमनुपस्थितेर्न नामधेयत्वबोधकः । कौ. २।२।८।२१ पृ. २५०, * एकदेशप्रवृत्तिनिमित्तेनापि **तत्प्रख्यन्यायेन** नामधेयत्वोपपत्तिः वैश्वदेवाधिकरणे वक्ष्यते । १।४।४।४ पृ. २१०, * 'न प्रवृत्तिनिमित्तमपि तत्प्रख्यन्यायेन संपादनीयम्' इति नियमः किन्तु तस्य सहकारिसहकृतस्य शुद्धस्य वा गुणविध्यसंभवसंपादकत्वमात्रम् । १।४।११।१४ पृ. २५१, * 'नामधेयत्वं च ( वैश्वदेवशब्दस्य ) उत्पत्तिशिष्टगुणावरोधसहकृतेन तत्प्रख्यन्यायेन गुणविध्यसंभवसंपादनद्वारा स्वापादितप्रकृतिनिमित्तसंपादनद्वारा वा अवगन्तव्या, न तु शुद्धेन तत्प्रख्यन्यायेनैव । १।४।११।१४ पृ. २५०, * ( 'विश्वदेवशब्दस्य क्लृप्तामपि देवताविशेषरूढिं परित्यज्य विश्वशब्दस्य सर्वशब्दपर्यायत्वाङ्गीकारेण प्रकृतसर्वविषयत्वमापाद्य देवशब्दस्य च देवतापरत्वमङ्गीकृत्य प्रकृताग्न्यादिसर्वदेवताकत्वस्यैव अष्टस्वपि यागेषु प्रवृत्तिनिमित्तत्वमङ्गीक्रियते' इति पक्षे ) नावश्यं **तत्प्रख्यन्यायस्य** नामत्वपर्यन्तव्यापारोऽभ्युपगन्तव्यः । १।४।११।१४ पृ. २५१, * **न च** संज्ञाया अपि प्रकृते ( समित् तनूनपात् इ० ) तत्प्रख्यन्यायसिद्धत्वेन अभ्यासस्य यागविध्यधीनत्वाभावात् इति **वाच्यम्** । प्रकृतोदाहरणेऽपि तत्प्रख्यस्य (**तत्प्रख्यन्यायस्य**) गुणविधिमात्रप्रतिबन्धकत्वात् । २।२।२।२ पृ. १५०.

* **तत्प्रख्यन्यायस्वरूपम्**— '**वाक्यार्थो न विधातव्यो धात्वर्थविधिसंभवे**' इति । शा. १।४।४.
* तत्प्रख्यन्यायस्वरूपं 'विधित्सितगुणप्रापि शास्त्रमन्यद् यतस्त्विह । तस्मात् तत्प्रापणं व्यर्थमिति नामत्वमिष्यते ॥' इति । वा. १।४।३।४ पृ. ३३४.

( अथ ये पदार्थाः तत्प्रख्यन्यायेन साध्यन्ते, ते पदार्थाः वर्णक्रमानुसारेण स्थूलाक्षरैर्निर्दिश्यन्ते । न तु बिन्दूनामाद्याक्षरगतक्रमेण ) ।

* 'अथातोऽग्निमग्निष्टोमेनानुयन्ति' अत्र **अग्निपदस्य** यागपरत्वं गम्यते । अस्ति च आहवनीयप्राप्त्या तत्प्रख्यन्यायः । पूर्वपक्षे । कौ. २।३।१०।२१ पृ. ६५, * **अग्निष्टुत्पदम्** 'आग्नेयीषु स्तुवते' इति वचनात् अग्निदेवत्यमन्त्रसाध्यस्तोत्राङ्गकत्वात् तत्प्रख्यन्यायेन नामधेयम् । २।२।१२।२६ पृ. २७८. * तत्प्रख्याधिकरणे **अग्निहोत्रस्य** अग्निसूर्यमात्रप्रधानदेवत्यत्वस्य निरूपितत्वात् । कु. ३।४।२।११, * तत्प्रख्यन्यायेन **अग्निहोत्रादिशब्दाः** नामधेयानि । १।४।१२।१५. * 'अग्निहोत्रं जुहोति' इत्यस्योत्पत्तिविधित्वम् 'दध्ना जुहोति' इत्यादीनां च गुणविधित्वमुक्तमिति चेत् सत्यम् । अग्निहोत्रं जुहोतीत्यत्र यद्यपि रूपं

नोपलभ्यते, तथापि अग्निहोत्रशब्दस्य तत्प्रख्यन्यायेन नामधेयत्वादित्युक्तमिति । **साहस्री. ८५३.** ॐ चतुर्थी-तत्पुरुषचतुर्थीगर्भबहुव्रीह्योरसंभवात् (अग्निहोत्रशब्दे) नैयमिके नामधेयत्वपक्षे तत्संभवः तत्प्रख्याधिकरणे प्रपञ्चितः । **सोम.** ७।३।१. ॐ 'आग्नेयोऽष्टाकपाल:' इत्यत्र मान्त्रवर्णिकदेवताप्राप्तेरसंभवात् नेदम् ( आग्नेयपदम् ) तत्प्रख्यन्यायेन नामधेयम् । **कौ.** १।४।७।९ पृ. २३०. ॐ **आग्नेयादीनां** अष्टानामपि यागानां नामधेयं वैश्वदेवशब्दः ( चातुर्मास्येषु प्रथमे पर्वणि ) उत्पत्तिशिष्टदेवताऽवरोधसहकृततत्प्रख्यन्यात् । **भाट्ट.** १।४।११. ॐ **आग्नेयादिशब्दस्य** 'चतुरवत्तं जुहोति' इति श्रुतहोमनामत्वेन पूर्वपक्षो भविष्यति । चतुरवत्तवाक्यात् होमनिष्पत्तावपि आग्नेयादिशब्दानां कथं तन्नामता इत्याशङ्क्य, क्रमविनियुक्तमन्त्रवशात् देवताप्राप्तेः तत्प्रख्यन्यायेनैव ( तेषां तन्नामता ) । **सु.** पृ. ४५८, ॐ ननु **आघारकर्मणो** द्रव्यदेवताऽन्वयेन यागरूपतायाः तत्प्रख्याधिकरणे अभिहितत्वात् । पृ. ७६१. ॐ तत्प्रख्याधिकरणे **आघारशब्दः** क्षारणशिरस्कयागात्मकहोमे वर्तते इत्यवोचाम । **कु.** २।३।९।२०. ॐ संज्ञात्वं च **ग्रहणस्य** ( अदाभ्यादिग्रहणस्य ) ग्राह्यसंस्कारत्वप्रसिद्धेः ज्योतिष्टोमाङ्गताबलेन तदीयसोमसंस्कारार्थत्वप्रतीतेः शक्यार्थस्य तत्प्रख्यन्यायेन प्राप्तत्वात् । **कौ.** २।३।९।२० पृ. ६३. ॐ ननु दक्षिणानयनोत्तरकालं एतद्धोम-( दाक्षिणहोम- ) विधानात् क्रमेणैव दक्षिणाकालत्वप्राप्तेः तत्प्रख्यन्यायेन **दक्षिणाशब्दस्य** नामत्वात् गुणविधित्वं नास्ति इत्याशङ्कते । **सु.** पृ. ७०३, ॐ ननु अग्निहोत्रादिनामवत् दधिपदस्यापि वैकल्पिकदधिप्राप्तेः ( दध्नेन्द्रियकामस्य इत्यत्र ) तत्प्रख्यन्यायेन नामत्वोपपत्तेः विधातव्यार्थत्वायोगात् । पृ. ८४४. ॐ **दर्विहोमशब्दस्य** तत्प्रख्यन्यायेन नामत्वं सिद्धम् । नामत्वस्य तत्प्रख्यन्यायसिद्धत्वादेव गुणविधित्वमुक्तम् । **सोम.** ८।४।१. ॐ **नवरात्रपदमत्र** कर्मनामधेयं तत्प्रख्यन्यायात् । ( आश्विने मासे देव्याः नवरात्रम् ) । **व्रतराजः.** ॐ **पौर्णमासी-अमावास्या-शब्दः** 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इति वाक्यद्वयप्राप्तपौर्णमास्यमावास्याकालयोगेन तत्प्रख्यन्यायेन नामधेयम् । **कौ.** २।२।३।३ पृ. १६३, ॐ **बहिष्पवमानशब्दस्तु** सदसो बहिर्भावस्य आस्तावरूपदेशविधानादेव प्राप्तत्वात् तत्प्रख्यन्यायेनापि नामधेयं तत् । १।४।३।३ पृ. १८७, ॐ तत्प्रख्यन्यायेन **वाजिनपदेन** आमिक्षायागमात्रमनूद्य वाजिदेवता उत्पन्नशिष्टाऽपि वचनाद् विधीयते ( पूर्वपक्षे ) । २।२।९।२२ पृ. २५८, **वैश्वदेव-दर्विहोमादिपदानामपि** तत्प्रख्यन्यायादेव नामधेयत्वम् । १।४।५।५ पृ. २१८, ॐ न च **समिदादिदेवतानां** याज्यामन्त्रवर्णैरेव संभवत्प्राप्तिकत्वात् अग्निहोत्रं जुहोतीतिवत् तत्प्रख्यन्यायविषयत्वोपपत्तिः 'वसन्तमृतूनां प्रीणामि' इत्याद्यनुमन्त्रणमन्त्रैः वसन्तादिदेवतानामपि प्राप्तिसंभवेन समिदादीनां नित्यप्राप्त्यभावात् । २।२।२।२ पृ. १४४, ॐ **समिदादिपदानां** तत्प्रख्यन्यायेन नामधेयत्वात् । २।२।२।२ पृ. १४८. ॐ प्रयाजेऽपीति चेत् (९।२।२०।५८) इत्यधिकरणे श्रुत्यविनियुक्तानां मन्त्राणां स्वार्थसमवायकल्पकत्वासंभवात् मान्त्रवर्णिकदेवताप्राप्त्यभावेन तत्प्रख्यन्यायाभावात् नामधेयत्वानुपपत्तेः 'विष्णुं यजति' इतिवत् **समिदादिशब्दानां** द्वितीयान्तानां देवानां विधित्वं पूर्वपक्षयित्वा । **सु.** पृ. ७१९. ॐ 'सोमेन यजेत' इत्यत्र **सोमशब्दः** 'सोमं क्रीणाति', 'सोममभिषुणोति' इत्यादिवाक्यप्राप्तार्थानुवादी भवन् तत्प्रख्यन्यायेन नामधेयं भवति । पूर्वपक्षः । **कु.** २।२।६।१६, ॐ अभिषवादिवाक्यतः सोमप्राप्तिमुपजीव्य सोमवाक्ये **सोमशब्दस्य** तत्प्रख्यन्यायेन ऐन्द्रवायवादियागनामधेयत्वं निरस्तम् । २।२।६।१७. ॐ **स्वाहाकारशब्दः** तत्प्रख्यन्यायेन नामधेयम् । **कौ.** २।२।२।२ पृ. १४५.

ॐ **तत्प्रख्यशास्त्रार्थः**— यस्य गुणस्य उपादानसामर्थ्यात् धात्वर्थादुत्तार्यते विधिः, असौ श्रौतधात्वर्थविधावेव शास्त्रान्तरप्राप्तो नामप्रवृत्तिनिमित्तत्वेन अनुवदितुं शक्यते, किं श्रुतिपरित्यागेन—इति । **तौता.** तत्प्रख्ये ।

ॐ '**तत्प्रधानानि अतत्प्रधानेभ्यो बलीयांसि भवन्ति**' एष विनिगमनायां हेतुः, येन उभयीष्वपि

श्रुतिषु सतीषु अनाकारमेव ब्रह्मावधार्यते न पुनर्विपरीतमिति । शांभा. ३।२।५।१४ ब्रसू.

* तत्प्रयुक्तत्वं तत्प्रयोजनवत्त्वम् । सु. पृ. १३७९.

* तत्प्रवृत्तिर्गणेषु स्यात् ( ८।१।८।१५ ) इति अष्टमाधिकरणे प्राजापत्येषु एकादशिनीविध्यन्तातिदेशस्य वक्ष्यमाणत्वात् तस्य न्यायस्य भिन्नयागविषयत्वात् । सु. पृ. ८१३.

**तत्प्रवृत्तिर्गणेषु स्यात् प्रतिपशुयूपदर्शनात् । ८।१।८।१५ ॥**

ऐकादशिनेषु पशुषु प्रत्येकं भिन्नो यूपो भवति । गणाः अत्र पशुगणा विवक्षिताः । ' वसन्ते ललामान् त्रीन् वृषभानालभते ' इति ' मैत्रं श्वेतमालभेत वारुणं कृष्णमपां चौषधीनां च संधौ अन्नाद्यकामः ' इति चैवमादयः । अत्रापि ' यत् त्रिषु यूपेषु आलभेत बहिर्धा अस्मात् इन्द्रियं वीर्यं दध्यात्, भ्रातृव्यमस्य जनयेत्, एकयूपे आलभेत ' इति यूपत्रित्वं प्रतिषिध्य एकं यूपं सौत्रामण्यां विदधाति । अन्यत्र तु पशुगणेषु प्रतिपशु यूपो भिद्यते । सौत्रामण्यामपि यूपभेदस्य प्राप्तिर्दर्शितैव । तथा च पशुगणेषु ऐकादशिनेषु च प्रतिपशु यूपभेदः समानं लिङ्गम् । एवं च प्रतिपशु ये यूपाः ते प्रतिपशुयूपाः । प्रतिपशुयूपानां दर्शनं प्रतिपशुयूपदर्शनम् । प्रतिपशुयूपदर्शनात् लिङ्गात् गणेषु पशुगणेषु तत्प्रवृत्तिः तस्य ऐकादशिनपशुविध्यन्तस्य प्रवृत्तिः स्यात् । एवं च पशुगणानां ऐकादशिनाः पशवः प्रकृतिः । के.

**तत्प्रवृत्त्या तु तन्त्रस्य नियमः स्याद्, यथा पाशुकं सूक्तवाकेन । १२।२।१५।३५ ॥**

तस्य प्रवृत्त्या आग्रयणे द्यावापृथिव्यस्यैककपालस्य यत् प्रसूनं बर्हिः, तस्य प्रवृत्त्या वैश्वदेविकस्य तन्त्रस्य नियमः स्यात् । यथा पाशुकं तन्त्रं सूक्तवाकेन सूक्तवाकस्य प्रैषेण वैशेषिकेण ' अयं सुतासुती यजमानः ' इत्यनेन नियतं तद्वत् । तस्मात् आग्रयणे द्यावापृथिव्यमेव तन्त्रं स्यात् इति पूर्वः पक्षः ।

**न वा,ऽविरोधात् । ३६ ॥**

आग्रयणे वैश्वदेविकस्य तन्त्रस्य द्यावापृथिव्येन तन्त्रेण न नियमः स्यात् । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । अविरोधात् सपुष्पबर्हिस्तु धर्मः इतरेषामपि हविषां नैव विरुद्धः । तेन नासौ वैशेषिकः । तस्मान्न तेन इतरेषां नियमः इति सिद्धान्तः ।

**अशास्त्रलक्षणाच्च । ३७ ॥**

आग्रयणे द्यावापृथिव्ये एककपाले सपुष्पं बर्हिः न शास्त्रलक्षणं किन्तु चोदकप्राप्तम् । शास्त्रं लक्षणं प्रापकं प्रमाणं यस्य तत् शास्त्रलक्षणम् । तदभावः अशास्त्रलक्षणम् । अशास्त्रलक्षणत्वात् न तेन वैश्वदेविकैककपालतन्त्रस्य नियमः । चकारः समुच्चयार्थः । ऐन्द्राग्नैककपालतन्त्रस्यापि संभवात् इति । तस्मात् द्यावापृथिव्यानुरोधेन न वैश्वदेविकतन्त्रस्य नियमः इति सिद्धान्तः । के.

* तद्भूतानामित्यत्र ( १।१।७।२५ ) न पदानां समुदायः प्रत्यायकः इत्युक्तम् । भा. ५।१।४।५, * तद्भूतानामित्यत्र पदार्थो वाक्यार्थस्य मूलम्, नास्य पृथक् सिद्धिरस्ति इत्युक्तम् । १०।७।९।२९. * तद्भूतानां क्रियाऽर्थेन समाम्नायः इत्यत्र यैरर्थैः येषां शब्दानामौत्पत्तिकः संबन्धः, तेष्वर्थेषु वर्तमानानां शब्दानां सर्वकारकान्वितक्रियारूपवाक्यार्थे प्रमाणत्वोक्त्या प्रत्येकश्रुतिरूपाणां पदकारकविभक्त्याख्यानां शब्दानां प्रकृतिप्रत्ययार्थान्वयरूपे क्रियाऽन्वितकारकरूपे चार्थे व्यापाराभिधानात् लिङ्गस्य विनियोगकारणत्वं सिद्धम् । सु. पृ. ११९०.

* तद्भूताधिकरणम् । वाक्याधिकरणमिदम् । भा. १।१।७।२४–२६. * तद्भूताधिकरणेन सूत्रत्रयघटितेन करणासंभवात् धर्मप्रमित्यशक्तिं चोदनानामाशङ्क्य पदार्थकरणत्वप्रतिपादनेन चोदनाप्रामाण्यमेवोपपादितम् । बाल. पृ. ७. * श्रुतेर्विनियोजकत्वे तद्भूताधिकरणेनैव सिद्धेः । भाट्ट. ३।१।४ पृ. १८६. * तद्भूताधिकरणे अंशत्रयविशिष्टभावनारूपक्रियाप्रतिपादकत्वेन प्रामाण्यस्य स्थापितत्वात् (आम्नायस्य) । कौ. १।२।१।१ पृ. ६. * तद्भूताधिकरणे आम्नायस्य वेदस्य क्रियाऽर्थत्वात् किं केन कथं इत्येवं फलतःसाधनतदितिकर्तव्यतात्मकांशत्रयविशिष्टपुरुषप्रवृत्तिरूपभावनाप्रतिपादनार्थत्वावधारणात् । कु. १।२।१।१. * तद्भूताधिकरणे

पदार्थानेकत्वात् पदसंघस्य च पदार्थातिरिक्तैकार्थवाचितायाः निरस्तत्वात् पदसंघस्यानुदाहार्यत्वशङ्का । सु. पृ. ६८४. * तद्भूताधिकरणे श्रुतिवाक्ययोः अविरुद्धत्वमुक्तम् ( श्लोवा. १।१।७।३४७–३४८ ) ( तथा श्रुतिप्रकरणयोरविरोधः ) । वा. ३।२।८।२१ पृ. ७७५. * तद्भूताधिकरणे श्रुतिवाक्ययोः क्रियाऽन्वयबोधकत्वव्युत्पादनात् । कौ. ३।१।४।७. * यत्तु 'अस्त्यादिपरः प्रत्ययोऽपि भावनां जहाति ' इति, तुल्यं धातुसमुदायपक्षयोरप्येतत्, क्वचित् व्यभिचारस्य चोत्तरमुक्तं तद्भूताधिकरणे। वा. २।१।१।१ पृ. ३८१, * यतस्तु नित्यमेव व्यक्त्याकृत्योरविभागः तस्मात् व्यक्तिरभिहिता सती शक्नोत्येव आकृतिं गमयितुम् । तदुक्तं तद्भूताधिकरणे 'यस्य तु पदस्य योऽर्थोऽभिधेयत्वेन आश्रितः, तस्य तत्परिहारसंभवात् तत्रस्थस्यैवार्थान्तरं लाक्षणिकत्वेन अभ्युपगन्तव्यमिति ' ( इदं पूर्वपक्षे ) । १।३। ९।३० पृ. ३०१, * श्रुतिवाक्ययोः तद्भूताधिकरणे स्वरूपेण विनियोजकत्वस्य उक्तत्वात् । कौ. ३।३।४।११ पृ. ३२९. * संबन्धग्रहणमनपेक्ष्यैव आकाङ्क्षादिमतां पदार्थानां वाक्यार्थप्रतीतिजनकत्वसंभवेन समूलत्वात् अस्ति प्रामाण्यं इत्येवं तद्भूताधिकरणे व्युत्पादिते... । सोम. १।२।१. * यत्तु ' संबोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् । माध्यंदिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः ॥ ' इत्याद्यन्वाख्यानविधानम्, ' तत्र ब्रूमः पदात्मा नः सर्वेष्वेतेषु भिद्यते ' इति तद्भूताधिकरणोक्तेन न्यायेन लक्ष्याणां सान्तनान्तादिशब्दानां भेदात् अविरुद्धम् । सु. पृ. ३२३.

* यथा भावनाऽन्वयात् प्राक् कस्यचित् धात्वर्थान्वयो न संभवति, तथा ' तद्भूताधिकरणोक्तेन मार्गेण ' इत्यादिवार्तिकेन ( २।२।५।१६ पृ. ५०२ ) उक्तम् । सु. पृ. ७७०.

* तद्भूताधिकरणवार्तिके ' अयमेव विशेषश्च कथ्यते पदवाक्ययोः। अर्थवद्भागतुल्यत्वे प्रकृतिप्रत्ययार्थतः। ( वाक्याधिकरणे ) ३५५ ॥ दृष्टा यथा हि साकाङ्क्षाः पदार्थाः केवलाः क्वचित् । स्वातन्त्र्येण गृहीताश्च विशिष्टार्थावबोधकाः। ३५६ ॥ प्रकृतिप्रत्ययौ नैवं कदाचिदुपलक्षितौ । ( कदाचिदपि लक्षितौ इति मूले पाठः ) ३५७ ॥ ' इति वैषम्यस्य उक्तत्वात् न वाक्यभागपदार्थवत् पदभागप्रकृतिप्रत्ययार्थानामपि साकाङ्क्षत्वदर्शनपूर्वकान्वयावगतिः । सु. पृ. १४०६, * तद्भूताधिकरणवार्तिके सर्वकारकाणां स्वव्यापारेषु कर्तृत्वस्य उक्तत्वात् । पृ. १४५३.

**तद्भेदात् कर्मणोऽभ्यासः इति न्यायः ।** पशुसोमाधिकरणस्थं सूत्रमिदम् । भा. २।२।६।१९. * तद्भेदात् कर्मणोऽभ्यासः ( २।२।६।१९ ) इत्यनेन न्यायेन यागाभ्यासमात्रात् ग्रहभेदोपपत्तिः। सु. पृ.९४४.

**तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति न्यायः** वैयाकरणानाम् । प्रत्याहारा उदाहरणम् । तथा दीक्षणीयायां आद्यन्तयोः अग्नाविष्णवोस्तृप्तौ मध्यस्थाः सर्वा देवतास्तृप्यन्ति । ऐब्रासा. १।१।३. * तन्मध्यपतितस्तद्ग्रहणेन गृह्यते । ९० परि० । ' तदेकदेशभूतं तद्ग्रहणेन गृह्यते ' इति येन विधिरितिसूत्रे भाष्ये पाठः । शेखरः । तन्मध्यपतितन्यायस्य तत्तद्धर्मारोपप्रयोजकत्वम् । तथापि लक्षणाग्राहकत्वाभावः । भूतिः परि० १२ । * तन्मध्यपतितं तद्ग्रहणेन गृह्यते । सदर्थस्यैकवाक्यत्वावगमात् जीवपरमात्मपरत्वम् । तथा च तन्मध्यपतितं पिबन्तौ इत्येतदपि लाक्षणिकम् । कल्पतरुः. ३।३।२१।३४ ब्रसू. * स्थानिवद्भावेनैव तन्मध्यपतितन्यायेन तद्बुद्ध्यैव कार्यजननात् अकज्विषये नायं न्यायः ( निर्दिश्यमानस्यादेशा भवन्ति इति ) । शेखरः पृ. ७२ । ( नेदमदसोरकोः इत्यत्र– ) तन्मध्यपतितन्यायेन अकज्विशिष्टे एव शाब्दविषयतायाः पर्याप्तत्वबोधनेन तत्र निर्दिश्यमानत्वसत्त्वात् । ( भूतिः पृ. ७२)। ' अन्तात्यन्ते'तिसूत्रे अन्तग्रहणेन तन्मध्यपतितन्यायेन अत्यन्तग्रहणे सिद्धे तद्वैयर्थ्यापत्तिः स्यात् । ( भूतिः पृ. ७२ ) । तन्मध्यपतितन्यायबोधिते निर्दिश्यमानत्वमस्ति इत्यत्र ज्ञापकं तु ' किमः कः ' ( पा० ७।२।१०३ ) इति कादेशविधानमेव । अत एव ' किमः कादेशविधानं साकच्कार्थं ' इति भाष्यं संगच्छते । तत्त्वप्रकाशिका पृ. ७४. * हिनसानि—अत्र श्नमः तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति न्यायात् धातुग्रहणे नकाराकारः

उदात्तः । ततः परस्य स्वरितत्वम् । सि. कौ. धातुस्वरेषु सुबोधिनी. * तन्निष्ठोद्देश्यतानिरूपितविधेयताऽऽश्रयतन्मध्यपतितस्यैव **तद्ग्रहणेन ग्रहणम्,** न तु तन्मध्यपतितत्वमात्रेण । अन्यथा जनं रातीति जनराः इत्यत्र नशब्दस्य जरा इत्येतदक्षरद्वयमध्यपातित्वेन जराशब्दग्रहणेन ग्रहणापत्तौ जरसादेशापत्तेः । अत एव 'अन्तात्यन्त' इति सूत्रे (पा० ३।२।४८) अत्यन्तग्रहणं चरितार्थम् । अन्यथा अन्तग्रहणेन तन्मध्यपतितन्यायेन अत्यन्तग्रहणे सिद्धे तद्वैयर्थ्यापत्तिः । भूतिः पृ. ७२. * **तन्मध्यपतितन्यायस्य** लोकसिद्धत्वप्रतिपादकेन गर्भिणीस्थो गर्भो गर्भिणीग्रहणेन गृह्यते, गङ्गास्थो घटो गङ्गाग्रहणेन गृह्यते इत्यादिलौकिकव्यवहारप्रदर्शनपरेण भाष्यग्रन्थेन पतितपदस्वारस्येन च उक्तन्यायेन तत्सत्तोत्तरसत्ताकः तन्मध्यपतित एव तद्ग्रहणेन गृह्यते, न तु तदुद्देश्यतानिरूपकोऽपि । भाष्योक्तलौकिकव्यवहारे उद्देश्यताया अप्रवेशात् । इत्यादि केचित् । भूतिः पृ. ७३–७४, * **तन्मध्यपतितन्याये** तन्निष्ठोद्देश्यताया अपर्याप्ताया उद्देश्यताऽवच्छेदकसाधारणविषयताया वा ग्रहणेन उक्तसूत्रस्य (अन्तात्यन्त० ३।२।४८) चारितार्थ्यात् । इत्यादि केचिदाहुः । पृ. ७३. * पूर्वोत्तरब्राह्मणयोर्विद्याप्राधान्यदर्शनात् तन्मध्यपातिनोऽस्यापि तत्प्राधान्यम् । न्यायनि. ३।३।२९ ब्रसू.

**⌛ तद्युक्तं च कालभेदात् । १२।१।८।१७॥**

सोमे दीक्षाकालं रात्रिजागरणमाम्नातं दर्शपूर्णमासयोरपि औपवसथ्ये अहनि एकेषामाम्नातम् । तत् प्रायणीयादिषु चोदकेन प्राप्यते । तेषां तन्त्रमध्यपातात् दीक्षाकालेन जागरणेन प्रसङ्गसिद्धौ प्राप्तायां सिद्धान्त उच्यते । तद्युक्तं दीक्षायुक्तं च जागरणं न दार्शिके प्रसज्जते । कालभेदात् । यदि तावत् यज्ञाङ्गानां रक्षणाय अप्रमादार्थं ततो दीक्षाकालेषु रक्षितेषु नेतराणि रक्षितानि भवन्ति इति तद्रक्षणार्थं प्रायणीयाऽऽदिषु उपवसथकाले भेदेन कर्तव्यम् । अथापि अदृष्टार्थम्, तथापि औपवसथी रात्रिर्भिन्ना, इति निमित्तप्राप्तौ नैमित्तिकं कर्तव्यम् । तस्माद्भेदेन कर्तव्यं इति सिद्धान्तः । के.

* तद्युक्ते तु फलश्रुतिस्तस्मात् सर्वचिकीर्षा स्यात् । (३।७।३।९) इत्यत्र 'षट्त्रिंशत्प्रक्रमा प्राची' इत्यादिवाक्यविहिता वेदिः साङ्गसोमयागार्थत्वेनोक्ता । सु. पृ. ६३६.

**⌛ तद्वचनाद् विकृतौ यथाप्रधानं स्यात् । ५।१।१०।१७ ॥**

अध्वरकल्पायामिष्टौ 'आग्नावैष्णवमेकादशकपालं निर्वपेत् अभिचरन्, सरस्वत्याज्यभागा स्यात्, बार्हस्पत्यश्चरुः' इति हविस्त्रयं श्रूयते । तत्र बार्हस्पत्यस्य आग्नेयविकारस्य धर्माः पूर्वं कर्तव्याः, उत उपांशुयाजविकारस्य सारस्वतस्य इति विचारे पूर्वपक्षमाह सूत्रम् । विकृतौ अध्वरकल्पायां धर्मानुष्ठानं यथाप्रधानं प्रधानक्रममनुसृत्य स्यात् । तद्वचनात् तस्य प्रधानक्रमस्य वचनात् । प्रत्यक्षः प्रयोगवचनः चोदकात् बलवान् इति भावः । तथा च आदौ सारस्वतस्य पश्चात् बार्हस्पत्यस्येति पूर्वः पक्षः ।

**विप्रतिपत्तौ वा प्रकृत्यन्वयाद् यथाप्रकृति । १८ ॥**

पूर्वपक्षं वाशब्देन निरस्य सिद्धान्तमाह । विप्रतिपत्तौ मुख्यक्रमस्य अङ्गक्रमस्य च विरोधे सति यथाप्रकृति प्रकृतिमनतिक्रम्य धर्माः कर्तव्याः । प्रकृत्यन्वयात् प्रकृतौ तथैव अन्वयात् क्लृप्तत्वात् । तस्मात् आदौ बार्हस्पत्यस्य आग्नेयविकारस्य, पश्चात् सारस्वतस्य उपांशुयाजाज्यविकारस्य । चोदकः प्रयोगवचनाद् बलवत्तर इति भावः । के.

**⌛ तद्वच्च देवतायां स्यात् । १०।८।१६।४९ ॥**

दर्शपूर्णमासयोः उपांशुयाजे तद्वत् हविर्द्रव्यवत् देवतायामपि यथाकामता स्यात् । 'तावब्रूतामग्नीषोमौ' इति वाक्यं तु पुराकल्पसरूपोऽर्थवादः न विधिसरूपः । इति पूर्वः पक्षः ।

**तान्त्रीणां वा, प्रकरणात् । ५० ॥**

उपांशुयाजे न देवताया अनियमः सर्वथा । किन्तु प्रकरणात् तान्त्रीणां दर्शपूर्णमासतन्त्रभवानां देवतानामन्यतमा स्यात् देवता । इति सिद्धान्तः । वाशब्देन पूर्वपक्षनिरासः । के.

* 'तद्वच्च देवतायां स्यात्' इत्यादि विचार्य 'विष्णुर्वा०' इत्यादिना मान्त्रवर्णिकत्वं जैमिनिराश्रयिष्यति । वा. २।२।४।१० पृ. ४९५.

**तद्वत् सवनान्तरे ग्रहाम्नानम् । ३।६।९।३० ॥**

अग्निष्टोमे प्रातःसवने ऐन्द्रवायवमैत्रावरुणादयः दश सोमग्रहा आम्नाताः, माध्यंदिने सवने शुक्रामन्थिनौ आग्रयणः इत्यादयः एकादश ग्रहाः, तृतीयसवने च आदित्यः आग्रयणः इत्यादयः पञ्चपाः ग्रहाः । ग्रहधर्माश्च खरे सादनं दशापवित्रेण संमार्जनमित्यादयः प्रातःसवने एव आम्नाताः । तत्र माध्यंदिनीयेषु तार्तीयसवनीयेषु ग्रहेषु ग्रहधर्मा भवन्ति न वा इति संदेहे, भवन्ति इति सिद्धान्तप्रतिपादनार्थं सूत्रमिदम् । सवनान्तरे प्रातःसवनात् अन्यत् यत् माध्यंदिनं तृतीयं च सवनम्, तत्रापि यत् ग्रहाणामाम्नानम्, तत् तद्वत् प्रातःसवनीयग्रहाम्नानवत् ग्रहधर्मविशिष्टमेव ज्ञेयम् । प्रकरणाविभागात् इति हेतुपदं पूर्वसूत्रादनुवर्तते । सवनत्रयगतानामेव ग्रहाणामग्निष्टोमप्रकरणं समानम् । तस्मात् ग्रहधर्माः सर्वग्रहार्थाः । 'तद्वत् दोहधर्मवत् सवनान्तरेऽपि ग्रहाम्नानं ग्रहधर्माम्नानं सर्वार्थम्' इति तु सुबोधिन्यां व्याख्यातम् । के.

* तद्वर्जं तु वचनप्राप्तेः ( ३।६।१।३ ) । अनारभ्यविधिना विकृतिष्वपि खादिरत्वादिप्राप्तेः तद्वर्जं प्रकृतिविकृत्यर्थत्वे द्विरुक्तत्वप्रसङ्गस्य असिद्धत्वमिति शङ्का । सु. पृ. १२७७.

* तद्विकारत्वं नाम तद्धर्मग्राहित्वम् । के.

* तद्विशिष्टशाब्दे तद्विशिष्टवृत्तिज्ञानं हेतुः । तेन लक्ष्यताऽवच्छेदकेऽपि लक्षणा इति नव्याः । मणि. पृ. ७६.

**तद्व्यपदेशं च । १।४।५।५ ॥**

'अथैष श्येनेनाभिचरन् यजेत' 'अथैष संदंशेनाभिचरन् यजेत' 'अथैष गवाऽभिचरन् यजेत' इति समाम्नायते । तत्र गुणविधिः कर्मनामधेयमिति संदेहः । उद्भिदधिकरणे यौगिकानां चित्राधिकरणे च सांविज्ञायिकानां नामधेयत्वं निरूप्य पुनः यौगिकानामेव उदाहरणविशेषे गुणविधित्वाशङ्कां निराकृत्य इदानीं सांविज्ञायिकानामुदाहरणविशेषे गुणविधित्वाशङ्का निराक्रियते । अत्रायं पूर्वपक्षिणोऽभिसंधिः । भवतु 'पञ्चदशान्याज्यानि' इत्यत्र सांविज्ञायिकानामपि आज्यादिपदानां 'आज्यैः स्तुवते' इति प्राप्ते स्तोत्रे पञ्चदशसंख्याविधाने, तथा आज्यद्रव्यविधाने च वाक्यभेदापत्तिभिया नामधेयत्वम् । इह तु श्येनादिवाक्ये प्राप्ते कर्मणि अनेकगुणविधानाभावात् श्येनपक्षिविशिष्टमेव कर्म अभिचाररूपे फले विधीयते । न चैवं सति 'श्येनवता यागेन अभिचारं साधयेत्' इति वाक्यार्थाभिव्यक्तेः मत्वर्थलक्षणादोषः, यागनामधेयत्वेऽपि श्येनसादृश्यस्य प्रवृत्तिनिमित्तत्वात् वत्यर्थलक्षणादोषेण लक्षणादोषस्य समत्वात् । किञ्च वत्यर्थलक्षणा हि मत्वर्थलक्षणातोऽप्यतिजघन्या, यतो वाक्यवेलायां मत्वर्थलक्षणा भवन्ती न श्येनपदस्य श्रौतस्यैवार्थपरित्यागेन अर्थान्तरपरत्वमापादयति, किन्तु स्वार्थापरित्यागेनैव तद्वत्तामात्रं बोधयति । वत्यर्थलक्षणा तु पदार्थबोधवेलायामेव श्येनसादृश्येन सदृशे कर्मणि अर्थान्तरे पदं प्रवर्तयन्ती श्रौतार्थपरित्यागेन मत्वर्थलक्षणातो जघन्येति । तदुक्तम् 'मत्वर्थो वाक्यवेलायामेकवाक्यवशाद्भवेत् । इवार्थः पदवेलायां गृह्यमाणोऽतिदुर्बलः ॥' ( वा. पृ. ३३६ ) । एवं च सति प्रसिद्धार्थत्वं अधिकार्थत्वं प्रवृत्तिविशेषकरत्वं चानुरुद्धं भवति इति गुणविधानमेव । इत्येवं प्राप्ते, अभिधीयते । भवेदेवं विशिष्टविधिना श्येनरूपगुणविधानं यदि सादृश्यप्रतिपादकस्यार्थवादस्योपपत्तिर्भवेत् । एवं खलु अर्थवादः श्रूयते 'यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचरति श्येनेन' इति । अत्र हि विधेयस्य श्येनसादृश्येन स्तुतिरवगम्यते, भेदाधिष्ठानं च सादृश्यम् । न च पक्षिरूपश्येनविधाने भेदाभावात् सादृश्यनिबन्धना स्तुतिः संभवति । तदुक्तम् 'विधेयं स्तूयते वस्तु भिन्नयोपमया सदा । नहि तेनैव तस्यैव स्तुतिस्तद्वदितीष्यते ॥' इति । ( वा. पृ. ३३६ ) । संभवति तु श्येननामधेययागविधाने पक्षिरूपश्येनसादृश्येन स्तुतिः । एतदेवार्थवादोपदर्शितं निपत्यादानरूपं सादृश्यं नामधेयप्रवृत्तिनिमित्तं च । अत एवात्र सादृश्यलक्षणा वेदानुमि(म)तत्वात् मत्वर्थलक्षणातः

स्वरूपतो जघन्याऽपि भवन्ती न दोषमावहति। किञ्च गुणविधाने सति न केवलं मत्वर्थलक्षणा, किन्तु अर्थवादोपदर्शितसादृश्यनिबन्धनस्तुतिसिद्धये काल्पनिकं भेदमाश्रित्य वत्यर्थलक्षणाऽपि अवश्याङ्गीकरणीया। अतो नामधेयत्वमेवेति।

एवम् 'संदंशेनाभिचरन् यजेत' इत्यत्रापि सादृश्यप्रतिपादकोऽर्थवादः श्रूयते 'यथा संदंशेन दुरादामादत्ते' इति। एवम् 'गवाऽभिचरन् यजेत' इत्यत्रापि श्रूयते 'यथा गावो गोपायन्ति' इति तेन एतयोरपि कर्मनामधेयत्वमेवेति।

**प्रयोजनम्**— पूर्वपक्षे श्येनपक्षिणा यागो निर्वर्तयितव्यः, सिद्धान्ते तु अतिदिष्टसोमेनेति।

सूत्रं तु 'तद्व्यपदेशम्' तेन प्रसिद्धेन श्येनादिना सादृश्यनिबन्धनोऽर्थवादे व्यपदेशो यस्य तदपि कर्मनामधेयमिति। **तौता.** १।४।५।५.

**तद्व्यपदेशं च। १।४।४।५॥**

'श्येनेनाभिचरन् यजेत' 'संदंशेनाभिचरन् यजेत' 'गवाऽभिचर्यमाणो यजेत' इति श्रूयते। श्येनः संदंशः गौः इति पदं किं गुणविधायकं कर्मनामधेयं वा इति विचारे सिद्धान्तमाह। 'नामधेयं स्यात्' इति 'अन्यशास्त्रम्' इति चानुवर्तते। यस्मात् तद्व्यपदेशं अन्यशास्त्रम्, तस्मात् नामधेयं स्यात् इत्यन्वयः। 'यथा वै श्येनो निपत्याऽऽदत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचरति श्येनेन' इत्यत्र 'श्येनेन अभिचरन्' इति निर्दिष्टस्य श्येनपदार्थस्य 'यथा श्येनो निपत्य आदत्ते' इति श्येनः पक्षी उपमानतया निर्दिष्टः। एवम् 'संदंशेन यजेत' इति निर्दिष्टस्य संदंशपदार्थस्य 'संदंशेन दुरादानमादत्ते' इति वाक्ये अङ्गारग्राहकः आयसः संदंशः (चिमटा इति भाषा) उपमानमुपात्तम्। एवम् 'गवा यजेत' इति गोपदार्थस्य 'यथा गावो गोपायन्ति' इति सास्नाशृङ्गवती गौः उपमानत्वेनोपात्ता। 'सादृश्यमुपमा भेदे' इति च आलंकारिकैः उपमा भेदघटिता उक्ता। तस्मात् उपमेयभूताः श्येनसंदंशगोपदानि कर्मनामधेयमेव न गुणविधायकम्। सूत्राक्षरार्थस्तु तस्मात् विधेयत्वेन अभिमतात् श्येनादेः व्यपदेशः भेदेनाभिधानं यस्मिन्, तत् तद्व्यपदेशं शास्त्रं अन्यत् विद्यते। तस्मात् श्येनादिपदं कर्मनामधेयम्। इति।

अत्र **सुधा**— सौत्रं तच्छब्दं यस्मिन् गुणोपदेश इत्येतत्सूत्रनिर्दिष्टविधित्सितगुणपरामर्शिनमभिप्रेत्य विशब्दं च भेदवादिनमङ्गीकृत्य तेन विधित्सितेन श्येनादिरूपेण गुणेन भिन्नार्थतया व्यपदेशः संकीर्तनं न यस्य श्येनादिपदस्य तदपि नामधेयं इति नामधेयपदानुवृत्त्या सूत्रं योजितं इति।

श्येननामधेयेन संदंशनामधेयेन गोनामधेयेन च यागेन भावयेत् इति श्रुतिवाक्यार्थः। **के.**

**तद्व्यपदेशन्यायः।** श्येनसंदंशादिपदं यागविशेषनामधेयम्॥

**तद्व्यपदेशं च। १।४।४।५॥**

**भाष्यम्**—'अथैष श्येनेनाभिचरन् यजेत' 'अथैष संदंशेनाभिचरन् यजेत' 'अथैष गवाऽभिचरन् यजेत' इति समाम्नायन्ते। तत्र गुणविधिः, कर्मनामधेयमिति संदेहः। प्रसिद्ध्यादिभिः पूर्वपक्षः उद्भिदादीनामिव। ते तु उद्भिदादयः क्रियानिमित्ताः शक्नुवन्ति यागं वदितुम्। इमे पुनः जातिनिमित्ता न शक्नुवन्ति। तेन गुणविधयः इत्येवं प्राप्तम्। एवं प्राप्ते, ब्रूमः। तद्व्यपदेशं च। तेन श्येनादिना प्रसिद्धेन यस्य व्यपदेशः, तच्च कर्मनामधेयम्। श्रुतिर्हि नामधेयत्वे, लक्षणा गुणविधौ। यत्तु जातिशब्दा इमे न यागमभिवदन्तीति, सादृश्यव्यपदेशात् अभिवदिष्यन्ति। एवं हि व्यपदेशो भवति, 'यथा वै श्येनो निपत्यादत्ते, एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचरन्ति श्येनेन' इति। निपत्य आदत्ते इत्यनेन सादृश्येन श्येनशब्दो यागे, यथा सिंहो देवदत्तः इति। तस्मात् कर्मनामधेयम्। संदंशे 'संदंशेन यथा दुरादानमादत्ते' इति, गवि 'यथा गावो गोपायन्ति' इति। तस्मात् संदंशशब्दोऽपि कर्मनामधेयं गोशब्दोऽपि।

**वा**— 'अथैष ज्योतिः' इत्यादिवर्जमुदाहरणम्। तेषां तृतीयानिर्देशाभावात् गुणविधित्वानुपपत्तेः। तेऽपि च वाक्यान्तरेषु यदा तृतीयानिर्देशं प्रतिपद्यन्ते, तदा

विचार्यन्ते । अथवा प्रथमानिर्देशेन द्रव्यमपि प्रस्तुत्य पश्चात् तत्साध्योपन्यासः संभवति, इति एतेऽपि उदाहरणमेव । तत्र तैरेव प्रसिद्ध्यादिभिर्गुणविधिः । न चात्र कर्मणि प्रवृत्तिनिमित्तं किञ्चिदस्ति । वत्यर्थोपादानेन कर्मणि प्रवृत्तौ च अत्यन्तविप्रकृष्टा गौणता स्यात् । तत्र वरं मत्वर्थलक्षणा । साधनं हि प्रतीतं अत्यन्तविनाभावात् स्वसाध्यां क्रियां अक्लेशेन प्रतिपादयति विनैव मतुब्लोपेन । किञ्च '**मत्वर्थो वाक्यवेलायामेकवाक्यवशाद् भवेत् । इवार्थः पदवेलायां गृह्यमाणोऽतिदुर्बलः ॥**' गुणविधिपक्षे हि स्वार्थापरित्यागेनैव श्येनपदं तद्वन्तमुत्तरकालं लक्षयति । आत्मोच्चारणकाले तु स्वार्थमेव विनियुङ्क्ते । भवतस्तु श्येनार्थानुपयोगात् आदित एव सादृश्यविवक्षया पदं प्रवृत्तमित्युपगमात् श्रुतिबाधप्रसङ्गः । तदुच्यते '**विधेयं स्तूयते वस्तु भिन्नयोपमया सदा । नहि तेनैव तस्यैव स्तुतिस्तद्वदितीष्यते ॥**' श्येनादिवाक्येषु हि 'यथा वै श्येनो निपत्य आदत्ते, एवमयमपि' इत्युपगमात् न स्तुतिर्दृश्यते । तथा च विधीयमानस्य भवितव्यम् । गुणविधाने च श्येनद्रव्यं विधीयते, इति तदेव स्तोतव्यम् । न च तस्य आत्मनैव उपमानं युक्तम् । अथोच्येत अनन्यत्वेन सुतरां स्तुतिर्भवति अनन्यसंभविचरितत्वात् । यथा 'रामरावणयोर्युद्धं रामरावणयोरिव' इति । भवति हि लोके काल्पनिकं अवस्थाऽऽदिगतभेदमाश्रित्य एवमपि स्तुतिः संभवति, भेदे न युक्ता । ( श्रुतिर्हि नामधेयत्वे, लक्षणा गुणविधौ इति भाष्यं यथाश्रुतार्थमनुपपन्नमिति मत्वा अन्यथा व्याचष्टे– ) नामधेयत्वे तु यागश्येनस्य द्रव्यश्येनोपमोपपत्तेः आञ्जस्यम् । इतरथा हि द्वौ मत्वर्थवत्यर्थौ लक्षयितव्यौ, काल्पनिकश्च भेदः इति गौरवम् । न च यागस्तुत्या तदाश्रितद्रव्यस्तवनमवकल्पते, यागविधेः अनिराकृतत्वात् । अभिधेयगता हि स्तुतिः अन्यत्र संचार्येत, यागस्तु स्वयमेव विधिभाक् अत्र इति न द्रव्यं स्तूयते विधीयते वा । पुनरपि च यागेन द्रव्यलक्षणात् विप्रकृष्टता, समभिव्याहाराच्च द्रव्यवदेव यागवचनत्वं मुख्यम् । विधौ च तव लक्षणा, ममानुवादे । गुणवचनेभ्यश्च मतुब्लोपः स्मर्यते ( तदस्यास्त्यस्मिन् इति पाणिनिसूत्रे 'गुणवचनेभ्यो मतुपो लुक्' इति वार्तिकम् ) न द्रव्यवचनेभ्यः । इवार्थस्तु परशब्दस्य परत्र प्रयोगात् स्वयमेवोपजायते । मत्वर्थलक्षणा च स्वयं कल्पनीया, क्लृप्तस्तु वत्यर्थः 'यथा वै श्येनः' इत्यादिना । पूर्वोक्ताश्च धातुपारार्थ्यप्रत्ययविप्रकर्षादयो दोषा वक्तव्याः ।

शा— इह रूढशब्दा एव वाक्यभेदरहिताः तद्व्यपदेशवन्तः उदाहरणम् । ( अत्र तद्व्यपदेशशब्दः सौत्रानुकरणम् । सूत्रे च तच्छब्देन 'यस्मिन् गुणोपदेशः' इति प्रकृतो गुणो निर्दिश्यते । वि–शब्दश्च भिन्नार्थकः । ततश्च तस्मात् विधेयत्वाभिमतात् गुणात् व्यपदेशः भेदेन निर्देशः ) । ५.

**सोम— सूत्रार्थस्तु—** तस्य गुणस्य व्यपदेशो यस्मिन् श्येनादिपदे, तदपि नामधेयं स्यात् इति ।

**वि—** 'श्येनेनाभिचरन् मर्त्यो यजेतेति श्रुतो गुणः । विधीयते पक्षिरूपो नाम वा तस्य कर्मणः ॥, श्येनेनेति गुणः काम्यः सौमिकः सोमबाधया । न चित्रावद् वाक्यभेदो रूढेश्चैवमनुग्रहः ॥, यथा वै श्येन इत्युक्ता ह्युपमानोपमेयता । नैकस्मिन् तेन गौण्याऽस्य वृत्त्या स्यात् कर्मनामता ॥' ५.

**भाट्ट—** 'श्येनेनाभिचरन् यजेत' इत्यादौ पूर्वोक्तबाधकाभावात् प्रसिद्धेः श्येनादिपदानां गुणविधित्वमेव । प्रकृतसोमयागाश्रितो गुणः फलोद्देशेन विधीयते विशिष्टकर्मान्तरं वा । न चैवम् 'यथा वै श्येनो निपत्यादत्ते, एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते' इत्यर्थवादे स्वस्यैव स्वोपमानत्वानुपपत्तिः, उपक्रमनिर्णीतविध्यनुरोधेन उपसंहारस्थार्थवादस्य अन्यथा नेयत्वात् । 'ते तद्विलासा इव तद्विलासाः' इत्यादिवत् अनन्वयालङ्कारस्य अभेदे अनुगुणत्वात् । इति प्राप्ते, नायमनन्वयालङ्कारः । तथात्वे सर्वेषामर्थवादपदानामुपमानान्तराभावलक्षकत्वापत्तेः । तद्वरं भूयोऽनुग्रहस्यैव न्याय्यत्वात् उपक्रमस्थे एवैकस्मिन् पदे रूपकविधया लुप्तोपमानविधया वा गौणीं वृत्तिमङ्गीकृत्य नामधेयत्वं द्वितीयविधिप्रकारापादकं युक्तमाश्रयितुम् । अर्थवादस्तु रूपकाद्यपेक्षितसादृश्योपपादनार्थः सन् विनैव लक्षणां पूर्णोपमानविधया विधेययाग-

स्तुत्यर्थो न विरुध्यते । तस्सिद्धं चतुर्भिरेव प्रकारैः सर्वत्र नामत्वमिति । ५.

मण्डन— 'नाम श्येनपदं पुनः ।'

शंकर— 'एवं तद्व्यपदेशतः ।' नाम । ५.

* तद्व्यपदेशं च इत्यधिकरणे 'यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचरति श्येनेन' इत्ययमुपमानार्थवादः इत्युक्तम् । बाल. पृ. ५८. * अर्थवादानां अवयवार्थपरत्वाभावे 'तद्व्यपदेशं च' इत्यधिकरणविरोधः । तत्र वाक्यविशेषसिद्धां गौणीं वृत्तिमाश्रित्य नामधेयत्वव्यवस्थापनात् । कु. १।२।१।१८. * 'आग्नेयोऽष्टाकपालोऽमावास्यायां' इत्यादौ विशिष्टविध्यङ्गीकारेण वाक्यभेदाभावात् तद्व्यपदेशन्यायस्य शङ्कितुमप्यशक्यत्वात् । कौ. १।४।७।९.

* **तच्छब्दः** । यच्छब्दतच्छब्दौ उद्देश्यप्रतिनिर्देशकौ । वा. ६।६।३।१६. * **तच्छब्दस्य** पूर्वपरामर्शित्वम् । भाट्ट. ४।१।१०. * **तच्छब्दार्थं** स्ववाक्योपस्थितं यच्छब्द एव नियमेन अपेक्षते 'येन कर्मणा ईर्त्सेत् तत्र जयान् जुहुयात्' इत्यादौ तथैव व्युत्पत्तिदर्शनात् । न तु तच्छब्दोऽपि । अतश्च तच्छब्दस्य स्ववाक्योपस्थितमात्रपरामर्शित्वनियमाभावः । कौ. ३।३।७।१४ पृ. ३५८.

* **तत्संनिधेर्गुणार्थेन पुनःश्रुतिः** (२।२।५।१६) । इत्यत्र उपपदश्रुतौ संभवदनुवादस्य कर्मणः विधेयत्वनिषेधात् (सोमेन यजेत इति) सोमवाक्ये यागविधिः । सु. पृ. ७९०. * भाष्यान्तरकृद्भिः प्रकरणान्तरत्वात् विना फलादीनां भेदकत्वमुक्तमपि न दृष्टं 'तत्संनिधे संनिधौ त्वविभागात्, तत्संनिधेर्गुणार्थेन पुनःश्रुतिः' इत्यादौ । वा. २।३।१३।२६.

* '**तत्संप्रयोगे** पुरुषस्येन्द्रियाणां बुद्धिजन्म सत् प्रत्यक्षम्' (१।१।४ सूत्रं) । यद्विषयं विज्ञानमुत्पद्यते तेनैव इन्द्रियसंप्रयोगे इन्द्रियाणां या पुरुषस्य बुद्धिर्जायते तत् सत् प्रत्यक्षम् । यथा 'इदम्' इति विज्ञानम् । यत्तु अन्यसंप्रयोगे शुक्तिकासंप्रयोगे अन्यविषयं रजतग्राहि विज्ञानमुत्पद्यते न तत् प्रत्यक्षम् । किं तर्हि स्मरणमेव । कथं पुनरवगम्यते 'इदमन्यसंप्रयोगे, इदं नान्यसंप्रयोगे' इति । शुक्तिका हि संप्रयुक्ता । अतः शुक्तिकाविषयमेव इदमपि ज्ञानम्, यतो रजतमिति शुक्तिकामेव व्यपदिशति । यस्मात् शुक्तिकासंप्रयुक्ते चक्षुषि 'रजतसंनिकृष्टं मे चक्षुः' इति मन्यते । (तत्संप्रयोगे–सत्संप्रयोगे इति, सत् प्रत्यक्षं–तत् प्रत्यक्षं इति मतभेदेन पाठभेदः) । ऋजु. पृ. ४६.

⌛ **तत्संयोगात् क्रतुस्तदाख्यः** (२।३।१०।२३) इति न्यायेन साग्निचित्यक्रतोरेव चिनोत्यर्थत्वात् (तेन चयनसंस्कृतेन ज्वलनेन संयोगात् क्रतुः यागः तदाख्यः अग्निशब्दवाच्यः इति न्यायसूत्राक्षरार्थः) । संकर्ष. ३।१।५.

* **तत्संस्तवाच्च** । ३।४।१७।४९ ॥ चतुर्धाकृतपुरोडाशविभागस्य परिक्रयत्वसंस्तवादपि परिक्रयार्थता । इति पूर्वपक्षः । सु. पृ. १५४४.

⌛ **तत्सामान्यादितरेषु तथात्वं इति न्यायः** । औदुम्बराधिकरणस्थसूत्रावयवोऽयं न्यायत्वेन व्यवह्रियते । तैः 'अप्सुजो वेतसः' इत्यादिभिः स्तुतिवादैः सामान्यात् सादृश्यात् 'औदुम्बरो यूपो भवति' इत्यादिष्वपि इतरेषु वाक्येषु तथात्वं स्तुतिवादत्वं प्रत्येतव्यं इति न्यायाक्षरार्थः । के. १।२।२।२३. * 'तत्सामान्यादितरेषु तथात्वम्' इति न्यायेन तदितरेषां (मन्त्रभिन्नानां) 'वायुर्वै क्षेपिष्ठा' इत्याद्यर्थवादानां न स्वार्थपरत्वम्, किन्तु जहत्स्वार्थलक्षणया केवलविधेयस्तुतिपरत्वं इति प्रच्छन्नबौद्धाः केचिन्मीमांसकंमन्याः संगिरन्ते । कु. १।२।१।१८ पृ. ३०. * चित्रेष्ट्यादौ सद्यः पश्वादिफलादर्शनेन, 'स एष यज्ञायुधी यजमानः अञ्जसा स्वर्गं लोकमेति' इत्यनेन सशरीरस्वर्गप्राप्तिकथनमपि प्रत्यक्षविरोधादप्रमाणम्, ततश्च '**तत्सामान्यात्०**' इति न्यायेन सर्वासामेव चोदनानामप्रामाण्यमिति प्राप्ते । भाट्ट. १।१।४.

⌛ **तत्सामीप्यात्ताच्छब्द्यमिति न्यायः** । गङ्गायां घोषः, कूपे गर्गकुलमित्यादिषु स्पष्टोऽयं न्यायः । (तस्य गङ्गापदार्थस्य प्रवाहस्य सामीप्यात् तीरस्य ताच्छब्द्यं गङ्गापदबोध्यत्वम् । सः गङ्गाशब्दः यस्य तीरस्य, स तच्छब्दः, तस्य भावः ताच्छब्द्यम्) । साहस्री. ४८६.

▩ तत्साहचर्यात्ताच्छब्द्यमिति न्यायः। कुन्तान् प्रवेशय, यष्टीः प्रवेशय इत्यादिषु स्पष्टोऽयं न्यायः। ( पुरुषाणां कुन्त-यष्टिसाहचर्यात् ताच्छब्द्यं कुन्त-यष्टिशब्दबोध्यत्वम्। साहस्री. ४८७

* तत्सिद्धिः कार्यसिद्धिः यजमानवत् कार्यसिद्धौ अभ्यर्हितः प्रस्तरः ( तत्सिद्धिः इति सूत्रमेव सूत्रैकदेशो वा)। शा. १।४।१८। तत्सिद्धिः मुख्यस्य सिद्धिः कार्यम्, तत्कार्यकरत्वमिति यावत्। सोम. * तत्सिद्धिः तत्साधनत्वं शब्दस्य क्वचित् प्रवृत्तिहेतुः। 'यजमानः प्रस्तरः' अत्र यागसाधनत्वं यजमानस्य गुणः, स च प्रस्तरे वर्तते इति प्रस्तरे यजमानपदस्य प्रवृत्तिः। वि. १।४।१८.

▩ तत्सिद्धिः। १।४।१२।२३-१ ॥

'तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति गुणाश्रयाः' इत्येकमेव सूत्रम्। तत्र व्याख्यासौकर्यार्थं प्रत्येकं प्रथमान्तसूत्रोपन्यासो भाष्ये कृतः इति कौस्तुभादौ उक्तम्। तत्र तत्सिद्धिः इति प्रथमोऽवयवः। 'यजमानः प्रस्तरः' 'यजमान एककपालः' इति श्रूयते। स किं गुणविधिः, उतार्थवादः इति विचारे सिद्धान्तः। तत्सिद्धिः तस्य यजमानगुणस्य यागसाधनत्वस्य प्रस्तरेण सिद्धिः जुहूधारणद्वारा भवति। इति यागसाधनत्वेन गुणेन यजमानशब्दः प्रस्तरे समानाधिकरणतया प्रवृत्तः। तत्र यजमानत्वेन प्रस्तरस्तुतिः। इति अर्थवादोऽयं इति सिद्धान्तः। एवं एककपालस्तुतिः द्रष्टव्या। अत्र स्तुतिरूपो गुणः गौण्या वृत्त्याः एकं निमित्तमुक्तम्। के.

▩ तत्सिद्ध्यधिकरणम्। यजमानशब्देन प्रस्तरादेः स्तुतिः ॥

तत्सिद्धिः। १।४।१२।२३-१॥

भाष्यम्— 'यजमानः प्रस्तरः' 'यजमान एककपालः' इत्यादि समाम्नायते। तत्र संदेहः किं यजमानः प्रस्तर इत्येष गुणविधिः, किमर्थवाद इति। तथा यजमान एककपाल इति। किं तावत् प्राप्तम्? गुणविधिरिति। किमेवं भविष्यति? एवमपूर्वमर्थं विधास्यति। इतरथा अर्थवादोऽनर्थकः स्यात्। अर्थवत्त्वं च न्याय्यम्। तस्मात् विधिः। नैतदेवम्। यदि विधिः स्यात् प्रस्तरकार्ये यजमानो नियम्येत, यजमानकार्ये वा प्रस्तरः। 'प्रस्तरे जुहूमासादयति, सर्वा वा स्रुचः' इति यजमाने जुहूरासाद्येत सर्वा वा स्रुच इति। तथा सति न याजमानं शक्यते कर्तुम्, दक्षिणतो ब्रह्मयजमानौ आसाते कर्मणः क्रियमाणस्य, इति। न च प्रस्तरो याजमानं शक्नोति कर्तुम्। तथा यदि यजमानः एककपालकार्ये विनियुज्येत सर्वहुतः क्रियेत। तत्र सर्वतन्त्रपरिलोपः स्यात्। न चैककपालो याजमानं शक्नोति कर्तुम्। तस्मान्न विधिः। विध्यन्तरं चास्ति 'प्रस्तरमुत्तरं बर्हिषः सादयति' 'एककपालं सर्वहुतं करोति' इति। तस्मादपि न विधिः। किं तर्हि? अर्थवादः। यजमानो ज्ञायते एव, प्रस्तरः एककपालः इति च ( ज्ञायेते एव )। कथं पुनरनयोः सामानाधिकरण्यं ज्ञायते। नहि प्रस्तर एककपालो वा यजमानः, न च यजमानः एकस्मिन् कपाले संस्कृतः पुरोडाशः, प्रथमो वा कुशमुष्टिर्लूनः। कथं परशब्दः परत्र वर्तते। किमर्थं वा ज्ञायमानस्य संकीर्तनमिति। उच्यते। ज्ञायमानः संकीर्त्यते स्तोतुम्। प्रस्तरः उत्तरो बर्हिषः सादयितव्यो यजमानत्वात्। तथा यजमानः एककपालः सर्वहुतः कर्तव्यः, स्वर्गः आहवनीयः, तत्र प्रतिष्ठापितो भवति, इति। कथं परत्र वर्तते परशब्द इति। गुणवादस्तु। गुणादेष वादः। कथमगुणवचनो गुणं ब्रूयात्? स्वार्थाभिधानेनेति ब्रूमः। सर्वे एवैते गौणाः शब्दा न स्वार्थं हित्वा गुणेषु वर्तन्ते। प्रसिद्धहानिर्हि तथा स्यात् अप्रसिद्धकल्पना च। न च सर्वे गुणसमुदायवचनाः, गुणहीनेऽपि दर्शनात्। अप्रसह्यकारी अपि हि कदाचित् रोगेणोपहतः सिंह्याः पुत्रः सिंह एव। समुदायवाची च नावयवे प्रवर्तितुमर्हति। सर्वसिंहव्यक्तिषु यत्सामान्यम्, तद्वचनः शब्द इति स्थितो न्यायः प्रत्युद्ध्रियेत। न चासति सिंहे परिकल्पनया प्रवर्तेत, कल्पनाया अशक्यत्वात्। कथं नु स्वार्थाभिधानेन प्रत्ययव्यवस्थेति चेत्। अर्थसंबन्धात्। सिंह इति निर्ज्ञायते, प्रसह्यकारिता तत्र प्रायेण, इति प्रसह्यकारीति गम्यते, अर्थप्रत्ययसामर्थ्यात्। यो हि मन्यते प्रसह्यकारिणं प्रत्याययेयमिति, स यदि सिंहशब्दमुच्चारयति सिध्यत्यस्य अभिप्रेतम्। सिंहार्थः प्रतीतः प्रसह्यकारीति संबन्धात् इतरमर्थं प्रत्याययति। एवं स्वार्थाभिधानेन

न कश्चित् शब्दोऽस्ति, येन फलमभिधीयेत । यो हि अयं स्वर्गकामशब्दः, स साधनवचनः । ( न फलवचनः इति- ) अनेनापि प्रकारेण अनारब्धव्यमधिकरणम् ( फलाभावेन तन्त्रावापचिन्ताऽनुपपत्तेः ) ।

इदं तु षष्ठे निराकृतम् । स्वर्गस्य साधनत्वेन न कामना । किं कारणम् ? सर्वे ह्येवं कामयन्ते, स्वर्गो मे स्यादिति । साध्ये च मुख्या कामना, साधने तु नान्तरीयकी, साधनेन विना साध्यासंभवात् । तस्मात् साधने या कामना, सा गौणी । अपिच 'यजेत' इति भावनावचनः श्रुत्या पुरुषार्थमाक्षिपति । स च आक्षिप्तः किमंशं प्रथमं पूरयति । यदि च किमंशो यागेन पूर्येत, तदा चोदितमपि यागं न कश्चित् कुर्यात् । तत्र विधिर्व्याहन्येत । तस्माद्यः स्वर्गं साध्यत्वेन कामयते, तेन लक्षणयोपायः आक्षिप्तः । तत्रोपायत्वेन यागो विधीयते ।

अत्र ( भाष्य- ) ग्रन्थः **य एषां समुदितानां एकः शब्दो वाचकः, तेन एतानि अभिधाय फलसंबन्धः कृतः** दर्शपूर्णमासशब्देन इति । ( भाष्यं विवृणोति-) "य एषां समुदितानां' इति, केषां ? आग्नेयादीनाम् । **एष शब्दो वाचकः** इति दर्शपूर्णमासशब्दः इत्यर्थः । **तेन एतानि अभिधाय** इति दर्शपूर्णमासशब्देन अभिधाय । **फलसंबन्धः कृतः** इति ।" **तदयुक्तम्** । स दर्शपूर्णमासशब्दः समुदायवचनः । यदि समुदायवचनः स्यात् तथा सति समुदायो न द्रव्यम्, न देवता, न क्रिया । किं तर्हि ? गुणोऽसौ । तस्य गुणत्वात् यागेन ( क्रियास्वरूपेण ) सामानाधिकरण्यं न स्यात् । अस्ति च सामानाधिकरण्यं 'दर्शपूर्णमासः यागः' इति । तस्मात् समुदायिवचनोऽयम् ।

'एकशब्दाभियोगात्' ( सौत्रं पदम् ) इत्येतदन्यथा वर्ण्यते । भावयेत् । किम् ? स्वर्गम् । केन ? यागेन करणेन दर्शपूर्णमाससंज्ञकेन । स्वर्गः प्रधानभूतः, यागः साधनं उपादीयमानश्च । तस्मात् तेषां इतरेतरयोगो विवक्षितः ।

**शेषवद्वा प्रयोजनं प्रतिकर्म विभज्येत । २ ॥**

**भाष्यम्**— नायमेकान्तः, यत् समुदायशब्देन संयुज्योच्यते तत् समुदितानामेव भवतीति । भेदेनापि किञ्चित् भवति । यथा 'गणाय स्नानम्, गणानुलेपनम्' इति, अनुलेपनादिशेषो गणशब्देन समुदायवचनेनापि संयोज्य उक्तो न समुदायेन संबध्यते । केन तर्हि ? समुदायिभिः । प्रतिपुरुषं हि स्नानादि आवर्तते । अतः शेषवद्वा फलं भिद्येत, कूपवद्वा तन्त्रं स्यादिति, अवैशेषिकोऽयं हेतुः समुदायशब्दसंयोगः । तस्माद्धेत्वन्तरं वक्तव्यम्, अत्रैष विशेष इति ।

**अविधानात्तु नैवं स्यात् । ३ ॥**

**भाष्यम्**— सोऽयमुच्यते । नात्र यागमुद्दिश्य फलं विधीयते, स्वर्गेण यागं कुर्यादिति । किं तर्हि ? फलमुद्दिश्य यागो विधीयते । स्वर्गं यागेन कुर्यादिति । किं कारणम् ? या अत्र विधायिका विभक्तिः यजेतेति, सा यागं श्रुत्या विदधाति, फलं वाक्येन विदध्यात् । न च श्रुत्यर्थे संभवति वाक्यार्थो ग्राह्यः, श्रुत्यर्थस्य मुख्यत्वात् । किं पुनः स्यात् यदि फलं विधीयते ? फले विधीयमाने यजत्यर्थोऽनूद्येत । नहि द्वयोर्विधीयमानयोः संबन्धोऽस्ति । अनुवादश्च संनिहितानां आग्नेयादीनां स्यात् । तानि च परस्परानपेक्षाणि मिथो विभक्तानि उत्पन्नानीति विभागेनैव तैः फलं संबध्यते । अथ पुनर्यजत्यर्थे विधीयमाने, आग्नेयादयो यागाः शब्देन समुदायवचनेन फलनिर्वृत्तौ उपादेयत्वेन चोद्यन्ते । चोदितानां समुदितत्वं गुणः संनिधानविशेषात् यो गम्यते, स विवक्षितो भवति । अविवक्षायां कारणाभावात् । यदि यागा विधीयन्ते, दर्शपूर्णमासशब्देन विशेष्टुं न शक्यन्ते । नहि विधीयमानस्य विशेषणं भवति । यत् कारणम् । विशेषणमपि अविधीयमानं न भवति । न च द्वयोर्विधीयमानयोः परस्परसंबन्धो भवति । किं पुनरत्र विशेषणेन कार्यम्, यावता रूपवतामाग्नेयादीनां संनिधौ अरूपो दर्शपूर्णमासाभ्यां यजेतेति यजतिशब्दः समुदायवचनः इति । किमर्थं तर्हि दर्शपूर्णमासशब्दः ? अनर्थकश्च नित्यानुवादमात्रम् । यथा, 'इन्द्रेण देवेन वृष्टम्' 'इडान्ताऽऽतिथ्या संतिष्ठते नानुयाजान् यजति' इति । अथवा, वाक्यार्थस्यैव अत्र विधानं न्याय्यम् । श्रुत्यर्थे हि विधीयमाने दर्शपूर्णमासशब्दोऽनर्थक एव आपद्यते । वाक्यार्थे तु दर्शपूर्णमासशब्दो विशेषणेन

अर्थवान् । यजतिरपि भावनाविधानार्थं प्राप्तोऽपि पुनः श्रूयते । प्राप्तिश्च दर्शपूर्णमासशब्दस्य यागवचनत्वादिति न किञ्चिदनर्थकम् । तस्मादेष पक्षो ज्यायान् ।

टुप्— अत्र ( भाष्य– ) ग्रन्थः । **विशेषणमपि अविधीयमानं न भवति । न च द्वयोर्विधीयमानयोः परस्परेण संबन्धो भवति** इति । अयुक्तमिदं दूषणं अरुणादीनामपि अयं दूषणप्रकारः स्यात् यथा भवता वर्णितम् । ( अपि च अनवकाशमिदं चोद्यं इत्याह– ) बलीयांश्च अयमेव न्यायः ( सप्तमनवमाद्योक्तः ) यत् 'भावनया सर्वेषां संबन्धः' इति । ( कथं तर्हि यागविशेषणता अत आह– ) इतरेतरसंबन्धस्तु ( अरुणैकहायनीवत् ) आर्थः । अत्र ( योऽपि परिहार– ) ग्रन्थः **किं पुनरत्र विशेषणेन कार्यं यावता रूपवतामाग्नेयादीनां संनिधौ अरूपः 'दर्शपूर्णमासाभ्यां यजेत' इति यजतिशब्दः समुदायवचनः** इति तत् ( अपि ) अयुक्तम् ( एव ) । यथैव आग्नेयादीनां द्रव्यदेवतेन रूपवत्त्वम्, एवं प्रयाजादीनामपि । तत्र ( अपि हि ) न कश्चित् रूपे विशेषो विद्यते, न च संनिधाने । तस्मात् ( असति विशेषणे ) प्रकृतत्वाविशेषात् सर्वेषामेव फले विधानं स्यात् । यदपि च ( अत्र अपरितोषात् **अथवा** इत्यादिना परिहारान्तरमुक्तम्, ) दर्शपूर्णमासाभ्यां स्वर्ग इति संबन्धः इति, एतदपि भावार्थाधिकरणे निराकृतं ( तदीयन्यायेन ) यागः एव फले विधीयते । तस्मात् भावना ( एव ) सर्वविशेषणविशिष्टा विधीयते ।

**शेषस्य हि परार्थत्वाद् विधानात् प्रतिप्रधानभावः स्यात् । ४ ॥**

**भाष्यम्—** यत्तु शेषवदिति, शेषस्यानुलेपनादेः परार्थेन विधानम्, पुरुषसंस्कारकत्वेन । एवं दृष्टार्थो भवति । अन्यथा, अदृष्टं कल्पयितव्यं स्यात् । तत्र गणः पुरुषलक्षणार्थो भवति । शक्नोति च संबन्धात् पुरुषान् लक्षयितुम् । अदृष्टं वा कल्प्यताम्, लक्षणा वेति । दृष्टा लक्षणा कल्पयितुं न्याय्या । तस्मात् पुरुषलक्षणार्थो गणः । न च लक्षणं कार्येण संबध्यते । किं तर्हि ? लक्षितः । तद्यथा शुक्लवाससमानयेति । यदा तु शुक्ले वाससी पुरुषलक्षणार्थमुच्येते, न तदा आनयनेन संबध्येते, इति । एवमिहापि न गणः कार्येण संबध्यते, किंतु पुरुषा एव कार्येण संबध्यन्ते । तस्मादनुलेपनादि प्रतिप्रधानं भिद्यते ।

शा— दशमेऽध्याये बाधाभ्युच्चयचिन्तया विकृतिषु अङ्गपरिमाणं चिन्तितम् । अतिदेशविचारश्च सप्तमादिभिः दशमपर्यन्तैः समाप्तः । संप्रति उपदेशातिदेशसाधारण्येन प्रयोगपरिमाणं परिमाणप्रसङ्गात् एकादशे तन्त्रावापचिन्तया चिन्त्यते । तदिह एकप्रयोगवचनचोदितानां एकफलानां संहत्यकारिणां बहूनां कर्मणां साधारणाङ्गभाजां अङ्गानुष्ठानं किं तन्त्रेण भवति, उत आवृत्त्या इति चिन्ता लक्षणार्थः । प्रथमं तावत् उपोद्घातत्वेन संहत्यकारित्वं प्रतिपाद्यते । तत्र '**परस्परानपेक्षाणामुत्पन्नानां फलार्थिनाम् । चोद्यमानं फलं तेषामेकैकस्यावधार्यते ॥ तेषां ह्युद्दिश्यमानत्वात् साहित्यं न विवक्षितम् । तस्मात् प्रत्येकमेव स्यादिति प्राप्तेऽभिधीयते ॥ आग्नेयादिकमुद्दिश्य फलं यद्युपदिश्यते । तत उद्दिश्यमानत्वात् तेषामेकैकशः फलम् ॥ कामिनं तु यदोद्दिश्य कर्मणां चोदना, तदा । तेषां विधीयमानानां सहभावो विवक्षितः ॥**'

**सोम—सूत्रार्थस्तु–** पृथगुत्पन्नानामपि ततो हेतोः ऐककर्म्ये एककालत्वं स्यात् । कुतो हेतोः ? एक शब्दाभिसंयोगेन तन्त्राभिधाने युगपत् प्रयोजनान्वयात् इति ।

वि—'षड्यागानां फलं स्वर्गः प्रत्येकं तन्त्रतोऽथवा ।, आद्यः पृथक् फलार्थित्वात्, न सङ्घस्य फलोक्तितः ॥'

**भाट्ट—** तदेवं दशभिरध्यायैः प्रकृतौ विकृतौ च अनुष्ठेयपदार्थेषु अवगतेषु, अधुना तेषां प्रयोगविध्यवगतानुष्ठानतन्त्रत्वं निरूप्यते । प्रयोगविधिर्हि साङ्गप्रधानभावनायाः फलार्थमेकेन वाक्येनानुष्ठानं बोधयन् एकवाक्योपादानात् साहित्यं बोधयति । तच्च असति बाधके एकक्षणवृत्त्येव कल्प्यते । अत एव अनेकोद्देशेन सकृदनुष्ठानं तन्त्रम् । अत एव न प्रसङ्गातिप्रसङ्गः, तत्र प्रयाजादीनां सकृत्करणेऽपि पशुपुरोडाशादीनामुद्देश्यत्वाभावात् । दधिपयोयागयोरपि अवान्तरकार्यस्यैव उद्देश्यस्य अनेकत्वान्नाव्याप्तिः । अत एव तत् विजातीयविषयं सजातीयविषयं वेत्यन्यदेतत् । एकजातीयसमिद्यागस्यैव

आग्नेयादित्रिकोद्देशेन सकृदनुष्ठानात्, विजातीययोर्दधिपयोयागयोरपि तत्त्वाच्च। तदुपोद्घातत्वेन च दर्शपूर्णमासाद्यनेकप्रधानस्थले किं षड्यागेभ्योऽप्येका फलव्यक्तिः, उत तत्तद्यागेभ्यो भिन्नंभिन्नं फलमिति चिन्तनीयम्। फलव्यक्तिभेदे हि तेषामेकप्रयोगविधिपरिग्रहासंभवात् न तन्त्रत्वसंभवः। तत्र तत्तदुत्पत्तिवाक्येषु तत्तद्यागानां निरपेक्षसाधनत्वेन विहितत्वात् तदनुवादेन विधीयमानः फलवाक्ये फलसंबन्धः अनुवाद्ययागगतसाहित्यस्य अविवक्षितत्वात् प्रत्येकमेव विज्ञायते। अतश्च तत्तदुत्पत्तिवाक्येष्वेव तेषां प्रयोगविधिः। 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यादौ च पौर्णमास्येकत्वमात्रविधिः। तेन सामान्यविहितपूर्वाह्णादिकालबाधेन एकस्यामेव तस्यां इष्टित्रयं कार्यम्। इति प्राप्ते, उत्पत्तिवाक्येषु उत्पन्नानामपि फलवाक्ये फलसंबन्धित्वेन विनियोगविधिकरणात्, विनियोगविधिविषयतया फलोद्देशेन यागानामेव विधेयत्वावगतेः, तद्विशेषणीभूतस्य साहित्यस्य तन्त्राभिधानावगतस्य विवक्षितत्वात् सर्वेभ्य एकैव फलव्यक्तिः। सर्वेषां तस्यां दण्डचक्रादिवत् समुच्चयेन कारणत्वोपपत्तेः। अतश्च तेषां वक्ष्यमाणविधया एकप्रयोगविषयत्वस्यापि उपपत्तेर्युक्तं तन्त्रत्वम्। किंचैवं 'पौर्णमास्यां पौर्णमास्या' इत्यादिवाक्यवैयर्थ्यापत्त्या युगपत् तत्तद्यागसाध्यफलेच्छानैयत्ये प्रमाणाभावेन एकस्यां पौर्णमास्यां यागत्रयकरणानुपपत्तेः। अस्मन्मते तु अस्य एकप्रयोगविधानार्थत्वस्य वक्ष्यमाणत्वान्न वैयर्थ्यम्। अतः फलवाक्ये एकफलव्यक्तिं प्रति षण्णां दण्डचक्रादिवत् समुच्चयावगमात् वक्ष्यमाणरीत्या त्रयाणांत्रयाणां एकप्रयोगोपपत्तेर्युक्तमेव विजातीयदधिपयोयागादीनां तन्त्रत्वम्। सजातीयप्रयाजादीनां च आग्नेयादिभेदेऽपि तन्त्रत्वम्।

. मण्डन— 'षण्णां यजीनां फलमेकमेव।'

. शंकर— 'प्रकृतीष्टौ फलं सह।'

* खण्डपर्वणि तु पूर्वदिने पितृयज्ञीयचरुश्रपणादिसकलेतिकर्तव्यताकं श्राद्धं परदिने तु पितृयज्ञः, कालभेदेन तन्त्रन्यायप्रवृत्तेः। समयमयूखः पृ. ७५.

* तन्त्रप्रसङ्गौ उपदेशातिदेशसाधारणौ। सोम.

* तन्त्रविकल्पः यथा 'तन्त्रं वा वैश्वदेविकम्' मातामहश्राद्धे। (याज्ञ. १।२२८)। बाल. पृ. १६३.

* तन्त्रविषयकं अधिकं किंचित् 'एकादशाध्यायार्थः' इत्यत्र बाल–ग्रन्थे द्रष्टव्यम्। के.

* यदीयतन्त्रमध्ये अर्थान्तरं स तन्त्री। यथा सवनीयपशुतन्त्रे सवनीयपुरोडाशा भवन्ति इति सवनीयपशुस्तन्त्री। वि. १२।२।१२.

**⧗ तन्त्रिसमवाये चोदनातः समानानामैकतन्त्र्यमतुल्येषु तु भेदो, विधिप्रक्रमतादर्थ्यात्, तादर्थ्ये श्रुतिकालनिर्देशात्। १२।१।१।१ ॥**

'अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति' इत्युक्तस्य पशुपुरोडाशस्य अङ्गानि किं पशोः पृथक् कर्तव्यानि, उत पशोरङ्गान्येव तस्यापि उपकुर्वन्ति प्रसङ्गेनेति विचारे पूर्वपक्षमाह। तन्त्रं साधारणो धर्मः। स येषां ते तन्त्रिणः प्रधानानि। तन्त्रिसमवाये तन्त्रिणां प्रधानानां समवाये एककालकर्तृकत्वे, चोदनातः समानानां एकचोदनाचोदितानां ऐकतन्त्र्ये एकतन्त्रत्वं भवति। यथा दर्शपूर्णमासयोः। अतुल्येषु तु भिन्नचोदनाचोदितेषु तु भेदः स्यात् तन्त्रस्य। यथा प्रकृते 'अग्नीषोमीयं पशुमालभेत' इति पशुश्चोदितः, 'अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति' इति पुरोडाशो विहितः। तस्मादत्र न एकतन्त्रत्वम्। विधिप्रक्रमतादर्थ्यात् विधिः विधानं अङ्गानां प्रयोगः। तस्य प्रक्रमः तदर्था प्रवृत्तिः। विधिप्रक्रमस्य तादर्थ्यं विज्ञायते अयं पश्वर्थे विधिप्रक्रमः न पुरोडाशार्थे इति। कथं तादर्थ्यं श्रुतिकालनिर्देशात् श्रुत्या तत्र कालो निर्दिश्यते अग्नीषोमप्रणयनादनन्तरं पशोः कालः, वपाप्रचारादूर्ध्वं पुरोडाशस्य कालः इति। अतः तस्य पृथक् तन्त्रं कर्तव्यं इति पूर्वः पक्षः।

**गुणकालविकाराच्च तन्त्रभेदः स्यात्। २ ॥**

अपिच पाशुकाः प्रयाजानुयाजाः गुणतः कालतश्च विकृताः। पशौ प्रयाजा एकादश पुरोडाशे पञ्च, पशौ अनुयाजा एकादश, ते च पृषदाज्येन इज्यन्ते। पुरोडाशे त्रयः, ते च आज्येन इज्यन्ते इति गुणेन विकारः। पशौ तिष्ठति पाशुकाः प्रयाजा इज्यन्ते 'तिष्ठन्तं पशुं प्रयजन्ति'

इति वचनात् । पुरोडाशे तु आसन्ने हविषि प्रयाजा इज्यन्ते । इति कालेनापि विकारः । एवं पशौ पशुपुरोडाशे च गुणेन कालेन च विकारः । तस्मात् तन्त्रस्य भेदः स्यात् । इति पूर्वपक्षे हेत्वन्तरमुक्तम् ।

**तन्त्रमध्ये विधानाद् वा मुख्यतन्त्रेण सिद्धिः स्यात्, तन्त्रार्थस्याविशिष्टत्वात् । ३ ॥**

पशुतत्पुरोडाशयोः तन्त्रभेदः स्यात् इति पूर्वपक्षं सूत्राभ्यां प्राप्तं वाशब्देन परिवर्तयन् सिद्धान्तमाह । मुख्यतन्त्रेण पशुतन्त्रेण पुरोडाशतन्त्रस्य सिद्धिः स्यात् । कुतः ? तन्त्रमध्ये विधानात् पाशुकस्य तन्त्रस्य मध्ये पुरोडाशस्य विधानात् । 'अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपेत्' इति । तथा च तन्त्रार्थस्य अविशिष्टत्वं भवति । तन्त्रस्य अर्थः तन्त्रार्थः अङ्गकृत उपकारः । सोऽत्र अविशिष्टः अभिन्नः पशोः पुरोडाशस्य च । पशोरङ्गानि पुरोडाशस्य संनिहितानि । तस्मात् ऐकतन्त्र्यम् ।

**विकाराच्च न भेदः स्यादर्थस्याविकृतत्वात् । ४ ॥**

यदुक्तं पूर्वपक्षिणा गुणकालविकाराच्चेत्यादि तत्राह सिद्धान्ती । विकारात् भेदो न स्यात् । अर्थस्य अर्थः अङ्गजनित उपकारः, तस्य अविकृतत्वात् विकृतत्वाभावात् । पशोः पुरोडाशस्य च प्रकृतिवत् क्रियन्ते अङ्गानि । तस्मात् पशौ कृतान्येव पुरोडाशेऽपि उपकुर्वन्ति । गुणकालविकारेऽपि न तन्त्रभेदः इति सिद्धान्तः ।

**एकेषां चाशक्यत्वात् । ५ ॥**

पुरोडाशचोदकशास्त्रप्रापितानामङ्गानां मध्ये वेदेः अग्न्युद्धरणस्य व्रतोपायनस्य इति एकेषां केषांचित् अङ्गानां पुनः कर्तुमशक्यत्वात् प्रयाजादीनामपि एकतन्त्रत्वम् । इति सिद्धान्तपक्षः ।

**एकाग्निवच्च दर्शनम् । ६ ॥**

पशोः पशुपुरोडाशस्य च एकमग्निं दर्शयति 'मध्येऽग्नेराज्याहुतीर्जुहोति पुरोडाशाहुतीः पश्वाहुतीश्च' इति । तेन नाग्न्युद्धरणस्य भेदः । यथा एकाग्नेः एकस्य अग्नेः दर्शनं तथा प्रयाजादीनामपि दर्शनं प्रत्येतव्यम् । तस्मात् पाशुकं तन्त्रं पुरोडाशे प्रसज्यते इति सिद्धान्तः । के.

* तन्त्रीगानेऽपि गानशब्दः, शारीर्यां गीतौ च । भा. १०।४।५।८-९.

* तपः अनशनरूपं याजमानं ज्योतिष्टोमे । 'सर्वे ऋत्विज उपवसन्ति' इति वचनात् क्वचित् ऋत्विजामपि । भा. ३।८।३।९-११.

**तपश्च फलसिद्धित्वाल्लोकवत् । ३।८।३।९ ॥**

ज्योतिष्टोमादौ 'द्व्यहं नाश्नाति' 'त्र्यहं नाश्नाति' इति तपः श्रूयते । तत् तपः आध्वर्यवे वेदे उक्तत्वात् समाख्यया आध्वर्यवम्, इति उत्सूत्रे पूर्वपक्षे प्राप्ते सिद्धान्तयति । संस्कारवत् तपश्च याजमानमेव । कुतः ? फलसिद्धित्वात् । फलस्य सिद्धिर्यस्मात् तत् कायशोषणात्मकानशनरूपं तपः फलसिद्धि, तस्य भावः फलसिद्धित्वं तस्मात् । दुःखभोगदानद्वारा पापनाशनेन फलसाधकत्वात् फलस्य च यजमानगामित्वात् । लोकवत् लोके कृच्छ्राद्यनुष्ठानं यथा तद्वत् । लोके यथा दर्पणस्य मालिन्यनिरासेन प्रतिबिम्बदर्शनक्षमतां भस्मघर्षणमाधत्ते तद्वत् इति वा ।

**वाक्यशेषश्च तद्वत् । १० ॥**

कायशोषणार्थानशनरूपं तपः ज्योतिष्टोमे याजमानं नार्त्विजं इति सिद्धान्ते हेत्वन्तरपरं सूत्रम् । फलसिद्धिकत्वरूपो हेतुः यथा तपसो याजमानत्वसाधकः तद्वत् वाक्यशेषश्च तपसो याजमानत्वसाधकः । 'यदा वै पुरुषे न किंचन अन्तर्भवति, यदाऽस्य कृष्णं चक्षुषो नश्यति, अथ मेध्यतमः' इति तपोविधेर्वाक्यशेषः तपसो याजमानत्वं गमयति । मेध्यः यागार्हः, मेध्यतमः अतिशयेन यागं कर्तुमर्हः अनशनेन अर्हो भवति यजमानः । तस्मात् याजमानं तपः ।

**वचनादितरेषां स्यात् । ११ ॥**

अनशनरूपं तपः याजमानमेव इति पूर्वेण सूत्रद्वयेन उक्तम् । अत्र तृतीयसूत्रे तु केचित् तदपवाद उच्यते । 'ऋत्विज उपवसन्ति' इति वचनात् तु यजमानात् इतरेषां ऋत्विजामपि अनशनरूपं तपः स्यात् । वचनाभावे तु याजमानमेव तपः इति सिद्धान्तः ।

गुणत्वाच्च वेदेन न व्यवस्था स्यात् । १२ ॥

ज्योतिष्टोमे उक्तं अनशनरूपं तपः समाख्यानात् आध्वर्यवं इति यत् पूर्वपक्षिणा उक्तं तन्निरासार्थं तृतीयाधिकरणस्य इदमन्तिमं सूत्रम् । अध्वर्योः परिक्रीतत्वेन गुणत्वात् तपसश्च फलसाधनत्वेन प्रधानभूतयजमानगामित्वात् वेदेन अध्वर्युवेदेन आध्वर्यवसमाख्यया व्यवस्था न स्यात् । तस्मात् तपो नाध्वर्यवं किंतु याजमानमेव । ( इदं सूत्रं अधिकरणान्तरपरमपि ) । के.

* 'तपश्च फलसिद्धित्वात्' ३।८।३।९ इत्यधिकरणे ज्योतिष्टोमे 'द्व्यहं नाश्नाति' इत्यादि तपः कायशोषणं कर्म आध्वर्यवं इति पूर्वः पक्षः, याजमानं इति सिद्धान्तः । तपसः प्रतिबन्धनिवृत्तिरूपदृष्टफलार्थत्वे संभवति नापूर्वरूपादृष्टसंस्कारार्थत्वं कल्पनीयमिति । परिमलः. ३।४।१३।४४ ब्रसू. * तपः दोषनिर्घातं करोति । शक्यं हि दुःखदानात् अधर्मस्य कार्यविरोधिनः तपसा अपनयनम् । वा. ३।८।३।९. * तपः भाविसुखप्रतिबन्धकपापनाशकं कर्म । वि. ३।८।४. * तपः संस्कारवत् यजमानस्य फलप्रतिग्रहणयोग्यत्वं करोति । वा. ३।८।३।९.

⌛ तपोऽधिकरणम् । उपवासन्यायः । उपवासरूपं तपो याजमानं नार्त्विजम् ॥

तपश्च फलसिद्धित्वाल्लोकवत् । ३।८।३।९ ॥

भाष्यम्— तपः श्रूयते– 'द्व्यहं नाश्नाति, त्र्यहं नाश्नाति' इति । तत्र संदेहः किमार्त्विजं तपः, याजमानमिति । किं प्राप्तम् ? समाख्यानात् आर्त्विजं तपः इति प्राप्तम् । एवं प्राप्ते, ब्रूमः । याजमानं तपः इति । कुतः ? फलसिद्धित्वात् । फलसिद्धयर्थं तपः । तपःसिद्धस्य यागफलं सिध्यति । कथमेतदवगम्यते ? दुःखं हि तपः । दुःखं चाधर्मफलम् । अधर्मो यागफलस्य प्रतिबन्धको भवति । अश्रेयस्करो हि सः । तस्मिन् सति न श्रेयो भवितुमर्हति । तस्मात् सोऽपनेतव्यः । फलभोगेन च विरुध्येते धर्माधर्मौ । तस्मात् दुःखफलभोगाय अधर्मः श्रूयते । यत्तेन दुःखं उत्पादयितव्यमिदं तदिति एवं दृष्टार्थं भवति, नादृष्टं कल्पयितव्यम् । तेन फलोपभोगेन क्षीणे अधर्मे अप्रतिबद्धो यागः फलं दास्यतीति । फलसिद्धिश्च यजमानस्य कर्तव्या, नार्त्विजाम् । तस्माद्याजमानं तप इति ।

वा— तपसो दुःखकरत्वात् कर्ता गुणभूतः समाख्यया नियम्यते इत्याशङ्कां निवर्तयति । यस्मात् इदमपि संस्कारवत् फलप्रतिग्रहणयोग्यत्वं करोति । यजमानस्य च योग्यत्वं अप्रतिबद्धं कर्तव्यं न ऋत्विजः, तस्मात् याजमानम् । योग्यता च सर्वत्रैव द्विप्रकारा, दोषापनयेन गुणान्तरोपजननेन वा भवति । तत्र संस्काराः गुणान्तरं उपजनयन्ति, तपश्च दोषनिर्घातं करोति । यो हि ज्योतिष्टोमादि करोति, तस्य एकान्तेन अस्मिन् अन्यस्मिन् वा जन्मनि विहिताकरणप्रतिषिद्धसेवानिमित्ता दोषाः सन्ति । ते च अनपनीताः क्रतुविपरीतस्वफलोपभोगदानात् अत्यन्ताविगुणस्यापि क्रतोः फलं प्रतिबध्नन्ति । सोऽयं क्रतुरप्रतिबद्धहेतुं कंचिदपेक्षते । तत्र प्रकरणश्रुतस्यैव तपसः अवश्यं क्रतुं प्रति कथंचित् उपकारकत्वं कल्पयितव्यम् । तत्र अपेक्षासंनिधियोग्यत्वैः दोषक्षपणकल्पनमेव ज्यायः । शक्यं हि दुःखदानात् अधर्मस्य कार्यविरोधिनः तपसा अपनयनम् । यथैव प्रायश्चित्तचरणात् दुःखेन अल्पेनापि सता महते दुःखान्तराय प्रवृत्तः सन् अधर्मः विनाश्यते इति वचनात् गम्यते, तथैवात्र द्रष्टव्यम् । यानि तु अकर्माङ्गभूतान्येव तपांसि श्रूयन्ते फलसंबद्धानि वा, तेषां फलसाधनस्य अपरस्य अभावात् प्रतिबन्धनिराकरणापेक्षा नास्ति, इति स्वर्गाद्येव कल्प्यते । यानि तु प्रायश्चित्ततपांसि, तेषां दोषापहारमात्रमेव फलम्, इति न सर्वत्र एकरूपत्वं अध्यवसातव्यम् ।

वाक्यशेषश्च तद्वत् । १० ॥

भाष्यम्— एतमेव अर्थं वाक्यशेषोऽपि द्योतयति 'यदा वै पुरुषे न किंचन अन्तर्भवति, यदा अस्य कृष्णं चक्षुषो नश्यति, अथ मेध्यतमः' इति । 'यदा अनशनः, तदा मेधार्हः' इति । मेधश्च यज्ञः । यज्ञश्च त्यागः । त्यागं कर्तुमर्हः तपसा क्रियते, इति वाक्यशेषो भवति । त्यागी च यजमानः । तस्मात् याजमानं तपः इति ।

वा— मेधार्हत्ववाक्यशेषश्च अमुमेवार्थं द्योतयति ।

**वचनादितरेषां स्यात् । ११ ॥**

**भाष्यम्**— किं एष एवोत्सर्गः सर्वं तपो याजमानमिति । वचनादितरेषाम् । यत्र वचनम्, तत्र ऋत्विजां यथा 'सर्वे ऋत्विजः उपवसन्ति' इति ।

**वा**— वरदानवत् एतत् द्रष्टव्यम् 'ऋत्विजः उपवसन्ति' इति । ( स्वयमातृण्णोपधाने वरप्रदानं यथा आर्त्विजं तद्वत् ) ।

**गुणत्वाच्च वेदेन न व्यवस्था स्यात् । १२ ॥**

**भाष्यम्**— अथ यदुक्तं समाख्यानात् आर्त्विजं तप इति, गुणत्वात् न समाख्यया गृह्यते । यत्र पुरुषस्य गुणभावः, तत्र समाख्या नियामिका ।

**वा** — 'गुणत्वे तस्य निर्देशः' ( ३।८।२।६ ) इत्यनेन गतार्थं इति अन्यथा व्याचष्टे । ( उत्तराधिकरणार्थत्वेन ) ।

**सोम**— पूर्वापेक्षया विशेषशङ्कया प्रत्यवस्थानात् **संगतिः । सूत्रार्थस्तु**— तपश्च याजमानं फलोत्पत्तिप्रतिबन्धकदुरितनिवर्तनेन फलसिद्ध्यर्थत्वात् । यथा लोके स्वल्पेनापि प्रायश्चित्तेन महतो दुरितस्य निवृत्तिः । इहापि तथा स्वल्पेनापि तपसा महतोऽपि दुरितस्य निवृत्तिसंभवात् ।

**वि**— 'नाश्नाति द्व्यहमित्येतत् तपः कस्य, तयोर्द्वयोः । दुःखत्वाद्भोक्तृसंस्कारादध्वर्योर्युज्यते तपः ॥, फलान्तरायपापस्य नाशकत्वेन संस्कृतिः । लिङ्गात् ततः स्वामिगामि संस्कारान्तरवत् ततः ॥' वपनादि संस्कारान्तरम्, तद्वत् ।

**भाट्ट**— सोमे 'द्व्यहं नाश्नाति, त्र्यहं नाश्नाति' इति श्रुतम् । तत्रायमशनप्रतिषेधः अनृतवदनप्रतिषेधवदेव आरादुपकारको न फलिसंस्कारकः, आत्मनेपदाद्यभावात्, सत्त्वेऽपि वा स्वरितेत्त्वाद्यभावाच्च । अतश्च समाख्यानादध्वर्युकर्तृकत्वम् । वस्तुतस्तु अनृतवदनवदेव निषेध्याशनस्य अविहितत्वादभावस्य च अननुष्ठेयत्वान्न समाख्याविषयत्वम् । इति कर्तृमात्रविषयत्वे **प्राप्ते**, आरादुपकारकत्वपक्षे अशनस्य क्रतुवैगुण्यजनकत्वम्, तस्य च फलप्रतिबन्धकत्वं इत्यादि कल्पनापेक्षया लाघवेन अशनाभावस्य दुःखजनकतया क्लृप्तत्वात्, तद्दुःखस्य च स्वजनकीभूतपापनाशकत्वस्यापि क्लृप्ततया केवलं तत्पापस्य सोमफलप्रतिबन्धकत्वमात्रकल्पनया अशनाभावस्य यजमाननिष्ठफलप्रतिबन्धकाभावसंपादकत्वमेव 'यदाऽनशनस्तदा मेधार्हः' इति वाक्यशेषानुसारात् कल्पयितुमुचितम् । अतश्च तस्य लिङ्गादेव यजमानमात्रनिष्ठत्वम् । नहि अन्यसमवेतदुःखेन अन्यदीयं पापं नश्यति । न च ऋत्विग्गतपापस्य स्वामिगतफलप्रतिबन्धकत्वकल्पनम्, गौरवात् । अत एव यत्र 'ऋत्विज उपवसन्ति' इत्यादिवचनं तत्र **अनृतवदनन्यायेन** आरादुपकारकत्वकल्पनं व्यधिकरणस्यैव वा प्रतिबन्धकत्वादिकल्पनमिति द्रष्टव्यम् । अत एव न तत्र समाख्या नियामिका ।

**मण्डन**—'तपोऽपि दुःखं यजमानगामि ।' ४.

**शंकर**—'तपश्च याजमानं स्यात् ।' ५.

* '**तपोविशेषैर्विविधैर्व्रतैश्च** श्रुतिचोदितैः । वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥' ( मस्मृ. २।१६५ ) इत्यादिना धर्मजातस्य संप्रदायार्थत्वस्मरणात् । सु. पृ. ५२.

* **तपःसिद्धस्य** यागफलं सिध्यति । कथमेतदवगम्यते, दुःखं हि तपः, दुःखं चाधर्मफलं अधर्मो यागफलस्य प्रतिबन्धको भवति । अश्रेयस्करो हि सः । तस्मिन् सति न श्रेयो भवितुमर्हति । तस्मात् सोऽपनेतव्यः । फलोपभोगेन क्षीणे अधर्मे अप्रतिबद्धो यागः फलं दास्यतीति । भा. ३।८।३।९.

* **तपस्विनामयनं** नाम सत्रम्, तत्र गवामयनधर्मातिदेशः । वि. ८।१।११.

**तप्तं तप्तेन संबध्यते** । सत्यपि संनिधाने आकाङ्क्षाऽभावादसंबन्धः । तथा **चाभाणकः** तप्तं तप्तेन संबध्यते इति ( साकाङ्क्षं साकाङ्क्षेण संबध्यते ) । **भामती.** ३।३।१४।२५ ब्रसू.

* '**तप्ते पयसि**' इति आमिक्षायां पयसो धर्मोऽतिदेष्टव्यः, नोभयधर्मः, नापि केवलदधिधर्मः । वि. ८।२।४, * 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इत्यत्र द्रव्यदेवतालक्षणरूपभेदात् कर्मभेदः चातुर्मास्यवैश्वदेवपर्वणि ।

२।२।९. * तप्ते पयसि दध्यानयनं आमिक्षा प्रयोजयति, न वाजिनं चातुर्मास्येषु वैश्वदेवे। भा. ४।१।९।२२–२४.

**तप्तपरशुग्रहणन्यायः**। तप्तं परशुं अश्वत्थपत्रैः सप्तभिःसप्तभिः सहिताभ्यां हस्ताभ्यां उद्धृत्य सप्तपदानि गत्वा त्यजेत्। दाहस्फोटाद्यभावे शुद्धिः अन्यथा बन्धः इति व्यवहारे दिव्यविशेषः। तदिदं तप्तपरशुग्रहणं छान्दोग्योपनिषदि षष्ठाध्याये षोडशे खण्डे पठितम्। **के.**

**तप्तभ्राष्ट्रतिलन्यायः**। तद्यथा तप्ते भ्राष्ट्रे तिलाः प्रक्षिप्ताः मुहूर्तमपि नावतिष्ठन्ते, एवं प्रकृतान्तरेऽपि। अयं न्यायः 'स्थानेऽन्तरतमः' पा० १।१।५० इति-सूत्रमहाभाष्ये स्पष्टः। **साहस्री.** ५९८.

**तप्तमाषोद्धरणन्यायः**। दिव्यविशेषोऽयम्। तथाहि 'सौवर्णे राजते वाऽपि ताम्रे वा षोडशाङ्गुलम्। चतुरङ्गुलखातं तु मृन्मयं वाऽथ मण्डलम्॥ ( वर्तुलं पात्रम् )। पूरयेत् घृततैलाभ्यां विंशत्या तु पलैस्तु तत्। सुवर्णमाषकं तस्मिन् सुतप्ते निक्षिपेत् ततः॥ अङ्गुष्ठाङ्गुलियोगेन उद्धरेत् तप्तमाषकम्। कराग्रं यो न धुनुयाद् विस्फोटो वा न जायते। शुद्धो भवति धर्मेण निर्विकल्पकराङ्गुलिः॥' उद्धरेत् इति पात्रादुत्क्षेपणमात्रम्। **मिताक्षरा.** २।११३.

* **तमः** द्रव्यं इति मीमांसकाः। **मणि.** पृ. २१.

**तमोदीपन्यायः**। तथाहि 'अज्ञानं ज्ञातुमिच्छेद्यो मानेनात्यन्तमूढधीः। स तु नूनं तमः पश्येद्दीपेनोत्तमतेजसा॥' इति वेदान्तसिद्धान्तमुक्तावली। **साहस्री.** ६६९.

**तमःप्रकाशन्यायः**। अयमुपमर्द्योपमर्दकभावे स्पष्टः। प्रकाशः तमसः उपमर्दकः। **साहस्री.** ४०१.

* **तमोवादः** न किल अन्धकारो नाम तत्त्वतोऽस्ति, तत्प्रत्ययो वा। तथाहि, तद् द्रव्यादीनामन्यतममेव भवेत्। तैरेव विश्वस्य संग्रहात्। तत्र द्रव्यत्वे तमः पृथिव्यादीनामन्यतममन्यद् वा? न तावदन्यतमम्। क्षितिसलिलात्मसु चतुर्दशगुणेषु, तेजसि च एकादशगुणे, मातरिश्वनि च नवगुणे, मनसि च अष्टगुणे, नभसि च षड्गुणे दिक्कालयोश्च पञ्चगुणयोरविनाशिनोः अनन्तर्भावात्। अन्तर्भावे वा तावद्गुणत्वप्रसङ्गान्नित्यत्वापत्तेश्च। नापि द्रव्यान्तरम्, निर्गुणस्य तत्त्वानुपपत्तेः। नीलोत्पलपलाशश्यामलं उपलभ्यमानं महच्च तमो न निर्गुणम्। अतो द्रव्यान्तरमिति चेत्? न। कृष्णरूपस्य गन्धाद्येकार्थसमवायिनः तद्व्याप्तस्य तदभावे अभावात्। तथा च निखिलगुणविरहिणो न द्रव्यत्वम्। गुणकर्मसामान्यभावोऽपि अनाश्रयस्य न संभवति। न च पृथिव्यादिद्रव्यमस्याश्रयः, तदाश्रयत्वे तद्गुणानां तत्सहचरितानां उपलब्धिप्रसङ्गात्। न चास्य तमसः उपलब्धिरुपपद्यते। उपलम्भकाभावात्। न चेन्द्रियाणामेतत्तमो लोचनं गोचरयति। तदभावे तदनुपलब्धिप्रसङ्गात्। अस्ति च निमीलितलोचनस्यापि 'तमः पश्यामि' इत्यभिमानः। घ्राणादीनां गोचरस्तमः इति स्थवीयः। मनोऽपि च आन्तरगोचरनियतं बहिरसति इन्द्रियलिङ्गादौ दवीय एव। न च कारणाभावे कार्यमुत्पत्तुमर्हति। तस्य आकस्मिकत्वेन कादाचित्कत्वानुपपत्तेः। तस्मान्न तमो नाम किंचिदस्ति वस्तु। नापि तज्ज्ञानम्। अथ च तमस्तमालनीलमुपलभामहे इत्यभिमानो लौकिकानां आलोकादर्शने। सोऽयं विप्लवः। एवमभावदर्शनं तद्व्यवहारश्च विप्लव एवेति भावः।

प्रमीयते तावत्तमः तमालमालाश्यामम्। न चाप्रमितावेव प्रमितिविभ्रमसंभवः। न चास्य बाधकमस्ति प्रमाणम्। न च तदभावे प्रमीयमाणमपह्नवमर्हति, अतिप्रसङ्गात्। न च तमसि प्रमाणानुपलब्धेः प्रमा प्रथमा नाप्यपह्नोतुमुचिता, रूपाद्युपलब्धेरपि तत्प्रसङ्गात्। नहि तत्प्रमाणमिन्द्रियाद्युपलभ्यते। रूपाद्युपलब्धिलिङ्गकमनुमानं अस्योपलब्धिरिति चेत्? न, इहापि समानत्वात्। ननु चक्षुरादिगोचरत्वमस्येत्युक्तम्। तर्हि वरमस्तु तमसि समस्तजनसाक्षात्कारास्पदे प्रमितिकार्यदर्शनात् प्रमाणान्तरमनुपलब्धपूर्वमपि, न पुनस्तस्य अन्यतोऽनुपलम्भात् स्पष्टदृष्टकार्यविपर्ययो युज्यते। अस्तु वा चक्षुरेवास्य कारणम्। न च निमीलिताक्षस्य पटलवतो वा तन्नास्ति, अपि तु पिहितम्। कथं तर्हि पिहितं घटादाविव बाह्ये तमसि प्रवर्तेत इति चेत्? मा प्रवर्तिष्ट। किं नश्छिन्नम्? परिच्छेत्स्यति हि तच्छायां पक्ष्मणोः पटलस्य वा अत्यासन्नामपि पिधातृणी पटलपक्ष्मणी पिदधती तामवेक्षते चक्षुः,

न तु पटलपक्ष्मणी। आलोकाप्यायितं तत् पृथिव्यादिग्रहे प्रभवति, न तु तच्छायायां तद्विरोधिन्यां केवलस्यैव तत्र सामर्थ्यात्। कार्यदर्शनोन्नेयत्वात्तस्य सूक्ष्ममपि चेषीकतूलादि चक्षुराच्छादकमासन्नं अनुभूयमानमतिमहत् अनवधि चकास्ति तथेयमपि। न च अन्धानामितरगात्रावयववत् गोलकाधिष्ठाने तत्कार्योपलम्भसंभवः। तद्भावे वा वरमुपलम्भकान्तरकल्पना इत्युक्तम्। कतमत्पुनर्द्रव्यादीनां तमः ? ननु द्रव्यमेव, कालिमगुणशालित्वात् स्पन्दवत्त्वाच्च। तथाहि, कालिमैव अस्य रूपमुपलभ्यते। अतेजसोरिव श्वेतिमा। एवं संख्या अपि एकत्वादिका परिमाणम्, तत् चतुर्विधम्। पृथिव्याद्यणूनामिव तमोऽणूनामप्यनुमानात्। पृथक्त्वसंयोगविभागपरत्वापरत्वसंस्काराश्च पञ्चविधमपि कर्म अध्यक्षमीक्षते यथाह अत्रभगवान् वार्तिककारः। ( कुमारिलाचार्यात् अन्ये )

**'ननु नाभावमात्रस्य तमस्त्वं वृद्धसंमतम्।**
**छायायाः कार्ष्ण्यमित्येवं पुराणे भूगुणश्रुतेः॥'**

भूगुणस्य कार्ष्ण्यस्य छायायां द्रव्यान्तरश्रुतेः इत्यर्थः।

**'दूरासन्नप्रदीपादिदेहचेष्टाऽनुसारिणी। आसन्नदूरदीपादिमहदल्पचलाऽचला॥ देहानुवर्तिनी छाया न वस्तुत्वादिना भवेत्॥'** इति। न च पृथिव्यादीनामन्यतमम्। न तावत् कृष्णरूपस्य तमसः तोयादिभावसंभवः। तोयतेजसोः सितत्वात्, एवं पवनादीनां चारूपत्वात्। न च परोपधानात् कालिन्दीसलिलस्येव तमसः कालिमेति साम्प्रतम्। अनुपहितस्य कदाचिदपि स्वाभाविकरूपान्तरशालिनोऽनुपलब्धेः, क्षेत्रसमुद्धृतस्येव कालिन्दीवारिणः स्वभावस्वच्छधवलस्य। नापि पार्थिवं तमः। तद्गुणानां गन्धादीनामभावात्। ननु तथैव गन्धादिव्याप्तं कृष्णमपि रूपं तन्निवृत्तौ असदित्युक्तम्। तत्किं पवने अनुष्णाशीतस्पर्शः असन्नेव ? गन्धादिव्याप्तस्य तस्य पृथिव्यामुपलब्धेः, पवने च तेषामभावात्, पाकजस्य स्पर्शस्य गन्धादिव्याप्तत्वम्। अयं तु अपाकजः स्पर्शो वायवीयः इति चेन्न, इहापि साम्यात्। नहि तमसोऽपि कालिमा पाकजः। प्रत्यक्षं चोभयत्रापि समानम्। तमःपरमाणवश्च पार्थिवादिपरमाणव इव द्व्यणुकादिक्रमेण महान्तं तमोऽवयविनं पार्थिवमिवारभन्ते। तच्च रूपविशेषे सति अनेकद्रव्यत्वात् महत्त्वाद्वा चाक्षुषमिति न तदुत्पत्त्यनवक्लृप्तिः। न च तस्य दिवारम्भसंभवः शाश्वतिकविरोधे सति तेजसि, न जातु स्पर्शवद्वेगवन्मुद्गरादिघाते परिपन्थिनि कुम्भारम्भाय भवन्ति मृदवयवाः बिभ्रति वा कुम्भमारब्धमिति। अत एव हि दिवाऽपि निरस्ततेजसि गिरिगुहायामारभन्ते एव।

स्यादेतत्। न तामसाः परमाणवोऽवयविनमारभन्ते, स्पर्शविरहादात्ममनोव्योमवत्। न च आरम्भे रूपवत्त्वं प्रयोजकम्, अरूपाणामपि पवनपरमाणूनां स्पर्शवद्द्रव्यारम्भदर्शनात् अस्पर्शानां च आत्ममनसां तदभावात्। तत् किमत्र भवतां तमःपरमाणवः सन्ति न वा ? सन्ति चेत् कथं तदवयविनामभावः ? तद्भावलक्षणत्वात् परमाणुभावस्य। असत्त्वे वा तमःपरमाणूनां कथं न हेतोराश्रयासिद्धिः ? हेतोरस्पर्शस्य असद्रूपत्वात्। असदाश्रयत्वमदोष इति चेन्न। तुच्छस्य अहेतुत्वात् कल्पनाऽऽरोपिततद्भावस्य च वस्तुनः असाधकत्वात्। न जातु समारोपितधूमभावा मिहिका कृशानुसाधनं भवति। प्रामाणिकस्य तु अभावस्य भावाधिकरणमन्तरेण अयोगात्। तमःपरमाणुषु असत्सु आश्रयासिद्धतया भवत्यसिद्धिः, न तु स्वतः अप्रसिद्धस्य सत्यामपि परप्रसिद्धौ साधनाङ्गत्वम्, स्वयमप्रतीतस्य परप्रत्यायनानर्हत्वात्। यथोक्तम् **'योऽपि तावत्पराऽसिद्धः स्वयंसिद्धोऽभिधीयते। भवेत्तत्र प्रतीकारः स्वतोऽसिद्धे तु का क्रिया॥'** इति। अपि च अस्पर्शस्य द्रव्यानारम्भकत्वेन न स्वाभाविकः संबन्धो मनसः शक्यो निश्चेतुम्, दैर्घ्यस्य उपाधेर्विद्यमानत्वात्, धर्माधर्मनिमित्तत्वाद्विश्वकार्यनिर्माणस्य। साक्षात् पारंपर्येण च सर्वं कार्यजातं भोगसाधनं सत् तन्निर्माणं स्यात्। न च मनोऽवयविनः शरीरतया विषयतया वा भोगसाधनता संभवति। इन्द्रियानधिष्ठानतया देहभावाऽभावात् अपार्शिवस्य च तद्भावानभ्युपगमात्। विषयभावस्तु अननुभूयमानतया अनुपपन्नः। इन्द्रियभावस्तु अणुत एव मनसः। तमसस्तु रूपवतो विषयभावेन भवति भोगसाधनत्वमिति न वैयर्थ्यम्। परममहतां पुनः असमवायिकारणसंयोगविरहात् अधिकपरिमाणकार्यद्रव्यानुपपत्तेश्च कारणसमानन्यूनपरिमाणकार्यादर्शनाच्च आधिक्या-

योगाच्च परममहत्त्वव्याघाताच्च न स्वसमवायिद्रव्यारम्भकत्वमिति सोऽयमुपाधिः । न चौपाधिकः संबन्धः अनुमानाङ्गम् । मा भूद् उपाध्यायदर्शनाद् असकृदवगतसहभावस्य अनुमानं शिष्यस्य । न च अनन्यथासिद्धे नीलान्धकारानुभवे परिपन्थिनि स्फुरति प्रत्यक्षे, बाधितविषयं अनुमानमुदेतुमुत्सहते । मा भूत् अनुष्णत्वं तेजसो द्रव्यत्वात् पृथिव्यादिवत् इत्यनुमानम् । द्रव्यान्तरस्य च द्रव्यान्तराश्रयत्वं दृष्टम्, तद्यथा आकरजस्य तेजसः सुवर्णादेः पार्थिवद्रव्योपष्टम्भः, अन्यथापतनादि न भवेत् गुरुत्वाभावात् । यथा च अभिजातमहानीलादिमणिसमाश्रयं तेजः । न च तद्वदेतत् भ्रमणतस्तेज इति सांप्रतम् । तेजसस्तदाश्रयस्यान्ततः खद्योतादिगतस्यापि कयाचिन्मात्रया रूपप्रकाशनव्याप्तत्वात्, तमसश्च तद्वैपरीत्यात् । तस्मात्तमो द्रव्यान्तरमपि पृथिव्याद्यनुविधास्यति, तेजसश्च विनङ्क्ष्यति । तदपगमे च पृथिव्यादिभ्यः पुनः प्रभविष्यति चतुष्कात् । अपवरकप्रविष्टस्य कतिपयालोकावयवसंभेदविरलेऽपि तमसि सान्द्रताऽवगमो भ्रमः, इन्द्रियोपहतेः कालपरिवासवशात् । उपहतिविगमे तु यथावत् पश्यति अपवरकवर्तिनः पदार्थान्, अल्पां च तत्र छायाम् । सा च सान्द्रा पिधत्ते पदार्थान्, न तेजसा विरलीकृता । न चालोकाभावमात्रं तम इति साम्प्रतम्, तस्य नीलत्वानुपपत्तेः अस्मृतानवलोकितालोकस्य च तमःप्रत्ययानुपपत्तिप्रसङ्गात् । तथा च परिस्पन्दादयस्तद्वर्तिनः अवगम्यमानाः कथंचित् क्लेशेन न व्याख्यामर्हन्ति । तस्मात् प्रत्यक्षसिद्धं असति बाधके द्रव्यान्तरमेकादशं तमो नवगुणं चेति सिद्धम् । '**नादृष्टौ दर्शनं छाया न चाभावोऽस्मृतौ गतेः । रूपादुपायसद्भावाद् द्रव्यं द्रव्यान्तरानुगम् ॥**' इति संग्रहश्लोकः । अलं वा नैयायिकैर्विवादेन । आलोकाभाव एव तमः । **कणिका. पृ. ७३–७९.**

**⌛ तरक्षडाकिनीन्यायः ।** तरक्षः भाषायां 'तरस' इति व्याघ्रविशेषे डाकिनीवाहने प्रसिद्धः । तरक्षे डाकिनी तरक्षडाकिनी । डाकिनी तु श्रीमहाकालीगणविशेषः । यथा तरक्षस्था डाकिनी भयङ्कररूपिणी नानाविधभयंकरकार्याणि करोतीति प्रसिद्धम्, तथा प्रकृतेऽपि बोध्यमिति । **साहस्री. ७८९.**

**⌛ तरतमभावापन्नं फलं तरतमभावापन्नसाधनायत्तमिति न्यायः ।** यथा विचारपाटवेन यावद्यावत् विवेकदार्ढ्यं भवति तावत्तावत् भ्रमशैथिल्यं जायते इति भावः । **साहस्री. ३८६.**

*** तरसमयाः** सवनीयपुरोडाशा एव, न तु सर्वे पुरोडाशाः शाक्यानामयने । **भा. ३।८।२२।४२–४४.**

**⌛ तरुबीजन्यायः ।** तरोर्बीजं बीजाच्च अन्यस्तरुः इति जन्यजनकभावः सदातनः प्रसिद्धः, तद्वदन्यदपि । **के.**

*** तर्कः** क्वचित् व्याप्तिग्रहे व्यभिचारशङ्कानिवर्तकः । व्याप्यारोपेण व्यापकारोपद्वारा अनिष्टप्रसञ्जनं तर्कः । तथाहि, वह्निविरहेऽपि धूमः स्यात् इत्याशङ्का कार्यकारणभावप्रतिसंधानान्निवर्तते । तत्रापि 'अहेतुको भवतु' इत्याशङ्का तु 'धूमार्थं वह्नेर्नियमत उपादाने प्रवृत्तिर्न स्यात्' इति व्याघातेन निरसनीया । यत्र स्वत एव शङ्का नावतरति, न तत्र तर्कापेक्षा इति दिक् । **मणि. पृ. ३४.** * तर्कः । विधिवाक्यवैयर्थ्यरूपो बाधकस्तर्कः क्वचित् । 'व्रीहीनवहन्ति' 'तण्डुलान् पिनष्टि' अत्र अवघातपेषणे अपूर्वजनके, विहितधात्वर्थत्वात् यजत्यादिधात्वर्थवत् । अत्रानुमाने तुषविमोकचूर्णत्वयोर्दृष्टप्रयोजनयोः लोकसिद्धत्वेन तादर्थ्ये अवघातपेषणयोर्विधिर्व्यर्थः स्यात् इति विपक्षे तर्कः । पूर्वपक्षोऽयम् । **वि. २।१।३.**

**⌛ तर्काप्रतिष्ठानात् इति न्यायः ।** 'नाप्रतिष्ठिततर्केण गम्भीरार्थस्य निश्चयः' इति न्यायार्थः । यथा हि पुराणेषु पञ्चाशत्कोटियोजनं भूगोलपरिमाणं इत्यादि यदुक्तम्, तत् प्रकृतन्यायेन समाधेयं इति संभवासंभवमीमांसायां बोध्यमिति । ( तर्काप्रतिष्ठानात् इति तु २।१।११ ब्रह्मसूत्रांशः इति बोध्यम् ) । इदं च भीष्मपर्वणि ५।१२ टीकायाम् । **साहस्री. ७५५.**

*** तर्कपादः** नाम प्रथमाध्यायस्य प्रथमः पादः पूर्वमीमांसायाम् । उत्तरमीमांसायां तु द्वितीयाध्यायस्य द्वितीयः पादः । **के.** *** तर्कपादे** विध्यर्थवादमन्त्रनामधेयात्मकवेदस्य सामान्यतः प्रामाण्यम्, विशिष्य च विधिभागस्य प्रामाण्यं वर्णितम् । **कु. १।२।१।१.**

* **तलवकारादिशाखाभेदाः** सामवेदे । तेषु गीतिहेतवः अक्षरविकारादयो विलक्षणाः । ते चानुष्ठाने विकल्प्यन्ते, न तु समुच्चीयन्ते । **वि.** ९।२।७.

* **तवैप्रत्ययः** कृत्यार्थः विधिः । यथा 'अन्वेतवै' अन्वेतव्यं इत्यर्थः । **बाल.** पृ. ४०.

* **तव्यः प्रत्ययः** शब्दभावनावाचकः तव्यत्वेन । **वि.** २।१।१ वर्णकं २. * तव्यः विधात्री श्रुतिः । **वा.** ३।१।७।१३ पृ. ७००.

* **तव्यान्** भोज्यान् पदार्थान् । इति सोमेश्वरः । 'पृणीयादिन्नाधमानाय तव्यान्' । **बाल.** पृ. ५८.

**तस्करस्य पुरस्तात्कक्षे स्वर्णमुपेत्य सर्वाङ्गोद्घाटनं प्रतिभातीति न्यायः ।** स्पष्टः । अयं स० द० सं० जैमिनीये विस्तृतः । **साहस्री.** ७२२.

* **ताण्डके** सर्वशाखागतज्योतिष्टोमानुवादेन प्राथम्यविधानात् नहि तत्रापरस्यापि ज्योतिष्टोमस्योत्पत्तिरस्ति यस्य नियमः स्यात् । **वा.** २।४।२।२५.

* **तात्पर्यं च** शब्दगत एव धर्मविशेषः । तद्ग्राहकश्च अध्ययनविध्यादिरेव । **भाट्ट.** १।१।७. * तात्पर्यं तु तत्प्रतीतीच्छया वक्त्रा अनुसंहितत्वम् । तत्र पदार्थतात्पर्यनिश्चयः संसर्गतात्पर्यनिश्चयश्च तादृशशाब्दबोधे हेतुः तत्संदेहे शाब्दबोधानुदयात्, तात्पर्यभ्रमे च आहार्यशाब्दबोधोदयात् । शुकवाक्ये वेदवाक्ये च ईश्वरतात्पर्यग्रहेण शाब्दबोधः अध्यापकतात्पर्यग्रहेण वा । **न च** प्रकरणादिकमेव तत्तच्छाब्दबोधे हेतुः, न तु तात्पर्यज्ञानं इति **वाच्यम्** । अननुगतप्रकरणादिज्ञानानां हेतुत्वे गौरवात् । **केचित्तु** तात्पर्यज्ञानं लाक्षणिकनानार्थस्थलीयशाब्दे हेतुः, न तु शाब्दबोधमात्रे गौरवात् । एवं च सैन्धवपदजन्यनानार्थोपस्थितिकालीनतत्पदजन्यलवणादिशाब्दबोधे तात्पर्यज्ञानं कारणम् । न चैवं गौरवम्, सर्वशाब्दे तत्तच्छाब्दत्वावच्छिन्ने तत्तत्तात्पर्यज्ञानानां अनन्तकार्यकारणभावापेक्षया लघुत्वात् इत्याहुः । **परे तु** तात्पर्यज्ञानस्य न हेतुत्वं संभवति तज्ज्ञानासंभवात् । आवश्यकप्रकरणसमभिव्याहारादिना तज्ज्ञानसंभवे 'तद्धेतोः' इतिन्यायेन ( तद्धेतोरेव अस्तु हेतुत्वम्, मध्ये किं तेन ) तस्य वैयर्थ्यात् । अतो वेदवाक्यार्थबोधे लौकिक–लाक्षणिक–नानार्थस्थलीयशाब्दबोधे च न तात्पर्यज्ञानं हेतुः इत्याहुः । **मणि.** पृ. ६९. * **तात्पर्येणाभिधानं** नाम प्राधान्येनाभिधानम्, न शेषित्वेन । **वा.** ३।४।४।१२ पृ. ९०३. * **तात्पर्यात्** लक्षणासिद्धिः । **शा.** १।२।१ पृ. ६. * तात्पर्याद्धि वृत्तिः, न वृत्तेस्तात्पर्यम् । गौणत्वाविशेषेऽपि ( वारुण्या निष्कासेन तुषैश्चावभृथं चरन्ति इत्यत्र अवभृथपदे ) तात्पर्यात्० इति कर्मान्ते गौणत्वं संभवति । **सोम.** ७।३।४. * **तात्पर्यावधारणं** विना लाक्षणिकशब्दप्रवृत्त्ययोगः । **सु.** पृ. ७३७. * **तात्पर्याख्यशब्दव्यापारस्य** सर्वत्र भावात् । **सु.** पृ. १४४५.

**तात्स्थ्यात् ताच्छब्द्यं इति न्यायः ।** अयं 'पुंयोगादाख्यायाम्' ( पा० ४।१।४८ ) इतिसूत्रमहाभाष्ये अभिहितः । तद्यथा 'मञ्चा हसन्ति, गिरिर्दह्यते' इति । ( तस्मिन् तिष्ठति तत्स्थः, तस्य भावः तात्स्थ्यम् । सः शब्दः यस्य बोधकः सः तच्छब्दः, तस्य भावः ताच्छब्द्यम् । मञ्चस्थाः पुरुषाः मञ्चशब्देन बोध्यन्ते । गिरिशब्देन गिरिस्था वृक्षा बोध्यन्ते ) । **साहस्री.** ४८४.

* **तादर्थ्यं** किंचित् कुर्वतः, नान्यथा । ( तस्मै इति तदर्थः, तस्य भावः तादर्थ्यम् । यः यस्य किंचिदुपकरोति, स तदर्थः इति वक्तुं शक्यते इति । ) । **ऋजु.** पृ. २११. * तादर्थ्यं तदधीनविधिविषयत्वम् । **सु.** पृ. १३७९. * **तादर्थ्ये** चतुर्थी 'धनलाभाय राजसेवा' 'ऊर्जोऽवरुध्यै' इत्यादौ । तया च फलं गम्यते । ( ऊर्जः गवादिरसस्य पयआदेः अवरुद्ध्यै प्राप्त्यै उदुम्बरं उपयुज्यते इत्यर्थः ) । **वि.** १।२।२. * तादर्थ्ये सति, यथा संभवति तथा कार्यं कल्पनीयम् । **बृहती.** पृ. २१३.

* **तादर्थ्योपकारयोर्भेदोऽपि** अस्ति ? बाढमस्ति । 'अपकुर्वन्नपीष्टो हि तादर्थ्यव्यपदेशभाक् । उपकुर्वन्नपि त्वन्यस्तदर्थ इति नोच्यते ॥' उद्देशमात्रेण तावत् तादर्थ्यसिद्धिः । सा चोपकारापकारयोस्तुल्या तद्यथा मशकार्थो धूमः इत्यपकारिण्यपि प्रयुज्यते । तथोपकुर्वन्नपि प्रसङ्गि–अप्रयोजकयोर्न तादर्थ्येन व्यपदिश्यते । नहि कश्चिदपि शालिकुल्यास्थमुदकं पिबन् मदर्थमेताः प्रणीता इत्यध्यवस्यति । तस्मादन्यत् तादर्थ्यं अन्यश्चोपकार इति

विज्ञायते। वा. ३।१।२।२ पृ. ६५७–५८, * तादर्थ्य-प्रतिपादनरूपेण शेषस्य विनियोजकानि श्रुत्यादीन्येव इति तद्विवेकार्थं लक्षणमारब्धव्यम्। ३।१।२।२ पृ. ६५८.

**ताद्धर्म्यात्ताच्छब्द्यमिति न्यायः**। तद्यथा–जटिनं यान्तं ब्रह्मदत्त इत्याह। ब्रह्मदत्ते यानि कार्याणि, जटिन्यपि तानि क्रियन्ते अतो जटी ब्रह्मदत्तः इत्युच्यते इति। साहस्री. ४८५.

* **तानः** एकश्रुतिः प्रचयः इति पर्यायाः। उदात्तादिभ्यो भिन्न एवायं स्वरः। वि. ९।२।८ वर्णकं ३. * **तानस्वरेण** ऋग्यजुर्मन्त्राणां यज्ञकर्मणि प्रयोगः। तानः एकश्रुतिः। भा. ९।२।८।२९–३० वर्णकं ३.

* **तामरसशब्दस्य** अनार्येषु कश्चिदर्थः प्रसिद्धः। म्लेच्छेषु तु 'पद्मं' इत्यर्थः प्रसिद्धः, स ग्राह्यः। आर्यप्रसिद्धिविरोधस्य अदृष्टत्वेन ईदृशे विषये म्लेच्छप्रसिद्धेरपि आदरणीयत्वात्। वि. १।३।६.

* **ताम्बूलादनम्**। सर्ववर्णपरस्परस्पृष्टताम्बूलादनं उदीच्यानां दाक्षिणात्यानां च अनाचारः। वा. १।३।३।७ पृ. २०४.

* **तार्किकाः** ज्ञानस्य प्रामाण्यमप्रामाण्यं च परतः ज्ञायते इति वदन्ति। वैद्यनाथः १।१।२।२ पृ. १४.

* **तार्तीयसवनिकपुरोडाशेषु** पशोर्भेदेन हविष्कृदाह्वानाभावः (ज्योतिष्टोमे)। भा. १२।२।४।१२–१३.

* **तार्प्यं वासः** घृताक्तः कम्बलः। तन्महाव्रते यजमानः परिधत्ते, अहतं च वासो द्वितीयं परिधत्ते। वि. १०।४।८। घृताक्तं वासः तार्प्यं इति। सोम. १०।४।७. * **तार्प्यादिभिः** उपदिष्टैः सह महाव्रते प्राकृताहतवाससः समुच्चयः। भा. १०।४।७।१३–१५.

**तालसर्पन्यायः**। यथा अवरोहणसमये ऊर्ध्वमुखैस्तालग्रन्थिभिः सर्पोदरविदारणात्तालारोहणं सर्पस्य स्वनाशायेति प्रसिद्धमिति तथा प्रकृतेऽपि। साहस्री. ३१३.

* **तिङ्**। सुप्तिङ्भ्यां शक्तिमद्द्रव्यकारकपक्षेऽपि अवश्यं निष्कृष्य शक्तिमात्रं अभिधेयमेष्टव्यम्। वा. ३।४।४।१३ पृ. ९३४. * **तिङन्त** एव एकपदरूपा विनियोक्त्री श्रुतिः, उपश्लेषलक्षणा नाम। बाल. पृ. ४१.

* **तिङन्तेन** क्रिया उच्यते। भा. २।२।५।१४. * **तिङ्निपातोभयाभिहितकर्तृत्वकर्मत्वयोः** प्रथमा। रहस्य. पृ. ६४–६६. * **तिङ्प्रत्ययावृत्तिलक्षणो** वाक्यभेदः। बाल. पृ. १८१.

* **तिथिर्नाम** (चन्द्रस्य एकैककलावर्धनावच्छेदकः कालः। चन्द्रस्य द्वादशांशभोगपर्याप्तः कालो वा। के.)। 'अमा षोडश' (मीको. भागः १ पृ. ५९१) इत्यत्र द्रष्टव्यम्। भाट्ट. ५।४।७.

* **तिमिरं नाम** नेत्ररोगविशेषः, येन एकः सन्नपि चन्द्रादिः अनेको दृश्यते। भाषायां असौ रोगः 'मोतिबिन्दु' इति उच्यते। के.

* **तिर्यञ्चोऽपि** कामयन्ते सुखम्। एवं हि दृश्यते, घर्मोपतप्ताः छायामुपसर्पन्ति, शीतेन पीडिता आतपम्। भा. ६।१।२।४–५, * तिर्यञ्चः आसन्नं फलं चेतयन्ते न कालान्तरफलं प्रार्थयन्ते। ६।१।२।४, * **तिरश्चां** वैदिके कर्मणि नाधिकारः। ६।१।२।४–५। असमर्थत्वात् अविद्यत्वात् अद्रव्यत्वाच्च। भाट्ट. * तिरश्चां श्रुतार्थापत्तिः कदाचिदपि नास्ति शब्दव्युत्पत्तिनिबन्धनत्वात् तस्याः। ऋजु. पृ. ८९.

**तिर्यगधिकरणम्**। अधिकारो नास्ति तिरश्चां देवानामृषीणां वनस्पतीनां च कर्मसु॥

**फलार्थत्वात् कर्मणः शास्त्रं सर्वाधिकारं स्यात्। ६।१।२।४॥**

**भाष्यम्**— इदमामनन्ति 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्येवमादि। तत्र संदेहः किं यावत् किंचित् सत्त्वं तत् सर्वमधिकृत्य एतदुच्यते, उत समर्थमधिकृत्येति। किं प्राप्तम्? सर्वाधिकारः अविशेषात्। ननु वृक्षादयो न किंचित् कामयन्ते कथं तेषामधिकारः स्यात्। उच्यते। मा भूदचेतनानाम्। तिरश्चस्तु अधिकृत्य यजेत इति ब्रूयात्। ननु तिर्यञ्चोऽपि न किंचित् कामयन्ते। नेति ब्रूमः। कामयन्ते सुखम्। एवं हि दृश्यते घर्मोपतप्ताः छायामुपसर्पन्ति, शीतेन पीडिता आतपम्। आह, ननु तिर्यञ्चः आसन्नं फलं चेतयन्ते, न कालान्तरफलं प्रार्थयन्ते। कालान्तरफलानि च वैदिकानि कर्माणि। उच्यते।

कालान्तरेऽपि फलं कामयमाना लक्ष्यन्ते । शुनः चतुर्दश्यामुपवसतः पश्यामः । श्येनांश्च अष्टम्याम् । न चैषां व्याध्याशङ्का, नियतनिमित्तत्वात् । नानाऽऽहाराणामपि तस्मिन् काले दर्शनात् । समानाहाराणामपि अन्यस्मिन् काले अदर्शनात् । लिङ्गानि च वेदे भवन्ति 'देवा वै सत्रमासत' इत्येवमादीनि देवतानां ऋषीणां वनस्पतीनां अधिकारं दर्शयन्ति । ननु कार्त्स्न्येन विधिमुपसंहर्तुं न शक्नुवन्ति इत्यनधिकृताः । उच्यते । यागं कर्तुं शक्नुवन्ति केचित् । तस्मात् यजेत इत्येवमादीनि अधिकरिष्यन्ति शक्नुवतः । विष्णुक्रमादिवचनानि तु अशक्तान् नाधिकरिष्यन्ति । तत्र यः अनुपदिष्टविष्णुक्रमादिकः स केवलं यागं करिष्यति, कस्तस्य दोषः । द्रव्यपरिग्रहोऽपि देवग्रामः, हस्तिग्रामः, ऋषभस्य ग्रामः इत्युपचारात् अस्त्येवेति । तस्मात् अमनुष्याणामपि शक्नुवतां अधिकार इति ।

**कर्तुर्वा श्रुतिसंयोगाद् विधिः कार्त्स्न्येन गम्यते ॥ ५ ॥**

भाष्यम्— वाशब्दः पक्षं व्यावर्तयति । न चैतदस्ति तिर्यगादीनामपि अधिकार इति । कस्य तर्हि ? यः समर्थः कृत्स्नं कर्म अभिनिर्वर्तयितुम् । न चैते शक्नुवन्ति तिर्यगादयः कृत्स्नं कर्माभिनिर्वर्तयितुम् । तस्मात् एषां न सुखस्याभ्युपायः कर्म इति । कथं यो न शक्यते कर्तुम्, सः अभ्युपायः स्यादिति ।

**न देवानां देवतान्तराभावात्** । नहि आत्मानमुद्दिश्य त्यागः संभवति । त्याग एवासौ न स्यात् ।

**न ऋषीणां आर्षेयाभावात्** । न भृग्वादयो भृग्वादिभिः सगोत्रा भवन्ति । न चैषां सामर्थ्यं प्रत्यक्षम् ।

टुप्— द्रव्यपरित्यागाद्यभावात् असामर्थ्यात् देवादीनामनधिकारः । मनुष्येषु वाचनविष्णुक्रमणाज्यावेक्षणेषु असमर्थो नाधिक्रियते । कुतः ? इतिकर्तव्यतांशे वाचनादीनां गृह्यमाणत्वात् क्रत्वर्थता । तैर्विना फलमेव नास्ति । **न च भृग्वादयो भृग्वादिसगोत्राः** इति अयुक्तम् । अनादिर्हि कालः अस्माकम् । **न देवानां देवतान्तराभावात्** इति, येषां शब्द एव देवता तेषामपि अयुक्तो ग्रन्थः । ( शक्यते हि इन्द्रेणापि इन्द्रशब्दोच्चारणेन हविस्त्यक्तुम् । तस्मादर्थमेव देवतामभिप्रेत्य एतत् भाष्यमिति ) ।

**भाष्यम्**—अपिच तिर्यञ्चो न कालान्तरफलेनार्थिनः ( जन्मान्तरीयफलेन इत्यर्थः ) आसन्नं हि ते कामयन्ते । ननु च उक्तं कालान्तरफलार्थिनः तिरश्चः पश्यामः शुनः श्येनान् चतुर्दश्यामष्टम्यां चोपवसत इति । उच्यते । न जन्मान्तरफलार्थिनः उपवसन्ति । कथमवगम्यते ? वेदाध्ययनाभावात् । ये वेदमधीयते ते एतद्विदुः इदं कर्म कृत्वा इदं फलममुत्र प्राप्नोतीति । न चैते वेदमधीयते । नापि स्मृतिशास्त्राणि । नापि अन्येभ्योऽवगच्छन्ति । तस्मान्न विदन्ति धर्मम् । अविद्वांसः कथमनुतिष्ठेयुः । तस्मान्न धर्मायोपवसन्ति इति । किमर्थं तर्हि एषामुपवासः ? उच्यते । रोगादरुचिरेषाम् । कथं पुनर्नियते काले रोगो भवति ? उच्यते । नियतकाला अपि रोगा भवन्ति यथा तृतीयकाश्चातुर्थकाश्चेति । तस्मात् मनुष्याणामधिकारः इति । न च तिरश्चां द्रव्यपरिग्रहः । नहि एते द्रव्यं स्वेच्छया उपयुञ्जाना दृश्यन्ते । तस्मात् अनीशाना: धनस्य । यत्तु देवग्रामो हस्तिग्राम इति, उपचारमात्रं तत् । तस्मादपि न तिरश्चामधिकार इति । यानि पुनः लिङ्गानि 'देवा वै सत्रमासत' इत्येवमादीनि, अर्थवादास्ते विधिप्ररोचनार्थाः । विद्यते हि विधिरन्यस्तेषु सर्वेषु । न च विधेः विधिना एकवाक्यभावो भवति वचनव्यक्तिभेदात् । स्तुतिस्तु सा । इत्थं नाम सत्राण्यासितव्यानि, यत् कृतकृत्या अपि आसते देवाः, आसन्नचेतना अपि तिर्यञ्चः, अचेतना अपि वनस्पतयः । किमङ्ग पुनर्विद्वांसो मनुष्या इति । ननु विष्णुक्रमादिषु अनधिकृताः केवलं यागं करिष्यन्ति, नैवम् । गुणा यागं प्रति उपदिश्यन्ते, न कर्तारं प्रति । तेन यागमात्रे क्रियमाणे वैगुण्यं इति न फलसंबन्धः स्यात् । कथं पुनः यागं प्रति उपदिश्यते इति चेत्, इतिकर्तव्यताकाङ्क्षस्य यागवचनस्य अन्तिकात् उपनिपतिताः शक्नुवन्ति तं निराकाङ्क्षीकर्तुम् । इतरथा हि कर्तॄन् अधिकुर्वत्सु गुणवचनेषु अनिवृत्ताकाङ्क्षं फलवचनं अनर्थकमेव स्यात् । अनुषङ्गतश्च फलवचनमभविष्यत् । तत्र साकाङ्क्षत्वात् वाक्यमुपरोत्स्यते । अथ एतदेव वाक्यं समर्थानां सगुणं कर्म विधास्यति

असमर्थानां विगुणं इति, तन्न । सकृदुच्चारणे उभयशक्तिविरोधात् वाक्यं भिद्येत । साकाङ्क्षं हि तत् इतिकर्तव्यतां प्रति । तस्मात् साङ्गयागोपदेशः स इति निरङ्गयागोपदेशाभावः । तस्मात् मनुष्याणामेवाधिकारः इति । प्रयोजनं पक्षोक्तं केचिदाहुः । सहस्रसंवत्सरं कर्म न नियोगतो दिवसेषु कल्पयितव्यं इति पूर्वपक्षे तदायुषां देवतादीनां संभवात् इति, सिद्धान्ते तदसंभवात् इति दिवसेष्वेव कल्पयितव्यं इति । तत्तु उपरिष्टात् व्याख्यास्यामः ( ६।७।१३ ) ।

शा— 'तत्र प्रधानवाक्येन सर्वेषामधिकारधीः । जायते, तद्वशेनाङ्गवाक्यानामुपवर्णनम् ॥' अत्रोच्यते '**नैवाज्यावेक्षणादीनां पुरुषं प्रति चोदना । यतोऽसमर्थस्तच्छून्यं कर्म कृत्वाऽधिकारभाक् ॥ क्रतुं प्रति विधिस्तेषां तादृशं तं च शक्नुवन् । कृत्वा फलमवाप्नोति ततोऽन्यस्यानधिक्रिया ॥**' अतः समर्थानामेवाधिकारः ।

सोम— अन्धपङ्ग्वादिविचारवत् देवतातिर्यगधिकारविचारः तत्प्रवृत्तिसफलकत्वाभावात् अनुष्ठानविशेषफलकत्वरहितोऽपि न्यायसाम्यमात्रात् सह प्रवर्तितः इति ध्येयम् ।

वि— 'अन्धादेरस्त्यसौ नो वा, स्वर्गेच्छुत्वात् स विद्यते । प्रधानोक्त्यनुसारेण यथाशक्त्यङ्गवर्णनम् ॥, नैवाज्यावेक्षणादीनां पुरुषं प्रति चोदना । क्रतुं प्रति विधिस्तस्मान्नाशक्तस्याधिकारिता ॥'

भाट्ट— सिद्धे अधिकारे स केषामिति चिन्त्यते । तत्र स्वर्गकामत्वाविशेषात् चेतनमात्रस्याधिकारः । न च तिरश्चां स्वर्गादिकामनाऽसंभवः, परकीयेच्छायाः अप्रत्यक्षत्वेन तदभावनिश्चयानुपपत्तेः । श्येनादीनां अष्टम्युपवासादिदर्शनेन तदनुमानाच्च । न च साङ्गकरणासामर्थ्यात् अनधिकारः, शक्यमात्रस्यैव करणोपपत्तेः । इति प्राप्ते, भावनाया अंशत्रयान्वयोत्तरं पश्चात् विधिबलेन अधिकारिकल्पनात् पूर्वावगतसाङ्गप्रधानानुष्ठानसमर्थ एवाधिकारी । अतश्च असमर्थत्वात् अविद्यत्वात् अद्रव्यत्वात् न तिरश्चामधिकारः । विष्णुक्रमणाद्यसमर्थत्वाच्च न पङ्ग्वन्धबधिरमूकादीनाम् । देवादीनां तु विग्रहाद्यभावादेव नाधिकारः । ऋष्यादीनां तु अनादित्वात् संसारस्य प्रवरवरणादौ ऋष्यन्तरस्यापि संभवात् अधिकारोऽस्त्येवेति भाष्योक्तं अनधिकारप्रतिपादनं अनादरणीयम् ।

मण्डन— 'मनुष्योऽत्राधिकारभाक् ।'

शंकर— 'तिर्यगादेर्नाधिकारः ।'

* **तिर्यगधिकरणे** अङ्गानुसारेण प्रधानवाक्यसंकोचः आश्रितः । **कु.** ३।४।१३।३२. * तिर्यगधिकरणे गन्धर्वादीनां अधिकारो निराकृतोऽपि सहस्रसंवत्सरे सत्रे श्रुतिबलात् स्वीकार्यः इति पूर्वपक्षः । **भाट्ट.** ६।७।१२. * तिर्यगधिकरणे देवानां अनधिकारसाधनम् । **संकर्ष.** ४।३।७. * तिर्यगधिकरणे प्रधानवाक्यजनिताविशेषप्रत्ययबाधेन सर्वाङ्गोपसंहारसमर्थस्याधिकारः उक्तः । **सोम.** ६।३।२. * तिर्यगधिकरणे यथानुष्ठेयवर्गमधिकारः स्यास्यति । **रत्न.** ६।१।१।१. * नित्यनैमित्तिकानां कर्मणां काम्यवत् सर्वाङ्गोपसंहारेणैव प्रयोगः । एकादशे सर्वेषामङ्गानां साहित्येन क्रतूपकारजनकत्वस्य स्थापयिष्यमाणत्वात् तिर्यगधिकरणे यथाविनियोगं अधिकारकल्पनस्य स्थितत्वाच्च । **भाट्ट.** ६।३।१. * सूत्रकारस्य देवताविग्रहादिकमभिमतं वार्तिकाभिमतं चेति षष्ठे तिर्यगधिकरणे प्रपञ्चयिष्यते । **कु.** १।२।४।४३.

* **तिर्यगादिप्रतीतिषु** शब्दशून्यासु इन्द्रियस्य अर्थे एव सामर्थ्यमवधृतम् । **ऋजु.** पृ. ८९.

* '**तिरश्चीनो** विततो रश्मिरेषामधः स्विदासी३दुपरि स्विदासी३त् ॥' ऋसं. १०।१२९।५ पूर्वार्धः । इति एषां कवयो मनीषा इति पूर्वस्यामृचि निर्दिष्टानां कवीनां रश्मिः तिरश्चीनो विततः । किं अधः आसीत्, उत उपरि इति स्विच्छब्दयोगात् प्लुत्या च संशयः । **सु.** पृ. ६७३.

⌛ **तिलतण्डुलन्यायः** । यथा तिलतण्डुलमानयेत्युक्ते असंसृष्टानि तिलानि तण्डुलानि चानीतानि भवन्ति, संसृष्टान्यपि तिलतण्डुलानि वा आनीतानि भवन्ति, तथा प्रकृतेऽपीति । **साहस्री.** १२६.

* **तिष्ठन्** याज्यामन्वाह अत्र स्थानगुणविधिः । **वि.** १०।४।२२.

* 'तिस्रः आहुतीर्जुहोति' इत्यादौ संख्यया कर्मभेदः। संख्याऽधिकरणम्। भा. २।२।७।२१. * 'तिस्र एव साह्नस्योपसदः द्वादशाहीनस्य' इति वाक्ये त्रित्वमेव सर्वदोषरहितत्वात् विधीयते, द्वादशत्वं तु अहीनसंबन्धिवाक्यान्तरादेव प्राप्तं औचित्यरूपेण अस्य स्तुत्यर्थं निवीतादिवत् अनूद्यते। वा. ३।३।८।१६. * तिसृषु प्रत्येकं गीयमानं साम समास्वेव गेयम्। भाट्ट. ९।२।४. * तिसृधन्वदानं चयनस्यैवाङ्गं न क्रतोः। संकर्ष. १।१।६.

* 'तीर्थे स्नाति' इति तीर्थविशेषणं सुखावतरत्वात् दुःखावतरह्रदादि व्यावर्तयति। वा. ३।४।५।१४. * 'तीर्थे स्नाति' इति धर्मः क्रत्वर्थः ज्योतिष्टोमे। भा. ३।४।५।१४-१५. * तीर्थशब्दवत्— तद्यथा तीर्थशब्दः तीर्थमात्रवचनः सन् तीर्थविशेषं धर्मसाधनं कदाचित् ब्रूते 'तीर्थयात्रां गतः' इति। भा. ७।३।८। १९। अत्र ब्रूमः। तीर्थशब्दोऽपि तीर्थमात्रमेव ब्रूते 'तीर्थयात्रां गतः' इति तु उक्त्वा कानिचित्तीर्थानि अनुक्रान्तानि, यतोऽसौ तद्विशिष्टार्थो विज्ञायते। यत्र तु केवलः प्रयुज्यते तत्र तीर्थमात्रमेव ब्रूते। यथा तीर्थे स्नाति, तीर्थमेव समानानां भवति इति। ७।३।८।२१.

* 'तुग्रो ह भुज्युमश्विनोदमेघे रयिं न कश्चिन्ममृवाँ अवाहाः। तमूहथुर्नौभिरात्मन्वतीभिरन्तरिक्षप्रुद्भिरपोदकाभिः॥' ऋसं. १।११६।३। अस्य एवमाख्यायिकासरूपत्वम्। हे अश्विनौ तुग्रो नाम कश्चित् राजा भुज्युनामानं स्वपुत्रं उदमेघे समुद्रे अवाहाः वाहयामास इति तिङां तिङो भवन्ति इति प्रथमपुरुषार्थमध्यमः। प्रसिद्धिद्योतनार्थो हकारः। नकारस्य उपमार्थत्वात् यथा कश्चित् ममृवान् आसन्नमरणः रयिं धनं समुद्रे वाहयति इति दृष्टान्तः। तं भुज्युं आत्मन्वतीभिः दृढाभिः अन्तरिक्षप्रुद्भिः आकाशगामिनीभिः अपोदकाभिः निर्जलाभिः नौभिः युवां ऊहथुः समुद्रात् उत्तारयामासथुः इति। सु. पृ. ६७२.

* तुमुन् प्रत्ययः 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति (पा० ३।३।१०) विहितः विनियोक्त्री श्रुतिः इति भट्टसोमेश्वरमते। पार्थसारथिमते तु नासौ श्रुतिः। (क्रियार्थायां क्रियायामुपपदे भविष्यति अर्थे धातोः एतौ स्तः। कृष्णं द्रष्टुं याति, कृष्णं दर्शको याति)। बाल. पृ. ४५-४६.

⧗ तुलोन्नमनन्यायः। एकस्य शिक्यस्य उन्नमनार्थेन व्यापारेण इतरशिक्यस्य अधोनयनमपि भवति। तद्वत्। संग्रहः.

⧗ तुलायष्टिन्यायः। यथा तुलायष्टिः स्तोकेनोन्नतिमायाति, स्तोकेनायात्यधोगतिम्। एवं खलजनोऽपि स्तोकेनोन्नतिमायाति, स्तोकेनाधोगतिं याति। साहस्री. ६३४.

* तुल्यं च सांप्रदायिकम्। १।२।१।८॥

प्रमादपाठत्वशङ्कानिराकरणार्थार्थवत्त्वावगमलक्षणहेत्वन्तरसमुच्चयार्थः चशब्दः। 'अथवा' इत्यादिना (वार्तिके) 'विधिना त्वेकवाक्यत्वात्' इत्येतदेव सूत्रं प्रमादपाठत्वशङ्कानिराकरणेऽपि योजितम्। विध्येकवाक्यत्वेन स्तुत्यर्थतया अर्थवत्त्वावगमात् प्रमादपाठत्वनिराकरणे एव हेत्वन्तरसमुच्चयार्थः तुल्यं च इति चशब्दः। सु. पृ. ५२.

⧗ तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात्। ३।६।७।१८॥

अग्निष्टोमे त्रयः पशवः अग्नीषोमीयः सवनीयः अनुबन्ध्यश्चेति। तत्र सुत्यादिनात् अव्यवहिते प्राचीने औपवसथ्याख्ये दिने अग्नीषोमीयः पशुरनुष्ठीयते। तत्रैव च उपाकरणादयः पशुधर्मा अपि आम्नाताः। तत्रैव च धर्मोक्तेः प्राक् 'आग्नेयः पशुरग्निष्टोम आलभ्यः' इत्यादिना सवनीयाः पशवोऽपि आम्नाताः। सवनीयानुष्ठानं तु सुत्यादिने। अनुबन्ध्यस्तु अवभृथान्तेऽनुष्ठीयते। तत्र उपाकरणादयो ये पशुधर्मा विहिताः, ते किं त्रयाणामपि पशूनामर्थे विधीयन्ते, उत अग्नीषोमीयसवनीययोर्द्वयोरर्थे, किंवा अग्नीषोमीयस्य एकस्यैवार्थे इतरयोस्तु चोदकेनैव स्युः इति। तत्र प्रकृतेन प्रथमसूत्रेण आद्यः पक्षः उपन्यस्तः। प्रकरणाविशेषात् इति हेतोरावृत्त्या च द्वितीयोऽपि पक्ष उपन्यस्त इति केचित्। यथाश्रुतभाष्येण तु सूत्रेण प्रथमः पक्षः, उत्सूत्रं द्वितीयः पक्षश्च उपन्यस्त इति स्पष्टम्। वार्तिककारेण तु उत्सूत्रं प्रथमः पक्षः, सूत्रेण तु द्वितीयः पक्ष इति प्रतिपादितम्। वयं तु यथाश्रुतसूत्रानुसारेणैव उपन्यस्यामः। सूत्रस्थः पशुशब्दः

लक्षणया पशुधर्मान् बोधयति । अथवा विधिशब्देन पश्वर्थे विधीयते इति उपाकरणादिः पशुधर्मो बोध्यते । तथा च पशुविधिः उपाकरणादिः पशुधर्मः सर्वेषां त्रयाणामपि पशूनां तुल्यः स्यात् । प्रकरणाविशेषात् अग्निष्टोमप्रकरणस्य पशुत्रयेऽपि समानत्वात् । तस्मात् पशुत्रयार्थो धर्मविधिः इति प्रथमः पूर्वपक्षः ।

**स्थानाच्च पूर्वस्य । १९ ॥**

उपाकरणादयः पशुधर्माः त्रयाणामेव पशूनामर्थे स्युः इति प्रथमः पूर्वपक्षः पूर्वसूत्रेणोक्तः । तत्र विशेषमुक्त्वा द्वितीयः पक्षः अनेन सूत्रेणोच्यते । प्रकरणात् स्थानाच्च अनुष्ठानसादेश्याच्च पशुधर्माः पूर्वस्य प्रथमस्य अग्नीषोमीयस्यैव भवेयुः । अनुबन्ध्यस्य अग्निष्टोमप्रकरणसत्त्वेऽपि स्थानाभावात् न तस्य पशुधर्मा विधीयन्ते इति स्पष्टम् । यद्यपि सवनीयस्य समानदेशत्वं कथंचित् संभवति तथापि नानुष्ठानसादेश्यं इति न तस्यापि ते धर्माः, किंतु अग्नीषोमीयस्यैवेति । सिद्धान्तपक्षोऽयम् ।

**श्वस्त्वेकेषां तत्र पुनःश्रुतिर्गुणार्था । २० ॥**

उपाकरणादयः पशुधर्माः अग्नीषोमीयस्यैव न तु सवनीयस्यापि इति वक्तुं शक्यम् । कथम् ? श्वस्तु एकेषाम् । तुशब्दः अग्नीषोमीयात् विशेषद्योतनार्थः । एकेषां केषांचित् शाखिनां ग्रन्थे श्वः औपवसथ्यात् अग्नीषोमीयपशुदिनात् उत्तरदिने विधीयते 'आश्विनं ग्रहं गृहीत्वा, त्रिवृता ( त्रिगुणया रशनया ) यूपं परिवीय ( वेष्टयित्वा ) आग्नेयं सवनीयं पशुमुपाकरोति' इतिवचनेन । तस्मात् पशुधर्माः सवनीयस्य भवितुं नार्हन्ति । ननु तर्हि औपवसथ्ये अहनि सवनीयपश्वाम्नानश्रुतिः किमर्था ? उच्यते । तत्र सवनीयपशोः श्वोविधाने सति पुनःश्रुतिः, सवनीयस्य प्राक्श्रुतिः, औपवसथ्येऽहनि श्रुतिः, गुणार्था । निन्दाद्वारा 'वपया प्रातःसवने चरन्ति पुरोडाशेन माध्यंदिने अङ्गैस्तृतीयसवने' इत्यनेन एकवाक्यतां गत्वा वपाप्रचाररूपगुणस्य विधानार्था भवति । निन्दाश्रुतिश्च सवनीयान् पशून् संकीर्त्य 'यथा वै मत्स्योऽविदितो जनमवधूनुते, एवमेतेऽप्रज्ञायमाना जनमवधून्वते' इति पठिता । यथा वै किल जलस्थश्चपलो मत्स्यः विचरन् शनैः अनवधारितगतिः प्रेक्षकजनमवधूनुते 'किमितो गतः किंवा ततः' इति संदेहे क्षिपति, तथा 'एते पशवः क्व क्रियन्ताम्, एभिः कथं सवनानि पशुमन्ति भवन्ति' इति निर्णयाभावेन संशयमुत्पादयन्ति इति निन्दाश्रुत्यर्थः । एषा निन्दाश्रुतिः औपवसथ्येऽहनि श्रुताऽपि ततः उत्कृष्टा सती 'वपया प्रातःसवने चरन्ति' इति श्रुत्या एकवाक्यतां गत्वा वपाप्रचाररूपगुणविधाने शेषभूता भवति । तेन ज्ञायते पशुधर्माः अग्नीषोमीयस्यैव न तु श्वोविहितस्य सवनीयस्येति । एकेषां शाखिनां सवनीयः पशुः श्वः विधीयते । तत्र एवं सति पुनःश्रुतिः गुणार्था वपाप्रचाररूपगुणविधानशेषः इति सूत्रस्य शब्दार्थः ।

**तेनोत्कृष्टस्य कालविधिरिति चेत् । २१ ॥**

एकोनविंशविंशसूत्राभ्यां सिद्धान्तपक्षः उक्तः । पुनः पूर्वपक्षोपन्यासार्थं सूत्रमिदम् । अग्निष्टोमे औपवसथ्येऽहनि सवनीयपशूनां आम्नानात् तत्रैव च उपाकरणादीनां पशुधर्माणामुक्तत्वात् ते पशुधर्माः सवनीयस्य पशोरेव स्युः, किंवा तत्रैव पठितस्य अग्नीषोमीयस्य सवनीयस्य चेति उभयोः स्युः । ननु तर्हि 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इति वाक्यं किमर्थमिति चेत् । उच्यते । तेन गुणेन वपाप्रचाररूपेण सवनीयः पशुः द्वितीये सुत्यादिने उत्कृष्टः उत्कर्षं प्रापितः । तस्य च वपाप्रचारेण उत्कृष्टस्य पशोः कालस्य अनियमे प्राप्ते 'आश्विनं ग्रहं गृहीत्वा' इत्यादिना वाक्येन कालविधिः कालविशेषस्य विधानं क्रियते, तेन वाक्येन नियतः कालो विधीयते । तथा च कालविशेषविधानार्थं तद्वाक्यम्, न व्यर्थं इत्यर्थः । परंतु उपाकरणम्, यूपे नियोजनम्, शामित्रशालायां नयनम्, संज्ञपनम्, विशसनम्, वपोद्धरणं इत्यादयः पशुधर्माः सवनीयस्यैव । इति चेत् ।

**नैकदेशत्वात् । २२ ॥**

नायं कालविधिः । न वा वपाप्रचारस्य उत्कर्षः नापि तेन पशोरुत्कर्षः । वपाप्रचारस्य उत्कर्षेऽपि वपायाः एकदेशत्वात् वपाप्रचारादीनां उत्तरेषामङ्गानां उत्कर्षः स्यात्, तथापि वपाप्रचारात् प्राक्तनानां उपाकरणादिवपोद्धरणान्तानां उत्कर्षो नैव स्यात् । 'आश्विनं ग्रहं गृहीत्वा' इत्यादिना वाक्येन तु उपाकरणादीनां सर्वेषामेव

अङ्गानां सुत्यादिने अनुष्ठानं विहितम् । तस्मात् औपवसथ्ये अहनि आम्नाताः उपाकरणादयः पशुधर्माः न सवनीयस्य भवितुमर्हन्ति, किंतु अग्नीषोमीयस्यैव । सवनीये तु चोदकेन प्राप्नुवन्ति ।

**अर्थेनेति चेत् । २३ ॥**

पूर्वपक्षिणः शङ्का । ननु उपाकरणस्य 'आश्विनं ग्रहम्' इत्यनेन सुत्यादिने उत्कर्षे विहिते वपादिसहितस्य सर्वस्यैव सवनीयपशोः अर्थेन अर्थादेव उत्कर्षः सिद्धो भवति । एवं च 'आश्विनं ग्रहम्' इति सवनीयस्य पशोः कालविधिः संभवति । 'मुष्टिना पिधाय वपोद्धरणं आसीत आ वपाहोमात्' इति श्रूयते । न च पूर्वेद्युः वपोद्धरणं मुष्टिना पिधाय सुत्यादिने प्रातःसवनपर्यन्तं आसीनेन अवस्थातुं शक्यते । अवश्यमाहारविहारादयः ऋत्विजा कर्तव्याः । तथा च उपाकरणादयः सर्वे धर्मा उत्कर्षेण सुत्यादिनस्थस्य सवनीयपशोरेव धर्माः स्युः न पूर्वदिनस्थस्य अग्नीषोमीयस्य पशोः । इति चेत् ।

**न, श्रुत्यविप्रतिषेधात् । २४ ॥**

'मुष्टिना पिधाय वपोद्धरणं, आसीत आ वपाहोमात्' इति श्रुत्या यदि विरोधो भवेत् तदा अर्थेन उत्कृष्टस्य कालविधिः संभाव्येत, न तु श्रुत्या विप्रतिषेधोऽस्ति । श्रुत्यविप्रतिषेधात् तु न कालविधिः । श्रुत्या विप्रतिषेधः श्रुतिविप्रतिषेधः, न श्रुतिविप्रतिषेधः श्रुत्यविप्रतिषेधः । श्रुत्यविप्रतिषेधात् श्रुतिविप्रतिषेधाभावात् न कालविधिः । औपवसथ्येऽहनि उपाकरणादीनि विशसनपर्यन्तानि अङ्गानि कृतानि स्युः वपाप्रचारश्च श्वः सुत्यादिने प्रातःसवने करिष्यते तदा, यद्यपि पञ्चषप्रहरपर्यन्तं शमिता वपोद्धरणस्थानं मुष्टिना पिधाय आसितुं न शक्नुयात् ततश्च 'मुष्टिना पिधाय' इत्यनया श्रुत्या विप्रतिषेधः विरोधः स्यात् । परंतु तृणमुष्टिना पर्णमुष्टिना वा पिधाय शमिता श्वः वपाप्रचारपर्यन्तं उदासीनः स्यात् इति शक्यते वक्तुम्, तदा च न श्रुतिविरोधः । तथा च न अर्थेन उत्कृष्टस्य कालविधिः । ततश्च उपाकरणादीनि सर्वाण्येव अङ्गानि श्वः सुत्यादिने एव कर्तव्यानि । एवं च पशुधर्माः सर्वे न सवनीयस्य पशोः, किंतु अग्नीषोमीयस्यैव इति सिद्धान्ती ।

**स्थानात्तु पूर्वस्य, संस्कारस्य तदर्थत्वात् । २५ ॥**

सिद्धान्ती एव ब्रूते । तुशब्दः सवनीयार्थत्वनिरासाय । स्थानात् समानदेशात् उपाकरणादयो धर्माः पूर्वस्य अग्नीषोमीयस्यैव भवन्ति । उपाकरणादिरूपस्य संस्कारस्य तदर्थत्वात् पशुयागार्थत्वात् । एते धर्माः पशुयागप्रयुक्ताः न ज्योतिष्टोमप्रयुक्ताः । तस्मात् अग्नीषोमीयधर्मा इति पूर्वोक्तोपसंहारः ।

**लिङ्गदर्शनाच्च । २६ ॥**

सिद्धान्ते हेत्वन्तरपरं सूत्रम् । अग्निष्टोमे औपवसथ्ये अहनि आम्नाताः पशुधर्माः तस्मिन्नेव अहनि आम्नातस्यापि सवनीयस्य पशोर्न भवन्ति किंतु अग्नीषोमीयस्यैव इत्यस्मिन्नर्थे 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने सवने, अङ्गैस्तृतीयसवने' इति सुत्यादिने पशुपुरोडाशरूपलिङ्गं दृश्यते । पुरोडाशयागो हि देवतासंस्कारार्थः । स च अग्नीषोमावेव संस्कर्तुं शक्नोति नाग्निम् । तस्मात् पुरोडाशदर्शनात् लिङ्गात् अग्नीषोमीयस्यैव पशुधर्माः सवनीयस्य तु अतिदेशेन स्युः ।

**अचोदना गुणार्थेन । २७ ॥**

ननु सवनीये पशौ पशुपुरोडाशदर्शनं उपाकरणादिधर्माणां अग्नीषोमीयार्थत्वे लिङ्गं भवितुं नार्हति पुरोडाशस्य छिद्रापिधानार्थत्वात् न्यूनतादोषनिरासार्थत्वात् इति । तत्राह गुणार्थेन छिद्रापिधानार्थेन पशुपुरोडाशस्य अचोदना न चोदना यतः । छिद्रापिधानवाक्यं तु अर्थवादः । तस्मात् पशुधर्मा अग्नीषोमीयार्था एव । के.

तुल्यो हि व्रीहिसंबन्धः शास्त्राद् यागावघातयोः (वा. २।१।३।८) इति वार्तिकोक्तन्यायेन आराहुपकारिणा अङ्गेन प्रधानप्रयुक्तद्रव्यग्रहणस्य निरस्तत्वात्-। ('व्रीहिभिर्यजेत' 'व्रीहीनवहन्ति' इति तुल्ये चोदने, तत्र इयं प्रयोजिका, इयं न इति नास्ति विशेषहेतुः । इति वार्तिकेनैव न्यायाक्षरार्थो व्याख्यातः)। सु. पृ. ६३८.

**⏳ तुल्ययोः एकदेशे उत्कृष्टे ( अन्यत्र नीते ) नूनं अपरोऽपि एकदेशः उत्कृष्यते इति न्यायः ।** श्रुतिसंयोगः पौर्णमास्याः 'यदेवादः पौर्णमासं हविः' इति । यावद्वचनं वाचनिकम् । तत्र न न्यायः क्रमते 'तुल्ययोः एकदेशे०' इति । **भा. ५।४।४।११.**

*** तुल्यानां** च तुल्यवदनुक्रमणं भवति, यथा 'देवा ऋषयो गन्धर्वास्तेऽन्यत आसन्, असुरा रक्षांसि पिशाचास्तेऽन्यत आसन्' इति । **भा. ४।४।७।१५** । अतुल्यानामपि तुल्यवदनुक्रमणं भवति, यथा 'देवा मनुष्या पितरस्तेऽन्यत आसन्' इति । ४।४।७।१८. *** तुल्यानां तु यौगपद्यं** इत्यधिकरणे अङ्गानुष्ठानतन्त्रता वक्ष्यते । तस्याश्च प्रधानप्रयोगतन्त्रत्वमन्तरेण असिद्धेः अर्थाक्षिप्ता प्रधानप्रयोगतन्त्रता । **सु. पृ. ७३३.**

*** तुल्येषु** नाधिकारः स्यात् ( ९।१।५।१९ ) इत्यत्र नैराकाङ्क्ष्ये सति असंकोचकत्वस्य वक्ष्यमाणत्वात् । **कौ.** २।१।४।८ पृ. ७०, ***** तुल्येषु नाधिकारः स्यात् इति गुणसूत्रे तुल्येषु एकत्र संनिधिः अपरत्र विशेषको न स्यात्, विनिगमनाविरहात् इति वक्ष्यते । **कु.** २।२।६।१७.

**⏳ तुल्येषु नाधिकारः स्यात् इति न्यायात् ।** न च ( प्रकरणस्य ) अधिकारात् विशेषः । ( ये एव व्रीहयो भक्तार्थाः, ते एव कर्मार्थाः, न पृथक् केचित् कर्मार्था नाम । इति भाष्येण न्यायाक्षरार्थो व्याख्यातः ) । **वा.** २।१।३।८. ***** नहि अग्निष्टोमपदस्य अविशेषप्रवृत्तस्य अनपेक्षत्वे सति अधिकाराख्यप्रकरणमात्रेण संकोचो युक्तः, **तुल्येषु नाधिकारः स्यात्** इति न्यायात् । **कौ.** ३।२।१२।२६ पृ. २८६.

*** तुल्यार्थानां** समुच्चयो न क्वचित् दृष्टः । **वा.** ३।६।१६।४२ पृ. १०६४.

**⏳ तुल्यायव्ययन्यायः ।** एकेन व्यापारेण आयवत् व्ययोऽपि तुल्यो भवति, तद्वत् एकेन व्यापारेण यत्र लाभालाभौ समौ प्रसक्तौ तत्रायं प्रवर्तते । **संग्रहः.**

*** तुल्यकार्यं** तुल्यजातीयं च तुल्यस्य बाधकं भवति । ( परिभाषा ) । **वा.** ३।५।२०।५२.

**⏳ तुल्यबलप्रेषणन्यायः ।** तद्यथा लोके द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति । स तयोः पर्यायेण कार्यं करोति । यदा तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये भवतः, तत्र यद्यसौ अविरोधार्थी भवति, उभयोर्न करोति । किं पुनः कारणमुभयोर्न करोति, यौगपद्यासंभवादित्यादिकम् 'अन्तादिवच्च' पा० ६।१।८५ इति सूत्रभाष्ये स्पष्टम् । **साहस्री. ८३५.**

*** तुल्यसंख्याकानां** धर्मविरोधे प्रथमस्यैव धर्मा अनुष्ठेयाः । **वि.** १२।२।८.

*** तुषाः** वारुण्यामिक्षानिष्कासश्च चातुर्मास्यवरुणप्रघासावभृथस्य द्रव्यं न पुरोडाशः । **भा. ७।३।५।१६.**

*** तुषोपवापः** अवघातकालीनः न कपालोपादानासादनयोः प्रयोजकः, निनयनकालीनस्तु कपालधारणस्य प्रयोजकः, उपादानस्य तु न सोऽपि प्रयोजकः । कपालं तु न तुषोपवापप्रयुक्तम्, नापि श्रपणप्रयुक्तम् । **भाट्ट.** ४।१।११. ***** तुषोपवापः कपालस्य उत्पत्तेः उपादानस्य पालनस्य च अप्रयोजकः । **बाल. पृ. १०६, *** तुषोपवापः कपालस्य स्वाङ्गभूतस्यापि अप्रयोजकः । **पृ. १०७. *** तुषोपवापः पुरोडाशकपालेन कर्तव्यः 'रक्षसां भागोऽसि' इति मन्त्रेण । तत्र कपालस्य तुषोपवापो न प्रयोजकः, किंतु श्रपणमेव । तथा च पुरोडाशाभावेन कपालाभावेऽपि चरौ तुषोपवापः कर्तव्य एव केनचित् साधनेन, न तु कपालेन । **वि.** ४।४।१।११. ***** तुषोपवापः । 'पुरोडाशकपालेन तुषानुपवपति' इत्यत्र तु पुरोडाशार्थतया उपादानमेवाश्रित्य भूतसंबन्धोपपत्तिः । **सोम.** १०।२।२७. ***** तुषोपवापः हस्तोपादानस्यैव प्रयोजकः, न तूत्पत्तिपालनयोः । **बाल. पृ. १०७. * तुषोपवापं** प्रति कपालस्य शेषत्वेऽपि प्रयुक्तत्वं नास्ति । **वि. ३।१।२.**

*** तुषोपवापन्यायः** । पुरोडाशकपालन्यायः । दर्शपूर्णमासयोः कपालं न तुषोपवापप्रयुक्तम् । **भा.** ४।१।११।२६.

*** तुषोपवापवाक्येऽपि** करणतानियमस्य कपालसंस्कारकत्वापत्तेः एकत्वाविवक्षापत्तिः । **भाट्ट.** ४।१।१४.

*** तुषोपवापविधिः** पुरोडाशकपालं न प्रयुङ्क्ते । **भाट्ट.** ४।१।११.

*** तुषकणविप्रमोचनादिरर्थः** अवघातादिनिर्वर्त्यः पुरोडाशसिद्धिं प्रति षड्भिरपि व्रीहि–पुरोडाश–क्रतु–

अपूर्व–अध्वर्यु–यजमानैः अपेक्षितः । नहि तस्माद्दते व्रीहिभिर्यष्टुं पुरोडाशो वा निर्वर्तयितुं शक्यते । **वा.** ३।१।४।१० पृ. ६६९

**तुषकण्डनन्यायः** । यथा तुषस्य धान्यत्वचः निस्तुषीकरणमुलूखलादिना व्यर्थम्, तथा प्रकृतेऽपि । **साहस्री.** ४०९.

* **तुषनिष्कासद्रव्यकत्वं** वरुणप्रघासावभृथस्य । निष्कासावभृथन्यायः । **भा.** ७।३।५।१७.

**तुष्यतु दुर्जनः इति न्यायः** । यत्र प्रतिवाद्युक्तपक्षं दुष्टमपि वादिना प्रौढवादेन अङ्गीकृत्यापि दूषणान्तरं दीयते, तत्रास्य प्रवृत्तिः । **साहस्री.** १८१. * तुष्यतु दुर्जनः **इति न्यायेन** अपशब्दज्ञानस्य विपरीतत्वमात्रेण अधर्मसाधनत्वमभ्युपगम्य । **उद्योतः.** पा० १।१।१ पृ. ३१.

* **तूपरः** अश्वमेधे सवनीयः पशुर्द्वितीयः । तस्य चङ्क्रयः षड्विंशतिः । **भा.** ९।४।२।१७.

* **तूष्णीं** अवशिष्टनिर्वापः अर्धनिरुते चन्द्राभ्युदये सति । **भा.** ६।५।५।१८–२०.

* **तूष्णींहोमः** । अग्निषु आहितमात्रेषु पवमानेष्टिभ्यः प्राक् ये अग्निहोत्रहोमाः क्रियन्ते सायंप्रातः गौणाग्निहोत्ररूपाः स तूष्णीं होमः । **भा.** ५।३।९।२४. * तूष्णींहोमः अग्न्यर्थः पवमानहविर्वत् असत्याहवनीये एव प्रवर्तते । **रत्न.** ५।३।९।२१–२५. * तूष्णींहोमः आधानाङ्गभूतः । **भाट्ट.** ५।३।९. * तूष्णींहोमः न मुख्याग्निहोत्रम्, किंतु अपूर्वं कर्मान्तरम् । ( आधाने द्वादशसु रात्रिषु मुख्याग्निहोत्रानुष्ठानात् प्राक् अयं क्रियते ) । **सोम.** १०।२।२७. * **तूष्णींहोमे** अग्निहोत्रधर्मा नाम्ना प्राप्यन्ते यथा कुण्डपायिनामयने इति केचिदाहुः । तदयुक्तम् । 'तूष्णीं होतव्यं' इत्यनेन कर्म विधीयते । तस्मिंश्च विधिवाक्ये अग्निहोत्रशब्दो नास्ति येन धर्मातिदेशको भवेत् । तूष्णींहोमः अग्निसंधुक्षणार्थं क्रियते । एतदतो भवति, अग्न्यर्थो होम इत्यवगम्यते योऽग्निहोत्रशब्दः वाक्ये अर्थवादत्वेन प्रवृत्तः स योगेन प्रवर्तते अग्नये होत्रमिति । अतो योगस्य विद्यमानत्वात् नास्ति नामधेयम् । नामधेयाभावाच्च अतिदेशो नास्ति । **टुप्.** ५।३।९।२१. * तूष्णींहोमे अग्निहोत्रधर्माः प्राप्यन्ते न वेति विचारे न प्राप्यन्ते, अत्राग्निहोत्रशब्दस्य यौगिकत्वात् नामधेयत्वाभावेन अतिदेशकत्वाभावात् । **रत्न.** ५।३।९।२१–२५. * **तूष्णींहोमप्रशंसार्था** अग्निहोत्रमीमांसा । **भा.** १०।८।५।८.

* **तृचाः**– सर्वस्तोत्रसाम्नां हि तृचा एवोपादीयन्ते । **वा.** ३।५।१०।३१. * **तृचे** आद्ये एव गानं एकत्रिके क्रतौ माध्यंदिनपवमानस्तोत्रे । **भा.** १०।५।२।७-९, * तृचे आनुष्टुभे अनुष्टुप्गायत्रीद्वयप्रग्रथनेन संपादिते श्यावाश्वान्धीगवसाम्नोर्गानम् । ९।२।६।२५–२८ वर्णकं ३, * तृचे कर्तव्यमपि गानं प्रत्यृचं परिसमापयितव्यम् । ९।२।३।२०, * तृचे गानं रथंतरादिसाम्नाम् । १०।६। ११।१–२.

**तृचे गेयं साम प्रत्यृचं समापनीयम् ॥**
**तृचे स्याच्छ्रुतिनिर्देशात् । ९।२।३।१४ ॥**

**भाष्यम्**— ज्योतिष्टोमे समाम्नायते 'तस्मादेकं साम तृचे क्रियते स्तोत्रीयम्' इति । अत्रायमर्थः सांशयिकः किं तिसृषु ऋक्षु व्यासज्य गानं कर्तव्यम्, उत प्रत्यृचं समाप्तं गानं कर्तव्यमिति । किं प्राप्तम् ? व्यासज्येति । कुतः ? श्रुतिनिर्देशात् । एवं श्रूयते 'एकं साम तृचे क्रियते' इति । साम्नि क्रियमाणे, तन्निर्वृत्तौ गुणभूता त्रिसंख्या ऋग्गता श्रूयते । तत्र यदि एकस्यामृचि उपक्रम्य तस्यामेव एतत् परिसमापयेयुः, न त्रिसंख्यया साधनं अस्य क्रियमाणस्य परिच्छिन्द्युः, एकसंख्यापरिच्छिन्नं क्रियमाणं स्यात्, तत्र श्रुतिर्बाध्येत । तद्यथा 'अयं घटः त्रिषु नागदन्तकेषु स्थाप्यताम्' इत्युक्ते व्यासज्य स्थाप्यते, न पर्यायेण, एवमिहापि द्रष्टव्यम् । **ननु** पर्यायेऽपि एवंजातीयकः शब्दो भवति यथा 'त्रिषु गृहेषु देवदत्तो भुङ्क्ते' इत्युक्ते न यौगपद्यमवगम्यते । पर्यायेणापि भुञ्जाने भवत्येष वादः, एवमिहापि पर्यायेण प्राप्नोतीति । **अत्रोच्यते** । न तत्र त्रिसंख्या भुजिं प्रति उपदिश्यते, येन एतदेवं भवति, तत्र गृहशब्देन संबध्यते, त्रिषु गृहेषु, न द्वयोः एकस्मिन् वा इति । यदा भुजिं प्रति उपदिश्यते ( उपदिश्येत ), तदा यौगपद्येनैव भोजयितव्यः । इह तु त्रिसंख्या क्रियते

इत्यनेन संबध्यते, एवं सति क्रियायां त्रिसंख्या विहिता भवति। तत्र स्वपदगतस्य किंचित् विधायकेन विहितं भवति। इतरथा ऋचः संख्यायाश्च संबन्धस्य पदान्तरगतेन शब्देन भावना उच्येत, तथा अर्थविप्रकर्षः स्यात्। तस्मात् सामनिर्वृत्तिं प्रति त्रिसंख्या उच्यते। आह, ननु त्रिसंख्या ऋक्शब्देनैव अत्र संबध्यते। अन्यथा असति सामर्थ्ये समासः एव न स्यादिति। अत्रोच्यते। न ब्रूमो न संबध्यते इति, संबध्यते एव, समासश्च भवति। स तु समासशब्दः सामनिर्वृत्तौ उपदिश्यते इति। तत्र त्रिशब्दस्य ऋक्शब्दस्य च अर्थो निर्वृत्तौ उपदिष्टो भवति। ऋचि साम निर्वर्तयितव्यम्, एवं ताः तिस्र ऋचो भवन्ति, न न्यूनाः इति। इतरस्मिन् पक्षे अभ्यासः त्रिसंख्यया संबध्येत, तत्र साम क्रियते इति लक्षणा स्यात्, अभ्यासनिर्वृत्तौ सामनिर्वृत्तिशब्दो भवेत्। तस्मात् व्यासज्य गानं कर्तव्यम्।

टुप्—ननु 'तृचे वा लिङ्गदर्शनात्' (१०।६।१।२) इति दशमे तिसृषु ऋक्षु साम गेयं इत्येतत् स्थापितम्। आधस्त्ये चाधिकरणे संस्कारकर्म साम इति स्थितम्। प्रतिसंस्कारं च संस्कारावृत्तिः, इत्यतः व्यासज्य गानपक्षो नैवोत्तिष्ठति। उच्यते। दशमे हि एवं चिन्ता तृचे साम गेयम्, न द्वयोः एकस्यां वेति। इह (तु) तृचगाने स्थिते, किं प्रत्यृचम्, उत व्यासज्य इति। यदुक्तं प्रत्यृचं गानं सिद्धमिति (प्रतिप्रधानं गुणावृत्तिः इति न्यायात्) श्रुत्या न्यायबाधं मन्यमानः पूर्वपक्षमारभते। 'एकं साम तृचे क्रियते' इति अयं (कृञ्–) धातुः सामान्यवचनः विशेषधातुना निराकाङ्क्षीक्रियते। तस्मादयं निराकाङ्क्षीकर्तव्यः। साम चात्र द्वितीयासंयोगात् ईप्सितम्। तस्मात् तेन निराकाङ्क्षीक्रियते सामान्यम्। धातुविशेषस्थानीयं सामजातम्। तस्य धातुविशेषस्थानीयस्य निर्वर्तकत्वेन तृचो विधीयते। एवं करोतिः अभूतप्रादुर्भाववचनः अनुगृहीतो भविष्यति। इतरथा यत् साम ऋचं संस्कुर्यात्, तत् तृचे इति अभ्यासलक्षणा प्राप्नोति करोतेः। अथवा अन्यः श्रुतिप्रकारः। यदि ऋगनुवादेन तृचो विधीयते, तथा सति एकः (तृचः इत्यत्र त्रिशब्दोपात्तत्रित्वरूपः) विधीयमानत्वात् गुणभूतः, शब्दवृत्तेन च अप्रधानभूतः। अपरः (ऋक्शब्दार्थः) उद्दिश्यमानत्वात् प्रधानभूतः, शब्दवृत्तेन च अगुणभूतः। तयोः सापेक्षत्वात् असमासः स्यात्। तृचे इति च समासः। तस्मादपि च धात्वर्थे किंचित् विधेयम्। अपिच सप्तम्या आधारत्वं तृचस्य प्रतिपाद्यते। तत्र यदि एकस्यां साम आधीयेत, तथा सप्तमी बाध्येत तिसृषु श्रुता।

**शब्दार्थत्वाद् विकारस्य। १५॥**

**भाष्यम्—** इतश्च पश्यामः तृचे व्यासज्य साम गातव्यमिति। कुतः? शब्दार्थोऽयं सामसंज्ञको विकारः ऋचो गुणभूत इत्यर्थः। स यदि व्यासज्य क्रियते, बहून्यक्षराणि अविकृतानि भवन्ति। तत्रायं चोदकः अनुग्रहीष्यते। तस्मात् व्यासज्य गातव्यम्।

**दर्शयति च। १६॥**

**भाष्यम्—** 'ऋक् सामोवाच मिथुनी संभवावेति। सोऽब्रवीत्, न वै त्वं ममालमसि जायार्थे, वेदो मम महिमेति। ते द्वे भूत्वोचतुः। सोऽब्रवीत्। न युवां ममालं स्थो जायार्थे, वेदो मम महिमेति। तास्तिस्रो भूत्वोचुः, मिथुनी संभवामेति। सोऽब्रवीत्, संभवामेति। तस्मादेकं साम तृचे क्रियते स्तोत्रीयम्' इति। नैका स्तोत्रीया साम्नः संभवति, नापि द्वे तिस्रः संभवन्तीति व्यासज्य गानं दर्शयति।

**वाक्यानां तु विभक्तत्वात् प्रतिशब्दं समाप्तिः स्यात्, संस्कारस्य तदर्थत्वात्। १७॥**

**भाष्यम्—** तुशब्दः पक्षं व्यावर्तयति। वाक्यानि विभक्तानि त्रीणि एतानि, याः तिस्रः ऋचः। तत्र एकैका ऋक् कृत्स्नेन पदग्रामेण काचित् स्तुतिं अभिनिर्वर्तयति, न ऋगन्तरेण सह कंचिदर्थं संस्तौति। तत्र साम ऋचः संस्तवमभिनिर्वर्तयन्त्याः गुणभावं गच्छत् साहाय्यं करोति। तत्र यदि व्यासज्य गीयेत, न ऋचः स्तुतिं अभिनिर्वर्तयन्त्याः साम उपकारकं स्यात्। नहि सामावयवः साम भवतीति। न च ऋक्समुदायेन कश्चिदर्थः स्तूयते, यत्र सामसंबद्धा स्तुतिं कुर्यात्। ऋक् स्तुतिं करोति, सा न सामसंबद्धा। यः ऋक्समुदायः सामसंबद्धः, स स्तुतिं न करोति। तत्र प्रत्यृचं साम्नि परि-

समाप्ते क्रियमाणे सामवता शब्देन स्तुतिः कृता भवति। सामसंस्कारस्य स्तुतिभावनाऽर्थत्वात् प्रत्यृचं परिसमाप्तं गानं कर्तव्यं इति।

टुप्— प्रत्यृचं वा गेयम्। कुतः? सा स्तोत्रसाधनतया विहिता। सा स्वरं वर्णानां संस्कारं अनियमेन आकाङ्क्षति। तत्र साम नियम्यते संस्कारकत्वेन। तस्मात् साम ऋक्संस्कारद्वारेण स्तोत्रेण संबध्यते, यथा ऋग्गुणः। 'एकं साम तृचे क्रियते' इति निर्ज्ञाते साम्नि संस्कारके गुणवाक्यमिदम्। तत्र यः अप्राप्तो गुणः, स विधीयते। यत् साम्ना ऋचं संस्कुर्यात् इत्यनूद्यते 'तास्तिसृः' इति विधीयते। व्यासज्य गाने (पुनः) साम्ना न (स्तोत्रसाधनं) ऋक् संस्क्रियेत ऋगेकदेशः संस्क्रियेत। न च ऋगेकदेशः स्तुतिं करोति। न च ऋगेकदेशस्य स्तोत्रीयेण संस्कारः अपेक्षितः, ऋचः एव स्तुतिसाधनत्वात्। तस्मात् व्यासज्य गाने (रथंतरं पृष्ठं भवति, यज्ञायज्ञीयेन स्तुवीत इत्यादि–) कृत्स्नं वाक्यं अनर्थकं स्यात्।

**तथा चान्यार्थदर्शनम्। १८॥**

**भाष्यम्**— अन्यार्थमपि वाक्यं एतमर्थं दर्शयति। 'अष्टाक्षरेण प्रथमायामृचि प्रस्तौति, द्व्यक्षरेण उत्तरयोः' इति प्रस्तावभेदं दर्शयति। तथा च 'एका वाऽस्य उत्तमा स्तोत्रीया, तामुद्गृह्य उद्गायेत्' इति उद्गीथभेदं दर्शयति। तस्मादपि प्रत्यृचं गानं कर्तव्यमिति। अर्धर्चप्रगीतेष्वपि ऋच्येव गानं कर्तव्यम्। अपरिपूर्णं तत् वाक्यं अर्धर्चे भवति, ऋचि तु परिपूर्यते इति। पादप्रगीतेषु पादे एव गानं कर्तव्यमिति। पादे एव हि तत् परिपूर्णं वाक्यम्, यथा गोष्ठः वासिष्ठः इति। एवं यावति परिपूर्णं वाक्यम्, तावति साम परिसमापयितव्यम्। क्वचित् पादेऽपि पूर्णं वाक्यम्, ऋच्यपि, क्वचिदर्धर्चेऽपि परिपूर्णम्। यत्र यथा परिपूर्णम्, तत्र तथा गातव्यमिति।

**टुप्— पादप्रगीतेषु पादे एव गानं कर्तव्यम्। पादे एव हि तत् परिपूर्णं वाक्यं यथा गोष्ठः वासिष्ठः इति।** एतदयुक्तं भाष्यम्। कथम्? ऋचि एव एते सामनी (गोष्ठवासिष्ठे) उत्पन्ने, न पादे ('परीतो षिञ्चता सुतं' इत्यस्मिन्, न तु 'सोमो य उत्तमं हविः' इत्यादिपादान्तरेषु। इदं गोष्ठे सामनि)। समाना गीतिः इति लाघवात् त्रिषु पादेषु न गीयते। (किंतु प्रथमे पादे इव इतरेषु पादेषु गीयते)। यथा 'तेभ्यो दश प्राचीः' इति मन्त्रे ('नमो रुद्रेभ्यो ये पृथिव्यां' इत्यादिमन्त्रत्रये अनुषङ्गेण साधारणं 'तेभ्यो दश प्राचीः' इत्यादि सकृदेव आम्नायते तद्वत्)। अपिच पादोत्पन्नायाः (अपि गीतेः) पादे एव अनुक्रमणम्, छान्दोग्ये नैव दृश्यते ऊहे (ऊहग्रन्थे) इति।

**अनवानोपदेशश्च तद्वत्। १९॥**

**भाष्यम्**—अनवानोपदेशश्च तद्वत् युक्तो भविष्यति। यथा अस्माभिर्न्याय उपदिष्टः। अनवानं गायतीति शक्यते अनवानं प्रत्यृचं परिसमापयितुम्। न तु तिसृषु व्यासज्य शक्यते। अपिच, स्वाध्यायकाले प्रत्यृचं गानं परिसमापितम्। स्वाध्यायकाले चाभ्यासः, प्रयोगकाले कथं प्राप्नुता स्यादिति। तद्यदि प्रयोगकाले प्रत्यृचं गानं कर्तव्यम्, ततः स्वाध्यायकाले तदभ्यासो युक्तः। तस्मादपि प्रत्यृचं गेयमिति।

**अभ्यासेनेतरा श्रुतिः। २०॥**

**भाष्यम्**— अथ यदुक्तम् 'तस्मादेकं साम तृचे क्रियते' इति। तासु अभ्यासेन इतरा श्रुतिर्द्रष्टव्या। पर्यायेणेत्यर्थः। नहि अत्र ऋक् सामनिर्वृत्त्यर्थं उपादीयते। तस्मान्न शक्यमिदं वक्तुं सामनिर्वृत्तिसाधनीभूतामृचं त्रिशब्दः परिच्छेत्स्यतीति। साम स्तोत्रस्य गुणभूतं निर्दिश्यते, 'रथंतरं पृष्ठं भवति' 'बृहत् पृष्ठं भवति' इत्येवमादि। तत्र प्रत्यृचं न्यायेन गानं प्राप्तम्। न सामनिर्वृत्त्या संख्या संबध्यते। किं तर्हि? ऋग्भिः। तत्र अन्यथा नावकल्पते इत्यभ्यासो लक्ष्यते तिसृषु अभ्यसितव्यं सामेति। यथा त्रिषु कुलेषु देवदत्तो भोजयितव्यः इति। यदा त्रिसंख्या कुलैः संबध्यते, तदा अभ्यासो लक्ष्यते। एवमिहापि द्रष्टव्यम्। तस्मात् प्रत्यृचं परिसमाप्तं गानं कर्तव्यमिति।

**शा— 'साम क्रियत इत्येवं सामनिर्वृत्तिरुच्यते। तामुद्दिश्य ऋचां त्रित्वमङ्गत्वेन विधीयते॥'** तस्मात् व्यासज्य गेयम्। इति प्राप्ते, उच्यते। **'स्तोत्रीयस्य हि साम्नोऽत्र तृचसंबन्ध उच्यते।**

**स्तोत्रसाधनभूतं च स्तोत्रीयमिति भण्यते ॥ साम्नः स्तोत्राङ्गभावश्च स्तोत्रसाधनसंस्कृतेः ।, स्तोत्रसाधनता चर्चां प्रत्येकं, न तु सङ्घः ॥'** तस्मात् प्रत्यृचं गेयम् ।

**सोम—** पूर्वाधिकरणोक्तं साम्नां ऋगभिव्यञ्जकत्वं उपजीव्य अत्र प्रत्यृचं परिसमाप्य गेयं इति सिद्धान्तप्रवृत्तेः ( उपजीव्योपजीवकभावः ) संगतिः । **सूत्रार्थस्तु—** तृचे व्यासज्य गानं स्यात् 'साम क्रियते' इति सामनिर्वृत्तेः श्रुतत्वात्, तत्रैव त्रित्वान्वयात् । यदा तृचे क्रियते इत्यनेन त्रिशब्दऋक्शब्दार्थयोः संबन्धविधाने परपदसंबन्धविधानात् वाक्यं स्यात्, क्रियते इति धात्वर्थसामकरणे त्रित्वविधाने तु श्रुत्यनुग्रहः इति ।

**वि—** 'अंशैः सामर्क्षु ( साम ऋक्षु ) कृत्स्नं वा प्रत्यृचं, तिसृभिः श्रुतेः । अंशै, मैवं स्तुतेरंशैरसिद्धेः प्रत्यृचं भवेत् ॥'

**भाट्ट—** तच्च साम योन्यामुत्पन्नमपि उत्तरयोरतिदिष्टत्वात् तृचे गेयमित्यविवादमेव । तत्रापि च यद्यपि ऋचां प्रधानत्वात् प्रतिप्रधानं गुणावृत्तेर्न्याय्यत्वात् प्रत्यृचं परिसमापनीयमित्यपि सिद्धमेव । तथापि तदेवाक्षिप्य समाधीयते । 'एकं साम तृचे क्रियते स्तोत्रीयम्' इति वचनेन हि न तावदृगुद्देशेन सामविधिः, तस्य लिङ्गादेव प्राप्तेः । नापि त्रित्वविशिष्टऋगुद्देशेन, विशिष्टोद्देशे वाक्यभेदात् । नापि स्तोत्रीयऋगुद्देशेन त्रित्वविध्यनुपपत्तेश्च । अत एव स्तोत्रोद्देशेनापि न त्रित्वस्य ऋक्परिच्छेदद्वारा साक्षाद्वा विधिः, अस्य ज्योतिष्टोमप्रकरणे समाम्नानेऽपि स्तोत्रविशेषप्रकरणाभावात् । प्रकरणेन स्तोत्रस्य उद्देश्यत्वानुपपत्तेश्च । स्तोत्रस्य सामविशेषणत्वेनोपादानात् स्तोत्रीयपदेनापि तत्प्रतिपादनानुपपत्तेश्च । त्रित्वस्य ऋग्विशेषणत्वेनोपात्तस्य स्तोत्रोद्देशेन विध्यनुपपत्तेश्च । स्तोत्रोद्देशेन त्रित्वविशिष्टऋग्विधानं तु ऋचां प्रकरणादेव स्तोत्रे प्राप्तत्वात् पूर्वोक्तदूषणगणापत्तेश्चानुपपन्नम् । अतः सप्तमीबलात् त्रित्वविशिष्टऋचामेव सामोद्देशेन विधिः । उद्देश्यसमर्पकं च स्तोत्रीयपदम् । स्तोत्रीयं च योग्यताबलात् सामैवेति सामेत्यनुवादः । सामपदमेव वा तथा अस्तु । अवभृथाद्यङ्गसामस्वपि च तृचाधारत्वविधिरस्तु । स्तोत्रीयपदं चोपलक्षणम् । सर्वथा त्रित्वविशिष्टानां ऋचां साम प्रति गुणत्वात् गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वात् व्यासज्य गेयम् । एवं च 'यद्योन्यां' इति वाक्यं नातिदेशविधायकम्, अपि तु सामसाधारण्यानुवादः त्रित्वापेक्षितऋग्विशेषसमर्पकम् । **इति प्राप्ते**, सामाधारतया तृचविधौ पाठादेव योनिऋक्प्राप्तेः उत्तरयोरपि उत्तराग्रन्थपठितयोः क्रमप्रकरणादिना तत्तत्सामाधारत्वेन प्राप्तिसंभवात् । इतरथा तत्तत्सामाधारत्वेन तदुत्तराप्राप्तेः तत्रापि असंभवापत्तेः 'यद्योन्यां गायति तदुत्तरयोर्गायति' इत्यस्य वैयर्थ्यापत्तिः । अतोऽवश्यं क्रमप्रकरणादिना तत्तत्स्तोत्राङ्गतया प्राप्तानां योन्युत्तरादिरूपाणां ऋचां स्तोमविधिवशेन समुच्चयावगतौ उत्तरयोरपि स्तोत्राङ्गत्वनिर्वाहार्थं यत्किञ्चित्सामप्राप्तौ 'यद्योन्यां' इत्यतिदेशेन योनिसाम नियम्यते । यथाप्राप्तस्यैव च नियमः, इति साम्नो ऋगक्षराभिव्यक्त्यर्थत्वेनैव प्राप्तत्वात् ऋचां प्राधान्यावगतेः प्रतिप्रधानं गुणावृत्तिन्यायेन प्रत्येकमेव गेयम् । एवं च 'एकं साम तृचे क्रियते' इत्यनेन तृचोद्देशेन स्तोत्रीयविधानात् अवभृथाद्यङ्गभूतसाम्नां चयनाद्यङ्गभूतषाडहिकसाम्नां च नोत्तरासु गानम् । अत्र हि त्रित्वस्य ऋचि अन्वयव्युत्पत्तेर्न विशिष्टोद्देशे वाक्यभेदः ; 'यद्योन्यां' इत्यनेन उपसंहाराच्च स्तोत्रीयस्य सामरूपतासिद्धेः सामेत्यनुवादः । वस्तुतस्तु उत्तराणां अवान्तरप्रकरणात् तत्तत्स्तोत्राङ्गत्वेनैव प्राप्तेः अवभृथाद्यङ्गत्वे प्रमाणाभावात् तत्र तृचगानाप्रसक्तेः 'एकं साम' इत्यादेर्नोक्तप्रयोजनलाभः । अत एव तत्र सामविध्यन्यथाऽनुपपत्त्या तदाश्रययोनिमात्रस्यैव विनियोगात् तज्जन्यगुणाभिधानस्यैव अवभृथादौ उपयोगः । किंतु तृचोद्देशेन सामैकत्वविधिः, सामेति विशिष्टकारकविधानेऽपि सामैकत्वविधेस्तात्पर्यात् । एकपदं स्तोत्रीयपदं चानुवाद एव । सामैकत्वविधिप्रयोजनं च यत्र विकृतौ अग्निष्टुदादौ 'आग्नेयीषु स्तुवते' इति प्राकृतयोन्युत्तराबाधेन ऋगन्तरविधानम्, तासां च न विकृतिप्रकरणे पाठः अपितु दाशतयीभ्य आनयनम्, तत्र तु स्तोमसंख्याऽनुरोधेन आनीतासु ऋक्षु प्राकृतसामपाठे अनियमेन द्वित्रितावत्संख्याकसाम्नां त्रिणवादि-

संख्याकऋक्षु पाठप्रसक्तौ तृचे एव एकैकसाम्नां पाठः, ऋगन्तरेषु माध्यंदिनादिपवमाने सामान्तरागमः इति ।

**मण्डन--** ' ऋचः संस्कारकं साम । '

**शंकर--** ' साम संस्कारकर्म च । '

* तृचे बार्हते बृहतीविष्टारपङ्क्त्योरेव प्रग्रथनेन संपादिते रौरवयौधाजयसाम्नोर्गानं ज्योतिष्टोमे । भा. ९।२।६।२५-२८ वर्णकं २, * तृचे रथंतरादिसाम्नां गानम् । १०।६।१।१-२.

## तृचे स्याच्छ्रुतिनिर्देशात् । ९।२।३।१४ ॥

अग्निष्टोमे ' तस्मादेकं साम तृचे क्रियते स्तोत्रीयम् ' इति समाम्नायते । तत् साम किं तिसृषु ऋक्षु व्यासज्य गातव्यम्, उत प्रत्यृचं समाप्य गातव्यं इति विचारे पूर्वपक्षमाह । तृचे गानं व्यासज्य कर्तव्यं स्यात् श्रुतिनिर्देशात् ' एकं साम तृचे ' इति श्रुत्या तथा निर्देशात् । तस्मात् तृचे व्यासज्य एकस्य साम्नो गानम् ।

## शब्दार्थत्वाद् विकारस्य । १५ ॥

एकं साम तृचे व्यासज्य गातव्यं न प्रत्यृचं समापनीयं इति पूर्वपक्षे हेत्वन्तरमाह । विकारस्य सामसंज्ञकस्य शब्दार्थत्वात् ऋगर्थत्वात् ऋचो गुणभूतत्वात् व्यासज्य साम गातव्यम् । तथा सति बहूनि अक्षराणि अविकृतानि भवेयुः । प्रत्यृचं परिसमापने तु सर्वाण्येव अक्षराणि विकृतानि स्युः । तस्मात् तृचे व्यासज्य साम गातव्यम् ।

## दर्शयति च । १६ ॥

अर्थवादश्च तृचे एकस्य साम्नो व्यासज्य गानं दर्शयति ' ऋक् सामोवाच मिथुनी संभवावेति, सोऽब्रवीत् न वै त्वं ममालमसि जायार्थे वेदो मम महिमेति । ते द्वे भूत्वोचतुः सोऽब्रवीत् न युवां ममालं स्थो जायार्थे वेदो मम महिमेति । तास्तिस्रो भूत्वोचुः मिथुनी संभवामेति, सोऽब्रवीत् संभवामेति तस्मादेकं साम तृचे क्रियते स्तोत्रीयम् ' इति ( अत्र वाक्ये कियांश्चित् पाठभेदः भाट्टदीपिकायां ) स्तोत्रीयसाम्नः एका ऋक् न संभवति, न द्वे तिस्रस्तु संभवन्ति इति तृचे व्यासज्य गानं दर्शयति । इति पूर्वपक्षः ।

## वाक्यानां तु विभक्तत्वात् प्रतिशब्दं समाप्तिः स्यात्, संस्कारस्य तदर्थत्वात् । १७ ॥

साम तृचे व्यासज्य गेयं इति पूर्वपक्षं तुशब्देन व्यावर्त्य सिद्धान्तमाह । साम्नः तृचे व्यासज्य न गानं किंतु प्रतिशब्दं प्रत्यृचं साम्नः समाप्तिः स्यात् । प्रत्यृचं समापनीयं गानम् । कुतः ? वाक्यानां विभक्तत्वात् । एकैका ऋक् एकैकं वाक्यम् । एकैका हि ऋक् कृत्स्नेन स्वगतपदग्रामेण कांचित् स्तुतिं अभिनिर्वर्तयति न ऋगन्तरेण सह कंचिदर्थं संस्तौति । न च ऋक्समुदायेन कश्चिदर्थः स्तूयते । यदि व्यासज्य गीयेत, न ऋचः स्तुतिं अभिनिर्वर्तयन्त्याः साम उपकारकं स्यात् । प्रत्यृचं साम्नि परिसमाप्ते तु सामवता शब्देन स्तुतिः कृता भवति । संस्कारस्य सामरूपस्य तदर्थत्वात् स्तुतिभावनार्थत्वात् स्तुत्यर्थत्वात् । तस्मात् प्रत्यृचं साम परिसमाप्तं गेयं इति सिद्धान्तः ।

## तथा चान्यार्थदर्शनम् । १८ ॥

साम्नः प्रत्यृचं गानं परिसमापनीयं इति सिद्धान्ते लिङ्गमाह । तथा च साम प्रत्यृचं समापनीयं इतीममर्थं अन्यार्थमपि वाक्यं दर्शयति । ' अष्टाक्षरेण प्रथमायामृचि प्रस्तौति द्व्यक्षरेणोत्तरयोः ' इति प्रस्तावभेदं दर्शयति । ' तथा एका या अस्योत्तमा स्तोत्रीया, तामुद्गृह्य उद्गायेत् ' इति उद्गीथभेदं दर्शयति । तस्मादपि प्रत्यृचं गानं परिसमापनीयम् ।

## अनवानोपदेशश्च तद्वत् । १९ ॥

प्रत्यृचं साम समापनीयं इति सिद्धान्ते हेत्वन्तरमाह । अनवानोपदेशः ' अनवानं गायति ' इति वचनम् । तिसृषु ऋक्षु तु व्यासज्य गाने अनवानता न शक्या । एकैकस्यां ऋचि तु कथंचिच्छक्या । एवं प्रत्यृचं गानसमाप्तौ स्वीकृतायां अनवानस्य उपदेशः तद्वत् पूर्वोक्तान्यार्थदर्शनवत् युक्तो भविष्यति । चकारः हेत्वन्तरसमुच्चयार्थः ।

## अभ्यासेनेतरा श्रुतिः । २० ॥

तिसृषु ऋक्षु व्यासज्य साम गातव्यं इत्यत्र पूर्वपक्षिणा ' एकं साम तृचे क्रियते ' इति श्रुतिरुदाहृता । तस्या गतिमाह सिद्धान्ती । ' अनवानं गायति ' इति श्रुतेः

इतरा 'एकं साम तृचे' इति श्रुतिः अभ्यासेन स्यात्। प्रत्यृचं समाप्यमानस्य समस्तस्य गानस्य अभ्यासो भवति, तेन पुनःपुनर्गानेन सा श्रुतिः उपपद्यते। अनवानश्रुतिस्तु बलीयसी, इतरा श्रुतिस्तु अभ्यासपरत्वेनापि उपपन्नत्वात् दुर्बला। तस्मात् प्रत्यृचं गानं परिसमाप्तं कर्तव्यं इति सिद्धान्तः। **के.**

* **तृचशब्दः** समानच्छन्दसि समानदेवताके च अविशेषतः भवति इत्युक्तम्। **भा.** १०।४।२३।४८, * **तृचशब्दं** एकं कंचित् सामान्यविशेषमाश्रित्य उपचरन्ति। ९।२।४।२४ वर्णकं १.

**तृणारणिमणिन्यायः**। तृणं प्रसिद्धम्, अरणिस्तु 'निर्मन्थ्यदारुणि त्वरणिर्द्वयोः' इति कोशादग्निसिद्ध्यर्थं निर्मन्थनीये काष्ठविशेषे वर्तते, मणिस्तु अग्निगर्भात्मकसूर्यकान्तपदवाच्याश्मविशेषो गृह्यते अरणिपदसाहचर्यात्। यतस्तृणारणिमणिन्यायेन हेतुत्वान्न व्यभिचार इत्यादि। एवं तार्णवह्निं प्रति तृणस्य, आरणवह्निं प्रत्यरणेः, मणिजन्यवह्निं प्रति मणेश्च कारणत्वम्। न तु वह्नित्वावच्छिन्नं प्रति तृणादेः कारणत्वं परस्परव्यभिचारात्, एवं यत्र कार्यकारणभावबाहुल्यम्, कार्यतावच्छेदकं कारणतावच्छेदकं च नाना तत्रास्य प्रवृत्तिः। **साहस्री.** ४३३.

* **तृणारणिमणिन्यायेन** संनिपातिनामपि समुच्चयस्याविरोधात्। **संकर्ष.** २।३।३. * अङ्गानां प्रत्येकमुत्पन्नानां प्रत्येकमेव प्रयोजनाकाङ्क्षावशेन विनियोगविधिकल्पनात् सत्यपि एकस्य प्रधानस्य एकस्मिन्नेव क्रतूपकाराख्ये फले सर्वेषामङ्गानां तत्र साहित्यानवगमात् विकल्पेनैव **तृणारणिमणिन्यायेन** कारणता। **भाट्ट.** ११।१।२. * तत्तद्वाक्ये निरपेक्षतया तत्तद्वात्वर्थानां एकफलभावनाकरणत्वावगमेन विकल्पोपपत्तेः एकजातीयस्यैवापूर्वस्य तृणारणिमणिन्यायेन सकलजन्यत्वोपपत्तेः तद्वैजात्यकल्पनाऽभावात् अपि लाघवम्। **कौ.** २।२।१।१ पृ. १३९.

**तृणजलायुकान्यायः**। स्थूलदेहनाशेऽपि कर्मणा अवबद्धं सप्तदशात्मकं लिङ्गं न नश्यति, किंतु देहान्तरं प्रविशति तृणजलायुकान्यायेन। तथा च बृहदारण्यके– 'तद्यथा तृणजलायुका तृणस्यान्तं गत्वा अन्यमाक्रममाक्रम्यात्मानमुपसंहरति' इति। **मोक्षधर्मे** नीलकण्ठः अ. २०२ श्लो. १९.

* **तृणजलौकान्यायः**। यथा तृणजलौका तृणान्तरमाश्रित्य पूर्वतृणं त्यजति, तथा जीवः स्वाविद्यादिभिर्देहान्तरं निष्पाद्यैव पूर्वं देहं त्यजतीति भावः। **साहस्री.** १०.

* **तृणप्रत्ययस्य** बर्हिःशब्दो निमित्तं न तृणसदृशप्रत्ययस्य। **भा.** ३।२।१।१ पृ. ७४९.

* **तृणप्रासनेन**। अप्सु तृणप्रासनेन अवभृथे विहितेन प्राकृताङ्गान्तराणां न बाधः। **भा.** १०।३।१।११–१२.

* **तृतीये अध्याये** 'अङ्गलक्षणमेवेदमिहोक्तं शेषलक्षणम्।' **वा.** ३।१।१।१ पृ. ६४७. * तृतीये अध्याये कः शेषः केन हेतुना शेषः, कथं च विनियुज्यते इति, श्रुत्यादीनि च विनियोगे कारणानि इति वक्ष्यते। तेषां च बलवदबलवत्ता। एतत् तात्पर्येण अन्यत् उपोद्घातादिना। **भा.** ३।१।१।१. * तृतीये अध्याये गौणमुख्यसाधारण्येन अङ्गत्वमेव निरूप्यते (तृतीयाध्यायार्थः गौणमुख्यसाधारण्येन अङ्गत्वमेव)। **भाट्ट.** ३।४।८. * तृतीये अध्याये विनियोगरूपा विधेरवस्था निरूपिता। **कणिका.** पृ. ४१२. * तृतीये अध्याये शेषशेषिभावः अभिधीयते। **वि.** उपक्रमे ३।१।१.

* **तृतीये सवने** अंशुरेकः अभिषूयते। तस्य प्रमाणं च नाम्नातम्। तं अनेकपर्वाणं स्थूलपर्वाणं च ग्रहीष्यति (दीर्घसोमे)। **भा.** ३।३।११।३१, * तृतीये सवने अङ्गैश्चरन्ति सवनीयपशोः। ११।२।१३।१४. * तृतीये सवने आर्भवपवमानः। तत्र पञ्चसूक्तेषु सप्त सामानि गीयन्ते। 'स्वादिष्ठया मदिष्ठया' (सामसं. ६८९) इति तिस्रो गायत्र्यः, तत्र गायत्रं संहितं च साम गेयम्। 'पुरोजिती वो' (सामसं. ६९७) इति अनुष्टुप् गायत्र्यौ च, तत्र श्यावाश्वं आन्धीगवं च साम गेयम्। 'इन्द्रमच्छ सुता' (सामसं. ६९४) इति तिस्र उष्णिहः तत्र सफं साम गेयम्। 'पवस्व मधुमत्तमः' (सामसं. ६९२) इति ककुप्पङ्क्ती, तत्र पौष्कलं साम गेयम्। 'अभि प्रियाणि पवते' (सामसं. ७००) इति तिस्रो जगत्यः, तत्र कावं साम गेयम्।

**वि.** ९।२।६ वर्णकं ३, * तृतीये सवने आर्भवपवमाने श्यावाश्व–आन्धीगवयोः साम्नोः अनुष्टुभा गायत्रीभ्यां च प्रग्रथिते तृचे गानम्, न तु उत्पत्त्यनुष्टुबानयनम् । ९।२।६ वर्णकं ३. * तृतीये सवने एव ज्योतिष्टोमे षोडशी ग्राह्यः, न सवनेसवने । **भा.** १०।५।११।४४, * तृतीये सवने द्वादशकपालः सवनीयपुरोडाशः व्यूढे तु एकादशकपालः । १०।५।२६।८८. * तृतीये सवने धिष्ण्यव्याघारणे आज्यविधिर्नियमार्थः सोमेन नेति । **संकर्ष.** ३।२।१८. * तृतीये सवने यज्ञायज्ञीयं नाम स्तोत्रम् । तस्याश्रयः यज्ञायज्ञा वो इत्यादिः बृहतीसतोबृहतीरूपः प्रगाथः । एकविंशः स्तोमः । **के.** * तृतीये सवने सवनीयपुरोडाशेषु सौम्ये चरौ आश्विने द्विकपाले च सवनीयपश्वर्था हविष्कृत् प्रसङ्गसिद्धा, भेदेन नाह्वातव्या । **भा.** १२।२।४।१२–१३. * तृतीये सवने सूर्यास्तमयात् प्रागेव उक्थ्यग्रहास्त्रयो गृह्यन्ते तेभ्यः परस्तात् षोडशी विहितः । षोडशिस्तोत्रोपाकरणे च 'समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति' इति कालविशेषो विहितः । परंतु दैवादुक्थ्योत्कर्षे जाते सस्तोत्रस्य षोडशिग्रहस्यापि उत्कर्ष एव कर्तव्यः । **वि.** ५।१।१८. * तृतीये सवने सौगन्धिकेन अभ्यञ्जते अञ्जनाभ्यञ्जने नाम सत्रे । **भा.** १०।४।६।१०.

* **तृतीयाध्यायार्थः** 'श्रुतिर्लिङ्गं च वाक्यादिविरोधप्रतिपत्तयः । अनारभ्योक्ति, बह्वर्थस्वाम्यर्था अष्टपादगाः ॥' १ श्रुतिविचारः, २ लिङ्गविचारः, ३ वाक्यप्रकरणादिविचारः, ४ श्रुत्यादेः परस्परविरोधसदसद्भावः, ५ प्रतिपत्तिकर्माणि, ६ अनारभ्याधीतानि, ७ बहुप्रधानोपकारकप्रयाजादीनि, ८ याजमानानि इति । **वि.** प्रस्तावना १५. * **तृतीयाध्यायसिद्धं** क्रत्वर्थपुरुषार्थत्वं उदाहरणविशेषनिष्ठतया प्रयोज्यत्वसिद्ध्यर्थं चतुर्थे विचार्यते । **भाट्ट.** ४।१।१.

**तृतीयसवने वचनात् स्यात् । १०।५।११। ४४ ॥**

षोडशी ग्रहः तृतीयसवने एव ग्राह्यः स्यात् वचनात्, न सवनेसवने । एवं ह्याह, 'यत् प्रातःसवने गृह्णीयात् वज्र उत्तरे सवने व्यतिरिच्येत, यन्माध्यंदिने मध्यतो वज्रं निहन्यात्, तृतीयसवने ग्राह्यः तत् सर्वेषु सवनेषु गृह्णाति, न पूर्वे सवन आर्तिं नीतः' इति । तस्मात् तृतीयसवने एव षोडशी ग्राह्यः । इति सिद्धान्तः । "तैत्तिरीयके तु 'सवनेसवनेऽभिगृह्णाति' इति वचनात् विकल्पः" इति कुतूहलम् ! इदमन्तरागार्भिण्यधिकरणम् । **के.**

* **तृतीया** करणवाचिनः प्रातिपदिकात् भवति । **भा.** १।४।१।२ पृ. ३२४. * **तृतीयायाः** करणत्वे एव शक्तिः । कर्मत्वे तु 'तृतीया च होश्छन्दसि' (पा० २।३।३ जुहोतेः कर्मणि तृतीया स्यात् द्वितीया च) इत्यानुशासनिकी लक्षणा । **भाट्ट.** ५।१।२.

* **तृतीयाऽर्थः** । कर्तृत्वं करणत्वं च तृतीयार्थः 'कर्तृकरणयोस्तृतीया' इति सूत्रात् (पा० २।३।१८) (कर्तृत्वविवरणं 'कर्तृत्वं' इति बिन्दौ द्रष्टव्यम् । करणत्वविवरणं 'करणत्वं' इति बिन्दौ द्रष्टव्यम्) । अत्र कर्तृत्वकरणत्वयोः साक्षात् भावनायां संबन्धात् तदर्थकतृतीया कारकविभक्तिः । भावनाभिन्नपदार्थान्वय्यर्थिका (अन्वयी अर्थो यस्याः) उपपदविभक्तिः । **मणि.** पृ. १३२, १३३.

'सहयुक्तेऽप्रधाने' (पा० २।३।१९) साहित्ययुक्ताप्रधानवाचकशब्दसमभिव्याहृततृतीयायाः निरूपितत्वमर्थः । शिष्येण सहागतो गुरुः शिष्यनिरूपितसाहित्यविशिष्टगुरुकर्तृकं आगमनं इति बोधः । एवं च तृतीयार्थस्य भावनाऽन्वयाभावात् उपपदविभक्तिः । **मणि.** पृ. १३३. 'सहयुक्तेऽप्रधाने' एवं 'साकं–सार्धं–समंयोगेऽपि' इत्यनुशासनेन पुत्रेण सहागतः पिता इति तृतीया । अत्र च पुत्रस्य अप्राधान्यं न क्रियाऽनन्वयित्वेनैव 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इत्यादिवत् । अपि तु यस्य क्रियासंबन्धः शाब्दः तत् प्रधानम्, यस्य तु आर्थः तस्य अप्राधान्यम् । अत एव पुत्रेण सह इत्यत्र पुत्रस्यापि आगमनप्रतीतिः । अत्र न सहशब्दयोग एव विवक्षितः 'वृद्धो यूना' (पा० १।२।६५) इति तदभावेऽपि तृतीयादर्शनात् । अत एव सहत्वमत्र तृतीयाऽर्थः । सहशब्दः क्वाचित्कः तात्पर्यग्राहकः । तदन्वयस्तु स्वनिरूपकपित्राश्रयकत्वसंबन्धेन क्रियायामेवं । साहित्यं च 'सहैव दशभिः पुत्रैः' इत्यादौ

तत्काले विद्यमानत्वम् । पुत्रेण सहागतः इत्यादौ च एकक्रियाऽन्वयित्वं इत्यादि योग्यताऽनुसारेण बोध्यम् । **रहस्य. पृ. ९९-१००.**

'येनाङ्गविकारः' ( पा० २।३।२० ) विकारयुक्ताङ्गवाचकपदसमभिव्याहृततृतीया संबन्धे । यथा अक्ष्णा काणः इति । अत्र अक्षिसंबन्धिकाणत्वविशिष्ट इत्यर्थः । अत्र च अक्षिनिष्ठकाणत्वस्य परंपरासंबन्धेन चैत्रे प्रकारता । **मणि. पृ. १३३.** 'येनाङ्गविकारः' इत्यनुशासनात् येन अङ्गेन विकृतेन अङ्गिनो विकारो लक्ष्यते ततस्तृतीया स्यात् इत्यर्थकात् 'अक्ष्णा काणः' इत्यादौ तृतीया । अत्र च अक्षिपदं चक्षुर्गोलकपरम्, वृत्तित्वं तृतीयाऽर्थः, काणपदं चक्षुरुपघातवद्गोलकवत्परम् । चक्षुर्गोलकवृत्तिचक्षुरुपघातवद्गोलकवान् इति बोधः । तृतीयाऽर्थवृत्तित्वस्य तेन संबन्धेन भावनायामन्वयात् । **रहस्य. पृ. १००.**

'इत्थंभूतलक्षणे' ( पा० २।३।२१ ) इत्थंभूतलक्षणे तृतीया । इत्थंभूतलक्षणत्वं ज्ञापकत्वम् । 'जटाभिस्तापसः' इत्यत्र जटाज्ञाप्यतपोवान् इत्यर्थः । अत्र ज्ञाप्यत्वस्य तपोविशिष्टे अन्वयः । अन्यथा एकदेशे अन्वयापत्तेः । **मणि. पृ. १३३.** 'इत्थंभूतलक्षणे' इत्यनुशासनात् जटाभिस्तापसः इत्यादौ तृतीया । अत्र लक्षणत्वापरपर्यायं ज्ञाप्यत्वं तृतीयार्थः । जटाज्ञाप्यतापसत्ववान् इत्यर्थः । लक्षणत्वं च विशेषणोपलक्षणसाधारणम् । तेन, शमेन तापसः इत्यपि साधु । **रहस्य. पृ. १००.**

'संज्ञोऽन्यतरस्यां कर्मणि' ( पा० २।३।२२ ) संपूर्वस्य ज्ञाधातोः कर्मणि तृतीया द्वितीया वा स्तः । मात्रा मातरं वा संजानीते । मातृविषयकपूज्यत्वादिप्रकारकज्ञानवान् इत्यर्थः । अत्र मातृपदार्थस्य पूज्यत्वप्रकारकज्ञानक्रियायां अन्वयात् पूज्यत्वरूपक्रियाऽन्वय आर्थिकः । फलजनकज्ञानान्वयो वा । तेनात्र उपपदविभक्तित्वम् । **मणि. पृ. १३३.**

'हेतौ' ( पा० २।३।२३ ) हेत्वर्थे तृतीया । पुण्येन दृष्टो हरिः । अत्र तृतीयाऽर्थस्य सहकारित्वस्य दर्शने अन्वयः । पुण्यसहकृतेन्द्रियजन्यं दर्शनम् । **मणि. पृ. १३३.** तच्च ( हेतुत्वं ) यद्यपि कारणत्वरूपमेव, तथापि द्रव्यादिनिरूपितत्वघटितसंसर्गेण क्रियाऽन्वयि हेतुत्वं यथा दण्डेन घटः इत्यादौ । धात्वर्थनिरूपितत्वेन संसर्गेण क्रियाऽन्वयि तु करणत्वं इति विशेषः । अत एव हेतुत्वे लक्षणा । अथवा अखण्डोपाधिरूपकरणत्वे शक्तिः, तत्परिचायके सखण्डोपाधौ लक्षणा इति पृथगनुशासनम् । फलादिसाधारणं च तत् यथा अध्ययनेन वसति । तादर्थ्यमात्रं तृतीयाऽर्थः । **रहस्य. पृ. १००.**

'अकर्तर्यृणे पञ्चमी' ( पा० २।३।२४ । कर्तृवर्जितं यत् ऋणं हेतुभूतं ततः पञ्चमी स्यात् ) शतेन बद्धः शताद्वा बद्धः । अत्र शतस्य ऋणक्रियाद्वारा बन्धनक्रियायामन्वयात् उपपदविभक्तित्वम् । शताभिन्नऋणजन्यबन्धनवान् इति बोधः । **मणि. पृ. १३४.**

'षष्ठी हेतुप्रयोगे' ( पा० २।३।२६ हेतुशब्दप्रयोगे ) हेतौ द्योत्ये षष्ठी एव न तृतीया । अध्ययनस्य हेतोर्वसति । अध्ययनाभिन्नहेतुको निवासः । **मणि. पृ. १३४.**

'सर्वनाम्नस्तृतीया च' ( पा० २।३।२७ सर्वनाम्नः हेतुशब्दस्य च प्रयोगे हेतौ द्योत्ये तृतीया षष्ठी च ) । कस्य हेतोः, केन हेतुना वसति । **मणि. पृ. १३४.**

'अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया वाच्या' इति वार्तिकात् तृतीया । यथा दास्या संयच्छते, ददातीत्यर्थः । शिष्टव्यवहारे तु 'भार्यायै संयच्छति' । **रहस्य. पृ. १०१.**

तृतीयायाः अनुशासनानुरोधेन लाक्षणिकार्था अनुसंधेयाः । तथाहि 'प्रकृत्यादिभ्य उपसंख्यानम्' इति वार्तिकात् प्रकृत्या चारुः, प्रायेण याज्ञिकः, गोत्रेण गार्ग्यः, समेन एति, द्विद्रोणेन धान्यं क्रीणाति, सुखेन याति इत्यादौ करणत्वातिरिक्तार्थान्तरलक्षणा । प्रकृतिपदेन हि स्वाभाविकी सामग्री उच्यते । तज्जन्यचारुत्ववानित्यर्थः । न चैवं करणत्वस्यैव तृतीयाऽर्थत्वात् पृथगनुशासनवैयर्थ्यम्, जन्यत्वस्य तत्त्वेन (स्वरूपेण) तृतीयार्थत्वमङ्गीकृत्य तत्सार्थक्यात् । अत एव तृतीयाऽर्थस्य जन्यत्वाश्रयचारुत्वाश्रयवृत्तित्वसंबन्धेन आक्षिप्तक्रियायामन्वयः ।

प्रायेण याज्ञिकः– प्रायःशब्दस्य अवच्छेदकावच्छिन्नत्वराहित्यविशिष्टबाहुल्यं अर्थः । तृतीयाया अवच्छिन्नत्वमर्थः । तथा च किंचिन्न्यूनबाहुल्यावच्छिन्नयज्ञविद्यासंबन्धवान् इत्यर्थः ।

गोत्रेण गार्ग्यः— गोत्रशब्दस्य संबन्धविशेषवाचित्वेन गोत्रत्वपरत्वमङ्गीकृत्य गोत्रत्वावच्छिन्नगर्गसंबन्धवान् इत्यर्थः । तृतीयाया वा अभेदार्थकत्वमङ्गीकृत्य गोत्राभिन्नगर्गसंबन्धवान् इत्यर्थः । अस्मिंश्च पक्षे गोत्रत्वं तृतीयाऽर्थः, अवच्छिन्नत्वं संसर्गः, गोत्रवृत्तिगोत्रत्वावच्छिन्नसंबन्धवान् इत्यर्थः । अनयैव च रीत्या समवायेन रूपवान् इत्यादिप्रयोगा उपपादनीयाः ।

धान्येन धनी इत्यादौ तु तृतीयाऽर्थाभेदेन धान्यत्वस्य धने अन्वय इति विशेषः । धनसंबन्धं प्रति धान्यस्य करणत्वादेव वा तृतीया इति कौस्तुभे स्पष्टम् ।

समेन याति इत्यत्र अवच्छिन्नत्वं तृतीयाऽर्थः । समदेशावच्छिन्ना गमनभावना इत्यर्थः ।

द्विद्रोणेन धान्यं क्रीणाति— द्वयोर्द्रोणयोः समाहारः द्विद्रोणम्, पात्रादित्वात् स्त्रीत्वाभावः । परिमितत्वं तृतीयाऽर्थः । द्रोणद्वयपरिमितं धान्यं क्रीणाति इत्यर्थः । करणत्वेनापि अन्वयसंभवेऽपि परिमितत्वेन बोधार्थं पृथगनुशासनम् ।

सुखेन याति— इत्यादौ सुखपदं दुःखाभावपरम् । तृतीयाऽर्थश्च प्रयोजकत्वम् । तच्च प्रतियोग्यनुत्पादकत्वरूपम् । तथा च दुःखाजनकं यानमित्यर्थः । रहस्य. पृ. ९७—९८.

'दिवः कर्म च' ( पा० १।४।४३ ) इति सूत्रेण दिव्धात्वर्थस्य साधकतमं कर्मसंज्ञं स्यात्, लक्ष्यानुरोधेन स्वरितत्वानुगतेः पूर्वसूत्रस्थकरणशब्दानुवृत्त्या करणसंज्ञकं च इत्यर्थकेन साधकतमस्यैव संज्ञाद्वयकरणात् अक्षैः अक्षान् वा दीव्यति इति प्रयोगद्वयम् । अत्र पणपूर्वकाक्षसाध्यक्रियायाः धात्वर्थत्वात् तत्राक्षाणां मुख्यमेव करणत्वम् । तत्र च द्वितीया लाक्षणिकी । पृ. ९८,

'अपवर्गे तृतीया' ( पा० २।३।६ ) इति सूत्रेण फलप्राप्तिरूपापवर्गे द्योत्ये कालाध्वनोः अत्यन्तसंयोगे तृतीया स्यात् अन्यथा द्वितीया इत्यर्थकेन 'मासेनाधीतोऽनुवाकः' इत्यत्र तृतीयया फलप्राप्तिर्द्योत्या । रहस्य. पृ. ९९.

* तृतीयाऽर्थः सर्वोऽपि शक्यलक्ष्यसाधारणः पूर्ववदेव लिङ्गानन्वयिपदोपात्तभावनायां श्रुतायां गम्यमानायां वा अन्वेति इति बोध्यम् । यथा शतेन वत्सान् पाययति पयः— शतेन परिच्छिन्नानित्यर्थः, परिच्छेदं प्रति तस्य करणत्वात् । अत्र गम्यमानत्वं अध्याहृतपदेन बोध्यम् । अलं श्रमेण इत्यत्र तु नानुमेया ( क्रिया ), अलं इति निपातेनैव 'साध्यं नास्ति' इत्यर्थकेन साधनक्रियाया उपात्तत्वात् । अयमर्थश्च विभक्तिमात्रे बोध्यः । रहस्य. पृ. १०१ । नवीनतार्किकास्तु प्रकृत्यर्थनिरूपितजन्यत्वमेव तृतीयाऽर्थः । तस्य च आश्रयतया धात्वर्थान्वय इत्याहुः । तन्न । अनुशासनबाधे प्रमाणाभावात् । न च 'परशुना छिनत्ति न दात्रेण' इत्यादौ दात्रजन्यत्वाभावस्य क्रियायां बोधानापत्तिः, निरूपकतासंबन्धेन परशुनिष्ठकरणत्वस्य, निरूपकतासंबन्धावच्छिन्नप्रतियोगिताकदात्रनिष्ठकरणत्वाभावस्य च क्रियायां बोधेन अर्थात् जन्यत्वाभावबोधोपपत्तेः । अतः प्रचुरप्रयोगाविशेषात् कर्तृत्वकरणत्वयोः उभयोरपि तृतीयायाः शक्तिः । योग्यताऽऽदिरूपतात्पर्यग्राहकानुरोधेन च विशेषनिर्णयः । पृ. ९७.

* तृतीयाऽऽदौ ( विभक्तौ ) जातेरेव संख्याकारकान्वयः, अन्यत्र तु लक्षितव्यक्तेः जातिव्यक्त्योश्च न वैशिष्ट्यावगाही एको बोधः, किंतु बोधद्वयं शक्तिलक्षणाजन्यमिति आकृत्यधिकरणे अभिहितम् । कौ. २।१।२।५ पृ. २९.

* तृतीयाकृतमेव 'सूक्तवाकेन प्रस्तरम्' इत्यत्र उभयोः प्रयोजनवत्त्वाविशेषे केवलतृतीयाकृतमेव सूक्तवाकस्य प्रस्तरप्रहरणाङ्गत्वम् । वा. ३।१।४।१२ पृ. ४१३.

* तृतीयाश्रुत्या ऐन्द्याः करणत्वम् । वा. ३।३।७। १४ पृ. ८२५.

* तृतीयिनः ऋत्विजः तृतीयांशभाजः । द्वादश गावः पूर्णा दक्षिणा, तत्तृतीयोंऽशः चतस्रो गावः । तृतीयोऽस्ति येषां दक्षिणायाः, ते तृतीयिनः । नेष्टा— अध्वर्युगणस्थः, अग्नीध्— ब्रह्मगणस्थः, अच्छावाकः— होतृगणस्थः, प्रतिहर्ता— उद्गातृगणस्थश्च इति चत्वारः तृतीयिनः । के. १०।३।१३।५५.

* तृप्यन्ते भक्षणे 'मन्द्राभिभूतिः' इत्यादिः भक्षयाम्यन्तः एक एव मन्त्रः न तु विभागः । ज्योतिष्टोमे । वि. ३।२।१०.

* 'तृप्तिकामः पचेत्' इत्यत्र प्रत्ययार्थकार्यत्वस्य प्रकृत्यर्थे पाके अन्वयः। इति गुरवः। मणि. पृ. ८४.

* तृप्तिप्रकाशकमन्त्रस्य भक्षमन्त्रैकवाक्यता। वि. ३।२।१०.

* तृप्तिप्रसादौ देवताऽस्तित्वसाधकौ 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' इति, इति चेन्न। अर्थवादानां स्वार्थे तात्पर्याभावात्। वि. ९।१।४.

* तेजस्कामेष्टिः कर्मान्तरम् 'आग्नेयमष्टाकपालं निर्वपेद् रुक्कामः'। वि. २।३।१२.

* तेजःसंस्तवो ब्राह्मणस्य। (तेजसा संस्तवः तेजःसंस्तवः)। भा. ६।६।२।१४.

* तेपानाः तपः कुर्वन्तः। तप्ता इत्यर्थः। के.

* तैत्तिरीयाः, कारीरीवाक्यानि अधीयानाः भूमौ भोजनमाचरन्ति अपरे शाखिनो नाचरन्ति। भा. २।४।२।८ पृ. ६३२. * तैत्तिरीयैरेव आपस्तम्बीयबौधायनीये धर्मगृह्यसूत्रे प्रतिपन्ने। वा. १।३।७।१५ पृ. २४४.

* तैत्तिरीयकं शाखान्तरं यजुर्वेदगतम्। तैत्तिरीयकस्य अवान्तरभेदः षड्विधः सूत्रभेदस्य षट्संख्यत्वात् बौधायनीयं आपस्तम्बीयं सत्याषाढीयं वैखानसीयं भारद्वाजीयं वाधूलं चेति। के. * तैत्तिरीयकवाक्यापेक्षया समिष्टयजुः प्रतिपत्तिरेव। वा. ३।५।१।६, * तैत्तिरीयशाखावाक्येन अश्वप्रतिग्रहेष्टिः दातुः सिद्धा। मैत्रायणीयानां तु प्रतिग्रहीतुः। ३।४।११।३१ पृ. ९६९.

* तैलपानवदेतद्भविष्यति। यथा तैलपानं घृतपानं वा भङ्गित्वेऽपि सति कालान्तरे मेधास्मृतिबलपुष्ट्यादीनि फलानि करोति। भा. ७।१।१।५। अत्र ब्रूमः तैलपानस्यापि न कालान्तरे फलं भवति। धातुसाम्यं तस्य फलं तच्च तत्कालमेव। यच्च फलं बलपुष्ट्यादि, तत् सम्यगाहारपरिणामाद्भवति। ७।१।१।७.

* तोयशब्दः। 'बिन्दौ च समुदाये च तोयशब्दो यथेष्यते'। वा. ३।२।३।१९ पृ. ७७०.

* त्यजेः विभागानुकूलो व्यापारो वाच्यः। रहस्य. पृ. ११४.

Ⅻ त्यजेदेकं कुलस्यार्थे इति न्यायः। यत्रोभयकोटिकसंशये एकत्र बह्वर्थहानिः द्वितीयस्वीकारे तु एकार्थहानिः, तत्र द्वितीयः पक्षः स्वीकार्य इति भावः। साहस्री. १८८.

* 'आकाशस्तल्लिङ्गात्' इत्यधिकरणे बहूनामनुग्रहाय 'त्यजेदेकं कुलस्यार्थे' इति न्यायेन आकाशश्रुतिरेका अन्यथा नीयते, बहुबाधस्य अन्याय्यत्वात् इति साधितम्। पराक्रमः. ५५।१. * बहूनामह्नामनुग्रहाय ऐन्द्री सुब्रह्मण्या कार्या 'त्यजेदेकं कुलस्यार्थे' इति न्यायेन बहुत्वमपि प्राबल्यकारणम्। वि. १२।२।७. * यत्र तु द्वयसंनिपातः तत्र अन्यतरेण कृतार्थत्वात् अवश्यावहेये अन्यतरस्मिन् भूयसामनुग्रहो युक्तः 'त्यजेदेकं कुलस्यार्थे' इतिवत्, विधिप्रत्ययः परित्यज्यते। केवलप्रकृतिप्रयोगाभावात् तदनुग्रहार्थप्ररोचनालब्धविधित्वानुवादेन प्रवर्तते। वा. १।२।१।७ पृ. ११६.

* त्यागः च देवता च जुहोतिस्थले अदृष्टविधया आरादुपकारकौ प्रक्षेपेण सह समप्रधानौ वा। प्रक्षेपो होमाङ्गमेव। भाट्ट. ४।१।७. * त्यागश्च यज्ञः। भा. ३।८।३।१०, * त्यागः न मम इति शक्यते विदेशस्थेनापि कर्तुम्। ३।८।७।१६, * त्यागः नाम मनसा क्रियते। १०।२।१७।४७. * त्यागः यथेष्टविनियोज्यत्वरूपस्वत्वनिवृत्तिरूपः। सु. पृ. १५३४, * त्यागः होमकालीनः 'न मम' इति स्वार्थविनियोगार्हत्वाख्यस्वत्वनिवृत्त्यात्मकः। सु. पृ. १५२५. * त्यागे आवाहनादिनिगदेषु अग्नीषोमीयपशौ पशुपुरोडाशाङ्गस्विष्टकृद्यागे, निर्गुणस्यैवाग्नेरभिधानम्। भा. १०।४।१८।३६–३७.

* त्यागांशः प्रकरणात् प्रयाजादिवत् आरादुपकारकः। एतावान् विशेषः यत् परप्रयुक्तद्रव्यदेवतोपजीवित्वेन परप्रयुक्त्यभावे स्वातन्त्र्येण तत्तद्द्रव्यदेवताऽऽक्षेपकत्वं नास्ति। भाट्ट. ४।१।७, * त्यागांशः यागहोमादौ आरादुपकारकः, न तु द्रव्यदेवताऽऽदौ संनिपत्योपकारकः। ४।१।७, * त्यागांशस्य विशेष्यतया प्रतीतस्य प्रक्षेपाद्यङ्गत्वे प्रमाणाभावः। ४।१।७.

* त्यागातिरिक्तं ऋत्विक्कर्म। शास्त्रफलाधिकरणम्। भा. ३।७।८।१८–२०.

* त्यागादौ विधिगतस्यैव देवताशब्दस्य उच्चारणं नियतम्। विधिशब्दाधिकरणम्। भा. १०।४।१२।२३.

⌛ त्याज्या दुस्तटिनी नदी इति न्यायः। यथा दुस्तटिनी नदी पतनभयात् त्यज्यते तत्तीरस्थैः अन्यथा तत्पतनं भवत्येव, एवं दुष्टपुरुषसङ्गोऽपि अवश्यमेव त्याज्यः इति। साहस्री. १२२.

* त्रयस्त्रिंशः स्तोमः अतिरात्रे बहिष्पवमाने काम्यो विहितः 'त्रयस्त्रिंशेन प्रतिष्ठाकामम्' इति। वि. ५।३।४, * त्रयस्त्रिंशः स्तोमविशेषः अष्टरात्रे तृतीयेऽहनि। ७।३।१०. * 'त्रयस्त्रिंशेन (अतिरात्रेण) प्रतिष्ठाकामम्' अत्रागमेन संख्यापूरणे समाम्नायपाठक्रमादेव ता ऋचः आगमयितव्याः, न त्वनियमेन। भा. ५।१।६।१३. * त्रयस्त्रिंशे अतिरात्रे विवृद्धानां अष्टानां तृचानां पर्यासोत्तरमेव निवेशो न प्राक् बहिष्पवमाने। वि. ५।३।४, * त्रयस्त्रिंशे अतिरात्रे विवृद्धस्तोमके साम्नामागमेन वृद्धिर्न त्वभ्यासेन। १०।५।६, * त्रयस्त्रिंशान्तः पृष्ठ्यः षडहः। त्रिवृत्–पञ्चदश–सप्तदश–एकविंश–त्रिणव–त्रयस्त्रिंशस्तोमैः क्रमेण युक्तानि षट् अहानि तत्र। अयं गवामयने पूर्वे पक्षसि कार्यः। १०।६।९.

* त्रयस्त्रिंशतः (देवतानां) पात्नीवतभक्षणे अनुपलक्षणम्। भा. ३।२।१५।३७.

* त्रयी इति चैष शब्दः ऋक्सामयजुःषु प्रसिद्धः। भा. ३।३।१।५. * त्रयी हि वैतानिककर्माधिकारे प्रवर्तते, तत्प्रसङ्गात् अवैतानिकं किंचिदुच्यते। शा. ७।४।२ पृ. ५४७. * 'त्रयीमार्गस्य सिद्धस्य ये ह्यत्यन्तविरोधिनः। अनिराकृत्य तान् सर्वान् धर्मशुद्धिर्न लभ्यते ॥' वा. १।३।२।४ पृ. १९४. * त्रयीविदः। वेदत्रयविदि त्रयीविद्यशब्दप्रयोगात् त्रयीशब्दस्य च 'त्रयिविदो विदुः। ऋचः सामानि यजूंषि' इति समभिव्याहारात् ऋग्यजुःसामविषयत्वावगतेः। सु. पृ. १५०४. * त्रयीविद्यः, त्रयी यस्य विद्या स त्रयीविद्यः, यस्त्रीन् वेदानधीते स एवं प्रख्यायते। भा. ३।३।१।५.

* 'त्रयोदशरात्रमृद्धिकामा उपेयुः'। सत्रमेतत्। तत्र सत्रभूतद्वादशाहधर्मातिदेशः। वि. ८।२।५. * त्रयोदशरात्रादीनि सत्राणि आसनोपायिचोदनत्वात्। तत्र सत्रभूतद्वादशाहधर्मातिदेशः। भा. ८।२।५।२७.

* त्रायतेः अपह्नवानुकूलरक्षणमर्थः। मणि. पृ. १४०.

⌛ त्रिंशच्च परार्थत्वात्। ३।२।१५।३७॥

ज्योतिष्टोमे पात्नीवतस्य ग्रहस्य याज्यायां 'ऐभिरग्ने सरथं' इत्यस्यां 'पत्नीवतस्त्रिंशतं त्रींश्च देवान्' इति तृतीयश्चरणः। एतदुक्तानां त्रयस्त्रिंशतो देवानां उपलक्षणं पात्नीवतग्रहशेषभक्षमन्त्रे कर्तव्यं इति पूर्वपक्षे उत्सूत्रे प्राप्ते सिद्धान्तमाह। त्रिंशत् च त्रयस्त्रिंशत् देवा अपि त्वष्टृवत् नोपलक्षयितव्याः। परार्थत्वात् याज्यायां त्रयस्त्रिंशतां निर्देशस्य स्तुत्यर्थत्वात्। अग्नेः स्तुत्यर्थः तन्निर्देशः। इत्थं महानग्निः सर्वान् देवान् स्वकीयेन भागेन मादयति इति। तस्मात् पात्नीवतभक्षमन्त्रे त्रयस्त्रिंशतो नोपलक्षणीयाः। के.

⌛ त्रिंशदधिकरणम्। पात्नीवतभक्षणे त्रयस्त्रिंशतो नोपलक्षणं ज्योतिष्टोमे ॥

त्रिंशच्च परार्थत्वात्। ३।२।१५।३७ ॥

**भाष्यम्**— तस्मिन्नेव पात्नीवते मन्त्रः (याज्या) 'ऐभिरग्ने सरथं याह्यर्वाङ् नानारथं वा विभवो ह्यश्वाः। पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमा वह मादयस्व ॥' इति। तत्र संदेहः किं त्रयस्त्रिंशतो देवानामुपलक्षणं कर्तव्यम्, उत नेति। किं प्राप्तम्। त्रयस्त्रिंशतं देवान् उपलक्षयेत्। कथम्? दीयते हि सोमः त्रयस्त्रिंशते देवेभ्यः। एवं हि अग्निं अग्नीत् अधीच्छति 'आ याहि अग्ने अर्वाचीनं त्रयस्त्रिंशता देवैः सह, समानं रथमधिष्ठाय नानारथैर्वा। विभवन्ति हि ते अश्वाः। तदिदं अनुष्वधं आवह, त्रयस्त्रिंशतं पत्नीवतो देवानागमय तर्पय च' इति। अत्र हि अग्निं अग्नीत् अधीच्छति त्रयस्त्रिंशतो देवानां तृप्तये, इति गम्यते। यत्प्रधानश्चात्र मन्त्रः तत्परः सोमः। तस्मादुच्यते त्रयस्त्रिंशद्देवा उपलक्षयितव्या इति। ननु चोदनायां पत्नीवान् केवलोऽग्निः देवतात्वेन श्रूयते। सत्यम्, चोदनायां पत्नीवान् देवतात्वेन श्रूयते, न तु देवताऽन्तरं निषिध्यते। किमतो यद्येवम्? एतदतो भवति, मान्त्रवर्णिकाः त्रयस्त्रिंशद्देवाः अविरुद्धाः चोदनायां प्रतीयन्ते इति। एवं प्राप्ते, ब्रूमः। न त्रयस्त्रिंशद्देवा उपलक्षयितव्या इति। नात्र मन्त्रे अग्निराह्वाता परिवेष्टा वा तर्पयिता वा अध्येष्यते। नात्र

त्रयस्त्रिंशद्देवेषु इष्टेषु प्रयोजनं निर्वर्त्यते । कस्तर्हि यष्टव्यः ? पत्नीवान् । कुत एतत् ? स हि चोद्यते 'पात्नीवतं गृह्णामि (ति)' इति । ननु मान्त्रवर्णिकानां त्रयस्त्रिंशतो देवानां अत्र संकीर्तनम् । उच्यते । परार्थत्वेन ताः संकीर्त्यन्ते । कथम् ? न हि अप्रत्तं अग्नेस्तद्भवति । न च परकीयस्य दानमवकल्पते । तस्मात् त्वं अमूभ्यः त्रयत्रिंशद्देवताभ्यो देहि इत्यसमञ्जसं वचनम् । अग्नये तु अनेन दानमुक्तं भवति । कथम् ? ईशानो हि विलम्भयति द्रव्यम् । तदिह विलम्भनं ( दानं ) संकीर्तयन् त्वमस्य ईशानः इति प्रत्याययति । ननु मादयस्व इत्युच्यते, न विलम्भय इति । उच्यते । नहि माद्यन्ति देवताः । तस्मात् मदकरणसंकीर्तनं अदृष्टाय स्यात् । दृष्टाय तु त्यागसंकीर्तनं लक्षणया । लक्षणा हि अदृष्टकल्पनाया ज्यायसी । प्रमाणाद्धि सा भवति । ननु त्यागेऽपि लक्ष्यमाणे अग्निः कर्ता अधीष्यते । तदुच्यते । अग्नेरपि अध्येषणा अदृष्टायैव । तस्मात् अग्नेरैश्वर्यकरणमेतत् वाक्यं लक्षयति इति न्याय्यम् । अपिच पत्नीवते सोमश्चोद्यते 'पात्नीवतं गृह्णाति' इति । ननु उक्तं मान्त्रवर्णिकं न प्रतिषेधति चोदनेति । उच्यते । तदपि मान्त्रवर्णिकं नास्तीत्युक्तम् । अपि च सामर्थ्यात् प्रतिषेधति इति गम्यते । नहि सापेक्षः पत्नीवच्छब्दः तद्धितार्थेन संलक्ष्यते । तस्मात् केवलः पत्नीवान् देवतेति । एतच्चोदनावशेन मन्त्रो वर्णनीयः । तस्मात् यथैवास्माभिर्वर्णितो मन्त्रः तथैव भवितुमर्हति इति । पत्नीवांश्चाग्निः । अग्ने पत्नीवन् इति सामानाधिकरण्येन निर्दिश्यते । तस्मात् अग्निरुपलक्षयितव्यः, न त्रयस्त्रिंशद्देवताः इति ।

वा—अधिकरणातिदेशोऽयम् । एतावता तु विशेषेण अतुल्यत्वाशङ्का , येन य एवासौ अग्निर्देवताभूतः, स एवात्र त्रयस्त्रिंशद्देवेषु भोक्तृषु परिवेष्टृत्वेन विनियुज्यते । तेन मन्त्रवर्णात् तेषामेव प्राधान्येन देवतात्वं विज्ञायते, गुणभूतोऽग्निः । पूर्वत्र च सहत्वमात्राभिधानात् अतुल्यत्वेन त्वष्टा निराकृतः । तदिह विपरीतमतुल्यत्वम् । पत्नीवत्त्वगुणमात्रदेवतात्वप्रतिपादनमात्रार्था च तद्धितचोदना ( पत्नीवत्त्वस्य देवतागुणमात्रतया तद्धितयुक्ता चोदना इत्यर्थः ) । सा यथा 'अग्नाऽऽऽइ पत्नीवाऽऽऽ' इति मन्त्रवर्णात् प्राप्नुवता अग्निना गुणिना न विरुध्यते, एवं त्रयस्त्रिंशताऽपि देवैः । अविशिष्टो हि तेषामपि मन्त्रवर्णः 'पत्नीवतस्त्रिंशतं त्रींश्च देवान्' इति । न च चोदनया देवताऽन्तरं प्रतिषिद्धम्, येन मन्त्रवर्णगम्यं नेष्यते । न च मान्त्रवर्णिक्यां चोदितापरित्यागेन गृह्यमाणायां कश्चित् विरोधः । न च प्रमाणान्तरगम्यायां तद्धितस्य सापेक्षत्वम् । यदि स एव त्रिंशदपेक्षं पात्नीवन्तं विदध्यात् ततः सापेक्षत्वदोषं प्रतिपद्येत । मन्त्रस्य तु सापेक्षमपि वदतो नैव कश्चिद्विरोधः । समुच्चयाश्रयणाच्च अविरोधित्वम् । कथं तुल्यार्थयोः समुच्चय इति चेत् । न स्यात् समुच्चयः, यदि मन्त्रेणोभयपरामर्शो न क्रियते । स तु चोदनाऽवगतमग्निं अपरित्यजन्नेव परिवेष्टृत्वेन च सिद्धं देवतात्वमभिदधत् त्रयस्त्रिंशतो देवतात्वमाह । तस्मात् समुच्चये सति सर्वेषामुपलक्षणम् । तन्मन्त्रव्याख्यानेन दर्शयति ( भाष्यकारः ) । याज्यामभिदधत् एवं हि अग्नेः अग्नीत् अध्येषणं करोति । संमानपूर्वको हि नियोगः अध्येषणम् । तदेवं क्रियते आ याहि इति । छन्दसि 'व्यवहिताश्च' ( पा० १।४।८२ ) इति व्यवहितस्य आङः प्रयोगः 'आ एभिः' इति । उपरिवक्ष्यमाणत्रयस्त्रिंशता देवैः सह एकरथारूढः अश्वविभवाद्वा नानारथारूढः । ततश्च अर्वाङागत्य तांश्च पत्नीवतः त्रिंशतं देवान् । अनुष्वधम्, स्वधां अन्नं सोमाख्यं अनु आ वह । ततश्च मादय संतर्पय इत्यर्थः । तेन स्फुटमेषां भोक्तृत्वमिति । एवं प्राप्ते, ब्रूमः । त्रयस्त्रिंशतो नोपलक्षणीया इति । कुतः ? 'चोदितार्थानुरोधेन मन्त्रः सर्वः प्रवर्तते । तेन त्वष्टृवदेवात्र त्रिंशताऽग्नेरभिष्टुतिः ॥' पात्नीवतचोदनार्थस्मरणहेतुना मन्त्रेण न शक्यं अचोदितं अग्नेः परिवेष्टृत्वं इतरेषां च भोक्तृत्वं प्रकाशयितुम् । अतो मन्त्रस्य परार्थत्वात् न चोदनामतिक्रम्य स्वातन्त्र्येण त्रयस्त्रिंशत्प्रकाशनसामर्थ्यं अवकल्पते । विधानसामर्थ्यं तु दूरभ्रष्टमेव । न च त्रिंशतो देवतात्वमेव स्मारयति, चोदिताग्न्यैश्वर्यप्रकाशनपरत्वेन त्रयस्त्रिंशत्प्रकीर्तनात् । कथम् ? 'अप्रसिद्धेश्वरत्वस्य दातृत्वं यस्य कीर्त्यते । तदसंभाव्य मुख्यार्थं ऐश्वर्यार्थं प्रतीयते ॥' यदि हि अप्रत्तावस्थमेव द्रव्यं 'त्वं देहि'

इति मुख्यमेवोच्येत, ततः प्रतारणमेव स्यात्। अथ तु त्वमेवात्र दाता स्वामी, न वयं स्वामिनः इत्येतत्परं भवति, यथा लोके कश्चित् उच्येत ' किं त्वयि भवति निमन्त्रिते, त्वय्यैवान्ये निमन्त्रणीयाः ' इति ततो वाक्यं संबद्धं भवति। चोदितकरणाच्च दृष्टार्थं भवति। मादयस्व इत्यपि मुख्यस्य मदस्यासंभवात् एतेभ्यः इत्येतत् लक्षयति। दातृत्वमपि अग्नेः दृष्टार्थमेव इति संप्रदानलक्षणार्थं विज्ञायते। विस्पष्टं च तद्धितेन यत् अन्यनिरपेक्षमवगतं तत् मन्त्रानुरोधेन बाधितं न स्यात्। कथं पुनः ' पात्नीवतं ' इति चोदिते अग्निर्देवता अवगम्यते, न पुनः त्रयस्त्रिंशद्देवता स्यात्? अत आह ( भाष्यकारः ) पत्नीवांश्च अग्निरिह गृह्यते न त्रयस्त्रिंशत्, अग्ने पत्नीवन् इति सामानाधिकरण्यदर्शनात्। ननु त्रिंशताऽपि सह सामानाधिकरण्यमस्ति, ' पत्नीवतस्त्रिंशतम् ' इति। सत्यमस्ति। तथापि अत्र अग्निः पत्नीवान् गृह्यते। तद्धितनिर्देशेन हि प्रातिपदिकार्थस्य संख्याविशेषाभिव्यक्तिर्भवति। तत्र प्रातिपदिकार्थानन्यथासंभवात् एकवचनान्तेन विग्रहो भवति, पत्नीवान् देवता अस्य इति। त्रिंशच्च नित्यं बहुवचनान्तः। तस्मान्न तेभ्यस्तद्धितः इति देवतात्वाभाव इति।

सोम— पूर्वातिदेशात् संगतिः। प्रयोजनं– पूर्वपक्षे ' पत्नीवद्भ्य इदं न मम ' इत्युद्देशत्यागः, सिद्धान्ते तु ' पत्नीवते इदं न मम ' इति।

वि— ' पत्नीवन्तस्त्रयस्त्रिंशद्देवास्तान् मादयेत्यमी। लक्ष्या न वा, याज्ययोक्तेर्देवत्वादुपलक्षणम् ॥, एकोऽग्निर्यजमानेन मादितोऽन्ये तु वह्निना। अतोऽग्नेरेव देवत्वान्नान्येषामुपलक्षणम् ॥ '

भाट्ट— याज्यामन्त्रे त्रयस्त्रिंशतां देवतानां पत्नीवच्छब्दसामानाधिकरण्यात् अग्निवत् विशेष्यत्वोपपत्तेः मदश्रवणाच्च पानोपपत्तेः देवतात्वावगमात् तेषामपि उपलक्षणं मन्यते। ( सिद्धान्तस्तु ) अग्नेर्मादयितृत्वश्रवणात् ते अग्निदत्तेन कामं माद्यन्तु, यजमानस्तु अग्नये एव ददाति इत्यवगमात् तस्यैव देवतात्वम्, न त्रयस्त्रिंशताम्। एवं च पात्नीवतं इति तद्धितोऽपि असति बहुवचनग्राहकप्रमाणे एकवचनेनैव विगृहीतो भवति इत्यपि लाघवम्। अतो नोपलक्षणीयास्ते।

मण्डन— ' नैव त्रयस्त्रिंशदिहोपलक्ष्याः। '

शंकर— ' त्रयस्त्रिंशदपीदृशाः। ' नोह्येरन् त्वष्टेव।

* त्रीणि आर्षेयाणि यः संपादयितुं शक्नोति सः अधिक्रियते। चतुरार्षेयस्यापि त्रित्वसंपादने अस्ति सामर्थ्यम्। टुप्. ६।१।११।४३. * ' त्रीन् परिधीन् ' इति मन्त्रः अपूर्वप्रयुक्तः, न तु परिधित्रित्वप्रयुक्तः। इति सकृदेव पठनीयः दर्शपूर्णमासयोः। भा. ९।१।५।११–१९.

**⌛ त्रयाणां द्रव्यसंपन्नः कर्मणो द्रव्यसिद्धत्वात्। ६।१।८।३९ ॥**

शूद्रभिन्नानां त्रयाणां वर्णानां कर्माधिकारः इति पूर्वाधिकरणे साधितम्। तेषामपि त्रयाणां वर्णानां मध्ये यो द्रव्यसंपन्नः स्यात् तस्यैव कर्माधिकारः, न दरिद्रस्य। कर्मणः द्रव्यसिद्धत्वात्। कर्म हि द्रव्येण सिद्धं भवति। द्रव्यशून्यः कर्म कर्तुं न शक्नोति। इति पूर्वः पक्षः।

**अनित्यत्वात्तु नैवं स्यादर्थाद्धि द्रव्यसंयोगः। ४० ॥**

निर्धनस्य अग्निहोत्रादिकर्मसु नाधिकारः इति पूर्वपक्षं सूत्रेण प्राप्तं तुशब्देन निरस्यन् सिद्धान्तमाह। एवं अद्रव्यस्य नाधिकार इति यदुक्तं तन्न। कुतः? अनित्यत्वात् निर्धनत्वस्य। नहि जात्या कश्चित् अद्रव्यो नाम। अस्त्युपायो येन द्रव्यवान् भवति। हि यस्मात् अर्थात् जीवनार्थं द्रव्यसंयोगो भविष्यत्येव। तथा च जीवनार्थं द्रव्यलाभाय प्रयत्ने कृते तत्र पर्याप्तधनत्वे सति अग्निहोत्रादि कर्मापि करिष्यति। तस्मात् अद्रव्यस्यापि कर्माधिकारः। के.

* ' त्रयाणां हविषां स्विष्टकृते न समवद्यति ' सोमे धर्मे वाजिने। संकर्ष. १।४।३.

* ' त्रिः प्रथमामन्वाह त्रिरुत्तमाम् ' इति त्रिरभ्यासः सामिधेन्यां प्रथमोत्तमस्थानधर्मः, न ऋग्धर्मः। ( या काचित् प्रथमा सामिधेनी स्यात्, तां त्रिरनुब्रूयात्, न तु ' प्र वो वाजा ' इतीमामेवेत्यर्थः )। भा. ९।१।९।३३.

ह त्रिः प्रथमां त्रिरुत्तमामन्वाह इति न्यायेन परिधानीयायास्त्रिरावृत्तिः ( प्रथमां ऋचं त्रिवारं अनुवचनं कर्तव्यं उत्तमायाः अन्तिमायाश्च ऋचः त्रिः अनुवचनं कर्तव्यम् । इति वाक्यार्थः । परिधानं यया क्रियते सा अन्तिमा, ऋक् परिधानीया नाम ) । ऐब्रासा. १७।५।१३.

ह त्रिकस्तृचे धुर्ये स्यात् । १०।५।३।१०॥

एकत्रिके क्रतुविशेषे त्रिकः स्तोमः धुर्ये धुरि साम्नि गायत्रगानविशेषात्मके तृचे स्यात्, न तु एकस्यामृचि । धुर्ये इत्येकवचनं सामान्याभिप्रायम् । सर्वाण्येव धूर्गानानि तृचेषु स्युः । इति पूर्वः पक्षः ।

एकस्यां वा, स्तोमस्यावृत्तिधर्मत्वात् । ११ ॥

एकत्रिके क्रतौ धूर्गानानि एकस्यां एकैकस्यां ऋचि अभ्यासेन त्रित्वमापन्नायां स्यात्, न तृचेषु । स्तोमस्य आवृत्तिधर्मत्वात् । 'आवृत्तं धूर्षु स्तुवते' 'पुनरावृत्तं पृष्ठैरुपतिष्ठते' इति आवृत्तिर्धर्म उक्तः । तस्मात् धुरि साम ऋचि गेयम्, न तृचे । के.

* त्रिकस्तोमधूर्गानं एकत्रिके क्रतौ एकस्या एव ऋचस्त्रिरभ्यासेन । भा. १०।५।३।१०-११.

* त्रिकपालं वैष्णवम् । भा. १०।५।१।१, * त्रिकपाले वैष्णवे आग्नेयाष्टाकपालगतप्रथमकपालत्रयविध्यन्तः । १०।५।१।१-६, * त्रिकपाले वैष्णवे राजसूयगतपूर्वत्रिसंयुक्तगते सौमिकातिथ्येष्टिगतवैष्णवशब्दो धर्मान्नातिदिशति । ७।३।६।१७.

* त्रिणवः स्तोमः अतिरात्रे बहिष्पवमाने काम्यो विहितः 'त्रिणवेनौजस्कामम्' । वि. ५।३।४, * त्रिणवः ( त्रिः नव- ३×९ = २७ ) स्तोमविशेषः अप्टरात्रे पञ्चमेऽहनि । ७।३।१०. * त्रिणवे अतिरात्रे आगमेन संख्यापूरणं पाठक्रमेणैव ऋच आगमयितव्याः । भा. ५।१।६।१३. * त्रिणवे अतिरात्रे विवृद्धानां षण्णां तृचानां पर्यासोत्तरं निवेशो न प्राक्, बहिष्पवमाने । वि. ५।३।४, * त्रिणवे अतिरात्रे विवृद्धस्तोमके साम्नामागमेन वृद्धिः न त्वभ्यासेन । १०।५।६.

ह त्रिदशामरत्वन्यायः । मरिष्यमाणानामपि त्रिदशानां ( देवानां ) दीर्घकालजीवित्वमात्रेण यथा अमराः निर्जराः इति व्यपदेशः तथारीत्या इत्यर्थः । संग्रहः. * अन्तवत्येव भूताकाशे वाय्वादिस्वकार्यापेक्षया अधिककालावस्थायित्वाभिप्रायेण अनन्तत्वव्यपदेशः इति त्रिदशामरत्वन्यायेन तदन्यथानयने उपक्रमसंकीर्तितान्तवत्त्वदोषपरिहारालाभात् । ( आकाशस्तल्लिंङ्गात् १।१।८।२२ ब्रसू. ) । पराक्रमः.

* त्रिपुटी च ज्ञान-आत्म-विषयरूपा ज्ञाने । मणि. पृ. १८.

* त्रिप्रवरस्यैव दर्शपूर्णमासादिकर्माधिकारः । एकार्षेयस्य, द्व्यार्षेयस्य, पञ्चार्षेयस्य च नास्त्यधिकार इति जैमिनेर्मतम् । अस्ति तेषामप्यधिकारः इति ऋष्यन्तरमतम् । पञ्चार्षेयेणापि त्रय एव प्रवरा उच्चार्या इति मतान्तरम् । के. ६।१।११।४३.

* त्रिरात्रः अहीनविशेषः । तत्र अहीनद्वादशाहधर्मातिदेशः । वि. ८।२।५, * त्रिरात्रस्य मध्यमेऽहनि षोडशी ग्रहो गृह्यते । 'मध्यमेऽहंस्त्रिरात्रस्य' । १०।५।९, स चाग्रयणपात्रात् उक्थ्यादनन्तरं ग्राह्यः । १०।५।१०, स च तृतीयसवने एव ग्राह्यो न पूर्वयोः सवनयोः । १०।५।११. * त्रिरात्रे-गर्गत्रिरात्रे आज्यदोहसामगानकाले लौकिकाग्नेरेव उपनिधानम्, न वैदिकाग्नेः । भा. ७।३।१२।३०, * त्रिरात्रे द्वादशाहस्य आद्यानामेव त्रयाणामह्नां विध्यन्तस्यातिदेशः, न तु केषांचित् त्रयाणाम् । १०।५।१।१-६.

ह त्रिवत्सश्च । १०।३।१६।६०॥

साद्यस्के सोमे साण्डः त्रिवत्सः सोमक्रयणः । प्रकृतितश्च चोदकप्राप्तानि क्रयद्रव्याणि 'अजया क्रीणाति, हिरण्येन क्रीणाति, ऋषभेण क्रीणाति, अश्वशफेन क्रीणाति, वाससा क्रीणाति' इत्येवमादीनि । तत्र त्रिवत्सः प्रत्यक्षः क्रीणातिना संबध्यते चोदकप्राप्तं तु आनुमानिकम् । तस्मात् त्रिवत्सः चोदकप्राप्तस्य कृत्स्नस्य क्रयार्थस्य निवर्तकः । एकां पञ्च इतिवत् इति चकारार्थः । सिद्धान्त एवोक्तः ।

तथा च लिङ्गदर्शनम् । ६१ ॥

साद्यस्के सोमे साण्डेन त्रिवत्सेन सोमक्रयणेन चोदकप्राप्तानि सर्वाणि सोमक्रयद्रव्याणि व्यावर्त्यन्ते इत्यत्र

लिङ्गदर्शनं तथा च भवति । अपरस्मिन् साद्यस्के 'स्त्री गौः सोमक्रयणी, व्यावृत्ता ह्येषां स्पर्धा' इत्युक्तम् । तत्र यतः स्त्री गौः निखिलसोमक्रयसाधनं बाधित्वा सर्वस्थाने स्थिता, अतः स्पर्धा कलहो निवृत्तः इति तदर्थः । तथा च इतरसाद्यस्के यथा स्त्री गौः सर्वबाधिका, तथा प्रथमे साद्यस्के साण्डो गौः निखिलक्रयसाधनबाधकः इति लिङ्गदर्शनमुक्तम् । के.

* त्रिवत्साः त्रिहायन्यः । टुप्. ११।२।१३।५४.

* **त्रिवत्सेन** साण्डेन साद्यस्के सोमक्रयार्थे विहितेन प्राकृतसर्वक्रयद्रव्यस्य बाधः । भा. १०।३।१६।६०–६१.

* **त्रिवत्से** सर्वक्रयद्रव्यस्थानापन्ने यथा आरुण्यस्य निवेशः तथा कौस्तुभे द्रष्टव्यम् । भाट्ट. ३।१।६ पृ. १९१.

**त्रिवत्साधिकरणम्** । साद्यस्के त्रिवत्सेन साण्डेन सोमक्रयणेन प्राकृतस्य कृत्स्नस्य क्रयसाधनस्य बाधः ॥

**त्रिवत्सश्च । १०।३।१६।६० ॥**

**भाष्यम्**— इदं तावदपर्यवसितं तिष्ठतु । अथाधिकरणान्तरं प्रस्तूयते । अस्ति साद्यस्के 'साण्डस्त्रिवत्सः सोमक्रयणः स्पर्धमानानाम्' इति । सन्ति क्रयार्थानि द्रव्याणि चोदकप्राप्तानि 'अजया क्रीणाति, हिरण्येन क्रीणाति, ऋषभेण क्रीणाति, अश्वशफेन क्रीणाति, वाससा क्रीणाति' इत्येवमादीनि । तत्र संशयः किं त्रिवत्सः ऋषभस्य निवर्तकः, अथवा सर्वेषां क्रयार्थानां द्रव्याणामिति । किं प्राप्तम् ? ऋषभस्य निवर्तक इति । कुतः ? पुंगवत्वात् । पुंगवत्वेन सामान्येन पुंगवोऽसौ विधीयते । कुतः पुंगवत्वम् ? साण्डश्रवणात् । तस्मात् ऋषभस्य निवर्तक इति ।

**एवं प्राप्ते, ब्रूमः** । त्रिवत्सश्च । किम् ? कृत्स्नस्य क्रयार्थस्य निवर्तकः इति । प्रत्यक्षः स क्रीणातिना संबध्यते, तेन चोदकप्राप्तं निवर्तयति । तस्मात् कृत्स्नस्य क्रयार्थस्य निवर्तक इति ।

**तथा च लिङ्गदर्शनम् । ६१ ॥**

**भाष्यम्**— एवं च कृत्वा लिङ्गं दर्शयति । किं लिङ्गं भवति ? एवमाह । अपरस्मिन् साद्यस्के 'स्त्री गौः सोमक्रयणी व्यावृत्ता ह्येषां स्पर्धा' इति । यदि सर्वस्य क्रयार्थस्य निवर्तिका स्त्री गौः, ततः सैव एकाकिनी केन सह स्पर्धिष्यते इति । इतरथा सर्वस्य अनिवर्तिकायां सङ्घस्य स्पर्धा भवेत् । तत्रास्यां वर्तमानायां स्पर्धायाम्, व्यावृत्ता ह्येषां स्पर्धा, इति नोपपद्यते । तस्मात् सर्वस्य निवर्तिकेति । त्रिवत्सोऽपि तत्समानश्रुतिः । सोऽपि च सर्वस्य निवर्तक इति ।

**एवं वा** । यदि त्रिवत्सः सर्वेषां निवर्तकः, तदा तं अपबाधमाना साद्यस्कान्तरे स्त्रीगवी श्रूयमाणा केवला स्यात् । तत्र 'व्यावृत्ता ह्येषां स्पर्धा' इति दर्शनमुपपद्यते । इतरथा हि केवलस्य ऋषभस्य अपबाधितारं त्रिवत्सं निवर्तयन्ती सङ्घमध्यपतिता स्पर्धेतापि । तत्र 'व्यावृत्ता ह्येषां स्पर्धा' इति वचनं नावकल्पते । अतः कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तकस्त्रिवत्स इति ।

**सोम**— त्रिवत्सश्च कृत्स्नस्य निवर्तकः इति सूत्रार्थः ।

**वि**— 'त्रिवत्सेनर्षभो बाध्यः कृत्स्नं वा क्रयसाधनम् ।, ऋषभः पुंगवत्वात्, न क्रयोद्देशविधानतः ॥' क्रयसाधनं कृत्स्नं बाध्यम् ।

**भाट्ट**— साद्यस्के 'त्रिवत्सः साण्डः सोमक्रयणः' इत्यत्र 'कर्तव्यः' इति क्रियापदाध्याहारावश्यम्भावे तदुपात्तभावनायां अप्राप्तस्य त्रिवत्सत्वस्य तावत् विधेयत्वमावश्यकम् । तच्च यदि तावत् क्रियोद्देशेन विधीयते, तदा ऋषभादिपुंसीव अजादिषु स्त्रीष्वपि प्रसक्तौ साण्डशब्दस्य अवयुत्यानुवादत्वापत्तेः, विशिष्टोद्देशे च वाक्यभेदात् साण्डानुवादेनैव त्रिवत्सत्वविधिः । तस्य च 'ऋषभेण क्रीणाति' इत्यनेन क्रये अपि प्राप्तत्वात् सोमक्रयणः इत्यनुवादमात्रम् । न च साण्डस्य अग्नीषोमीयादावपि सत्त्वेन तत्र त्रिवत्सत्वप्रसक्तेः तस्यापि अवयुत्यानुवादत्वापत्तिः, आवश्यके अन्यतरस्य अवयुत्यानुवादत्वे जघन्यस्यैव तदौचित्यात् । अतश्च सर्वत्रैव त्रिवत्सत्वविधानान्न कस्यापि द्रव्यस्य अनिवृत्तिः । इति प्राप्ते, न क्रियोद्देशेन त्रिवत्सत्वमात्रं विधीयते, येन साण्डादिपदस्य अवयुत्यानुवादत्वापत्तिः । अपि तु त्रिवत्सत्वपुंस्त्वैकत्वविशिष्टद्रव्यान्तरस्यैव क्रियोद्देशेन विधिः त्रिवत्सत्वादिक्रयकरणत्वानामेव वा एकप्रथमालक्षितानां द्रव्यपरिच्छेदद्वारा विधानात् अवाक्यभेदः । अतश्च पुंस्त्वेन स्त्रीत्वस्यापि बाधात्

साण्डपदं नित्यानुवादः, न तु अवयुत्यानुवादः । **अत एव** एकत्वस्यापि विधानात् सर्वक्रयद्रव्येषु प्रत्येकं न त्रिवत्सत्वादेर्निवेशः । न च एकत्वस्यापि प्रतिक्रियं निवेशापत्तेर्न सर्वक्रयेषु एकद्रव्यतासिद्धिः, तथात्वे द्रव्यबहुत्वात् बहुवचनप्रसङ्गेन एकत्वस्य क्रयसमुदाये एव प्रयाजैकादशत्वन्यायेन विधेयत्वात् एकद्रव्यत्वसिद्धेः । **अत एव** पुंस्त्वानुरोधेन हिरण्यादिव्यावृत्तावपि गोत्वाजत्वयोः द्वयोर्मध्ये गोत्वस्य अनेकक्रयसाधनत्वेन भूयोऽनुग्रहस्य न्याय्यत्वात् तेनैव क्रयान्तरे प्रसङ्गसिद्धौ अजत्वस्यापि बाधात् 'गोत्वावच्छिन्नः एव पुमान् त्रिवत्सः एकः सर्वक्रयेषु द्रष्टव्यः' इति कौस्तुभे व्यक्तम् । अतो द्रव्यान्तरनिवृत्तिः । अत एव 'स्त्री गौः सोमक्रयणी व्यावृत्ता ह्येषां स्पर्धता' इत्यादौ निकायभूते अग्रिमे यागे द्रव्यान्तराभावात् स्पर्धाऽभावानुवादोऽपि संगच्छते ।

**मण्डन**— 'बाध्येत वत्सेन पुरोक्तसर्वम् ।'

**शंकर**— 'त्रिवत्सोऽप्येवमेव स्यात् ।' एवमेव प्राकृतकृत्स्नक्रयद्रव्यस्य बाधकः ।

* त्रिवत्सः सर्वसोमक्रयानुवादेन विधीयमानः तदीयसर्वद्रव्यस्थानापन्न इति दशमे **त्रिवत्साधिकरणे** वक्ष्यते । **कौ.** ३।१।६।१२ पृ. १६७.

* **त्रिविधं** नामधेयं कर्मनामधेयं संस्कारनामधेयं यौगिकं चेति । तत्र यौगिकं नातिदेशकम् । कथम् ? येनैव हि योगेन द्वादशाहे प्रायणीयशब्दः तेनैव गवामयनेऽपि इति । **वा.** ७।१।१।१२.

* **त्रिवृत्** एव सर्वः भूः नाम यागः वैश्वदेवः । तस्य विश्ववत्यः स्तोत्रीया धेनुर्दक्षिणा । धेनुश्च कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तिका । **भा.** १०।६।६।१५. * **त्रिवृत्** स्तोमः स्तोमेषु मुख्यः, प्रजापतेर्मुखतः सृष्टत्वात् । **वि.** १।४।१४, * **त्रिवृति** अग्निष्टुति स्तोमगतसंख्याविकारः । स्तोत्रीयाणां नवानामृचां स्तोमविषयमेव त्रिवृत्त्वम् । १०।६।७.

**⌛ त्रिवृति संख्यात्वेन सर्वसंख्याविकारः स्यात् । १०।६।७।२२ ॥**

त्रिवृदग्निष्टोमः इति श्रुते त्रिवृति अग्निष्टोमे क्रतौ त्रिवृत्त्वं संख्यात्वेन सामान्येन सर्वसंख्याविकारः येषुकेषुचिदङ्गेषु काचित् संख्या श्रुता, तासां सर्वासां संख्यानां विकारः स्यात् तां तां संख्यामपनीय त्रिवृत्त्वं ( नवत्वं ) ग्राह्यम् । इति पूर्वः पक्षः ।

**स्तोमस्य वा तल्लिङ्गत्वात् । २३ ॥**

पूर्वपक्षं वाशब्दो व्यावर्तयति । न सर्वसंख्यानां विकारः त्रिवृत्त्वम्, किंतु स्तोमस्य संख्यानां विकारः । पञ्चदशसप्तदशैकविंशत्वं विकृत्य सर्वत्र स्तोमे तु त्रिवृत्त्वं स्यात् । तल्लिङ्गत्वात् स्तोमलिङ्गत्वात् यथा 'त्रिवृत् बहिष्पवमानः' इत्यत्र त्रिवृत्त्वेन नवत्वेन स्तोमविषयता परिच्छिन्ना, एवं त्रिवृदग्निष्टोमः इत्यत्रापि । तस्मात् अस्मिन् क्रतौ त्रिवृदेव सर्वे स्तोमाः न पञ्चदशादिरपरः । इति सिद्धान्तः । **के.**

* त्रिवृति संख्यात्वेन । 'त्रिवृद् बहिष्पवमानः' इति वाक्ये सति त्रिवृच्छब्दश्रवणे तृचत्रयाद्यनुक्रमणवशेन स्तोत्रीयानवके समुदायप्रसिद्धौ कल्पितायां अग्निष्टुत्यपि क्लृप्तया रूढया योगबाधात् सर्वस्तोत्रेषु स्तोत्रीयानवकमेव विधीयते इति दशमे वक्ष्यते । एतदधिकरण- ( यववराह १।३।४ ) प्रयोजनकथनपरत्वेन तदधिकरणस्य ( दाशमिकस्य ) न पौनरुक्त्यम् । **कु.**

* त्रिवृत्सु अहःसु जनकसप्तरात्रीयेषु द्वादशाहधर्मातिदेशः । **भा.** ८।३।२।३–५.

* **त्रिवृदग्निष्टोमः** इति दशमे (१०।६।७।२२–२३) उदाहृत्य किं अग्निष्टोमसाधनमात्रगतसंख्याविकारिका इयं त्रिवृत्संख्या, स्तोमगतसंख्याविकारिका वेति संदिह्य त्रिवृत् रज्जुः इत्यादौ लोके त्रिवृच्छब्दस्य त्रैगुण्यमात्रवाचित्वदर्शनात् बहिष्पवमानवच्च संख्यात्वसामान्येन संख्यामात्रकार्ये विनियोगप्रतीतेः सर्वसंख्याविकारिका त्रिवृत्संख्या इति 'त्रिवृति संख्यात्वेन सर्वसंख्याविकारः स्यात्' इति सूत्रेण पूर्वपक्षयित्वा, त्रिवृद्बहिष्पवमानं इत्युक्त्वा स्तोत्रीयानवकाम्नानात् 'त्रयः त्रिकपालाः त्रिवृता स्तोमेन संमिताः' इति च नवानां कपालानां त्रिवृता स्तोमेन समानवचनात् त्रिवृच्छब्दस्य स्तोत्रीयानवकवाचित्वप्रतीतेः । अत्र उभयसंभवेऽपि वैदिकत्वसामान्येन स्तोत्रीयानवकविषयत्वावधारणात् स्तोमगतैव पञ्चदशत्वादिसंख्या त्रिवृत्संख्यया बाध्यते इति 'स्तोमस्य वा तल्लिङ्ग-

त्वात्' इति सूत्रेण सिद्धान्तं वदता उपपादयिष्यते । सु. पृ. २१७. * 'त्रिवृदग्निष्टोमः' इत्यादौ स्तोत्रविशेषोपस्थापकप्रकृतिलिङ्गाभावात् अविशेषात् सर्वस्तोत्रेषु त्रिवृत्त्वान्वयः । सोम. १०।६।६. * त्रिवृदग्निष्टोमः । तत्र त्रिवृत्संख्या स्तोमविषया एव नियम्यते, न साधनमात्रे । भा. १०।६।७।२२-२३.

* त्रिवृदादयः चत्वारः स्तोमाः अग्निष्टोमे विद्यन्ते त्रिवृत् पञ्चदशः सप्तदशः एकविंश इति । वि. ५।३।१९.

## त्रिवृच्चर्वश्ववालाधिकरणम् ॥

अथवा त्रिवृच्चर्वश्ववालादिशब्दा एवात्र लोकवेदयोर्विप्रतिपत्तौ निरूप्यन्ते । अत्रायं पूर्वपक्षिणोऽभिसन्धिः, त्रिवृच्छब्दो हि लोके 'त्रिवृद्रज्जुः, त्रिवृद् ग्रन्थिः' इति त्रिगुणरज्ज्वादौ प्रसिद्धः । वेदे तु 'त्रिवृद्बहिष्पवमानम्' इत्युक्त्वा तृचत्रयं समनुक्रान्तम् । तृचशब्दश्च स्तोत्रीयऋक्त्रयवचनः । तेन वेदे स्तोत्रीयानवकवचनस्त्रिवृच्छब्दः प्रतीयते । तथा चरुशब्दश्च लोके स्थालीवचनः प्रसिद्धः । वेदे तु 'आदित्यः प्रायणीयश्चरुः' इति विधाय 'अदितिमोदनेन' इति वचनात् याज्ञिकप्रसिद्धेश्च अनवस्रावितान्तरूष्मपक्वौदनवचनः चरुशब्दो विज्ञायते । एवं 'आश्ववालः प्रस्तरः' इत्यत्रापि लोकप्रसिद्ध्या अश्ववालः तुरगकेशः प्रतीयते । वेदे तु काशेषु अश्ववालशब्दप्रसिद्धिः । एवं हि श्रूयते 'यज्ञो वै देवेभ्योऽश्वो भूत्वाऽपाक्रामत्, सोऽपः प्राविशत्, स वालधौ गृहीतो वालानमोचत्, ते वालाः काशतां गताः' इति । तेन लौकिकवैदिकप्रयोगविप्रतिपत्तौ विनिगमनाहेत्वभावात् विकल्प एवेति । न च लोकप्रसिद्धेर्धर्मं प्रति अनङ्गत्वात् वेदप्रसिद्धास्वीकारः एव युक्तः, पदार्थावधारणे विशेषाभावात् । तदुक्तं 'नैतदेवं पदार्थेषु नहि वेदो विशिष्यते । अदृष्टार्थे तु वाक्यार्थे लोकात् स ह्यतिरिच्यते ॥' इति । ( वा. पृ. २२२ ) । अथवा लौकिक्येव बलीयसी । सा हि वेदनिरपेक्षैव प्रवर्तते । वेदप्रसिद्धिस्तु वाक्यशेषगतलोकप्रसिद्धपदसमभिव्याहारसापेक्षा । तेन लोकप्रसिद्धेर्बलीयस्त्वात् यत्र लोकाविरोधः, तत्र भवतु वैदिकार्थस्वीकारः, लोकविप्रतिपत्तौ तु लोकप्रसिद्धार्थस्वीकारः एव । तथा सति अर्थवादस्यापि 'आदित्यो वै यूपः' 'यजमानः प्रस्तरः' 'स्वर्गो लोक आहवनीयः' इतिवत् गौण्या वृत्त्या लौकिकार्थप्रशंसापरत्वमेवेति । तथा शास्त्रस्थमन्वादिप्रसिद्धिरपि एतत्पक्षानुगुणा । यदाह 'कार्पासमुपवीतं स्याद् विप्रस्योर्ध्ववृतं त्रिवृत् ।' ( मनु. २।४४) 'त्रिवृता ग्रन्थिनैकेन' इति च ॥ ( मनु. २।४३) न च लोकप्रसिद्धस्य त्रिवृच्छब्दस्य बहिष्पवमानसामानाधिकरण्यासंभवेन वैदिकार्थपरिग्रहः इति वाच्यम् । यतः स्तोत्रीयानवकवचनत्वेऽपि बहिष्पवमानस्तोत्रस्य तत्साध्यत्वात् सामानाधिकरण्यानुपपत्तेस्तदवस्थत्वात् । अथ तत्र कार्यकारणयोरेकत्वोपचारात् सामानाधिकरण्यम्, तदत्रापि त्रिगुणयज्ञोपवीतस्यापि 'यज्ञोपवीतिना कर्म कर्तव्यम्' इत्यधिकारहेतुत्वात् कार्यकारणभावोपपत्तेः नानुपपन्नम् । तेन उक्तन्यायेन लोकप्रसिद्धेर्बलीयस्त्वात् लौकिकार्थपरिग्रह एव । अथ प्रसिद्धितुल्यत्वम्, तदा लौकिकार्थेष्वपि वेदविरोधाभावेन विप्रतिपत्तौ समत्वात् विकल्प एवेति । एवं प्राप्ते, अभिधीयते । भवेदेवं यदि अत्र लौकिकवैदिकपदार्थयोस्तुल्यत्वं भवेत् । अपूर्वसिद्ध्यर्थं हि वेदार्थानुष्ठानम् । तत्र वाक्यार्थवत् पदार्थोऽपि यत्र वेदेनैव प्रतिपादितोऽस्ति, तत्र वैदिकपदार्थानुष्ठानादेव अपूर्वसिद्धिः । अन्यथा वेदस्य तत्पदार्थप्रतिपादनवैयर्थ्यप्रसङ्गात् । यत्र पुनर्वैदिकः पदार्थो नास्ति, तत्र लौकिकपदार्थानुष्ठानादेव अपूर्वसिद्धिर्वेदानुमतेति युक्तम् । तदत्र 'त्रिवृद्बहिष्पवमानम्' इत्युक्त्वा तृचत्रयानुक्रमणं तदैव अर्थवद्भवति, यदि लौकिकपदार्थपरित्यागेन स्तोत्रीयानवकवचनः त्रिवृच्छब्दः अत्र अध्ययनविध्यनुमतो भवेत् । तेन यत्रापि तृचत्रयानुक्रमणं नास्ति 'त्रिवृदग्निष्टुदग्निष्टोमः' इत्यादौ, तत्रापि स्तोत्रीयानवकवचनः त्रिवृच्छब्दो विज्ञायते । न चैतन्न संभवति ।

यद्यपि 'ब्रह्मस्तोमः' इत्यादौ समुदायवचनं स्तोमशब्दः, तथापि 'पञ्चदशः स्तोमो भवति' इति वेदे श्रवणात् डप्रत्ययान्तस्य च पञ्चदशशब्दस्य व्याकरणानुशासनेन याज्ञिकप्रसिद्धेश्च स्तोत्रीयासमुदायवचनत्वात् तत्समानाधिकरणोऽयं स्तोमशब्दः स्तोत्रीयासमुदायवचनो विज्ञायते । एवं 'त्रिवृदग्निष्टुदग्निष्टोमः' इत्यादौ त्रिवृत्समभिव्याहारात् स्तोत्रीयानवकार्थत्वमेवेति नानुपपन्नम् । न च मनुवचन-

विरोधः, मनुवचनस्यापि लौकिकप्रयोगान्तर्निविष्टत्वेन अविरोधकत्वादिति । तदुक्तं '**त्रिवृच्छब्दः प्रयुक्तो यः स्तोत्रीयानवकं प्रति । कस्तं शक्तस्ततोऽन्यत्र नेतुं जन्मशतैरपि ॥**' इति । (वा. पृ. २२३)। यत्र पुनर्वेदप्रसिद्धार्थपरिग्रहो न संभवत्येव, यथा 'त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इत्यादिषु, तत्र लोकप्रसिद्धार्थस्वीकारः एव न्याय्यः, न तु अन्यत्रापि इति । एवं चर्वश्ववालशब्दयोरपि उक्तन्यायेन वेदप्रसिद्धार्थस्यैव अपूर्वसिद्धयुपायत्वम्, न लौकिकस्य । तथाच 'आदित्यः प्रायणीयश्चरुः' 'आश्ववालः प्रस्तरः' इति विधाय 'अदितिमोदनेन' इति, 'ते वालाः काशतां गताः' इति च ओदनकाशयोः स्तुत्यवगमात् विधिस्तुत्योश्च समानविषयत्वनियमात् तयोरेव चरु-अश्ववालशब्दार्थत्वम्। न च गौणत्वाश्रयणेन लोकप्रसिद्धस्थालीतुरगवालस्तुतिरेवेयम् 'आदित्यो वै यूपः' 'यजमानः प्रस्तरः' 'स्वर्गो लोक आहवनीयः' इतिवत् भविष्यतीति वक्तव्यम्। यतो गत्यन्तरासंभवेन हि तत्र तथा आश्रितम्। न हि आदित्यादीनां यूपादिरूपत्वं संभवति। इह पुनरोदनस्य यागसाधनत्वसंभवात्, काशस्य च प्रस्तररूपत्वसंभवात् वाक्यशेषात् तदर्थनिर्णय एवेति । तदुक्तं '**अर्थवादकृताऽप्यत्र प्रतिपत्तिर्बलीयसी । तद्ग्राह्यत्वादृते नास्य तस्याप्यस्ति प्रयोजनम् ॥**' इति । (वा. पृ. २२३)। न च 'संदिग्धेषु वाक्यशेषान्निर्णयः' इत्यनेन तुल्यार्थत्वम्, यतो यत्र हि शब्दार्थसंदेहे वाक्यशेषान्निर्णीयते, तत्र तन्न्यायविषयत्वमेव । इह पुनर्लोकवेदयोः त्रिवृदादिपदेषु अर्थद्वयस्य असंदिग्धत्वेन लौकिकस्यार्थस्य वैदिकेनार्थेन बाध एव, न विकल्प इति व्युत्पाद्यते । अतो न तुल्यार्थत्वमिति । तदुक्तं '**लौकिकी प्रतिपत्तिर्हि स्वार्थे निःसंशया स्थिता । वैदिक्यपि तथा स्वार्थे बाध्यते न विपर्ययात् ॥**' इति । (वा. पृ. २२४)। **प्रयोजनम्**— कर्मसु विकल्पेन लौकिकवैदिकार्थोपादानं यदि पूर्वपक्षः । सिद्धान्ते तु लौकिकार्थबाधेन वैदिकार्थोपादानमेवेति । **सूत्रं तु** शास्त्रस्थैव प्रतिपत्तिर्बलीयसी, धर्मस्य अपूर्वात्मनः तन्निमित्तत्वात् शास्त्रनिमित्तत्वादिति । **तौता.**

**त्रिवृच्चर्वाश्ववालाधिकरणम्** । (१।३।४।९ सूत्रे) लोकवाक्यशेषयोर्विरोधे बलाबलविचारः ॥

वा— '**त्रिवृच्चर्वाश्ववालादेर्लोकेऽन्योऽर्थः प्रतीयते । वेदे तदभियुक्तैश्च तस्मादन्यो विलक्षणः ॥ तत्र किं तुल्यकल्पत्वात् पदार्थे लोकवेदयोः । समा विप्रतिपत्तिः स्यादथवैका बलीयसी ॥ लोके तावत् त्रिवृच्छब्दस्त्रिगुणत्वस्य वाचकः । त्रिवृद्रज्जुस् त्रिवृद् ग्रन्थिर् वेदे तु नवके स्थितः ॥**' त्रिवृत् बहिष्पवमानं इत्युक्त्वा तृचत्रयमनुक्रान्तं इति स्तोत्रीयाऋङ्नवकवचनः एव त्रिवृच्छब्दो विज्ञायते ।

'**तथाऽयं चरुशब्दोऽपि लोके स्थालीनिबन्धनः । याज्ञिकानां च वेदे च प्रसिद्धस्त्वोदनं प्रति ॥**' अनवस्रावितान्तरूष्मपक्वौदनवचनो हि याज्ञिकानां चरुशब्दः प्रसिद्धः । तथा वेदेऽपि 'आदित्यः प्रायणीयः पयसि चरुः' इति विहिते पश्चादुक्तात् 'अदितिमोदनेन' इति वचनाच्च ओदनवचनत्वं ज्ञातम् ।

एवं 'आश्ववालः प्रस्तरः' इति अश्वजातीयवालमयः प्रस्तरः लोकप्रसिद्धया विज्ञायते । वैदिकवाक्यशेषात्तु काशेषु अश्ववालप्रसिद्धिः । एवं हि श्रूयते 'यज्ञो वै देवेभ्योऽश्वो भूत्वाऽपाक्रामत् सोऽपः प्राविशत्' 'स वालधौ गृहीतः स वालान् मुक्त्वा विवेश ह । ते वालाः काशतां प्राप्ताः कार्योऽतः प्रस्तरस्तु तैः ॥'

'**ऐक्षव्यौ विधृती ये च ते इक्ष्ववयवात्मिके । लोके सिद्धे तथा वेदे काशानामेव मूलके ॥ एवमादिषु सर्वेषु प्रतिपत्तिविपर्यये । प्रतिपत्तेः समानत्वाद्विकल्पो हि प्रसज्यते ॥**' ननु च लोकप्रसिद्धेः धर्मं प्रति अनङ्गत्वात् वेदप्रसिद्धिरेव ज्यायसी । '**नैतदेवं पदार्थेषु नहि वेदो विशिष्यते । अदृष्टहेतुवाक्यार्थे लोकात् स ह्यतिरिच्यते ॥ तस्मादुभय्यपि त्वेषा प्रतिपत्तिः समा भवेत् । यदि वा पूर्वभावित्वात् लौकिक्येव बलीयसी ॥**' वेदनिरपेक्षा हि लोकप्रसिद्धिः आत्मानं लभते । वैदिकी पुनः लोकप्रसिद्धपदान्तरसामानाधिकरण्येन सिध्येत् '**तत्र लोकाविरुद्धा या वैदिकी सैव गृह्यते । लोकसिद्धिं व्यतिक्रम्य साऽऽत्मानं नैव विन्दति ॥**' 'तेष्वदर्शना-

द्विरोधस्य ' इति च तेषु लौकिकेषु पदार्थेषु अदर्शनात् विरोधस्य अर्थवादानां च अन्यपरत्वेन गुणवादप्रायत्वात् । आदित्ययूप-यजमानप्रस्तर-स्वर्गाहवनीयादिवचनवत् कथमपि प्ररोचनाशेषत्वात्, संज्ञासंज्ञिसंबन्धकरणव्युत्पादनव्यापाररहितत्वाच्च न पदार्थप्रतिपत्त्यङ्गत्वमध्यवसीयते । तदाश्रयणे च विधिविरोधप्रसङ्गात् तेष्वेव वा दर्शनात् विरोधस्य इत्यभिप्रायः । तथा शास्त्रस्थमन्वादिप्रसिद्धिरपि असत्पक्षानुगुणैव । यथा आह 'कार्पासमुपवीतं स्याद् विप्रस्योर्ध्ववृतं त्रिवृत् ।' ( मनु. २।४४ ) 'त्रिवृता ग्रन्थिनैकेन' ( मनु. २।४३ ) इति । तस्मात् समाऽपि तावत् भवतु । इति प्राप्तेऽभिधीयते । '**शास्त्रस्था प्रतिपत्तिर्या सैवात्र ज्यायसी भवेत् । धर्मस्य तन्निमित्तत्वात् ससाधनफलात्मनः ॥ अर्थवादकृताऽप्यर्थप्रतिपत्तिर्बलीयसी । तद्ग्राह्यत्वादृते नान्यत् तस्या ह्यस्ति प्रयोजनम् ॥ गौणो वा यदि वा मुख्यो वेदेनाश्रीयते हि यः । स धर्मसाधनत्वेन पदार्थोऽध्यवसीयते ॥ त्रिवृच्छब्दः प्रयुक्तो यः स्तोत्रीयानवकं प्रति । कस्तं शक्तस्ततोऽन्यत्र नेतुं जन्मशतैरपि ॥**' तेन यत्र 'त्रिवृदग्निष्टोमः' इति श्रूयते, तत्र तेनैवार्थेन भवितव्यम् । एवं स्तोमशब्दो यद्यपि ब्राह्मणस्तोम इत्यादिषु समुदायमात्रवचनत्वेन प्रसिद्धः, तथापि 'त्रिवृदेव स्तोमो भवति' 'पञ्चदशः स्तोमो भवति' इति वेदे श्रवणात् 'स्तुतेश्च मानं स्तोमः' इति याज्ञिकस्मरणात्, तथा 'स्तोमे डविधिः पञ्चदशाद्यर्थः' ( पा० ५।१।५७ सूत्रे वार्तिकं तदस्य परिमाणं इत्यनुवर्तते । स्तोमे स्तुतेः परिमाणे बोधे संख्याशब्दात् डप्रत्ययो भवति । डित्वं टिलोपार्थम् ) इति व्याकरणशास्त्रप्रसिद्धेः अवश्यमेव त्रिवृदादिषु लोकप्रसिद्धिरतिक्रमणीया । यत्तु मनुवचनम्, तत् उभयाश्रयत्वात् समत्वेनापि युज्यते । यद्वा तत्रापि नवतन्तुकमेव त्रिवृच्छब्दात् प्रत्येष्यते । तथा रशनात्रिवृत्त्वमपि इति । यद्वा यथैवायं नवके दृष्टः, तथाऽयं स्तोत्रीयागतेऽपि, इति यत्रैव तत्संभवः तत्रैव तत्प्रसिद्धानुपाती भवति । यत्र तु संख्येयान्तरविषयत्वम्, तत्र 'वैदिकोऽर्थो गौणो गृह्यतां लौकिको वा मुख्यः' इति तादृशे विषये मुख्यार्थत्वात् लौकिकप्रसिद्धिरेव ग्रहीतव्या इत्युत्तरसूत्रे वक्ष्यामः 'चोदितं तु प्रतीयेताविरोधात्' इति ।

तथा चरुशब्दोऽपि अन्याय्यानेकार्थाभिधानप्रतिबद्धशक्तित्वात् एकत्र नियम्यमानो याज्ञिकवेदप्रसिद्धिभ्यां ओदनविषय एव भवति ।

आश्ववालैश्ववीशब्दौ तु यदि तावत् वैदिकप्रयोगलब्धसमुदायप्रसिद्धित्वेन लौकिकीं अवयवप्रसिद्धिं जहीतः, ततः सिद्धमेव शास्त्रस्थप्रतिपत्तिबलीयस्त्वम् । अथापि श्येनजात्युपमितप्रसिद्धश्येनयागे गौणत्वद्वारा वा आप्तप्रसिद्धिः 'समानमितरत् श्येनेन' इत्यादिष्विव आश्रीयते, तथापि शास्त्रकल्पितत्वात् धर्मं प्रति बलीयस्त्वम् । '**अथापि शब्दगौणत्वं तथापि बलवत्तरम् । स्वतन्त्रस्य हि वेदस्य दृष्टं चेन्न निवार्यते ॥ गौणं लाक्षणिकं वाऽपि वाक्यभेदेन वा स्वयम् । वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत् ॥**' न चात्र 'संदिग्धेषु वाक्यशेषात्' इत्येतेन तुल्यार्थत्वम्, प्रतिपत्तिद्वयस्यापि असंदिग्धत्वात् । '**लौकिकी प्रतिपत्तिर्हि स्वार्थे निःसंशया स्थिता । वैदिक्यपि तथा स्वार्थे बाधतेऽतो विपर्ययात् ॥ तस्माच्छास्त्रस्थितैवैका प्रतिपत्तिर्बलीयसी । न समा मुक्तकाचारैर्विप्रकृष्टैः ससंकरैः ॥**' इति ।

शा — '**पदार्थपदसंबन्धे तुल्यत्वं लोकवेदयोः । अदृष्टसाधनत्वे हि लोकाद् वेदोऽतिरिच्यते ॥ वाक्यैकत्वं विधिस्तुत्योर्विषयैक्यादृते नहि । तेनात्र वाक्यशेषस्था प्रतिपत्तिर्बलीयसी ॥**'

वि— 'लौकिको वाक्यगो वाऽर्थस्त्रिवृदादेः, समत्वतः । उभौ, विध्यर्थवादैकवाक्यत्वादस्त्विहान्तिमः ॥'

भाट्ट— त्रिवृच्चर्वश्ववालादिशब्देषु यत्र लोकवाक्यशेषयोः अर्थविप्रतिपत्तिः, तत्र पदपदार्थसंबन्धे लोकात् वेदस्याधिक्ये प्रमाणाभावात् तुल्यबलत्वम् । **इति प्राप्ते**, विषयैक्याभावेऽपि विधिस्तुत्योः एकवाक्यताऽनुपपत्तेः विधिः वाक्यशेषस्यैव शक्तिग्राहकत्वं अनुमन्यते । अतश्च लौकिकप्रमाणावगतेऽर्थे अनेकशक्तिकल्पनाभिया न शक्तिः, अपि तु लक्षणादिनैव बोधः । अत एव यत्र वाक्यशेषो नास्ति तत्रापि त्रिवृदादिपदार्थो वैदिक एव ग्रहीतव्यः

इति वक्ष्यते । अतश्च त्रिवृच्छब्दस्य स्तोत्रगतऋङ्नवकं शक्यम्, न तु त्रैगुण्यम् । चरुशब्दस्य ओदनः, न तु स्थाली । अश्ववालशब्दस्य काशाः नाश्वकेशाः । १।३।४ पृ. ४४.

शंकर-- ' त्रिवृच्चर्वादिचिन्तनम् । ' कृतम् ।

* **त्रिवृच्चर्वाश्ववालाधिकरणे** चरुशब्दस्य ओदनवाचित्वं वाक्यशेषात्, न तु लोकप्रसिद्ध्या स्थालीवाचकत्वं लोकप्रसिद्धेर्लाक्षणिकत्वेनापि उपपत्तेः इत्यस्यार्थस्य विचारितस्य प्रयोजनं बाधोपयोगितया कथ्यते । **भाट्ट.** १०।१।१०. * त्रिवृच्छब्दस्तु तृचत्रयानुक्रमणात् स्तोत्रीयानवकवाचित्वेन त्रिवृच्चर्वाश्ववालाधिकरणे स्थापितः । **कौ.** १।४।३।३ पृ. १८१.

* **त्रिवृच्चर्वाश्ववालाधिकरणन्यायस्वरूपम्** ' लोकप्रसिद्धापेक्षया वाक्यशेषस्य बलवत्त्वम् ' । इति । **भाट्ट.** १०।१।१०.

* अर्थवादानां अवयवार्थपरत्वाभावे **त्रिवृच्चर्वाद्यधिकरणविरोधः** । तत्र वाक्यशेषेण काशपरतायाः व्यवस्थापनात् । **कु.** १।२।१।१८.

* **त्रिवृत्त्वं** अग्निष्टुति श्रुतं स्तोत्रान्तरगतस्तोममात्रबाधकम् । **भा.** १०।६।७।२२-२३.

* **त्रिवृत्पञ्चदशादीनि** ज्योतिःशब्देन उक्तानि । वचनमात्रेणापि शब्दो भवति, विशेषतो लक्षणायाम् । **भा.** ४।४।१२।४०.

* **त्रिवृत्पानविरेकवत्** । ' प्रत्यक्षफलतैव स्यात् त्रिवृत्पानविरेकवत् ' । ( त्रिवृत् नाम ओषधिः तद्रसपाने तीव्रो विरेको भवति इति वैद्यकम् । ) । **श्लोवा.** चित्राक्षेपपरिहारे १९.

* **त्रिवृच्छब्दः** अन्यत्र स्तोमविषये दृश्यते । यथा ' त्रिवृद् बहिष्पवमानः ' इति । अत्र स्तोमविषयता परिच्छिन्ना । एवं ' त्रिवृदग्निष्टोमः ' इत्यत्रापि । **भा.** १०।६।७।२३, * त्रिवृच्छब्दः लोके त्रित्वसंबद्धे प्रयुक्तः । यथा त्रिवृत् रज्जुः, त्रिवृत् मणिः इति । १०।६।७।२२. * **त्रिवृच्छब्दस्य** त्रैगुण्यं लोकसिद्धोऽर्थः । ' त्रिवृद् बहिष्पवमानम् ' इति श्रुतौ तु ऋक्त्रयात्मकेषु त्रिषु सूक्तेषु अवस्थितानां बहिष्पवमानात्मकस्तोत्रनिष्पादनक्षमाणां ' उपास्मै ' इत्यादीनां ऋचां नवकमर्थः । वि. १।३।५ वर्णकं ३.

* **त्रिवृत्स्तोमः** त्रिवृदग्निष्टोमे कृत्स्ने क्रतौ भवति । **भा.** १०।६।६।१५. * **त्रिवृत्स्तोमस्य** उद्यती नाम विष्टुतिः । तत्र ब्राह्मणवाक्यमेवम्- ' तिसृभ्यो हिंकरोति स प्रथमया, तिसृभ्यो हिंकरोति स मध्यमया, तिसृभ्यो हिंकरोति स उत्तमया, उद्यती त्रिवृतो विष्टुतिः ' इति । सूक्तत्रयपठितानां नवानामृचां गानं त्रिभिः पर्यायैः कर्तव्यम् । तत्र प्रथमे पर्याये त्रिषु सूक्तेषु आद्यास्तिस्रः ऋचः, द्वितीये पर्याये मध्यमाः, तृतीये पर्याये च अन्तिमाः । तिसृभ्य इति तृतीयार्थे पञ्चमी । हिंकरोति गायतीत्यर्थः । वि. १।४।३, * **त्रिवृत्स्तोमे** ऊर्ध्वगानम् । ऊर्ध्वगानं नाम आवृत्तिं विना ऋचां पाठक्रमेण गानम् । ५।३।४.

* ' **त्रिषाहस्रं** तृतीयम् ' चिन्वानश्चिन्वीत इति अग्नौ नैमित्तिकमेव, न नित्यम् । **भा.** ४।३।२।४.

* **त्रिष्टुप्** । पादेषु अक्षराणि ११।११।११।११ उदा० कस्य नूनं कतमस्य । ( ऋसं. १।२४।१ ) । **के.** * **त्रिष्टुप्शब्दो** द्रव्यवचनः ( शब्दो द्रव्यमिति मीमांसकमतम् ) । **संकर्ष.** ४।३।१३.

* **त्रिसंयुक्तं** पूर्वं वीरजननं तत् । यदुत्तरं पशुजननं तत् । राजसूये । तत्र ' आग्नावैष्णव एकादशकपालः, ऐन्द्रावैष्णवश्चरुः, वैष्णवस्त्रिकपालः, वामनो दक्षिणा ' इति पूर्वम् । ' सोमापौष्ण एकादशकपालः, ऐन्द्रापौष्णश्चरुः, पौष्णश्चरुः, श्यामो दक्षिणा ' इति उत्तरम् । **भा.** ११।४।१।३, * **त्रिसंयुक्तयोर्द्वयोः** अङ्गानि न तन्त्रम् । राजसूये । ११।४।१।१-३, * **त्रिसंयुक्ते** पूर्वे राजसूयगते यो वैष्णवस्त्रिकपालस्तत्र सौमिकातिथ्येष्टिगतवैष्णवशब्दो धर्मान्नातिदिशति । ७।३।६।१७.

* **त्रैधातवीयेन** । ' देवताभ्यो वा एष आवृश्च्यते यो यक्ष्ये इत्युक्त्वा न यजते, त्रैधातवीयेन यजेत ' । इयमिष्टिः प्रायश्चित्तरूपा । वि. ६।२।३, * **त्रैधातवीये** ' यवमयो मध्यमः ' पुरोडाशः । नात्र व्रीहियवयोर्विकल्पः । १०।७।१६.

* **त्रैधातवीया** दीक्षणीया अश्वमेधे । तत्र ज्योतिष्टोमीयदीक्षणीयाजन्यापूर्वाभावात् न तत्स्वरातिदेशः, किंतु उपांशुत्वमेव काम्यत्रैधातवीयाधर्मः अतिदिश्यते । वि. ९।१।२ वर्णकं २. * त्रैधातवीया द्विविधा स्वतन्त्रा काम्या, अश्वमेधगता च । उभयोरपि प्रयोगः समान एव । उपांशुत्वं तत्र स्वरः । भाट्ट. ९।१।२ पृ. ४६. * **त्रैधातवीयायां** अश्वमेधीयदीक्षणीयायां आग्नावैष्णवापूर्वसाधनत्वाभावात् 'यावत्या वाचा कामयेत तावत्या' इत्यादिधर्मः न प्रवर्तते इति भाष्यमतम् । वस्तुतस्तु उपांशुत्वं प्रवर्तते । सोम. ९।१।२. * त्रैधातवीयायां पुरोडाशभेदेऽपि सहैवावदानम् । संकर्ष. २।२।१४. * त्रैधातवीयायां सहस्रं दक्षिणा । भा. १०।२।८।२३, * **त्रैधातव्यायां** 'यवमयो मध्यमः' इति मध्यमपुरोडाशे यवमयत्वस्य नियमविधिः । १०।७।१६।५१–५७, * त्रैधातव्यायां सामिधेनीसप्तदशत्वम् । १०।८।९।१७.

* **त्रैधातव्याविषयकं** अधिकरणं अश्वमेधीयत्रैधातव्याविषयकं इत्यादिबिन्दौ ( मी. को. ७४६ पृष्ठे ) द्रष्टव्यम् । के.

* **त्रैवर्णिकः** कश्चित् निषादानामधिपतिः संभवति, तथापि 'निषादस्थपतिं याजयेत्' इत्यत्र निषादस्थपतिर्न त्रैवर्णिकः । वि. ६।१।१३, * त्रैवर्णिकः कश्चित् 'रथं करोति' इति व्युत्पत्त्या रथकारः स्यात् । 'वर्षासु रथकार आदधीत' इत्यत्र तु रथकारः संकीर्णजातिविशेष एव गृह्यते । ६।१।१२. * **त्रैवर्णिकस्य** प्रतिषिद्धं शिल्पोपजीवित्वम् । भा. ६।१।१२।४६. * **त्रैवर्णिकानां** ऋणत्रयापाकरणं नित्यम्, न काम्यम् । वि. ६।२।११, * त्रैवर्णिकानामेव अध्ययनविधिः न शूद्रस्य । ६।१।७, * त्रैवर्णिकानामेव यागाधिकारः, न शूद्रस्य । ६।१।७. * त्रैवर्णिकानां सोम–विद्याप्रजं नियतं न ब्राह्मणानामेव । भा. ६।२।११।३१. * **त्रैवर्णिकभिन्नस्य** निषादस्य रौद्रयागेऽधिकारः । बृ. ६।१।१२।५१–५२. * विद्याऽग्नीनां **त्रैवर्णिकविषयत्वनियमात्** तत्साध्यानां क्रतूनां त्रैवर्णिकविषयत्वनियमः । सु. पृ. ११४१.

* **त्रैशोकं साम** द्वादशाहे चतुर्थेऽहनि । तस्य योनिः 'विश्वाः पृतनाः' ( सामसं. ३७०,९३० ) इति अतिजगती । उत्तरे च ऋचौ 'नेमिं नमन्ति' ( ९३१ ) समु रेभासो ( ९३२ ) इति बृहत्यौ । एतास्वेव त्रैशोकं गातव्यं विषमास्वेव । वि. ९।२।५ वर्णकं २.

## त्रैशोकाधिकरणम् ।

द्वादशाहगतपृष्ठ्यषडहे चतुर्थेऽहनि त्रैशोकं साम उत्तराग्रन्थपठितयोर्बृहत्योरेव गेयम्, न तु अतिजगत्यौ आनेये ॥

**तदभ्यासः समासु स्यात् । ९।२।५।२१** वर्णकं २ ॥

**भाष्यम्**— एवं वा अस्ति द्वादशाहः, 'द्वादशाहेन प्रजाकामं याजयेत्' इति । तत्र चतुर्थेऽहनि त्रैशोकं नाम साम, अतिजगत्यामुत्पन्नम् । अतिजगती 'विश्वाः पृतना अभिभूतरं नरं सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे । क्रत्वा वरिष्ठं वर आमुरीमुतोग्रमोजिष्ठं तवसं तरस्विनम् ॥' ( सामसं. ९३० ) । उत्तरे द्वे बृहत्यौ । तयोः पूर्वा 'नेमिं नमन्ति चक्षसा मेषं विप्रा अभिस्वरा । सुदीतयो वो अद्रुहोऽपि कर्णे तरस्विनः समृक्वभिः ॥' ( सामसं. ९३१ ) उत्तरा 'समीं रेभासो अस्वरन्निन्द्रं सोमस्य पीतये । स्वर्पतिं यदीं वृधे धृतव्रतो ह्योजसा समूतिभिः ॥' ( सामसं. ९३२ ) इति । तत्र एषोऽर्थः सांशयिकः किमन्ये अतिजगत्यौ उपादाय समासु गेयम्, उत ये एव ते उत्तरे बृहत्यौ, एते एव उपादाय विषमास्वेव गातव्यमिति । किं प्राप्तम् ? संशरविलेशौ ( संशरः हिंसा नाशः । आधिक्यम् । विलेशः अल्पत्वं न्यूनत्वम् ) मा भूतां इति अन्ये उत्पत्तिजगत्यौ उपादाय एतत् साम समास्वेव अभ्यसितव्यं इति ।

**लिङ्गदर्शनाच्च । २२ ॥**

**भाष्यम्**— लिङ्गं खल्वपि अस्मिन्नर्थे दर्शयति 'अतिजगतीषु स्तुवन्ति' इति । किं लिङ्गम् । अतिजगतीषु इति बहुवचनम् । तस्मात् अन्ये अतिजगत्यौ उपादातव्ये इति ।

**नैमित्तिकं तूत्तरात्वमानन्तर्यात् प्रतीयेत । २३ ॥**

**भाष्यम्**— नैमित्तिकं तु उत्तरात्वं आनन्तर्यात् उत्तरापाठनिमित्तं आनन्तर्ये सति प्रतीयेत । श्रुतिर्हि वाक्यात् बलीयसी इति । प्रकृतत्वात् उत्तरे बृहत्यौ एवं अनुग्रहीष्येते । तस्मात् नान्ये आदातव्ये इति ।

ऐकार्थ्याच्च तदभ्यासः । २४ ॥

भाष्यम्— एवं च समानदेवताके त्रैशोके तृचे, इति तृचशब्दोपचारो युक्तो भविष्यति । तस्मादपि नान्ये उपादातव्ये इति । अत्राह, अथ यदुक्तम् 'अतिजगतीषु स्तुवन्ति' इति शब्दोपचारात् अतिजगती बहुत्वं दर्शयति इति, तत् परिहर्तव्यम् । अत्रोच्यते । तदभ्यासः एव द्रष्टव्यः षोडश्यभ्यासः । 'एकविंशः षोडशी' इति एकविंशतिकृत्वः षोडशिनि अभ्यस्यमाने त्रैशोकाभ्यासः । तत्र सप्तकृत्वः अतिजगत्यां अभ्यस्यमानायां 'अतिजगतीषु स्तुवन्ति' इति वचनं उपपत्स्यते इति ।

टुप्— ( अत्र भाष्यं- ) 'एकविंशतिकृत्वः षोडशिनि अभ्यस्यमाने त्रैशोकस्य अभ्यासः' इति । एतदयुक्तम् । नहि द्वादशाहे षोडशिनः एकविंशतिकृत्वः प्रयोगः । किं तर्हि सकृदेव प्रयोगः । तस्मात् ( अस्य भाष्यस्य ) अन्यो वाच्योऽर्थः । 'एकविंशः षोडशी' इति ( वचनात् ) सर्वस्तोत्राणि षोडशिनि एकविंशानि भवन्ति । ( तत्र आगमेन संख्यापूरणं पवमानेष्वेव । स्तोत्रान्तरेषु तु अभ्यासेनैव ) तत्र एकविंशतित्वसंपत्तये ( ब्रह्मसाम्नि अभ्यस्यमाने तत्साधनस्य ) त्रैशोकस्य सप्तकृत्वः अभ्यासः । तस्मिन्नभ्यस्यमाने सप्त अतिजगत्यो भवन्ति । एवं सति अतिजगतीबहुत्वं भविष्यति ।

सोम— 'समासु गानम्' इत्यस्यात्र अपवादात् संगतिः ।

वि— 'त्रैशोकेऽतिजगत्यौ द्वे आनेये गीयतेऽथवा ! बृहत्यो, रादिमः साम्या, न्योत्तरात्वश्रुतेर्बलात् ॥' ( त्रैशोके साम्नि समासु गातव्ये सति द्वे अतिजगत्यौ दाशतयीभ्यः आनेये, अथवा तत् उत्तरयोर्बृहत्योरेव गीयते इति संशयः ) ।

भाट्ट—एवं वा द्वादशाहे षडहगतं चतुर्थमहः 'एकविंशः षोडशी वैराजं साम' इत्याम्नातम् । अत्र प्रकृतिप्राप्तसर्वस्तोत्रेषु एकविंशः स्तोमः, षोडशिसंस्था, पृष्ठस्तोत्रे च वैराजं साम, इत्यनेकगुणविशिष्टं कर्म विहितम् । तत्र च 'त्रैशोकं नाम ब्रह्मसाम अतिजगतीषु स्तुवीत' इति ब्राह्मणाच्छंसिस्तोत्रे त्रैशोकं साम विहितम् । तच्चातिजगत्यामुत्पन्नम्, उत्तराग्रन्थे चोत्तरे द्वे बृहत्यौ, तत्र संशयपरिहारार्थमुत्तराग्रन्थपठितयोरपि उत्तरयोः वाचस्तोमादौ सार्थक्यमङ्गीकृत्य अतिजगत्यावेव द्वे दाशतयीभ्यः समानीय समास्वेव गानम् । न चानीतानामङ्गत्वे प्रमाणाभावः । न्यायसहकृततृचगानविधेरेव नियामकत्वात् । न च प्रकरणेन न्यायबाधः, 'अतिजगतीषु स्तुवीत' इति अतिजगतीबहुत्वविधिना न्यायस्योज्जीवनात् । न च प्राप्तस्तोत्रानुवादेन त्रैशोकातिजगतीबहुत्वयोर्विधाने वाक्यभेदः, अतिदेशप्रवृत्तेः पूर्वमस्य प्रवृत्त्या विशिष्टस्तोत्रविध्युपपत्तेः । अत एव 'यद्योन्याम्' इति सामान्यवचनं सामान्तरविषयम् । इति प्राप्ते, बहिष्पवमानातिरिक्तस्तोत्रे एकविंशस्तोमानुरोधेन ऋगभ्यासस्यावश्यकत्वात् एकस्या अप्यतिजगत्याः सप्तकृत्वः आवृत्तेर्बहुत्वस्य प्राप्ततयाऽनुवादोपपत्तेः अस्य साममात्रविधिपरत्वादुत्तराग्रन्थपठितबृहतीप्रकरणानुरोधेन न्यायस्यैव बाधात् संशरमपि स्वीकृत्य बृहत्योरेव गेयम् ।

मण्डन— 'अभ्यासेनातिजगती ।'

शंकर— 'त्रैशोकं विषमासु तु ।'

* त्रैशोकसामगानं अभ्यस्यमानायामतिजगत्याम् । वि. ९।२।५ वर्णकं २.

* त्रैस्वर्यादीनां समाम्नानं अर्थावबोधनार्थम् । भा. ९।२।८।३१ वर्णकं ३.

* त्र्यङ्गैः अनिज्याशेषैः स्विष्टकृद्यागः ज्योतिष्टोमेऽग्नीषोमीये पशौ । भा. १०।७।३।१०-११. * 'त्र्यङ्गैः स्विष्टकृतं यजति' इत्यत्र नाङ्गानि अनूद्य त्रित्वं विधीयते । किं तर्हि पूर्वनिष्पन्नः समासार्थो विधेयो भवति । वा. ३।५।१०।३१ पृ. १००७.

* त्र्यनीका गवामयने चोदकेन प्राप्ता । त्रीणि अनीकानि अग्राणि ऐन्द्रवायव—शुक्र—आग्रयणरूपाणि यस्यां क्रियायां सा त्र्यनीका । तया संवत्सरसत्रे प्रायणीयोदयनीयमध्यवर्तीनि अहानि पूरयितव्यानि । पूरणं स्वस्थानविवृद्ध्या, न तु दण्डकलितवत् आवृत्त्या । भा. १०।५।२५।८३-८७. * त्र्यनीका गवामयने प्रत्यक्षेण वाक्येन विधीयते । यदि चोदकेन प्राप्यते तथा सत्येते दोषा भवेयुः । टुप्. १०।५।२५। ८५ पृ. १९८१. * त्र्यनीका ज्योतिष्टोमे । तत्र ऐन्द्र-

वायवाग्रतायाः शुक्राग्रतायाश्च पुनःश्रवणं न परिसंख्यातुं नार्थवादार्थम्, किन्तु समानविध्यर्थम्। भा. १०।५।२३। ७७–७८. * त्र्यनीका । त्रयाणामनीकानां समाहारः त्र्यनीका। द्विगौ अजादेराकृतिगणत्वात् टाप् । यद्यपि नवसु अहःसु नव सन्ति अग्रत्वानि, तथापि त्रयाणां ऐन्द्रवायवाग्रत्वशुक्राग्रत्वाग्रयणाग्रत्वानां त्रिरभ्यासात् नवत्वं इति युक्तः त्र्यनीकाव्यवहारः । अनीकं अग्रम् । सोम. १०।५।२३. * त्र्यनीका द्वादशाहे समूढे। द्वितीये पञ्चमे अष्टमे चाहनि ऐन्द्रवायवाग्रत्वम्, तृतीये षष्ठे नवमे चाहनि शुक्राग्रत्वम्, चतुर्थे सप्तमे एकादशे चाहनि आग्रयणाग्रत्वं इति त्र्यनीका। वि. १०।५।२३.

**त्र्यनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यात्। १०।५।२३।७७ ॥**

द्वादशाहे द्वितीयादिषु दशमवर्जे नवसु अहःसु त्र्यनीका उक्ता। द्वितीयेऽहनि च षडहप्रथमाहत्वात् रथंतरसामत्वेन ऐन्द्रवायवाग्रता प्रकृतितश्चोदकेन प्राप्ता । तृतीयेऽहनि च षडहद्वितीयाहत्वात् बृहत्सामत्वेन शुक्राग्रता प्रकृतित एव चोदकेन प्राप्ता । एवं सति पुनःश्रवणं किमर्थमिति विचारे पूर्वपक्षमाह । द्वादशाहे त्र्यनीकायां न्यायोक्तेषु चोदकप्राप्तेषु ऐन्द्रवायवाग्रत्वादिषु पुनः आम्नानं पुनःश्रवणं चतुर्थेऽहनि उक्तस्य आग्रयणाग्रत्वस्य गुणार्थं स्तुत्यर्थं स्यात् नानुवदितुं न परिसंख्यातुम् ।

**अपिवाऽहर्गणेष्वग्निवत् समानविधानं स्यात्। ७८ ॥**

पूर्वपक्षं व्यावर्तयितुं अपिवाशब्दः । अहर्गणेषु नवानामपि अह्नां समानविधानं प्रतिपादयितुं पुनःश्रवणं स्यात्, नार्थवादार्थम्। अग्निवत्। यथा अग्निचयनं अग्निष्टोमे वाक्यान्तरेण सिद्धेऽपि 'अथातोऽग्निमग्निष्टोमेनैवानुयजति तमुक्थ्येन तमतिरात्रेण' इत्यादिवाक्ये अग्निष्टोमग्रहणं उक्थ्यादिना समानविधानार्थम्, तद्वत्। तथाच गर्गत्रिरात्रादिषु द्वितीयाद्यहःसु बृहत्सामत्वाद्यभावेऽपि शुक्राग्रताद्यनुष्ठानं फलति । के.

* त्र्यनीकायां प्रथमद्वितीययोः अह्नोः ऐन्द्रवायवाग्रत्वशुक्राग्रत्वयोः पुनःश्रवणात् समानविधित्वम्। भा. १०।५।२३।७७–७८, * त्र्यनीकायां प्रथमद्वितीययोः अह्नोः ऐन्द्रवायवाग्रत्वशुक्राग्रत्वयोः पुनःश्रवणस्य अनैमित्तिकत्वार्थता ( द्वादशाहे ) । १०।५।२३।७७–७८.

**त्र्यनीकाऽधिकरणम्** । कर्मभूयस्त्वाधिकरणन्यायः । गवामयने त्र्यनीकायाः स्वस्थानविवृद्ध्या अभ्यासः ॥

**ऐकादशिनवत् त्र्यनीकापरिवृत्तिः स्यात्। १०।५।२५।८३ ॥**

भाष्यम्— द्वादशाहे समाम्नायते 'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, दशमं चाहः, अथेतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथाऽऽग्रयणाग्रम्। अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाऽऽग्रयणाग्रम्। अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाऽऽग्रयणाग्रम्' इति । तत् गवामयने चोदकेन प्राप्तम् । तत्र बहूनि त्र्यनीकानि परिवर्तयितव्यानि । तत्रार्थप्राप्तोऽभ्यासः । अथेदानीमभ्यासे संदेहः किं दण्डकलितवदभ्यासः कर्तव्यः, उत स्वस्थानविवृद्धिरिति । कथं दण्डकलितवत् स्यात्, कथं वा स्वस्थानविवृद्धिरिति । यदि अह्नामधिकारः तत आद्येषु नवस्वहःसु परिसमाप्तेषु शिष्टेष्वपि त्र्यनीकां चोदकः प्रापयतीत्युपस्थितमिदं भवति 'ऐन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्' इति । तेष्वपि नवसु परिसमाप्तेषु पुनरिदमेवोपतिष्ठते, ऐन्द्रवायवाग्रं प्रथममहरिति । एवं दण्डकलितवदावृत्तिः । अथ अहरधिकारो नास्ति, ततः प्रायणीयोदयनीययोरन्तरं नवभिरनीकैः पूरितमिति गवामयनेऽपि नवभिरनीकैः पूरयितव्यं स्यात् । तत्र पूर्णे पुनरावृत्तिर्नास्तीति दण्डकलितवन्न स्यात् । न च वृद्ध्या विना तदन्तरं पूर्यते इति स्वस्थानविवृद्धिरागतेति । किं पुनः प्राप्तम् ? दण्डकलितवदावृत्तिरिति । तत्रैतद्वर्ण्यते अहधिकारोऽत्रेति । एवं हि आम्नायते 'ऐन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्' । प्रकृतत्वादहरिति गम्यते । तस्मादहरधिकारः । अतोऽवगच्छामो दण्डकलितवदावृत्तिरिति । आवृत्तिन्यायानां दण्डकलितं न्याय्यम्। तथा क्रमानुग्रहो भवति। तद्यथा, कश्चिदुच्यते अनुवाकस्त्रिः पठ्यतामिति । दण्डकलितवदसौ पठ्यते, क्रमानुग्रहाय। एवमिहापि द्रष्टव्यम्।

यथा अस्मिन्नेव गवामयने एकादशिनी अभ्यस्यमाना दण्डकलितवदभ्यस्यते, न स्वस्थानविवृद्ध्येति ।

**स्वस्थानविवृद्धिर्वाऽह्नामप्रत्यक्षसंख्यत्वात् ।८४॥**

भाष्यम्— स्वस्थानविवृद्धिर्वा, न दण्डकलितवदावृत्तिः । तत्रेदं वर्ण्यते, नाहरधिकार इति । कुतः ? अह्नामप्रत्यक्षसंख्यत्वात् । अप्रत्यक्षा अह्नां संख्या नवानामह्नामिति । ऐन्द्रवायवाग्रमिति च विधीयमानमिति । कथमहर्न विधीयते इति ? वाक्यभेदप्रसङ्गात् । ऐन्द्रवायवाग्रं प्रथमं भवति, तच्चाहः, नाहःसंघातः, इति वाक्यं भिद्येत । तस्मादनुवादमात्रमहर्ग्रहणम् । एवं चेत् क्रमानुग्रहाय स्वस्थानविवृद्धिराश्रयणीया । आग्रयणाग्रान् कृत्वा ऐन्द्रवायवाग्राः कर्तव्या इति ।

टुप्— अतः परं त्र्यनीकाऽधिकरणं व्याख्यायते ( इति मुद्रिते । 'अतः परं त्र्यनीकालिङ्गदर्शनाधिकरणं व्याख्यायते' इति तु लिखिते । तन्त्ररत्ने तु नैतत् किमपि गृहीतम् । 'त्र्यनीकाप्रसङ्गादिदमधिकरणं' इति तु तन्त्ररत्ने पङ्क्तिः ) । प्रथमस्य यज्ञभागस्य ऐन्द्रवायवाग्रता विधीयते । कुतः ? यज्ञस्य फले चोदितत्वात् । अहनि इत्ययमर्थो लभ्यते एव ( यज्ञभागो हि अहरात्मकः, इति तद्ग्रहणमनुवादः ) । यदि च अहरिति विवक्ष्येत ( ततो विशिष्टानुवादात् ) वाक्यं भिद्येत । निष्फलानि च तानि ( अहानि ) ।

**पृष्ठ्यावृत्तौ चाग्रयणस्य दर्शनात् त्रयस्त्रिंशे, परिवृत्तौ पुनरैन्द्रवायवः स्यात् । ८५ ॥**

भाष्यम्— इतश्च पश्यामः, स्वस्थानविवृद्धिरिति । कुतः ? उत्तरस्मिन् पक्षसि पृष्ठ्यावृत्तौ आग्रयणाग्रताया दर्शनं भवति त्रयस्त्रिंशेऽहनि । कथम् ? 'जगतीं वै च्छन्दांसि प्रत्यवरोहन्ति, आग्रयणं वै ग्रहाः, बृहत् पृष्ठानि, त्रयस्त्रिंशं स्तोमाः' इति । तदेतत् स्वस्थानविवृद्धौ अवकल्पते, न दण्डकलितवदावृत्तौ । कथम् ? पूर्वस्मिन् पक्षसि त्र्यनीका त्रिः परिवर्तते । तस्मिन्नावृत्तैव सा आग्रयणाग्रेषु परिसमाप्यते । उत्तरमपि पक्षो व्यावृत्तमिति कृत्वा आग्रयणाग्रेष्वारभ्यते । तत्र प्रथमे नवमभागे त्रयस्त्रिंशमहरिति कृत्वा तदाग्रयणाग्रं भवति । तत्रैतद्दर्शनमुपपद्यते । दण्डकलितवत्पुनरावृत्तौ सत्यां तदैन्द्रवायवाग्रं स्यात् । कथम् ? त्रिवृत आरभ्य नवकैरहःसु संकल्प्यमानेषु पूर्वस्मिन् पक्षसि सप्त परिशिष्यन्ते । तत्र सप्तमे ऐन्द्रवायवाग्रता, शुक्राग्रो विषुवान्, आग्रयणाग्रः प्रथमः स्वरसामा, ततो विश्वजिदिति त्र्यनीका समाप्ता । त्रयस्त्रिंशमहरैन्द्रवायवाग्रं प्राप्नोति । तत्रैतद्दर्शनं विरुध्यते । तस्मात् स्वस्थानविवृद्धिरिति ।

टुप्— यस्य दण्डकलितवत् आवृत्तिः, तस्य एतत् ( त्रयस्त्रिंशे अहनि आग्रयणाग्रता— ) दर्शनं नोपपद्यते । कथं ? अस्मिन् ( हि ) गवामयने अशीतिशतं ( १८० अहानि ) पूर्वं पक्षः । एवं उत्तरं ( अपि पक्षः । मध्ये विषुवान् अधिकमहः ) तत्र पूर्वपक्षसि ( प्रथमं तावत् ) त्र्यनीका निविशते । ( त्रयाणामनीकानां समाहारः त्र्यनीका त्रिफलावत् । अजादेराकृतिगणत्वात् द्विगोरपि टाप् प्रत्ययः । अग्रवचनः अनीकशब्दः ) । सा ( च तत्र ) निविशमाना आद्ये द्वे अहनी वर्जयित्वा भवति । ( कुतः ? ) तयोः ऐन्द्रवायवाग्रतायाः प्रत्यक्षाम्नानात् । शिष्टेषु ( च ) अहःसु निविशमानायाः ( एकोनविंशतिवारमावृत्तायाः ) सप्त ( अहानि ) परिशिष्यन्ते । तत्र सप्तमे ऐन्द्रवायवाग्रता ( भवति ) । तस्मिंश्च ( सप्तमे अहनि ) पूर्वं पक्षः समाप्तम् । त्र्यनीका तु अपरिसमाप्ता ( द्वयोरवशिष्टत्वात् ) । सा च ( अवश्यं ) परिसमापनीया । ततः ( अष्टमः ) विषुवान् शुक्राग्रः । ततः ( नवमो भवति ) प्रथमः स्वरसामा आग्रयणाग्रः, द्वितीयः स्वरसामा ऐन्द्रवायवाग्रः, तृतीयः स्वरसामा शुक्राग्रः, ततो विश्वजित् आग्रयणाग्रः, ततः ( पृष्ठ्यः ) षडहः आवृत्तः प्रयुज्यते । तस्य आवृत्तस्य प्रथमं त्रयस्त्रिंशमहः ( भवति ) तत् ऐन्द्रवायवाग्रं प्राप्नोति । ( इति ) एवं ( इदं ) दर्शनं नोपपद्यते ( पूर्वपक्षसि ) दण्डकलितवदावृत्तौ, ( स्वस्थानविवृद्धौ तु उपपन्नमिति ) ।

यदिदं व्याख्यानं भाष्यकारेण कृतम्, इदं नोपपद्यते । कथम् ? अस्मिन् ( हि ) गवामयने त्र्यनीका ( प्राप्यमाणा ) चोदकेन प्राप्यते ( न नामधेयात्, नापि प्रत्यक्षवचनात् भाष्यकारमते । ततः— ) विश्वजिति नामधेयेन आग्रयणाग्रता प्राप्नोति । 'पृष्ठ्यः षडहः' इति (अत्रापि) नामधेयेनैव ( प्रसिद्ध— ) षडहसंबन्धिनी ( एव )

ग्रहाग्रता ( प्राप्नोति । तथा ) अभिप्लवे च (ज्योतिर्गौरायुः इत्येवमादि- ) नामधेयेन ऐकाहिको विध्यन्तः प्राप्नोति । ( ज्योतिर्गौरायुः गौरायुर्ज्योतिः इति हि अभिप्लवः षडहः । तत्र व्यतिषङ्गेण युग्मेषु बृहत् अयुग्मेषु रथंतरम् । तत्र ज्योतिराद्यैकाहधर्मः प्रवर्तते । एकाहेषु च ज्योतिष्टोमात् रथंतरसामेषु ऐन्द्रवायवाग्रता बृहत्सामेषु च शुक्राग्रता । तेन अभिप्लवे षडहे तयोरेव व्यतिषङ्गेण प्रवृत्तिः, न त्र्यनीकायाः ) । चोदकप्राप्तेश्च नामधेयप्राप्तिर्बलीयसी इत्युक्तम् । ( तदेवमिह त्र्यनीकाऽभावात् अधिकरणं ) एवमिदं नोपपद्यते । ( अभ्युपेत्याप्यधिकरणोपपत्तिं लिङ्गानुपपत्तिमाह—) यद्यपि चोदकेन ( त्र्यनीका— ) प्राप्तिः स्यात्, तथापि दशरात्रस्य धर्माः ( विकृतिषु ) अतिदिश्यन्ते इत्युक्तम् ( १०।५।४।१२ ) । दशरात्रप्रवृत्तौ च पूर्वस्मिन् पक्षसि ( भागधर्मपक्षेऽपि ) दशधा विभागः प्राप्नोति । ( नवरात्रप्रवृत्तौ हि नवधा विभागः प्राप्नुयात् नव नवरात्राः प्रवर्तन्ते । दशरात्रप्रवृत्तौ तु दशधाविभक्ते पूर्वस्मिन् पक्षसि ) दशमे ( भागे ) ऐन्द्रवायवाग्रता ( प्राप्नोति । ततश्च ) उत्तरे पक्षसि ( आवृत्ते क्रियमाणे ) स एव अन्त्यः ( भागः ) प्रथममारभ्यते । तत्र ऐन्द्रवायवाग्रता प्राप्नोति त्रयस्त्रिंशे अहनि ( सिद्धान्तेऽपि । ततश्च ) पूर्वोत्तरपक्षयोः न कश्चित् विशेषः । यद्यपि नवरात्रः प्रवर्तते, तथापि कोऽयं विशेषः ( भाष्यकारेण कृतः ) । एकस्य ( पूर्वपक्षिणः आद्यमहर्द्वयं वर्जयित्वा आभिप्लविकादाद्यात् अह्नः ) त्रिवृतः आरभ्य गणना, अपरस्य ( सिद्धान्तिनः ) प्रायणीयात् आरभ्य, ( सोऽयं निष्प्रमाणको विशेषः ) । तस्मात् तुल्या गणना कर्तव्या । ( यथा हि पूर्वपक्षे प्रायणीयचतुर्विंशयोः ऐन्द्रवायवाग्रतायाः प्रत्यक्षवचनविहितत्वात् त्रिवृतः आरभ्य गणना, तथा सिद्धान्तेऽपि । ततश्च ) तुल्यायां च गणनायां लिङ्गदर्शनानुपपत्तिरेव । ( तदा हि सिद्धान्तेऽपि त्र्यनीका न पूर्वस्मिन् पक्षसि समाप्यते, उत्तरस्मिन्नपि एकमहर्व्याप्नोति भागसाम्यार्थम् ) । अयं च ( अपरो ) विशेषः ( भाष्यकारेण लिङ्गं दर्शयता पक्षद्वयस्य ) दर्शितः, एकस्य ( पूर्वपक्षिणः आवृत्तिवचनं अतन्त्रीकृत्य ) कृत्स्नं गवामयनमधिकृत्य गणना, अपरस्य ( तु सिद्धान्तिनः ) पूर्वस्मिन्नेव पक्षसि गणना ।

( एवं भाष्यमाक्षिप्य स्वयमिदानीं अधिकरणं लिङ्गं च समर्थयते— ) **अत्रोच्यते** । यदि चोदकेन त्र्यनीका प्राप्यते, तथा सति एते दोषा भवेयुः । एषा तु गवामयने प्रत्यक्षेण वचनेन विधीयते । गवामयने च धर्मा विधीयमाना अवान्तरप्रकरणेन पूर्वस्मिन् पक्षसि निविशन्ते, न कृत्स्ने ( गवामयने ) । असंभवात् भवेयुः ( कृत्स्ने गवामयने अवान्तरप्रकरणं बाधित्वा प्राप्नुयुः ) । संभवति च ( अत्र मत्पक्षे पूर्वस्मिन्नेव पक्षसि ) अवान्तरप्रकरणेन ( त्र्यनीकायाः ) निवेशः । पूर्वपक्षवादिनस्तु दण्डकलितवदावृत्तिः पूर्वस्मिन् पक्षसि न समाप्यते । तस्य ( हि आद्यमहर्द्वयं वर्जयित्वा ) त्रिवृत आरभ्य गणना प्रवर्तते, आद्ययोः ( प्रायणीयचतुर्विंशयोः अह्नोः ) ऐन्द्रवायवाग्रतायाः प्रत्यक्षाम्नानात् । आदौ चारभमाणस्य द्वितीये ( अहनि ) शुक्राग्रता स्यात् । तस्याश्च प्रत्यक्षेण ऐन्द्रवायवाग्रत्वेन विरोधः स्यात् । **ननु** शुक्राग्रताऽपि प्रत्यक्षैव ( त्र्यनीकायाः अत्रैवोपदिष्टत्वात् ) । **उच्यते** । सामान्येन शुक्राग्रता ( विहिता 'अथ शुक्राग्रम्' इति । तस्या द्वितीयायामपि आवृत्तौ सावकाशता ) विशेषेण ( तु स्वशब्देनैव ) ऐन्द्रवायवाग्रता ( विहिता ), सामान्याच्च विशेषो बलवान् । तस्मात् तृतीयात् ( अह्नः ) आरभ्य तस्य गणना ( तेन पूर्वस्मिन् पक्षसि न समाप्यते किंतु विषुवन्तं उत्तरे च पक्षसि आद्यमहर्व्याप्नोति ) । सिद्धान्ते तु अविरोधात् प्रथमादेव ( प्रायणीयादह्नः आरभ्य गणना घटते ) ।

**अत्र चोद्यते**, ज्योतिरादय उत्पद्यमाना ( एव ) विशेषनामधेयेन धर्मान् गृह्णन्त एव उत्पद्यन्ते यथा कुण्डपायिनामयने अग्निहोत्रम् । त्र्यनीका तु अत्र सङ्घातधर्मत्वेन प्राप्नोति । सा च पश्चात्कालीनत्वात् दुर्बला उत्पन्नसंयोगित्वेन । ( उत्पन्नसंयोगित्वेन पश्चात्कालीनत्वात् इत्यन्वयः । तेन नामधेयात् त्रयस्त्रिंशे अहनि पूर्वपक्षवादिनोऽपि आग्रयणाग्रता लभ्यते इति ) । **उच्यते** । अत्र पौर्वापर्यबाधो भवति यथा विकृतौ दक्षिणाऽऽम्नानं चोदकेन प्राप्तं ( प्राकृतं ) बाधित्वा निविशते विरोधात्,

एवमिहापि त्र्यनीका नामधेयप्राप्तं बाधित्वैव निविशते यथा अपच्छेदे पूर्वनैमित्तिकं उत्तरेण ( नैमित्तिकेन ) विरोधे ( सति ) बाध्यते । अथवा ( नास्याः पश्चात्कालीनत्वं ) यदा ( हि ) यागः फले चोदितो भवति, तदा ( एव ) धर्मानाकाङ्क्षति ( नोत्पत्तिसमये ) एतस्यां ( लब्धफलकत्वेन धर्माकाङ्क्षा- ) अवस्थायां किं चोदकेन धर्माः, उत नामधेयेन इति चिन्तायां ( प्रत्यक्षत्वेन ) नामधेयेन धर्मप्राप्तिः ( भवति ) । तच्च ( नामधेयं ) लक्षणया धर्मप्राप्तिं करोति । त्र्यनीकां तु गृह्णन् न लक्षणया ( आग्रयणाग्रताऽऽख्य- ) धर्मप्राप्तिं करोति, ( किंतु ) उपदेशेनैव गृह्णाति । अतिदेशाच्च उपदेशो बलवान् ( श्रौतत्वात् ) ।

**वचनात् परिवृत्तिरैकादशिनेषु । ८६ ॥**

**भाष्यम्—** अथ यदुक्तम्, ऐकादशिनवदिति । युक्तं यदैकादशिनेषु दण्डकलितवदावृत्तिरिति । वचनं हि तद्भवति । 'वारुणमन्ततः, पुनःपर्यावृत्तेष्वाग्नेयमेव प्रथमेऽहन्यालभेत' इति । वचनाद्दण्डकलितवदावृत्तिः पुनःपर्यावृत्तेष्विति । सा द्वादशाहे असंभवन्ती गवामयनं विशति । किमिव वचनं न कुर्यात् । नहि वचनस्यातिभारोऽस्ति ।

**लिङ्गदर्शनाच्च । ८७ ॥**

**भाष्यम्—** लिङ्गं खल्वपि एवमर्थं दर्शयति, यथा दण्डकलितवत् ऐकादशिना आवर्तन्ते इति । 'प्राणा वा ऐकादशिनाः, यदेकादशिनीमिरीयुः अहान्यतिरिच्यन्ते पशवो वा' इति । स्वस्थानविवृद्धौ नास्त्यतिरेकः, दण्डकलितवदावृत्तौ न्यूनता अतिरिक्तता वा भवति । तस्मादपि पश्यामः ऐकादशिनेषु दण्डकलितवदावृत्तिरिति ।

**शा—** भाष्यकारेण प्रायणीयोदयनीयमध्यवर्तिनीं द्वादशाहिकीं त्र्यनीकां चोदकप्राप्तामाश्रित्य विचारितं किं दण्डकलितवत् आवर्तनीया, किंवा नवानामपि अनीकानां स्वेस्वे स्थाने विवृद्धिः इति । ( तदर्थं किमिमे धर्माः प्रकृतौ अहरपूर्वप्रयुक्ताः, उत परमापूर्वप्रयुक्ताः । तदर्थं च किमहर्धर्माः, उत भागधर्माः । तदर्थं च किमहर्ग्रहणं विवक्षितम्, उत न इति संशयनिष्कर्षः । अहर्ग्रहणविवक्षायां द्वितीयादेरह्नः शुक्राग्रत्वादिर्धर्मः इति तत्सिद्ध्यर्थं दण्डकलितवदावृत्तिः, तदविवक्षायां तु कृत्स्नस्यैव प्रथमभागस्य ऐन्द्रवायवाग्रता धर्मः । एवं द्वितीयादिभागानामपि शुक्राग्रतादिः इति स्वस्थानविवृद्धिसिद्धिः इति फलफलिभावः । वार्तिकाधिकरणे तु- ) संशयः किमेते दण्डकलितवदावर्तनीयाः, उत नवधा विभज्य नवस्वपि भागेषु नवानामनीकानां निवेशः इति ।

**सोम —** पूर्वाधिकरणोक्तसमूढनैसर्गिकत्वोपजीवनेन अस्य विचारस्य प्रवृत्तेः **संगतिः** । वार्तिककारपक्षे तु प्रासङ्गिकी **संगतिः** । **सूत्रार्थस्तु—** पश्वेकादशिन्या इव त्र्यनीकायाः दण्डकलितवदावृत्तिः स्यादिति ।

**वि—**'दण्डाकलितवत् सत्रे त्र्यनीकाऽऽवृत्तिरिष्यते । स्वस्थानवृद्धिरथवा, स्यादाद्योऽहर्विवक्षया ॥, न विवक्षा वाक्यभेदात् नवानीकैस्तु पूरणम् । एकैकवृद्ध्या न विना तेनैकैकं विवर्धते ॥' 'न त्र्यनीका चोदकाप्ता प्रत्यक्षविहिता तु सा । तस्मामुक्तो विचारः स्यादिति वार्तिक ईरितम् ॥'

**भाट्ट—** गवामयने एकषष्ट्यधिकशतत्रयं सुत्याः । तत्राशीतिशतं पूर्वे पक्षः, तथोत्तरम्, मध्ये विषुवान् ; तासां कलसिस्ताण्डकशाखिनां समाम्नाता 'प्रायणीयं प्रथममहः, चतुर्विंशं द्वितीयम्, ततश्चत्वारोऽभिप्लवाः षडहाः तानि चतुर्विंशत्यहानि, एकः पृष्ठ्यः षडहः, एवं मासः, तादृश एव द्वितीयस्तृतीयश्चतुर्थः पञ्चमः, ततस्त्रयोऽभिप्लवाः षडहाः तान्यष्टादशाहानि, एकः पृष्ठ्यः षडहः, अभिजिन्नामा एकाहः, त्रयः स्वरसामानः इत्यष्टाविंशत्यहानि, आद्याभ्यामहोभ्यां सह षण्मासाः, तदिदं पूर्वे पक्षः । मध्ये विषुवान् । अथोत्तरं पक्षः, त्रयः स्वरसामानः, विश्वजिन्नामा एकाहः, एकः पृष्ठ्यः षडहः त्रयस्त्रिंशारम्भणः, त्रयोऽभिप्लवाः षडहाः, तान्यष्टाविंशत्यहानि, पुनः पृष्ठ्यः षडहः त्रयस्त्रिंशारम्भणः, चत्वारोऽभिप्लवाः षडहाः, एवं मासः, तादृश एव द्वितीयस्तृतीयश्चतुर्थः । ततस्त्रयोऽभिप्लवाः षडहाः, आयुर्गौरिति द्वे अहनी, द्वादशाहस्य दशाहानि, महाव्रतं चातिरात्रश्चेति द्वात्रिंशदहानि, आद्यैरष्टाविंशत्यहोभिः सह षण्मासाः' । तदेवंविधसुत्यात्मके गवामयने पूर्वपक्षावान्तरप्रकरणे त्र्यनीका श्रुता 'ऐन्द्रवायवाग्रं प्रथममहः अथ शुक्राग्रं अथाग्रयणाग्रम् । अथैन्द्रवायवाग्रं अथ

शुक्राग्रं अथाग्रयणाग्रम् । अथैन्द्रवायवाग्रं अथ शुक्राग्रं अथाग्रयणाग्रम् ' इति । नवभिश्चाग्रताभिरनेकान्यहानि न पूर्यन्ते इति अवश्यकर्तव्यायामावृत्तौ किं नवसु दिनेषु नवाग्रताः कृत्वा पुनरन्येषु नवसु कर्तव्याः इत्येवं दण्डकलितवदावृत्तिः ? उत पूर्वस्य पक्षसो नवधा विभागं कृत्वा विंशतिसुत्यात्मके, ( १८०÷२० = ९ ) एकैकस्मिन्भागे एकैकाग्रता ? इति स्वस्थानविवृद्धिः । इति चिन्तायाम्, अहःशब्दश्रवणात् तस्यैव च फलसाधनत्वात् तदुद्देशेनैव अग्रता विधीयते । न तु अहःसमुदायोद्देशेन । न चैवं सर्वासामग्रतानां सर्वेष्वहःसु प्राप्त्यापत्तिः, स्थानक्रमेण प्रथमसुत्यायां प्रथमाग्रताया एव प्राप्तेः । अत एव प्रथमादिपदानामनुवादत्वान्न विशिष्टानुवादोऽपि । अत एवाहरपूर्वप्रयुक्ता एवैता अग्रताः । अतश्च नवभिरग्रताभिः नवस्वहःसु अनुष्ठितेषु पुनरिदमेव वचनमुपतिष्ठते इत्यतो दण्डकलितवदावृत्तिः । इति प्राप्ते, स्थानक्रमेणोद्देश्यवाचकस्य अहःपदस्य प्रकरणस्य च संकोचे प्रमाणाभावात् । अन्यथा व्रीहीणामाग्नेयाङ्गत्वं यवानां चाग्नीषोमीयाङ्गत्वमिति व्यवस्थापत्तेः, सर्वेष्वहःसु एकैकाग्रता आपद्येत । न चेष्टापत्तिः, प्रथमशब्दाथशब्दयोर्विधिनवकस्य च वैयर्थ्यापत्तेः । अतो लाघवात् प्रथमपदं अथशब्दोन्नीतद्वितीयादिपदं च उद्देश्यसमर्पकम् । अतश्च पूर्वस्य पक्षसो नवधा विभागं कृत्वा एकैकस्मिन् विंशतिदिनात्मके भागे एकैकाग्रता विधीयते । अहःशब्दश्च अहःसंघाते लाक्षणिकोऽनुवादः । एवं द्वादशाहस्थत्र्यनीकावाक्ये प्रथमादिभागोद्देशेनैव अग्रताविधिः । भागः परं अहरात्मकः, इत्यहःशब्दोऽनुवादः । प्रकृते च भागधर्मत्वात् परमापूर्वप्रयुक्तत्वम्, अतः स्वस्थानविवृद्धिः । एवं चोत्तरे पक्षसि पञ्चमे षाडहिके त्रयस्त्रिंशेऽहनि आग्रयणाग्रतादर्शनं ' जगतीं वै छन्दांसि प्रत्यवरोहन्ति, आग्रयणं ग्रहाः, बृहत् पृष्ठानि, त्रयस्त्रिंशं स्तोमाः' इत्युपपन्नं भवति । तथाहि, स्वस्थानविवृद्धौ पूर्वस्मिन्नेव पक्षसि संपूर्णा त्र्यनीका समाप्यते । यच्च पूर्वस्मिन् पक्षसि आनुलोम्येनानुष्ठितं तदङ्गं तदुत्तरे पक्षसि प्रातिलोम्येन कर्तव्यतया आवृत्तं 'पक्ष उपयन्ति ' इति वचनेन विहितम् । अत्र हि न पुनःकरणमात्ररूपा आवृत्तिर्विधीयते, अपितु 'षड्भिरितो मासैरध्वानं यान्ति, षड्भिः पुनरायान्ति' इति वचनान्तरानुसारात् प्रातिलोम्यरूपा । अत एव पूर्वस्मिन् पक्षसि षडहे 'गायत्रं त्रैष्टुभं जागतं गायत्रं त्रैष्टुभं जागतम् ' इत्येवङ्क्रमेण षडपि दिनानि, तेषां प्रातिलोम्ये षडहाद्यं दिनं जागतं संपद्यते । तथा पूर्वस्मिन् पक्षसि षडहे प्रथमदिने रथंतरम्, उत्तरदिने बृहदित्येवङ्क्रमेण षष्ठे बृहत्, तस्य प्रातिलोम्ये आद्ये बृहत् संपद्यते । तथा तस्मिन्नेव षडहे क्रमेण त्रिवृत्पञ्चदशसप्तदशएकविंशत्रिणवत्रयस्त्रिंशस्तोमके षष्ठमहः त्रयस्त्रिंशस्तोमकम्, तस्य प्रातिलोम्ये आद्यं तथा सपद्यते । अतश्च तद्वदेव त्र्यनीकाया अपि प्रातिलोम्येनानुष्ठाने उत्तरस्य पक्षसः पूर्वस्मिन् विंशतिदिनात्मके भागे आग्रयणाग्रता जायते इति लिङ्गमुपपद्यते । दण्डकलितवदावृत्तौ तु पूर्वस्मिन् पक्षसि आद्यदिनद्वये पुनर्विशिष्य ऐन्द्रवायवाग्रत्वस्य विधानात् त्र्यनीका तृतीयदिनमारभ्य प्रवर्तते । ततश्च तस्या एकोनविंशतिवारमावृत्तायाः पुनरपि सप्तदिनान्यवशिष्यन्ते इति न पूर्वस्मिन् पक्षसि त्र्यनीकासमाप्तिः । तेन सामर्थ्यात्मकेन लिङ्गेन पूर्वपक्षावान्तरप्रकरणं बाधित्वा महाप्रकरणादियं गवामयनाङ्गं संपद्यते । तदा च प्रातिलोम्यविधिः अस्यां न प्रवर्तते । पूर्वपक्षाङ्गस्यैव उत्तरे पक्षसि प्रातिलोम्यविधानात् । ततश्च विषुवन्तं स्वरसामाद्यं च गृहीत्वा त्र्यनीकासमाप्तिः । ततः पुनस्तथैव त्र्यनीकाऽनुष्ठाने द्वितीयमैन्द्रवायवाग्रं तृतीयं शुक्राग्रम्, विश्वजित्, आग्रयणाग्रं षडहाद्यमैन्द्रवायवाग्रं प्राप्नोतीति लिङ्गानुपपत्तिः । न च एवं सिद्धान्ते त्र्यनीकाविधिनैव पूर्वपक्षःप्रथमभागान्तर्गतयोराद्ययोः प्रायणीयचतुर्विंशयोरह्नोः ऐन्द्रवायवाग्रत्वप्राप्तिसिद्धेः पुनस्तयोरैन्द्रवायवाग्रत्वविधिः व्यर्थ इति वाच्यम् । त्र्यनीकाविधिना भागधर्मत्वेन परमापूर्वप्रयुक्तत्वेन प्राप्स्यमानाया अपि ऐन्द्रवायवाग्रतायाः तत्तदहरपूर्वप्रयुक्तत्वसिद्ध्यर्थं विधानात् । तत्फलं वाचनिकातिदेशादिना तन्मात्रविकारे एकाहादौ असत्यपि रथन्तरसामत्वे ऐन्द्रवायवाग्रत्वनियमसिद्धिः । अतः स्वस्थानविवृद्ध्या विंशत्यहरात्मके भागे ऐन्द्रवायवाग्रत्वस्य औपदेशिकस्य निवेशात् तत्तदहःसु आतिदेशिकतत्तदग्रताबाधः इति बाधोपयोगिताऽपि ।

यत्तु भाष्यकारेणौपदेशिकीं त्र्यनीकामनुक्त्वैव आतिदेशिकीं द्वादशाहिकीं नवाहःसंबन्धिनीं त्र्यनीकां गावामयनिकपूर्वपक्षसि प्राप्तामुदाहृत्य दण्डकलितवदावृत्त्या पूर्वपक्षं कृत्वा पूर्ववदेव स्वस्थानविवृद्धिसिद्धान्तो लिङ्गदर्शनं च व्याख्यातम् । तन्न । द्वादशाहान्तर्गतदशाहप्रवृत्तेरेव सर्वविकृतिषु साधितत्वेन नवाहःसंबन्धित्र्यनीकामात्रप्राप्तेरनुक्तिसहत्वात् । अत: दशानामग्रतानां पूर्वस्मिन् पक्षसि दशधा विभागे दशमो भागः अष्टादशदिनात्मकः ऐन्द्रवायवाग्रः स्यात्, प्रकृतौ दशमस्य ऐन्द्रवायवाग्रत्वात् । ततश्चोत्तरस्मिन् पक्षसि प्रातिलोम्ये प्रथमो भाग ऐन्द्रवायवाग्रः प्राप्नोतीति सिद्धान्तेऽपि आग्रयणाग्रताऽनुपपत्तिः । वस्तुतस्तु आतिदेशिकत्र्यनीकाया: पूर्वपक्षस्येव प्राप्तौ प्रमाणाभावः । कृत्स्ने हि गवामयने सा प्राप्येत । अतस्तस्य कृत्स्नस्य नवधा दशधा वा विभागे क्रियमाणे चत्वारिंशद्दिनात्मकः षट्त्रिंशद्दिनात्मको वा एकैको भाग: प्राप्नोति । ततश्च त्र्यनीका न पूर्वस्मिन् पक्षसि समाप्यते इति न तद्विषये प्रातिलोम्यविधिरपि प्रवर्तते । ततश्च नवधा विभागे त्रयस्त्रिंशस्य पञ्चमभागान्तर्गतत्वात् शुक्राग्रत्वप्राप्तेः आग्रयणाग्रतादर्शनानुपपत्तिः । दशधा विभागे तु तस्य षष्ठभागान्तर्गतत्वात् आग्रयणाग्रत्वप्राप्त्या लिङ्गदर्शनोपपत्तावपि भाष्यग्रन्थानुपपत्तिः दुरुद्धरा । किञ्च गवामयने न चोदकेन त्र्यनीका प्राप्यते, तत्र हि अभिप्लवषडहादौ बहुधा नामातिदेशेनैव धर्मप्राप्तिः । तथाहि, अभिप्लवे तावत् 'ज्योतिर्गौरायुर्ज्योतिर्गौरायुः' इत्येवं षडहाः, तेषु ज्योतिराद्येकाहधर्मप्राप्तिर्नामातिदेशेन । तेषु च नैमित्तिकं ऐन्द्रवायवाग्रत्वं शुक्राग्रत्वं च ज्योतिष्टोमात् । अतश्च अभिप्लवे षडहे प्रथमतृतीयपञ्चमानां रथन्तरसामत्वादैन्द्रवायवाग्रता, द्वितीयचतुर्थषष्ठानां बृहत्सामकत्वात् शुक्राग्रतेति न तेषु त्र्यनीकाप्राप्तिः । एवं विश्वजिदादिष्वपि नामातिदेशस्य आवश्यकत्वात् ऐन्द्रवायवाग्रत्वम्, न त्र्यनीकाप्राप्तिः । एतद्धर्ममेव बहुशो गवामयनमिति न तस्मिन् त्र्यनीकाप्राप्तिः । न च नामातिदेशेन प्रकृतौ ये विशिष्यौपदेशिका धर्माः तेषामेव प्राप्तिः, न तु ये प्रकृतावपि आतिदेशिकाः, तेषामव्यक्तत्वसादृश्येन ज्योतिष्टोमादेव तेष्विवाभिप्लवेष्वपि प्राप्त्युपपत्तेः । अतश्च तदतिदेशापेक्षया गणत्वसादृश्यकल्पितातिदेशस्य विशेषनिष्ठत्वेन बलवत्त्वात् तेन त्र्यनीकातिदेशो युक्त एवेति वाच्यम् । आवश्यकेन नाम्नैव यावदपेक्षितानां औपदेशिकानामातिदेशिकानां च धर्माणां प्राप्त्युपपत्तौ, तस्यां विकृतौ ज्यौतिष्टोमिकधर्मातिदेशस्यैव कल्पनात् । न च तथापि सुत्याऽन्तरार्थमवश्यकल्प्येन गणत्वसादृश्यातिदेशेनैव अग्रताप्राप्तिसंभवे नामातिदेशस्य तत्प्रापकत्वे मानाभाव इति वाच्यम् । श्रुतनाम्नस्तद्विषयत्वे संभवति अश्रुतस्य आनुमानिकातिदेशस्य तद्विषयत्वकल्पनाऽयोगात् । वस्तुतस्तु, न गवामयनादौ सकलसुत्यासाधारण्येन 'गवामयनं द्वादशाहवत् कुर्यात्' इत्येवमेकोऽतिदेशः । तत्तत्सुत्यानां प्रत्येकसाधनीभूतानां समुच्चयेन प्रत्येकमेवेतिकर्तव्यताकाङ्क्षत्वेन प्रत्येकमेवातिदेशकल्पनात् । अत एव 'गावामयनिकप्रथमदिनं द्वादशाहिकदशाहप्रथमदिनवत् कुर्यात्' इत्याद्याकारक एवातिदेशः । सर्वसाधारण्येन एकातिदेशकल्पनायां च द्वितीयादिष्वपि प्रथमाद्यहर्धर्मप्राप्त्यापत्तिः । तेन नामातिदेशाविषयसुत्यायां 'इयं सुत्या द्वादशाहिकतत्सुत्यावत् कार्या' इत्यतिदेशेन प्राकृततत्सुत्यावृत्त्यग्रताप्राप्तावपि नामातिदेशविषयाभिप्लवादौ द्वादशाहिकतत्स्थानापन्नसुत्यातिदेशाकल्पनेन प्राकृततत्सुत्यावृत्त्यग्रताप्राप्त्यनुपपत्तेः । नहि त्र्यनीका नाम अनेकसुत्यासाधारणमेकमङ्गम्, येनावयवशः एकस्मिन्नेव न प्राप्येत, अपितु तत्तद्विधिविहिताः तावत्योऽग्रताः तत्सुत्यानामङ्गम् । अतश्च गवामयने यैव सुत्या द्वादशाहिकयत्सुत्याविकारः, तद्गताग्रता तत्र प्राप्यते, नान्यगताऽन्यत्रेति नाभिप्लवादौ द्वादशाहतः अग्रताप्राप्तिः । न च एवमप्यग्रतानां प्रकृतौ भागधर्मत्वात् नामातिदेशाविषयसुत्यायां प्राकृततत्स्थानापन्नसुत्याधर्मप्राप्तावपि अग्रतानां कथं प्राप्तिरिति वाच्यम् । भागधर्मत्वेऽपि तत्सुत्याङ्गत्वानपायात् । धर्मविधिषु हि केषुचित् तदहरपूर्वसाधनत्वमुद्देश्यताऽवच्छेदकम्, केषुचित्तु परमापूर्वसाधनीभूतभागविशेषत्वमित्येतावान् भेदः । न त्वेतावता तत्सुत्याया उद्देश्यत्वे कश्चिद्विरोधः । अतश्च तन्मात्रविकारे उभयविधतद्धर्मप्राप्तिरविरुद्धैव । अत एव सौर्यादौ प्रोक्षण-

प्रयाजादीनां अतिदेशः। उक्तसुत्याविकारे एकाहादौ तु परमापूर्वप्रयुक्तप्रथमादिविभागाभावात् तत्प्रयुक्तधर्मलोपेऽपि अन्यत्रोभयप्राप्तिरविरुद्धैव। एवं च गवामयनिकतृतीयाद्यहःसु: द्वादशाहिकदशाहान्तर्गततृतीयाहर्धर्माणामेव उभयविधानां प्राप्तेः, तत्र च भागधर्मभूताऽपि आग्रयणाग्रतैव, तस्या एवेह प्राप्तेर्न विंशत्यात्मकभागरूपतया ऐन्द्रवायवाग्रताप्राप्तिरूपो भाष्यकारीयः सिद्धान्तः संगच्छते इत्यपि ध्येयम्। अतो यथावार्तिकमौपदेशिकीं त्र्यनीकामादायैव अधिकरणं योज्यं इति सिद्धम्।

एतावत्तु **वार्तिककारमतेऽपि** चिन्तनीयम्। यत्र प्रकृतौ न्यूनभागवृत्तिधर्मः, विकृतौ च स भागोऽधिकदिनघटितः। अधिकानि च दिनानि न प्राकृततद्भागप्रकृतिकानि यथा अत्रैवौपदेशिकत्र्यनीकाऽभावे कृत्वाचिन्तया, तत्र तद्भागधर्मप्राप्तिः कथमिति।

**मण्डन**— 'स्वस्थानवृद्धिं लभते त्र्यनीका।' २६.

**शंकर**— 'त्र्यनीकाऽऽवृत्तिः स्वस्थानात्।' २७.

* **त्र्यम्बकाः** एककपालाः चातुर्मास्येषु। 'अप्रतिष्ठिता वै त्र्यम्बकाः' इति दोषमनुकीर्त्य इदं श्रूयते 'आदित्यं घृते चरुं निर्वपेत् पुनरेत्य गृहेषु, इयं वा अदितिः इयं प्रतिष्ठा' इति। **भा.** ८।४।५।२३.

## त्र्यम्बकेषु चतुष्पथैकोल्मुकयोः समुच्चयः॥

'चतुष्पथे एकोल्मुकमुपनिधाय जुहोति' इत्यपि प्रकरणान्तरे श्रूयते। तत्र चतुष्पथस्यैव अग्निपडबीशरूपत्वेन अग्न्यन्तरापेक्षत्वात् एकोल्मुके वा केवलचतुष्पथे वा होमः। **इति विकल्पे प्राप्ते,** अग्निवत्येवेति मतुपः प्रशंसार्थत्वेन वास्तविकाग्निमत्ताया अबोधनेन विहितस्योल्मुकस्य त्यागे प्रमाणाभावान्न विकल्पः। **संकर्ष.** २।४।१५.

* **त्र्यम्बकेषु** 'नेध्माबर्हिः संनह्यते, न प्रयाजा इज्यन्ते, नानुयाजा इज्यन्ते, न सामिधेनीरन्वाह' इति। **भा.** ८।४।५।२१, * त्र्यम्बकेषु पुरोडाशः करम्भपात्राणि तण्डुलाः इत्येवमादीनि औषधानि चोद्यन्ते। ८।४।५।२५. * त्र्यम्बकेषु पुरोडाशेषु चातुर्मास्यगतेषु अभिघारणानभिघारणमीमांसा अर्थवादः। **वि.** १०।८।५. * त्र्यम्बकेषु पुरोडाशेषु चातुर्मास्यगतेषु दर्विहोमत्वेन अपूर्वमेव अभिघारणं विधीयते। **भाट्ट.** १०।८।७.

## त्र्यम्बकाधिकरणम्। त्र्यम्बकपुरोडाशादिविषयकं अभिघारणानभिघारणादिवाक्यमर्थवादः॥

### पर्वैश्च तुल्यकालत्वात्। १०।८।५।८॥

**भाष्यम्**— चातुर्मास्येषु त्रैयम्बकानधिकृत्य समामनन्ति 'अभिघार्या नाभिघार्या इति मीमांसन्ते, यदभिघारयेत्, रुद्रायाऽऽस्ये पशूनभिदध्यात्, यन्नाभिघारयेन्न रुद्रायाऽऽस्ये पशूनभिदध्यात्। अथो खल्वाहुरभिघार्या एव। न हि हविरनभिघृतमस्ति' इति। तथा 'होतव्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते ब्रह्मवादिनः, यदि जुहुयादयथापूर्वमाहुतीर्जुहुयात्, यन्न जुहुयादग्निः परा पतेत्, तूष्णीमेव होतव्यम्, यथापूर्वमाहुतीर्जुहोति, नाग्निः परा पतति' इति। अत्रायमर्थः: सांशयिकः किमभिघारयितव्यास्त्रैयम्बकाः, उत नाभिघारयितव्या इति। होतव्यमग्निहोत्रम्, न होतव्यं वा विधिप्रतिषेधावेतौ इह, उत अर्थवादार्थमेतयोः संकीर्तनमिति। किं तावत् प्राप्तम्? विधिप्रतिषेधाविति ब्रूमः, तद्रूपत्वात्। विधिप्रतिषेधयोर्हि प्रत्यक्षं रूपमुपलभ्यते। श्रुत्या चानुष्ठानार्थता प्रतिषेधार्थता चावगम्यते। वाक्यादर्थवादार्थता। श्रुतिश्च वाक्याद्बलीयसी। न च पर्युदासोऽवकल्पते। तस्मादग्निहोत्रं होतव्यं न होतव्यं वा, यदा होतव्यं तदा तूष्णीम्। त्र्यम्बका अभिघारयितव्याः, न वा अभिघारयितव्याः, यदा पुनरभिघारयितव्याः, तदा अभिघारयितव्यवचनमर्थवादार्थम्, प्रतिषेधसंकीर्तनात् अभावाशङ्कायां पुनरुच्यते इति। **एवं प्राप्ते, ब्रूमः।** पूर्वाधिकरणोदाहरणैः तुल्यकालानीमानि उदाहरणानि। का तुल्यकालता? पूर्वं विधिप्रतिषेधौ अभिधाय उत्तरेण तयोरभिसंबन्धः क्रियते इति। तदेतत् पूर्वाधिकरणेनैव तुल्यम्। यौ विधिप्रतिषेधौ श्रूयेते, न तावनुष्ठातुम्, वर्जयितुं वा। किं तर्हि? मीमांसितुम्। एवमाह 'अभिघार्या नाभिघार्या इति मीमांसन्ते'। तथा 'होतव्यमग्निहोत्रम्, न होतव्यमिति मीमांसन्ते ब्रह्मवादिनः' इति। मीमांसा चेतरविधिप्रशंसार्था। तथा प्रत्यक्षः शब्दार्थेन संबन्धः। न किंचित् कल्पनीयम्। विधिप्रतिषेधयोर्हि किंचित् कल्पनीयं स्यात्। 'यदभिघारयेत्, रुद्रायाऽऽस्ये पशूनभिदध्यात्' इति। इदमभिघारणं

गुणवत्तरम्, यदीदृशोऽपि दोषो नाऽऽद्रियते इति । तथा, 'यज्जुहुयादयथापूर्वमाहुतीर्जुहुयात्, यन्न जुहुयादग्निः परा पतेत्' इति । इत्थं तूष्णींहोमः प्रशस्तः, यदस्मिन् क्रियमाणे उभावपि दोषौ परिहृतौ भवतः इति ।

**सोम**— पूर्ववदिह विकल्पस्यान्यतः सिद्धत्वाभावात् प्रतिषेधस्य नानर्थक्यं इत्युत्थिते: ( प्रत्युदाहरण- ) संगतिः । **माधवीये वेदभाष्ये** "अस्मिन् ( तूष्णीं- ) होमे अग्निहोत्रशब्देन प्रसिद्धाग्निहोत्रधर्माः प्राप्नुवन्ति । तत्र यजुषा होमपक्षे क्रियमाणे 'सूर्यो ज्योतिः' इति मन्त्रः स्यात् । प्रसिद्धाग्निहोत्रस्य च सायमुपक्रमत्वात् तत्र प्राथमिकप्रयोगे 'अग्निर्ज्योतिः' इति मन्त्रेण सायं हुत्वा पश्चात् प्रातःकाले 'सूर्यो ज्योतिः' इति मन्त्रेण होमः इत्येवं क्रमः । इह तु आदावेव सूर्यो ज्योतिरित्यनेनानुष्ठाने प्रकृतिक्लृप्तक्रमाभावात् अयथापूर्वता स्यात्" इति व्याख्यातम् । तत् चिन्त्यम् । तूष्णींहोमे श्रूयमाणस्याग्निहोत्रशब्दस्य धर्मातिदेशकत्वाभावात् । नहि अत्र कुण्डपायिनामयनगताग्निहोत्रे इव विध्युद्देशे अग्निहोत्रशब्दः श्रूयते येन धर्मातिदेशकत्वं स्यात्, किन्तु अर्थवादे, अर्थवादगतस्य च नाम्नो नातिदेशकत्वं स्तुत्युपक्षीणत्वात् । यथा 'एष वै दर्शपूर्णमासयोरवभृथः' इत्यपां न्युत्सेके एवावभृथशब्दस्य न धर्मातिदेशकत्वम् । यथा वा 'सोमो वै वाजिनं सुरा सोमः' 'उपशयो यूपः' इत्यादीनाम् । किञ्च अयं तूष्णींहोमः अग्निसंस्कारार्थः, तथा च 'अग्नये होत्रमस्मिन्' इति यौगिकत्वाभावात् प्रायणीयादिवत् नातिदेशकत्वम् । अयं चार्थः पञ्चमे तन्त्ररत्ने व्यक्तः । एवं च प्राकृतहोमविकारत्वाश्रयणेन **याज्ञिकानां** तदीयधर्मानुष्ठानमपि चिन्त्यम् । **सूत्रार्थस्तु**- पूर्वैर्जर्तिलाद्युदाहरणैः होमाभिघारणवाक्ययोरपि तुल्यकालत्वात् तुल्यव्यापारत्वात् अन्यशेषत्वात् इति यावत् । तस्मात् इहाप्यर्थवादः स्यादिति ।

**वि**—'अभिघारनिषेधौ च होमाहोमौ विकल्पितौ । विधास्यमानशेषौ वा विकल्पः श्रुतिसाम्यतः ॥, निषेधस्य विधेश्चात्र मीमांस्यत्वेन वर्णनात् । समीमांसावुभावर्थवादोऽस्त्वर्थे विधित्सिते ॥' ( अर्थे विधित्सिते उभौ मीमांसासहितौ अर्थवादः इति ) ।

**भाट्ट**— आधाने 'होतव्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते ब्रह्मवादिनः । यद् यजुषा जुहुयादयथापूर्वमाहुतीर्जुहुयात्, यन्न जुहुयादग्निः परापतेत्, तूष्णीमेव जुहोति' इति श्रुतम् । तथा चातुर्मास्येषु त्र्यम्बकहोममधिकृत्य 'अभिघार्या अनभिघार्या इति मीमांसन्ते, यदभिघारयेत् रुद्रायास्ये पशूनिदध्यात् । यन्नाभिघारयेत्, न रुद्रायास्ये पशूनभिदध्यात् । अथो खल्वाहुरभिघार्या एव । न ह्यनभिघृतं हविर्भवति' इति श्रुतम् । तत्रापि अन्तिमस्यैव विधेः सर्वोऽयं शेषः । न तु होमतदभावयोः अभिघारणानभिघारणयोश्च । होतव्यं न होतव्यं अभिघार्या अनभिघार्या इति विधिप्रतिषेधश्रवणाद्विकल्पः । तयोर्मीमांसाविशेषणत्वेन विधिशक्तिप्रतिबन्धात् । **न च** विकल्पे पक्षद्वयावलम्बनेन प्रयोगकाले मीमांसोपपत्तेः अन्यतरस्यैव विधेयत्वे एकपक्षावलम्बितया मीमांसाऽनुपपत्तिरिति **वाच्यम्** । अन्तिमविधितः पूर्वं संदिग्धत्वेन मीमांसोपपत्तेः । अतश्च विचारपूर्वकस्य तस्यान्ते निश्चायकत्वात् स्तुत्युपपत्तिः । एतादृशोऽयं होमोऽभिघारणं च यद्दोषदुष्टमपि बहुतरगुणवत्त्वात् कर्तव्यमेव । होमे तु नैव कश्चिद्दोष इति स्तुतिः । अत्र च त्र्यम्बकहोमस्य दर्वीहोमत्वेन अपूर्वत्वादपूर्वमेवाभिघारणं विधीयते । तूष्णींहोमे हि नाग्निहोत्रहोमत्वं, प्रमाणाभावात् । नाप्यग्निहोत्रधर्मकत्वम्, अर्थवादगतस्य नाम्नोऽनतिदेशकत्वात् । **शास्त्रदीपिको**क्तरीत्या विधिगतत्वेऽपि वा तस्यापि आधानद्वारा अग्निप्रयोजकत्वेन अग्निसंबन्धित्वाविशेषात् प्रायणीयादिवदनतिदेशकत्वाच्च । अतोऽपूर्व एवायं होमः आधानाङ्गत्वेन विधीयते । तत्र मन्त्रे प्रमाणाभावादेव तूष्णीमित्यनुवादः । देवता तु अनादिष्टे प्रजापतिः । **याज्ञिकास्तु** अग्निहोत्रधर्मातिदेशं मन्यन्ते । तदा तूष्णींत्वस्यापि विधिः । परंतु तदा कर्मान्तरत्वे प्रमाणं मृग्यम् ।

**मण्डन**—'त्र्यम्बकावघृतिः स्तुतिः ।'

**शंकर**— 'होमाभिघारणे नित्ये ।'

* **त्र्यार्षेयस्यैव** कर्माधिकारः, नान्यस्य । **भा.** ६।१।११।४३.

त्र्यार्षेयाधिकरणम् । दर्शपूर्णमासयोः त्र्यार्षेयत्वसंपादनसमर्थस्यैवाधिकारः ॥

**अत्र्यार्षेयस्य हानं स्यात् । ६।१।११।४३ ॥**

भाष्यम्—दर्शपूर्णमासयोः श्रूयते 'आर्षेयं वृणीते, एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते, न चतुरो वृणीते, न पञ्चातिवृणीते' इति । तत्र संदेहः किं अत्र्यार्षेयस्य अधिकारः, उत नेति । किं प्राप्तम् ? अत्र्यार्षेयोऽपि अधिक्रियते इति । कुतः ? 'आर्षेयं वृणीते' इति सामान्यवचनम् । तस्मात् एकं वरिष्यति द्वौ वा । तच्च दर्शयति 'एकं वृणीते, द्वौ वृणीते' इति । तथा प्रतिषेधति 'न चतुरो वृणीते, न पञ्चातिवृणीते' इति । न हि अप्राप्तस्य प्रतिषेधोऽवकल्पते । तस्मात् अत्र्यार्षेयोऽपि अधिक्रियेत इति । एवं प्राप्ते, ब्रूमः । यो न त्र्यार्षेयः स नाधिक्रियेत । कुतः ? 'त्रीन् वृणीते' इति विशेषवचनात् । विधिश्च अप्राप्तत्वात् । ननु एकं वृणीते इत्यपि विशेषवचनमस्ति । नेत्युच्यते, विधायिकाया विभक्तेरभावात् । ननु स्तुत्या विधास्यते, यथा त्रीन् वृणीते इति । उच्यते । त्रयाणामेव स्तुतिः । सा त्रित्वं विधास्यति । एकं वृणीते इति अवयुत्यानुवादोऽयं त्रयाणामेव । तत्रापि त्रित्वमेव स्तूयते विधातुम् । एवं एकवाक्येन विधानं भविष्यति इति । 'न चतुरो वृणीते, न पञ्चातिवृणीते' इति नित्यानुवादो भविष्यति । तस्मात् त्र्यार्षेयस्याधिकारो नान्यस्येति ।

टुप्—'आर्षेयं वृणीते' इति सामान्येन (आर्षेयवरणस्य) विधिः । एकत्वादयस्तु (सामान्येनैव) प्राप्तत्वात् स्तुत्यर्थाः । चतुरादिप्रतिषेधस्तु तस्मिन्नेव पक्षे उपपद्यते । अथवा सामान्येन विहिते (सति वरणे) एकत्वादिभिः विशेष्यते । एवं प्राप्ते, ब्रूमः । 'आर्षेयं वृणीते' (इति सामान्यं विशेषं प्रति-) साकाङ्क्षं त्रीन् वृणीते इति वाक्यात् त्रित्वेन विशेष्यते । एकत्वादयः (तु) अवयुत्यानुवादः । इतरथा (यदि एकत्वाद्यपि विधीयेत, ततः) वाक्यभेदः अदृष्टकल्पना अश्रुत-(विधि-) कल्पना च (प्रसज्येत) । सामान्येन विधिः एकत्वादयः अर्थवादाः इति चेत्, एवमपि चतुरादिप्रतिषेधात् वाक्यभेदः स्थित एव । अस्मत्पक्षे पुनः (आर्षेयं वृणीते, किं संख्यम् ? त्रीन्, इति) एकवाक्यत्वात् न कश्चित् दोषः । त्रीणि आर्षेयाणि यः संपादयितुं शक्नोति, सः अधिक्रियते । चतुरार्षेयस्य त्रित्वसंपादने अस्ति सामर्थ्यम् । न च ईदृक् वाक्यम् 'त्र्यार्षेय एव अधिक्रियते' इति । ननु इदमेवास्ति 'त्रीन् वृणीते' इति, (उत्तरम्-) त्रीणि यः संपादयितुं शक्नोति, तस्य वरणमुच्यते । न 'यस्य त्रीण्येव' इति गुरुवाक्यं भवति, अनपेक्षितश्च संबधः (स्यात्) । (चोदयति-) 'न पञ्चातिवृणीते' इति पञ्चातिक्रमणप्रतिषेधात् इदमवगम्यते अस्ति पञ्चानां वरणं इति । नैतदेवम् । अनुमानादेव तत् वरणं कल्प्यते । न च अनुमानेन शक्यः शास्त्रार्थः अनुष्ठातुम् । त्रिवरणे न पञ्च व्रियन्ते, नापि अतिक्रम्यन्ते । एवं लघुत्वेन च स्तुतौ एकवाक्यत्वं घटते । इतरथा वाक्यभेदादि स्थितमेव । तस्मात् त्रित्वसंपादनसमर्थः अधिक्रियते । 'भार्गव' इत्येतावन्मात्रं वरणं न कर्तव्यम् । मनुवत्पक्षे तु यस्यापि एकः, यस्यापि पञ्च, तस्यापि सकृदेव उच्चारणं 'मनुवत्' इति ।

शा—एकं द्वौ त्रीन् पञ्च वा वृणानः अधिक्रियेत इति प्राप्ते, अभिधीयते । '**असंख्याकविधौ तावत् प्रतिषेधद्वयाश्रयात् । वाक्यद्वयं प्रसज्येत त्रीनित्येतच्च पाक्षिकम्** ( प्रसज्येत ) ॥ **एकद्वित्रिविधानं च** ( प्रसज्येत ) **ततो वाक्यत्रयं भवेत् । विकल्पश्च भवेत् तस्मात् त्रित्वमेव विधीयते ॥**'

सोम— पञ्चार्षेयद्व्यार्षेययोः अप्रतिसमाधेयाङ्गवत् असामर्थ्याभावात् अस्ति अधिकारः इति प्रत्यवस्थानात् संगतिः । चतुःपञ्चार्षेयादीनां स्वीयऋषिमध्ये ऋषित्रयवरणे अधिकारः सिद्धान्ते संमतः ।

वि— 'विधिर्वरण एकादावपि स्यात् त्रिक एव वा । , अविशेषात् पक्ष आद्यो, वाक्याभेदाय तूत्तरः ॥' तस्मात् कर्मणि अधिकुर्वन् यजमानः त्रीनेव उच्चारयेत्, न न्यूनं नाप्यधिकं इति तात्पर्यार्थः ।

भाट्ट— दर्शपूर्णमासयोः 'आर्षेयं वृणीते, एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते, न चतुरो वृणीते, न पञ्चाति वृणीते' इति श्रुतम् । तत्र तावत् एकं विधायकं अन्ये अनुवादाः इत्यविवादम् । अन्यथा सर्वेषां विधित्वे

वाक्यभेदविकल्पयोरापत्तः। अतः 'त्रीन् वृणीते' इत्येव विधिः। 'एकं वृणीते द्वौ वृणीते' इत्यवयुत्यानुवादः त्रित्वस्तुत्यर्थः। 'न चतुरो वृणीते' इत्याद्यपि नित्यानुवादः तदर्थ एव। अतश्च त्र्यार्षेयवत् पञ्चार्षेयोऽपि त्रीनेव वृणीयात्। एकद्व्यार्षेययोस्तु नास्मिन् पक्षे अधिकारः। अपि तु 'अथ हैके मनुवत् इत्येवैकार्षेयं सार्ववर्णिकं प्रतिदिशन्ति' इति वचनान्तरविहितमनुवत्पक्षाश्रयेणैव। तदेतद्भगवतो जैमिनेर्मतं ऋष्यन्तरैरभ्युपगतम्। तथा च कात्यायनः अनुवदति 'परस्तादर्वाञ्चि त्रीणि' इति। आपस्तम्बोऽपि 'त्रीन् यथार्षि मन्त्रकृतो वृणीते' इति। तैस्तु पक्षान्तराण्यपि उक्तानि। 'यावन्तो वा मन्त्रकृतः' इति कात्यायनः। 'अपिवा एकं द्वौ त्रीन् पञ्च वृणीते, न चतुरो वृणीते न पञ्चाति वृणीते' इत्यापस्तम्बः। 'यावन्तः स्युः परंपरं प्रथमम्' इत्याश्वलायनोऽपि। तेषां चायमभिप्रायः, 'आर्षेयं वृणीते' इत्ययं विधिः इतरे अनुवादाः तत्स्तुत्यर्थाः। अतश्च 'त्रीन् वृणीते' इत्यपि अनुवाद एव। ईदृशोऽयं वरणसामान्यविधिः, यत् तत्तदार्षेयं प्रति तत्तत्संख्याकवरणं प्राप्यते इति स्तुतिः। इतरथा भवन्मते सामान्यवाक्येनैव वरणविधिं अभ्युपगम्यापि एकवाक्यत्वलाभाय पञ्चार्षेयस्यैव अधिकारापत्तेः त्रयाणामपि एषां अवयुत्यानुवादत्वापत्तिः। न चैवं चतुःषडादीनामपि वरणप्रसक्तौ तन्निषेधेन वाक्यभेदापत्तिः, एकद्वित्रिपञ्चार्षेयाणामेव प्रवराध्याये समाम्नानेन चतुःषडादेः अप्रसक्तेः। अतः अस्मिन्नपि पक्षे वाक्यभेदाद्यनापत्तेः एकद्व्यार्षेययोः अधिकारः। पञ्चार्षेयस्य पञ्चानां वरणं न विरुद्धमिति। यत्तु द्व्यामुष्यायणानां उभयतः कुलद्वयेऽपि वरणविधानात् अस्ति चतुःषडादीनां प्राप्तिरिति, तन्न। आश्वलायनेन (१२।१३।४-५) द्व्यामुष्यायणाननुक्रम्य 'तेषामुभयतः प्रवृणीते एकमितरतः द्वावितरतः, द्वावेकतरतः त्रीनितरतः' (द्वौ वेतरतः त्रीनितरतः इति पाठः। अत्र वृत्तिः—त्र्यार्षेयवरणपक्षे एकमितरतः इत्यादि। द्वौ वा इत्यादि तु पञ्चार्षेयप्रवरणपक्षोऽयम्) इति आवश्यकश्रुत्यन्तरमूलकेनैव तन्निषेधात्। अतो भार्गवच्यावन इत्यादिविशेषरूपेण वरणपक्षेऽपि मनुवत्पक्षवदेव एकद्व्यार्षेययोरपि अधिकारः इति ऋष्यन्तरमतं बोध्यम्। ६।१।१०.

**मण्डन**—'विधिस्त्र्यार्षेयवरणे।'

**शंकर**—'त्र्यार्षेयवरणात् सा स्यात्।' सा अधिक्रिया।

* **त्र्यार्षेयपादः**। संकर्षे तृतीयेऽध्याये चतुर्थः पादः अत्र चतुर्दश अधिकरणानि। **के.**

* **त्वगिन्द्रियं** स्पर्शमात्राभिव्यञ्जकतया स्पर्शवत्त्वानुमानेन वायुप्रकृतिकम्। **मणि.** पृ. १९. * **त्वक्सहितत्वशयानत्वादयः** परिधिधर्माः। **वि.** १२।२।११.

* **त्वन्** प्रत्ययः कृत्यार्थः प्रतिषेधे। **बाल.** पृ. ४०, * त्वन् प्रत्ययः कृत्यार्थः विधौ यथा—'कर्त्वं हविः' कर्तव्यमित्यर्थः। पृ. ४०.

### त्वष्टारं तूपलक्षयेत् पानात्। ३।२।१४।३५॥

ज्योतिष्टोमे अस्ति पात्नीवतः सोमः 'आग्रयणात् पात्नीवतं गृह्णाति' इति। तत्र होममन्त्रः 'अग्ना३३३इ पत्नीवां३३३ः सजूर्देवेन त्वष्ट्रा सोमं पिब' इति। अस्य पात्नीवतस्य शेषभक्षमन्त्रे पत्नीवता सह त्वष्टाऽपि उपलक्षणीयो न वेति विचारे, पूर्वपक्षमाह। पत्नीवता सह त्वष्टारं उपलक्षयेत्। पानात् पत्नीवता सह त्वष्ट्राऽपि सोमस्य पानात्। तस्मात् त्वष्टृपत्नीवत्पीतस्य इति भक्षमन्त्रे ऊहः कर्तव्यः।

### अतुल्यत्वात्तु नैवं स्यात्। ३६॥

सिद्धान्तमाह। तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः। एवं न स्यात् पात्नीवतशेषभक्षणे त्वष्टुरुपलक्षणं न स्यात्। अतुल्यत्वात् पाने त्वष्टुः पत्नीवता तुल्यत्वाभावात्। पाने अन्वयाभावात् इत्यर्थः। एवं त्वष्टृसाहित्यबोधकस्य मन्त्रस्य देवतानिर्देशचोदकस्य च अतुल्यत्वात्। अग्नेः साहित्येन वर्तमानस्य च त्वष्टुः अतुल्यत्वात् मन्त्रलिङ्गकल्पितस्य त्वष्टुः देवतात्वविधेः अग्निदेवताविधेश्च अतुल्यत्वात् तुल्यबलत्वाभावात्। तस्मात् पात्नीवतभक्षमन्त्रे त्वष्टुः उपलक्षणं न स्यात्। इति सिद्धान्तः। **के.**

* 'त्वष्टारं तूपलक्षयेत् पानात्' (कु. ३।२।१४। ३२) इत्यधिकरणे 'सजूर्देवेन त्वष्ट्रा सोमं पिब' इति त्वष्टुरुपलक्षणभूतत्वात् न पानान्वयः इति व्यवस्थाप-

यिष्यते । कु. ३।१।१५।२६. * त्वष्टुः अदेवतत्वात् पात्नीवतसोमभक्षमन्त्रे स नोपलक्षणीयः । वि. ३।२।१४.

**त्वष्ट्रधिकरणम्** । पात्नीवतभक्षणे त्वष्टा नोपलक्षणीयः, ज्योतिष्टोमे ॥

**त्वष्टारं तूपलक्षयेत् पानात् । ३।२।१४।३५॥**

**भाष्यम्**— अस्ति पात्नीवतः सोमः । तत्र मन्त्रः 'अग्ना३३३ इ पत्नीवाँ३३३ः सजूर्देवेन त्वष्ट्रा सोमं पिब' इति । तत्र संदेहः किं त्वष्टा उपलक्षयितव्यो न वेति । किं प्राप्तम् ? उपलक्षयितव्यः । कुतः ? पानात् । पानं श्रूयते, 'सजूर्देवेन त्वष्ट्रा सोमं पिब' इति । तेनायं अग्नये पत्नीवते सह त्वष्ट्रा दीयते इति गम्यते । यस्मै च येन सह दीयते, उभाभ्यां तद्दीयते । एवं तत् सहदानं भवति । यथा देवदत्ताय यज्ञदत्तेन सह शतं दीयतां इत्युक्ते तत्रोभाभ्यामपि दीयते । तस्मात् त्वाष्ट्रोऽप्यसौ सोमः इति ( भक्षमन्त्रे ) त्वष्टा उपलक्षयितव्यः । असावपि इन्द्र इव पिबतीति ।

**वा**— तस्मिन्नेव पात्नीवते पत्नीवता सह पातृत्वनिर्देशात् मान्त्रवर्णिकं त्वष्टुर्देवतात्वं इति पूर्वपक्षः ।

**अतुल्यत्वात्तु नैवं स्यात् । ३६ ॥**

**भाष्यम्**—नैतदेवम् । शब्दप्रमाणका वयम् । यच्छब्द आह, तदस्माकं प्रमाणम् । शब्दश्च अग्नेः पत्नीवतः पानमाह, त्वष्टुः सहभावमात्रम् । नहि अननुष्ठीयमाने सहभावः सिध्यति इति त्वष्टरि पानमनुमीयते । ननु त्वष्टुः पानं चोदितम् । सत्यं चोदितं मन्त्रवर्णेन, न चोदनया । चोदना हि 'पात्नीवतं गृह्णाति' इति । लोके तु कार्यं दृष्ट्वा चोदितमचोदितमपि अनुष्ठीयते एव । लोकतश्चैतत् परिच्छिन्नम् । नैवंजातीयकेन वाक्येन त्वष्टुः सोमः कुतो भवतीति ।

**वा**— नैवोपलक्षयितव्यस्त्वष्टा । कुतः ? '**मन्त्रचोदकयोस्तावदतुल्यत्वं बलाबले । पातृत्वेनाप्यतुल्यत्वं सहपात्राभिधानतः**' ॥ विधौ हि केवलः पत्नीवान् देवता नान्यसहितः । तद्धितेनासौ चोद्यते । न च तद्धितः अन्यसापेक्षादुत्पद्यते । तेनापि मान्त्रवर्णिकी दुर्बला । न च मन्त्रवर्णस्य तद्देवतात्वकल्पनया विना कर्मानङ्गत्वं पत्नीवदभिधानेन तत्सिद्धेः । न च त्वष्टुरभिधानं अन्यथा नोपपद्यते, स्तुत्यर्थमात्रत्वेन उपपद्यमानत्वात् । अत एव च मन्त्रार्थो भवति 'यस्त्वं त्वष्ट्रा सहितः, स सोमं पिब' इति । इतरथा पातृत्वेनैव तावत् कीदृशं देवताऽभिधानम् ? देवताया उद्देशमात्रोपकारित्वात् । किं पुनर्यदा तत्रापि साहित्यमात्रश्रवणात् केवलमुत्प्रेक्षा । न चासौ ऐकान्तिकी विनाऽपि कार्ययोगित्वेन सहशब्दप्रयोगात् । तद्यथा 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' तत्र हि एतावानेवार्थो विज्ञायते सत्स्वपि दशसु पुत्रेषु सैव वहति इति । तस्मान्न त्वष्टुर्देवतात्वमवगम्यते । अतो नोपलक्षयितव्यः ।

**सोम**— पूर्वत्र इन्द्रवाय्वादीनां देवतात्वाभावात् अनुपलक्षणत्वेऽपि अत्र त्वष्टुर्देवतात्वात् उपलक्षणं इति प्रत्यवस्थानात् **संगतिः** ।

**वि**—'सह पत्नीवता त्वष्ट्रा तद्-ग्रहे लक्ष्यते न वा।, सह त्वष्ट्रा पिबेत्युक्तेर्देवत्वात् सोऽपि लक्ष्यते ॥, सहत्वमात्रं त्वष्टुः स्यान्न पातृत्वमशब्दनात् । चोदनाया अभावाच्च न देवोऽतोऽत्र लक्ष्यते ॥' इति ।

**भाट्ट**—पात्नीवते एव 'अग्ना इ पत्नीवाः सजूर्देवेन त्वष्ट्रा सोमं पिब' इति मन्त्रात् त्वष्टुरपि देवतात्वम् । अतः सोऽपि अग्निवदुपलक्षणीयः । **इति प्राप्ते**, युक्तमग्नौ पत्नीवच्छब्दस्य यौगिकत्वेन विशेष्यसाकाङ्क्षस्य सामानाधिकरण्येन विशेष्यग्राहकत्वम्, त्वष्टुस्तु तृतीयया सहभावमात्रं प्रतीयते । न चासौ पानक्रियान्वयाव्यभिचारी 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इत्यादौ व्यभिचारात् । सत्यपि पाने देवतात्वस्य अप्रामाणिकत्वाच्च । अतः पात्नीवतं इति निरपेक्षतद्धितेन पत्नीवतोऽग्नेरेव देवतात्वं इति स एवोपलक्षणीयो न त्वष्टा ।

**मण्डन**— 'त्वष्टा न पात्नीवतदेवता स्यात् ।'

**शंकर**—'त्वष्टा नोह्येत तत्रैव ।' पात्नीवते ग्रहे ।

* **त्वाष्ट्रः** पशुः उपसदामन्तरा कर्तव्यः, परंतु न उपसदङ्गम् । इदं राजसूये संसृपां हविःषु । **वि.** ४।४।३, भा. ४।४।३।५-६. * '**त्वाष्ट्रं** पात्नीवतमालभेत' 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' अत्र पर्यग्निकरणान्तत्वस्य गुणस्य विधिः, न तु यागविधिः । **वि.** २।३।८. * 'त्वाष्ट्रं पात्नीवतं पर्यग्निकृतं उत्सृजति' 'आज्येन

संस्थापयति'। अत्र आज्यसंस्था यागान्तरमेव, न तु त्वाष्ट्रस्य प्रतिनिधिः। भा. ९।४।१४।५६-६०.

**त्वाष्ट्रपात्नीवताधिकरणम्।** त्वाष्ट्रपात्नीवते उत्सर्गरूपगुणविधिः॥

**पात्नीवते तु पूर्वत्वादवच्छेदः। २।३।८।१९॥**

**भाष्यम्**— त्वाष्ट्रं पात्नीवतं विधाय इदमुच्यते 'यत्पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इति। तत्र संदेहः किं त्वाष्ट्रस्य पर्यग्निकृतस्यैष उत्सर्गो विधीयते, उत तस्मात् यागान्तरमिति। यदि 'पर्यग्निकृतमुत्सृजन्ति' इति पदद्वयं परस्परेण संबद्धम्, ततः त्वाष्ट्रस्योत्सर्गः। अथ पात्नीवतशब्दः उत्सृजतिना संबध्येत, ततो यागान्तरम्। किं तावत् प्राप्तम्? यागान्तरमिति। कुतः? पूर्वस्त्वाष्ट्रः पात्नीवतश्च। उभयविशेषणविशिष्टः कथं पात्नीवतशब्देन अनूद्येत। अपि च त्वाष्ट्रस्य उत्सर्गे विधीयमाने पर्यग्निकृतमिति विशेषणं नावकल्पेत। अतो ब्रूमः पर्यग्निकृतस्य पात्नीवतता विधीयते, स एव याग इति। एवं प्राप्ते, ब्रूमः। न कर्मान्तरम्, पूर्वस्यैव उत्सृजतिशब्देन अवच्छेदो विधीयते। किमेवं भविष्यति? यजिमत्ता तावत् कल्पयितव्या न भविष्यति। उत्सृजतिशब्दश्च श्रुत्या उत्सर्गं विदधत् वाक्येन न बाधितो भविष्यति। कर्मान्तरपक्षे वाक्येन पात्नीवततायां विधीयमानायां अर्थात् प्राप्त उत्सर्गो धातुना अनूद्येत। अपिच पर्यग्निकृतस्य पात्नीवतता पूर्वस्य विदितैव, सा विधातुं न शक्यते। तस्मात् पूर्वस्य कर्मणः अवच्छेदः। यत्तूक्तं त्वाष्ट्रस्य उत्सर्गे विधीयमाने पर्यग्निकृतमिति विशेषणं तावत् नावकल्पेतेति। नैष दोषः। अतन्त्रमेव अत्र पात्नीवतशब्दः, नासौ विशेष्यते। अत एव त्वाष्ट्रः पात्नीवत उभयविशेषणविशिष्टः केवलेन पात्नीवतशब्देन लक्षणया अनूद्येत इति न दोषः। तस्मादवच्छेद इति सिद्धम्।

**वा**— एतेनैव अधिकारेण उत्सृजतिरपि यजिमदभिधानो न वेति विचार्यते। 'त्वाष्ट्रं पात्नीवतमालभते' इत्येवं यागं विधाय पुनराम्नायते 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इति। तत्र गुणविधिः, उत कर्मान्तरमिति वचनव्यक्तिद्वयप्रतिभानेन संदेहे सति, वायव्यश्वेतालम्भवदेव विधिशक्तेः द्रव्यदेवतासंबन्धविषयत्वेन कर्मान्तरत्वम्। किंच। '**न च त्वष्टुरभावेन प्रत्यभिज्ञायतेऽत्र सः। पर्यग्निकृतयोगाच्च वाक्यभेदः प्रसज्यते॥**' यदि हि अत्रापि पूर्ववदेव उभे विशेषणे श्रूयेयातां ततस्तदेव कर्मेति विज्ञायेत। न तु अत्र महेन्द्रस्येव इन्द्रप्रगाथे कश्चिदपि प्रत्यभिज्ञानलेशोऽस्ति इति देवताऽन्तरसंयोगादपि वाजिनयागवत् भिद्यते। पात्नीवतोद्देशेन च उत्सृज्यमानार्थे विधीयमाने पर्यग्निकरणावस्थाविशेषणात् वाक्यं भिद्येत। व्यवहितकल्पनया च उत्सृजतिः संबध्येत। प्राप्तः एव च तस्य उत्पत्तिवाक्येन उत्सर्गः इति व्यर्था पुनःश्रुतिः भवेत्। न च पर्यग्निकरणविधानेन अत्रार्थः, तस्य अतिदेशेनैव प्राप्तत्वात्। न च केवलपात्नीवतताविधिः वैकल्पिकः शक्य आश्रयितुम्, उत्पत्तिवाक्यशिष्टत्वविरोधात्। न च प्राकृतक्लृप्तोपकारकेवलपर्यग्निकरणपुनःश्रुत्या गृहमेधीयवत् अपूर्वता शक्या दर्शयितुं सिद्धवदुपसर्जनीभूतपर्यग्निकरणनिर्देशात्। न च पर्यग्निकरणशब्दः तदन्ताया अङ्गरीतेर्वाचकः, येन तन्मात्रग्रहणाश्रयणात् उत्तरकर्मावच्छेदो विज्ञायते (येत) न चासौ कालस्य वक्ता, येन पर्यग्निकाले एव उत्सृजति इति कल्प्येत। न च लक्षणाऽऽश्रयणहेतुरस्ति, श्रुत्याऽपि वाक्यसमवायोपपत्तेः। सर्वाङ्गेषु चोदकप्राप्तेषु वचनान्तरेण अनिषिद्धेषु पर्यग्निकरणवेलायां समस्तेषु अनुष्ठीयमानेषु सत्सु, नैव ज्ञायते किं क्रियतामिति, सर्वकरणे काललोपात्, तत्कालकरणे च अङ्गान्तरलोपात्। एतेन अवस्थाविधिः प्रत्युक्तः। चोदकेनैव तावत् पर्यग्निकरणावस्थः उत्सृज्यते इति प्रापितम्। अथ उत्तरावस्थापरिसंख्या उच्यते, तत्र त्रिदोषत्वं उक्तमेव। तस्मात् न पूर्वकर्मणि किंचित् विधेयमस्य वाक्यस्य, इति कर्मान्तरमेव द्रव्यदेवतासंयुक्तम्, देवतागुणसामान्येन च पूर्वप्रकृतिकं अग्नीषोमीयप्रकृतिकमेव वा विधीयते। इति प्राप्ते, अभिधीयते। '**प्रकृतप्रत्यभिज्ञानान्न यागोऽन्योऽवगम्यते। पर्यग्निकरणात् तस्मिन्नङ्गरीतिर्विधीयते॥**' पात्नीवतशब्दस्तावत् मनोतायामिव अग्निशब्दः (त्वं ह्यग्ने प्रथमो मनोता इत्यस्यामृचि यथा अग्निशब्देन अग्नीषोमीयपशौ अग्नीषोमौ उच्येते तद्वत्) सत्यपि उभयविशिष्टत्वे शक्नोति प्रकृतं यागं वक्तुम्। 'पर्यग्निकृतमुत्सृजति' इति प्रकरणात्

तस्यैव गुणविधिर्विज्ञायते । ननु च सर्वे गुणविधिप्रकारा निराकृताः । सत्यं शेषा निराकृताः, पर्यग्निकरणान्ताङ्गरीतिपक्षस्तु न निराक्रियते । यद्यपि एष शब्दः इडान्तादिवत् ( इडाऽन्ता आतिथ्या संतिष्ठते इत्यत्रेव ) तदन्तत्वं न ब्रवीति, तथापि गमयितुं शक्नोति । नहि निर्वृत्तपर्यग्निकरणता पूर्वाङ्गेषु अकृतेषु संभवति । तस्मात् तदुपादानादेव अनुक्ताऽपि तदन्तता अवगम्यते । कथम्भावापेक्षी च त्वाष्ट्रप्रयोगवचनः प्रकृतौ दृष्टसामर्थ्यपर्यग्निकरणान्ताङ्गकलापस्य अतिक्रमकारणाभावात् न प्रकृतिस्थानि सर्वाणि अङ्गानि अपेक्षते । ततश्च एतावन्ति एव अस्याङ्गानि इति अवधारणात् स्वरूपप्राप्तिमात्रस्य च चोदकेनापि सिद्धेः उत्तराङ्गावच्छेदार्थमेव इदं वाक्यं इति फलेन व्यपदिश्यते, तेन उच्यते 'पूर्वत्वादवच्छेदः' इति । एवं च सति यागान्तरापूर्वान्तरानुमानादिक्लेशो न भवतीति । न च परपदसंबन्धविधानविप्रकर्षः । पर्यग्निकरणान्तविशिष्टे तु उत्सर्गे विधीयमाने यद्यपि उत्सर्गस्वरूपं प्राप्तमेव, तथापि तदुद्देशेन अङ्गकलापविधानात् अनत्यन्तविप्रकर्षात् स एव विधेयत्वेन उक्तः । त्वत्पक्षे तु 'दध्नेन्द्रियकामस्य' इत्यादिष्विव धातोः अत्यन्तपारार्थ्यं स्यात् । तस्मादपि अकर्मान्तरत्वम् । प्रकरणादेव च पर्यग्निकरणान्ताङ्गग्रहणसिद्धेः पात्नीवतग्रहणं नित्यानुवादत्वात् अतन्त्रम्, इति विशिष्टानुवादैकदेशव्यपदेशोपालम्भपरिहारः ( पर्यग्निकरणावस्थाविशिष्टपात्नीवतव्यपदेशलक्षणस्य, पात्नीवतत्वरूपेण च एकेनांशेन त्वाष्ट्रपात्नीवतव्यपदेशलक्षणस्य च उपालम्भस्य परिहारः इति समासार्थः ) । तस्मात् गुणविधिः इति सिद्धम् ।

**सोम**— इह विधौ पात्नीवतमिति देवताश्रवणात् यागान्तरं इति प्रत्यवस्थानात् **संगतिः । सूत्रार्थस्तु**— पात्नीवते 'पर्यग्निकृतं पात्नीवतम्' इति वाक्ये प्रत्यभिज्ञायमानपूर्वकर्मवत्त्वात् तदन्ताङ्गरीतिविधानेन इतरेषामभावः स्यात् इति ।

**वि** — 'पर्यग्निकृतः पात्नीवत उत्सृज्यत इत्यसौ । यागो गुणो वा, यागः स्यादन्वयाव्यवधानतः ॥, प्रत्यभिज्ञातमालभ्यमनूद्योत्सर्गशब्दतः । गुणं पर्यग्निकृत्याख्यं वक्त्युत्तरनिवृत्तये ॥ न दृष्टा परिसंख्याऽत्र चोदकात् प्राग् विधौ सति । पर्यग्निकरणान्ताङ्गरीतिः क्लृप्तोपकारतः ॥'

**भाट्ट**— 'त्वाष्ट्रं पात्नीवतमालभेत' इत्यनेन द्रव्यदेवताविशिष्टं यागं विधाय 'पर्यग्निकृतं पात्नीवतमुत्सृजति' इति श्रुतम् । तत्रोभयदेवत्यस्य पूर्वयागस्य 'आग्नेयं चतुर्धा करोति' इतिवत् केवलपात्नीवतपदेन अनुवादायोगात्, पर्यग्निकरणादेश्च विधेयस्य गुणस्य अतिदेशेनैव प्राप्तत्वात्, इतराङ्गपरिसंख्यायां च त्रैदोष्यापत्तेः, पर्यग्निकृतपदस्य अनुवादत्वमङ्गीकृत्य कर्मान्तरविधिरेवायम् । इति **प्राप्ते**, प्रत्यभिज्ञानात् न कर्मान्तरम् । न चानुवादाऽनुपपत्तिः, सत्यपि अग्नीषोमादिवत् त्वष्टृपत्नीवतोर्व्यासज्यवृत्तिदेवतात्वे मनोतास्याग्निशब्दवत् लक्षणया अभिधानोपपत्तेः । वस्तुतस्तु पृथक्तद्धितश्रवणात् देवताद्वयमेवेदम् । एकवाक्योपादानाच्च समुच्चयः । अतो डित्थडपित्थयोर्माता डित्थमाता इतिवत् शक्यते एव केवलेन पात्नीवतपदेनानुवादः । अतः पूर्वकर्मानुवादेन गुण एव विधीयते । न च विधेयाभावः, वृत्तपर्यग्निकरणत्वस्यैव क्तप्रत्ययान्तार्थस्य विधेयत्वात् । तस्य च गृहमेधीयाज्यभागन्यायेन प्राकृतस्यैव अतिदेशतः पूर्वप्रवृत्त्या विधेयत्वात्, क्लृप्तोपकारकत्वेन च तेनैव नैराकाङ्क्ष्यात् अतिदेशाकल्पनेन उत्तराङ्गानामर्थादेव निवृत्तौ त्रैदोष्यानापत्तेः । वृत्तपर्यग्निकरणत्वस्य च पूर्वाङ्गेष्वकृतेषु असंभवात् तान्याक्षिप्यन्ते । न च क्तप्रत्ययबलेन प्रमाणान्तरप्रमितत्वावगमात् अतिदेशाप्रतिबन्धकत्वम् । 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति' इत्यादौ प्रमाणान्तराभावेऽपि एतद्विधिविधेयस्यापि क्तप्रत्ययेन उपात्तत्वेन बाधकाभावात् ।

**मण्डन**— 'त्वाष्ट्रोत्सर्गो विधीयते ।'

**शंकर**— 'पात्नीवतयजिर्न च ।'

**त्वाष्ट्रपात्नीवतपशोः पर्यग्निकरणोत्तरमुत्सर्गे सति 'आज्येन शेषम्' इति पत्नीवद्देवताकं आज्यद्रव्यकं कर्मान्तरं विधीयते ॥**

**आज्यसंस्था प्रतिनिधिः स्याद् द्रव्योत्सर्गात् । ९।४।१४।५६॥**

**भाष्यम्**— 'पर्यग्निकृतं पात्नीवतमुत्सृजति' इति प्रकृत्य श्रूयते । 'आज्येन शेषं संस्थापयति' इति । तत्र

संदेहः किमाज्यं पूर्वस्मिन् प्रतिनिधीभूतम्, अथवा आज्यद्रव्यकं पूर्वस्मात् कर्मान्तरं विधीयते इति। किं प्राप्तम्? प्रतिनिधिरिति। कुतः? पात्नीवतमिति द्रव्यमुच्यते। उत्सृजतीति तत्रैव उत्सर्गः श्रूयते। शेषमिति उपयुक्तेतरत् विद्यमानं गम्यते। तत् आज्येन संस्थापयतीति पशोः कार्ये आज्यं श्रुतं भवतीति। ननु पूर्वकर्म परिसमाप्तमित्युक्तम्। अत्रोच्यते। द्रव्योत्सर्गवचने प्रत्यक्षे, शेषशब्दे वा अपरिहृते पुनरसमाप्तं पूर्वकर्म इत्याशङ्क्यते। तस्मात् प्रतिनिधीयते आज्यमित्याशङ्कामहे। संस्थापयतीति च अपूर्वे नोपपद्यते।

**समाप्तिवचनात्। ५७॥**

**भाष्यम्**-- इतश्च आशङ्कामहे। समाप्तिवचनमिदं भवति 'संस्थापयति' इति। तेन मन्यामहे यत् पूर्वं पशुना आरब्धम्, तत् उत्सृष्टे पशौ आज्येन परिसमाप्यते इति। अपूर्वस्य अत्र कर्मणः उच्यमानस्य आरम्भः एव वक्तव्यो भवति। यतस्तु अनभिधाय आरम्भं परिसमाप्तिरेव उच्यते, ततः अवगच्छामः, पूर्वस्यैव परिसमाप्तिः नापूर्वं कर्म चोद्यते इति।

**चोदना वा, कर्मोत्सर्गादन्यैः स्यादविशिष्टत्वात्। ५८॥**

**भाष्यम्**-- कर्मान्तरचोदना वा। कुतः? पूर्वस्य कर्मणः परिसमाप्तत्वात्। ननूक्तं द्रव्योत्सर्गे शेषवचने वा अपरिहृते पूर्वकर्मणः समाप्तिराशङ्किता भवति। अत्रोच्यते। इदं द्वयमपि परिह्रियते। संस्थापयतीति प्रकृतेन पात्नीवतशब्देन संबध्यते। तत्रायमर्थः पात्नीवतं संस्थापयति इति। स एष यागो विधीयते। संपूर्वश्च स्थापयतिः प्रयुज्यते। अवश्यं कश्चित् धातुः संपूर्वो भाववचनश्च प्रयोक्तव्य इति। तत्र अविरुद्धो भावनायामुच्यमानायां अर्थप्राप्तः संस्थापयतिः आलभतिरिव प्रयुज्यते। शेषशब्दश्च एवं सादृश्यात् प्रयुज्यते। द्रव्योत्सर्गश्च अविरुद्ध एव यागे उच्यमाने। तस्मात् यथा अन्ये निर्वपत्यादयः कर्मान्तरविधाने भवन्ति, एवं तैः अविशिष्टत्वात् संस्थापयतिरपि भवितुमर्हतीति।

**अनिज्यां च वनस्पतेः प्रसिद्धां तेन दर्शयति। ५९॥**

**भाष्यम्**-- प्रसिद्धां वनस्पतेः अनिज्यां अत एव दर्शयति। कथम्? 'यत् त्वष्टारं च वनस्पतिमावाहयसि, अथवैतौ यक्ष्यसि, त्वाष्ट्री नवमी प्रयाजेज्या, वानस्पत्या दशमी, अत्रैव एताविष्टौ विद्यात्' इति अङ्गान्तरेण अनुग्रहं ब्रुवन् वनस्पतीज्यायाः अभावं दर्शयति। शेषपरिसमाप्तौ सत्यां 'वनस्पतिं जुहोति' इति वनस्पतीज्या क्रियते। अथ परिसमाप्तं पूर्वं कर्म, ततो लुप्ता स्यात्, तत्र अभावदर्शनमुपपद्यते। तस्मात् पूर्वकर्म परिसमाप्तम्। इदमपि कर्मान्तरमिति।

**संस्था तद्देवतत्वात् स्यात्। ६०॥**

**भाष्यम्**-- अथ यदुक्तं 'संस्थापयति इति च अपूर्वे नोपपद्यते' इति, तत् परिहर्तव्यम्। अत्रोच्यते। असंस्थायां संस्थावचनमेतत्, तदपि पूर्वं पात्नीवतमिति समानदेवतत्वात् समाप्तिसादृश्यं ज्ञायते। तत्र तत् पात्नीवतमारब्धम्, इह परिसमाप्तमिति। स एष सादृश्यात् संस्थापयतीति शब्दः अवकल्पते इति।

**सोम**-- पूर्वाधिकरणे 'आज्येन शेषं संस्थापयति' इति इदं लिङ्गदर्शनमेव प्रसक्तम्, तत्र च यागान्तरविधित्वे एव तस्य लिङ्गत्वमुपपद्यते इति तस्य यागान्तरविधित्वसमर्थनात् **संगतिः**। **सूत्रार्थस्तु**--आज्येन शेषं संस्थापयति इत्यत्र आज्यं प्रतिनिधिः स्यात् पशुद्रव्यस्य उत्सृष्टत्वेन कर्मणः द्रव्यापेक्षत्वात् इति। ९।४।१५.

**वि**-- 'आज्येन शेषमित्युक्तौ द्रव्यप्रतिनिधिर्भवेत्। कर्मान्यद् वा, ऽग्निमस्त्यागशेषसंस्थापनोक्तिभिः ॥, अङ्गरीत्या समाप्तत्वाद् देवतोक्त्यनुवर्तनात्। साम्यात् शेषः संस्थितिस्तु याग आलम्भनादिवत् ॥' ९।४।१५.

**भाट्ट**— पात्नीवतवाक्ये पुनराक्षेपः। तत्र हि 'पर्यग्निकृतं पात्नीवतमुत्सृजति' इत्युक्त्वा 'आज्येन शेषं संस्थापयति' इति श्रुतम्। अपूर्वत्वे हि शेषसंस्थाऽनुपपत्तेः पर्यग्निकरणवाक्ये पर्यग्निकरणाव्यवहितोत्तरमेव प्रधानयागकर्तव्यता अपकृष्य विधीयते। तत्करणे च विशसनादिपदार्थलोपेऽपि अन्याङ्गलोपे प्रमाणाभावात् शेषं यत् स्विष्टकृत्प्रयाजादि तत् आज्येन संस्थापयतीति विधीयते।

यद्यपि च प्रयाजादौ आज्यं प्राप्तमेव, तथापि स्विष्टकृद्वनस्पतियागादौ आज्यविधिर्न विरुध्यते। न च विशसनाभावादेव व्यङ्गासंभवात् 'यस्य सर्वाणि हवींषि' इत्यनेनैव स्विष्टकृत्यपि आज्यप्राप्तिः शङ्क्या, नाशादिनिमित्ताभावेन तदप्राप्तेः, विशसनस्य अङ्गप्रधानसाधारण्येन व्यङ्गार्थमपि प्राप्त्युपपत्तेश्च, वनस्पतियागादौ आज्यविधेरपि उपपत्तेश्च। नह्यत्र कर्मान्तरत्वे किञ्चित् प्रमाणमस्ति, प्रत्युत शेषसंस्थापदयोः अनुपपत्तिः। इति प्राप्ते, 'यत् त्वष्टारं च वनस्पतिमावाहयसि अथवैतौ यक्ष्यसि' इति पृष्टे 'त्वाष्ट्री नवमी प्रयाजेज्या, वानस्पत्या दशमी अत्रैवैतौ इष्टौ विद्यात्' इति वनस्पतियागस्य अङ्गान्तरेण अनुग्रहवचनेन अभावावगतेः, तस्य च अपूर्वत्वमन्तरेण अनुपपत्तेर्न पूर्ववाक्ये प्रधानापकर्षमात्रविधिः, अपि तु तदन्ताङ्गरीतिविधिरेव अपूर्वत्वफलकः। यद्यपि च अक्रियमाणस्य वनस्पतियागस्य देवताऽऽवाहनमपि नैव प्राप्यते, तथापि सिद्धवन्निर्देशान्यथाऽनुपपत्त्यैव आवाहनविधिकल्पना। त्वष्टुस्तु प्रधानदेवतात्वादेव आवाहनाविरोधः, प्रक्षेपाभावाभिप्रायेण च नवम्या अनुग्रहोक्तिः। अतश्च पूर्वकर्मणि शेषाभावेन आज्यविधानानुपपत्तेः गुणात् कर्मान्तरमेवेदं आज्यद्रव्यकं अनुषक्तपत्नीवद्देवत्यं उपांशुयाजप्रकृतिकम्। शेषसंस्थाशब्दौ तु पूर्वस्य कर्मणः असमाप्तप्रायतया कथंचित् अनुवादकौ इति। सिद्धत्रिविध ऊहः। १३.

मण्डन— 'संस्थाऽऽज्येन पृथग् यजिः!' १४.

शंकर-- 'आज्यशेषवचस्यपि।' यागः। १५.

* त्वाष्ट्रपात्नीवतपशुयागाख्यस्य पूर्वस्य कर्मणः 'पर्यग्निकृतं पात्नीवतमुत्सृजति' इत्यनेन पर्यग्निकरणान्तस्यैव पर्यवसानविधानात् प्रत्ययानुग्रहार्थं संस्थापयतिपरेण पञ्चमलकारेण 'आज्येन करोति' इत्याज्यविशिष्टकर्मान्तरविध्यवगतेः शेषशब्दस्य एकावयविगतोपयुक्तावयवान्यावयवत्वाख्यावशिष्टवाचित्वायोगात् तद्गतैकोपाध्यन्वितोपयुक्तपात्नीवतपशुयागान्याज्ययागाख्ये कर्मान्तरे त्वष्टृपत्नीवद्देवतात्वसाम्यात् तत्सदृशे वा शेषशब्दप्रयोगः इति नवमान्त्ये वक्ष्यते। सु. पृ. १५१५.

* त्सरा नाम छद्मगतिः। यथा शकुनिग्राहकस्य शकुनिं जिघृक्षतः छद्मना गतिर्भवति, शनैः पादन्यासः, दृष्टिप्रणिधानम्, अशब्दकरणं च कथमनवबुद्धः शकुनिर्गृह्येतेति। भा. ९।१।६।२२.

---

## द.

* दंपती उभावपि स्ववन्तौ (द्रव्यवन्तौ) इत्येवं तावत् स्थितम्। वचनात् तयोः सहक्रिया। भा. ६।१।४।१७ * दंपत्योः कर्तृत्वं व्यासज्यवृत्ति। तस्मात् दंपत्योः सहाधिकारः कर्मसु। अन्यथा प्रत्येकस्य कर्मणि वैगुण्यप्रसङ्गः। वि. ६।१।४. * दंपत्योः कर्मसु सहाधिकारः। सहाधिकाराधिकरणं द्रष्टव्यम्। भा. ६।१।४।१७–२१, * दंपत्योः मध्यगं हीदं धनम्। अतः अवश्यं च सह पत्न्या यष्टव्यम्। ६।१।४।१७. * दंपत्योः सत्रिवत् कर्तृभेदः। यागाधिकारस्तु सहैव। रत्न.६।१।४।१७–१८.

* दक्षिणेऽग्नौ पत्न्याः व्रतस्य श्रपणमाम्नातम्। यदा आमयदोषात् मांसं व्रतकार्ये उपादीयते, तदा तन्न दक्षिणाग्नौ श्रपयितव्यम्। भा. १२।२।१।७.

**⌛ दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात् सर्वं क्रियते। ११।२।९।३५॥**

वरुणप्रघासेषु द्वौ आहवनीयौ तत्र दक्षिणे अग्नौ उत्तरेऽग्नाविव सर्वं अङ्गजातं पृथक् क्रियते। देशभेदात् दक्षिणः उत्तरः इति देशयोर्भेदात्। इति सिद्धान्तः।

**अचोदनेति चेत्। ३६॥**

पूर्वपक्षी आह। दक्षिणविहारे कर्तव्यायाः मारुत्या आमिक्षायाः फलं प्रति अचोदना, न चोदना, न विधानम्। किंतु वरुणप्रघासान् प्रति मारुत्याश्चोदना। तथा च कर्मणः अचोदनात् अङ्गानां प्राप्तिरेव नास्ति, कुतस्तन्त्रम्। इति चेत्।

**स्यात्, पौर्णमासीवत्। ३७॥**

सिद्धान्ती आह। स्यात् दक्षिणविहारे अङ्गानां प्राप्तिः। पौर्णमासीवत् 'पौर्णमास्यां पौर्णमास्या यजेत' इति न तावत् कर्म फलं प्रति चोद्यते, अथ च साङ्गप्रधानं पौर्णमास्यां क्रियते, एवमिहापि।

प्रयोगचोदनेति चेत् । ३८ ॥

पूर्वपक्षी पुनराह । पौर्णमास्यां युक्तम् । यजेत इत्याख्यातेन प्रयोगचोदना पौर्णमास्याः प्रयोगस्य चोदना कृता, प्रयोगश्च अङ्गप्रधानानां भवति । तस्मात् तत्र साङ्गं क्रियते । इति विषमो दृष्टान्तः । इति चेत् ।

तथेह । ३९ ॥

सिद्धान्ती आह । तथा पौर्णमासीवत् इह मारुत्यामपि 'अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इति आसादयति-शब्देन निर्वपेत् आलभेत इतिवत् लक्षणया याग एव चोद्यते । तथा च प्राप्तानामङ्गानां भेदेन क्रिया ।

आसादनमिति चेत् । ४० ॥

आह पूर्वपक्षी । पौर्णमास्यां यजेत इति पदेन याग उच्यते । 'मारुतीं प्रतिप्रस्थाता आसादयति' इति आसादयति–पदेन न याग उच्यते किंतु आसादनं स्थापनम् । तथा च नाङ्गानां प्राप्तिः स्यात् । इति चेत् ।

नोत्तरेणैकवाक्यत्वात् । ४१ ॥

आह सिद्धान्ती । नैष दोषः । यद्यपि आसादयतिशब्देन आसादनमुच्यते तथापि तत् होमार्थमेव नादृष्टार्थम् । उत्तरेण 'अष्टावुत्तरे विहारे हवींष्यासादयति' इत्यनेन उत्तरविहारविषयकेण वाक्येन सह 'मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इति दक्षिणविहारविषयकवाक्यस्य एकवाक्यत्वात् । तथा च उभयत्रापि आसादयति-पदेन उक्तमासादनं होमार्थमेव । तस्मात् अङ्गानां प्राप्तिः ।

अवाच्यत्वाच्च । ४२ ॥

वस्तुतस्तु आसादयति-पदेन होमार्थस्य आसादनस्य अवाच्यत्वात् हविषां वेद्यामासादनस्य प्रकृतित एव प्राप्तत्वात् । तस्मात् आसादयति-पदेन निर्वपेत् आलभेत इतिवत् लक्षणया यागप्रयोग एवोच्यते । तथा च अङ्गानां प्राप्तिः । तस्मात् विहारयोस्तन्त्रभेदः ।

आम्नायवचनं तद्वत् । ४३ ॥

आसादयति-पदं लक्षणया यागप्रयोगपरं इत्यत्र तात्पर्यग्राहकमाह सिद्धान्ती । 'यदेवाध्वर्युः करोति, तत् प्रतिप्रस्थाता करोति' इति आम्नायस्य वेदस्य वचनं तद्वत् उत्तरविहारवत् दक्षिणे विहारेऽपि अनुष्ठानं ब्रूते । तस्मात् आसादयति-शब्दः लक्षणया यागप्रयोगमेव ब्रूते । ततश्च अङ्गानां प्राप्तिः । तस्मात् दक्षिणविहारेऽपि अङ्गानां पृथगनुष्ठानं इति सिद्धान्तः । के.

* दक्षिणेऽग्नौ सुराग्रहान् जुहुति सौत्रामण्याम् । भा. ३।५।३।१४.

* दक्षिणदेशान्निर्गतः प्राक्षु वा उदक्षु वा अवस्थितः आह्नीनैबुकादीन् करोत्येव । भा. १।३।७।१९. * दक्षिणदेशेषु मातुलसुतापरिणयं कुर्वन्ति । तच्च स्मृतिविरुद्धम् । वि. १।३।५ वर्णकं २.

* दक्षिणविहारे क्रियमाणमारुत्यर्थे पृथगङ्गानुष्ठानं वरुणप्रघासेषु चातुर्मास्येषु । भा. ११।२।९।३५–४३, * दक्षिणविहारे प्रतिप्रस्थात्रा अध्वर्योः पृथक् मन्त्रोच्चारणं कार्यं वरुणप्रघासेषु चातुर्मास्यगतेषु । १२।१।९।१८, * दक्षिणविहारे मारुत्याख्यस्य हविषोऽर्थेन वरुणप्रघासेषु अग्निमन्थनादेः पुनर्विधानं चातुर्मास्येषु । ७।१।३।२१.

* दक्षिणहविर्धानदेशः सामिधेनीनामनुवचनार्थः ज्योतिष्टोमे । भा. ३।७।७।१५–१७. * दक्षिणहविर्धानशकटसमीपे सोमाभिषवः । वि. ३।७।७.

* दक्षिणा अध्वर्य्वादीनां परिक्रियार्था कर्मसंयोगात् । वा. ३।१।६।१२ पृ. ६९७. * दक्षिणा अयुतं अभिषेचनीये राजसूयान्तर्गते सोमयागे । वि. ११।४।२, * दक्षिणा अश्वमेधे 'हिरण्मयौ प्राकाशौ अध्वर्यवे ददाति' । प्राकाशौ दीपस्तम्भौ इत्येके, दर्पणौ इत्यपरे । ताभ्यां इतरस्य अध्वर्युभागस्य बाधः । अन्येभ्यस्तु ऋत्विग्भ्यः यथायथं देयमेव, न तस्य बाधः । ११।३।१७. * दक्षिणा आग्रयणे 'वासो दक्षिणा' 'वत्सः प्रथमजो दक्षिणा' । अनया प्राकृतस्य अन्वाहार्यस्य निवृत्तिः ( अत्र श्यामाकाग्रयणे वासो दक्षिणा, व्रीह्याग्रयणे च वत्सः प्रथमजो दक्षिणा ) । भा. १०।३।६।३४. * दक्षिणा आधाने 'एका (गौः) देया, षड् देयाः, द्वादश देयाः, चतुर्विंशतिर्देयाः, शतं देयं सहस्रं देयं अपरिमितं देयम्' ( सहस्रादधिकम् ) । इदं विकल्पेन । वि. ६।७।१०. * दक्षिणा उपहव्ये अग्निष्टोमसंस्थे अश्वः श्वेतः । उपहव्ये उक्थ्यसंस्थे अश्वः श्यावो दक्षिणा स ब्रह्मणे देयः । स च कृत्स्नक्रतुदाक्षिण्यनिवर्तकः । भा. १०।३।१८।६५–६७.

* दक्षिणा उपहव्ये एकाहे श्यावोऽश्वः। स ब्रह्मणे देयः, इतरेभ्यस्तु न किमपि शास्त्रीयम्। लौकिकेन तु दानेन तेषामानतिः। वि. १०।३।१८. * दक्षिणा ऋतपेये औदुम्बरः सोमचमसः। स प्रियाय सगोत्राय ब्रह्मणे देयः। स च कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तकः। भा.१०। ३।१९।६८–७३. * दक्षिणा ऋत्विजां उत्साहकारिणी। परिक्रयस्य चैतद्रूपम्। वा. ३।४।१७।४९. * दक्षिणा ऋषभः द्वितीयायामवेष्टौ राजसूये। भाट्ट. ११।४।३. * दक्षिणा ज्योतिष्टोमे 'गौश्च अश्वश्च अश्वतरश्च गर्दभश्च अजाश्च अवयश्च, व्रीहयश्च यवाश्च तिलाश्च माषाश्च'। तत्र गाव एव द्वादशशतं (द्वादशाधिकं शतम्)। भा. १०।२।८।२२, * दक्षिणा ज्योतिष्टोमे साङ्गं कर्मराशिमङ्गीकृत्य दीयते। १०।६।१८।६५. * दक्षिणा ज्योतिष्टोमादौ प्रधानार्था, न तु अङ्गार्था। वि. ३।७।५. * दक्षिणा दर्शपूर्णमासयोः अन्वाहार्यः चरुः। भा. १०।३।६।३४, * दक्षिणा दीक्षा च प्रधानार्था ज्योतिष्टोमे। ३।७।५।११–१२. * दक्षिणा द्वादशशतगोरूपा ऋत्विग्भ्यो विभागेनैव विशिष्टेन देया, न तु स्वेच्छया वा समुदायार्थे वा। वि. १०।३।१२. * दक्षिणा द्वादशाहे प्रत्यक्षं वचनं 'अन्वहं द्वादशशतं ददाति' इति। भा. १०।६।१७।६६, * दक्षिणा धेनुः (एकैव) भूः नाम यागे। सा च कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तिका, न तु केवलं गवामेव। १०।३।१४।५६, * दक्षिणा नाम दक्षतेरुत्साहकर्मणः। दक्षिणा उत्साहिका इति। एकः स गुणः। स च प्राधान्येन विवक्षितः। १०।३।१४।५७. * दक्षिणा पिशङ्गी पष्ठौही तृतीयायामवेष्टौ राजसूये। भाट्ट. ११। ४।३. * दक्षिणा पुनराधाने पुनरुत्स्यूतं वासो दक्षिणा; पुनरुत्सृष्टोऽनड्वान् (पुनर्निष्कृतो रथो दक्षिणा। वि.)। भा. १०।३।५।३०, * दक्षिणा पौण्डरीके एकादशाहे प्रत्यहं गवां सहस्रम्, दशमेऽहनि तु अश्वसहस्रम् इति पार्थसारथिः मानवसूत्रानुसारात्। भाट्ट. १०।६।१७. * दक्षिणा भूः नामकैकाहे एका धेनुः। धेन्वा चानया 'गौश्चाश्वश्च' इत्यादिनिखिलदक्षिणाबाधः। वि. १०। ३।१४. * दक्षिणा। यत्र हि पादिकमपि अहः न लभ्यते न सा दक्षिणा भवति। न हि सा तस्मिन् कर्मणि दक्षं करोति। दक्षकरणी हि दक्षिणा। दक्षश्च बलम्। या न आशितम्भवं (अहोरात्रयोर्जठरपूर्तिपर्याप्तम्) करोति नासौ बलकरणी। तस्मात् या न आशितम्भवा नासौ दक्षिणा। आशितम्भवाया आधिक्यं वचनस्य विषयः। तस्मात् आशितम्भवं यद् द्रव्यम्, सा भृतिः सा दक्षिणा। भा. १०।३।११।४५. * दक्षिणा राजसूयगते प्रथमे त्रिके 'सौमापौष्ण एकादशकपालः ऐन्द्रापौष्णश्चरुः, पौष्णश्चरुः श्यामो दक्षिणा' इति। द्वितीये तु त्रिके 'आग्नावैष्णव एकादशकपालः, ऐन्द्रावैष्णवश्चरुः, वैष्णवस्त्रिकपालः, वामनो दक्षिणा' इति। वि. ११।४।१. * दक्षिणा वरुणप्रघासेषु 'प्रवयसमृषभं दक्षिणां ददाति'। भा. ११।२।१०।४६. * दक्षिणा वशा चतुर्थ्यामवेष्टौ राजसूये। भाट्ट. ११।४।३. * दक्षिणा वाजपेये 'यजुर्युक्तं रथमध्वर्यवे ददाति'। यजुर्युक्तरथेन कस्या अपि अतिदिष्टादिदक्षिणाया न बाधः। वि. १०।३।२०. * दक्षिणा शितिपृष्ठः पञ्चम्यामवेष्टौ राजसूये। भाट्ट. ११।४।३. * दक्षिणा शुनासीर्ये श्वेता गौः। के. * दक्षिणा श्येने दीक्षणीयायां द्वादशमानं हिरण्यम्; प्रायणीयायां चतुर्विंशतिमानम्। भा. ८।१।९।१६, * दक्षिणा सत्रेषु नास्ति। १०।२।११।३५–३८, * दक्षिणा समुदायाङ्गम्, नावयवाङ्गम्। १०।६।७।६३. * दक्षिणा सहस्ररूपा पृष्ठशमनीये परिक्रयार्थैव न त्वदृष्टार्था। वि. १०।२।१२, * दक्षिणा सोमापहारे एकैव गौः न तु द्वादशशतम्। अश्वाश्वतरादयस्तु सन्त्येव। गोविषये एवायं नियमः। १०।३।१५, * दक्षिणा सोमाभिदाहे पञ्चैव गावः, न तु द्वादशशतम्। गोविषय एवायं नियमः। अश्वाश्वतरादयस्तु सन्त्येव। १०।३।१५. * दक्षिणा हिरण्यं प्रथमायामवेष्टौ राजसूये। भाट्ट. ११।४।३. * दक्षिणाः ज्योतिष्टोमादौ माध्यंदिने सवने दीयन्ते। वि. १०।६।१८. * दक्षिणाः 'त्रिष्टुभो लोके माध्यंदिने सवने नीयन्ते' ज्योतिष्टोमे (दक्षिणदेशात् उत्तरदेशे नयनम्। ततो विभज्य दानम्)। भा.१०।६।१८।६९, * दक्षिणाः प्रधानार्थाः सत्यः प्रसङ्गादङ्गानामुपकुर्वन्ति इति वक्ष्यामः (१२।१।३१ इत्यत्र)। वा. ३।७।५।११. * **दक्षिणया** नैमित्तिके पुनराधाने श्रुतया आधानसामान्यविहितैकादि-

दक्षिणाया बाधः । भा. १०।३।५।३०–३३, * दक्षिणया नैमित्तिक्या एकादिरूपया ज्योतिष्टोमे नित्यप्रयोगीय-द्वादशशतसंख्यामात्रस्य बाधः यथा सोमापहारे । १०।३। १५।५९–६२. * दक्षिणया परिक्रीतानामृत्विजां लोभ-दर्शनात् अध्वर्यवे वैसर्जनहोमीयवासोदानस्मृतिरप्रमाणम् । वि. १।३।३. * दक्षिणया सौमिक्या सोमाङ्गेष्टिषु शेष-भक्षाणां प्रसङ्गसिद्धिर्नास्ति । भा. १२।१।१७।३३–३४, *दक्षिणाभिः ऋत्विक्त्वनियमः। दीक्षादक्षिणवाक्यनिर्दिष्टा ऋत्विजः षोडशैव, न चमसाध्वर्यवः। ३।७।१७।३६–३७, * दक्षिणायाः अन्वाहार्यरूपायाः दार्शिक्याः सोमा-ङ्गदीक्षणीयादीष्टिषु सौमिकदक्षिणया प्रसङ्गसिद्धिः । १२। १।१६।३२, * दक्षिणायाः द्वादशशतगोरूपायाः विभज्य दानं ज्योतिष्टोमे ( १२+६+४+३ = २५×४ = १०० +१२ = ११२ ) । १०।३।१२।५०–५२, * दक्षिणायाः द्वादशशतसंख्यायाः अध्वर्य्वादिसमाख्याऽनुरोधेन विभागः । १०।३।१३।५३–५५. * दक्षिणायाः भृति-रूपत्वं वेदवाक्यादेवावगम्यते 'दीक्षितमदीक्षिता दक्षिणा-परिक्रीता ऋत्विजो याजयेयुः' इति । वि. १०।२।८. * दक्षिणानां अपरिमितत्वं पूर्वोक्तात् संख्याऽन्तरं आधाने । भा. ६।७।१०।२२, * दक्षिणानां अपरि-मितत्वं सहस्राधिकत्वं आधाने । ६।७।११।२३–२५, * दक्षिणानां उत्पत्तिविधौ विशिष्टकालसंबन्धः श्रूयते 'तस्मात् त्रिष्टुभो लोके माध्यंदिने सवने दक्षिणा नीयन्ते' इति । १०।६।१८।७१. * दक्षिणानां ऋत्विगानमनार्थ-त्वात् । आनमनं च साहाय्योपादित्सया । वा. ३।७।५।११. * दक्षिणानां दक्षिणदेशादुत्तरदेशे नयनं प्रत्यहं विभज्य पौण्डरीके । भा. १०।६।१८।६९–७२. * दक्षिणानां द्वादशशतसंख्या गवामेव, न तु अश्व–अश्वतर–तिल–माषादिषु प्रत्येकं वा मिलित्वा वा । द्वादशाधिकं शतं द्वादशशतम् । वि. १०।३।११. * दक्षिणानां नयनादि-संस्कारसंस्कृतानां प्रत्यर्पणं कार्यम् । भा. १०।६।१८।७०, * दक्षिणानां संख्यासु विकल्पः आधाने । १२।४।५।९.

* द्वादशशतं गावः इत्युदाहृतश्रुतिवाक्ये गोशब्दा-म्नानेऽपि तत्र निर्दिष्टा द्वादशसंख्या 'गौश्चाश्वश्चाश्वतरश्च गार्दभश्च' इत्यादि पूर्वसंदर्भप्रकृतगोविषया इति दक्षिणा-ऽधिकरणे निर्णीतत्वात् गावः इत्युक्तम् । परिमलः. ३।३।१।१ ब्रसू.

* दक्षिणान्तर्गतगोष्वेव द्वादशशतसंख्यानिवेशः न तु अश्वादौ ज्योतिष्टोमे । भा. १०।३।११।३९–४९.

* दक्षिणार्थनिर्दिष्टभागस्यैव सर्वस्य विश्वजिति देयता । भा. ६।७।७।८–१३.

* 'दक्षिणाचारेण कर्तव्यम्' इत्यादिस्मृतिः वेदा-विरुद्धत्वात् प्रमाणम् । भा. १।३।३।५–७.

* दक्षिणाम्नानं विकृतौ चोदकेन प्राप्तं बाधित्वा निविशते विरोधात् । टुप्. १०।५।२५।८५.

* दक्षिणैक्यात् कर्तृभेदो नास्ति । टुप्. ११।४। ५।१७, * दक्षिणैक्यात् द्वादशाहस्य तन्त्रेण प्रयोगः । ११।४।५।१८.

ꕥ दक्षिणाकाले यत् स्वं, तत् प्रतीयेत तद्दान-संयोगात् । ६।७।६।७॥

विश्वजिति अध्वरे दक्षिणाकाले दक्षिणादानकाले माध्यंदिने सवने यत् स्वं स्वीयं धनम्, तत् सर्वं सर्वस्व-शब्देन प्रतीयेत । तदेव देयम् । तद्दानसंयोगात् तस्यैव स्वत्वविशिष्टस्य दानेन संयोगात् । 'सर्वस्वं ददाति' इति सर्वस्वशब्देन दक्षिणाकाले स्वत्वेन विद्यमानस्यैव देयत्वेन उक्तत्वात् । तेन भूतस्य भविष्यतो वा न देयता कथंचिदपि । इति सिद्धान्तः । के.

* दक्षिणाकाले विद्यमानस्यैव सर्वस्वस्य विश्वजिति दानम् । विश्वजित्प्रघट्टके अधिकरणं द्रष्टव्यम् । भा. ६।७।६।७.

* दक्षिणादानं अदृष्टार्थं सारस्वते सत्रे कामेष्टौ । भा. १०।२।१५।४५–४६, * दक्षिणादानं ऋत्विक्परि-क्रयार्थं उदवसानीये, तस्य सत्रानङ्गत्वात् । उदवसानीय-न्यायः द्रष्टव्यः । १०।२।१२।३९–४०. * दक्षिणादानं चयने ऋत्वङ्गम् । प्रीत्युत्पादकत्वात् गुणविधिरेव कल्पसूत्र-मूलभूतश्रुतौ अधिकदक्षिणाविधानात् । उभयसमुच्चये सिद्धे, या अधिका दक्षिणा दीयते सा यथा प्रीतिजनिका स्यात्, तथा देया, 'योऽग्निं चिनुते तं दक्षिणाभिः राधयेत्' इति श्रुतेः । संकर्ष. १।१।८. * दक्षिणादानेन कर्मकराणामृत्विजां परिक्रयः यजमानेन कर्तव्यः । वि.

३।८।१, * दक्षिणादानस्य यजमानकर्मत्वेऽपि वचनात् क्वचित् स्वयमातृण्णाख्येष्टकोपधाने गोत्रयदानमध्वर्योः कर्म । ३।८।२, * दक्षिणादाने द्वादशशतादिपरिमाण-नियमः मन्त्रवत्त्वनियमश्च अदृष्टार्थः । १०।२।८, * दक्षिणादानोत्तरं चात्वाले कृष्णविषाणाप्रासनं प्रतिपत्तिः ज्योतिष्टोमे । ४।२।७.

* दक्षिणानयनं पौण्डरीके प्रत्यहं विभज्य । भा. १०।६।१८।६९–७२.

⌛ दक्षिणान्यायः ज्योतिष्टोमादौ दक्षिणादानं ऋत्विगानत्यर्थम् ॥

**ऋत्विग्दानं धर्ममात्रार्थं स्याद्ददातिसामर्थ्यात् । १०।२।८।२३॥**

**भाष्यम्**— अस्ति ज्योतिष्टोमः 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति । तत्रेदं समामनन्ति 'गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा' । इदं चापरं श्रूयते, 'ऋत्विग्भ्यो दक्षिणां ददाति' इति । तत्र संशयः किं दानं धर्ममात्रम्, उत ऋत्विगानमनमिति । किं प्राप्तम् ? ऋत्विग्दानं धर्ममात्रं स्यात् । तस्य हि कर्तव्यता श्रूयते । ददातिकर्तव्यता अस्माच्छब्दात् गम्यते । ऋत्विगानमनं कर्तव्यं वाक्याद्गम्यते । श्रुतिश्च वाक्याद्बलीयसी । लोकेऽपि अदृष्टार्थतैव ददातेर्गम्यते, इति सामर्थ्यादेव न आनमनादि । अपिच कर्माननुरूपमपि दाक्षिण्यं क्वचित् श्रूयते, त्रैधातवीयायां सहस्रम्, ऋतपेये सोमचमसः । अपिच यत्रोच्चनीचपण्यपणः क्रियते, स परिक्रयो भवति, न यत्र नियतपरिमाणं दानम् । तस्माद्धर्ममात्रं दानम् । अपिच नियमवत् मन्त्रवच्च क्रियते । तददृष्टार्थत्वेन अवकल्पते । क्वचिच्च श्रूयते 'दण्डः, उपानहौ, शुष्का दृतिः, सा हि दक्षिणा' इति । को हि दण्डेन आनमेत् । तस्माद्धर्ममात्रं दानमिति ।

**परिक्रयार्थं वा, कर्मसंयोगाल्लोकवत् । २४ ॥**

**भाष्यम्**— परिक्रयार्थं वा दानम् । कुतः ? कर्मसंयोगात् । कर्मसंयुक्तेभ्यः श्रूयते 'ऋत्विग्भ्यो दक्षिणां ददाति' इति । तत्र दृष्टं प्रयोजनमुत्सृज्य न शक्यमदृष्टं कल्पयितुम् । यदपि नियमाददृष्टम्, तदपि दृष्टद्वारमेव । अनेन नियतेन नियतगुणकेन दानेन आनम्यमाना ऋत्विजः अभ्युदयकारिणो भवन्ति । कथम् ? आनमने गुणभूतः त्यागश्चोद्यते, न प्रधानभूतः । वाक्यार्थश्च अवश्यं ग्रहीतव्यः । इतरथा ऋत्विग्भ्य इत्येतदेव पदमनर्थकं स्यात् । अगृह्यमाणे सुतरां श्रुतिर्बाध्येत । यच्च न कर्मानुरूपं दाक्षिण्यमिति । नैतावता दृष्टोऽर्थः सन् अपह्नूयेत । नियमात् दृष्टद्वारमदृष्टमित्युक्तमेव । वचनप्रामाण्याच्च दण्डोऽवगम्यते । अपिच भवति तत्र या च यावती च आनमनमात्रा । लोकेऽपि हि काष्ठवाहप्रभृतिभ्यो अदीयते, तदसंकीर्तितेऽपि परिक्रये, आनमनार्थमेव भवति । तस्मात् परिक्रयार्थं दक्षिणादानमिति ।

**दक्षिणायुक्तवचनाच्च । २५ ॥**

**भाष्यम्**— दक्षिणायुक्तवचनाच्च लिङ्गात् परिक्रयार्थं दानमिति पश्यामः । दक्षिणायुक्ता वहन्ति ऋत्विज इति ।

**न चान्येनानम्येत परिक्रयात् कर्मणः परार्थत्वात् । २६ ॥**

**भाष्यम्**— इतश्च परिक्रयार्थं दानमिति । कुतः ? नान्तरेण परिक्रयं परार्थे परः प्रवर्तते । ननु सामादयोऽपि प्रवर्तनोपायाः । न ब्रूमो न प्रवर्तनोपाया इति । किं तर्हि ? परिक्रयः प्रत्यक्षमाम्नातः इति । अतस्तेनैव परिक्रेतव्या नान्येनेति ।

**परिक्रीतवचनाच्च । २७ ॥**

**भाष्यम्**— परिक्रीतवचनं भवति, तेनायमर्थो द्योत्यते 'दीक्षितमदीक्षिता दक्षिणापरिक्रीता ऋत्विजो याजयन्ति' इति । तस्मादपि परिक्रयार्थं दानमिति ।

**सनिवन्ये च भृतिवचनात् । २८ ॥**

**भाष्यम्**— सनिवनिप्राप्तं सनिवन्यम्, याञ्चाप्राप्तमित्यर्थः । तस्मिन् भृतिवचनं भवति । 'यज्ञो वै देवतानां न समभवत्, तं भृत्या समभावयन् । यद्भृतिं वनुते, यज्ञस्य भृत्यै द्वादशरात्रीर्दीक्षितो भृतिं वन्वीत' इति । यज्ञार्थं यद्दीक्षितं ऋत्विजः परिक्रेतुम्, अन्यच्च यज्ञार्थं साधयितुम्, तस्मिन्नेव भृतिवचनम् । भृतिश्च कर्मकरेभ्य आनत्यर्थं यद्दीयते । तस्मादपि परिक्रयार्थमृत्विग्भ्यो दानमिति ।

नैष्कर्तृकेण संस्तवाच्च । २९ ॥

**भाष्यम्**— नैष्कर्तृकेण च संस्तवो भवति । 'यथा वै दारुहारो नैष्कर्तृको निष्कर्तनभृतः कर्मयोगे वर्तते, एवं वा एते यज्ञस्य ऋत्विजः' इति । नैष्कर्तृको दारुहारः । यथाऽसौ, एवमृत्विज इति ब्रुवन् परिक्रयार्थं दानं दर्शयति ।

**सोम**— न्यादेशस्य बाधेऽपि ऋत्विग्दानस्य सत्रे न बाधः इत्युत्थितेः संगतिः । **सूत्रार्थस्तु**—ऋत्विग्भ्यो दानं धर्ममात्रमदृष्टार्थमेव स्यात्, ददातिसामर्थ्यात्, ददातीति समानपदलक्षणश्रुतिसामर्थ्येन दानस्यैव कर्तव्यत्वावगमादिति ।

**वि**— 'ऋत्विग्दानमदृष्टार्थमानत्यै वा, ऽग्रिमः श्रुतेः । वैरूप्यान्नियमा, न्मैवं दृष्टत्वादानतेः श्रुतिः ॥ भृतौ च नियमादेतददृष्टं स्याद् विरूपता । वचनात् तेन सत्रेषु स्वामिनां न भृतिः क्वचित् ॥' एवं च सति सत्रे ऋत्विजां यजमानत्वात् भृतिरूपा दक्षिणा न काऽपि देया इत्येतत् विचारफलं द्रष्टव्यम् ।

**भाट्ट**— 'ऋत्विग्भ्यो दक्षिणां ददाति' इति तत्रतत्र श्रुतं दक्षिणादानं नारादुपकारकम्, अपि तु दृष्टार्थत्वलाभाय अपेक्षितानत्यर्थमेव । नियमादृष्टस्य कल्पनीयत्वाच्च न धर्मविधिवैयर्थ्यम् । अतः सत्रे स्वत एवानतत्वेन न तत्सिद्धयर्थं दक्षिणादानमिति सिद्धम् । अत एव 'नात्र गौर्दीयते' इति नित्यानुवादोऽपि विध्यन्तरशेषत्वात् संगच्छते ।

**मण्डन**— 'दक्षिणा स्यात् परिक्रयः ।'

**शंकर**— 'आनत्यर्था दक्षिणर्त्विजाम् ।'

* **दक्षिणाभूयस्त्वाच्च** फलभूयस्त्वं भविष्यति । भा. १०।६।१७।६२.

* **दक्षिणाभेदेन** कर्तॄणां भेदात् अङ्गानि भिद्यन्ते । **वि.** ११।४।१ । उत्पत्तिगतेन दक्षिणाभेदेन प्रयोगभेदावगमात् अङ्गानां भेदः । ११।४।३. * **दक्षिणाभेदात्** प्रतिदक्षिणं कर्तृसंबन्धो ( भिन्नो ) भवति । वामनक्रीताः पूर्वस्य त्रिसंयुक्तस्य कर्तारः, अनङ्गं ते उत्तरस्य त्रिसंयुक्तस्य । श्यामपरिक्रीताः उत्तरस्य त्रिसंयुक्तस्य कर्तारः, तेऽपि अनङ्गं पूर्वस्य । **भा.** ११।४।१।२, * **दक्षिणाभेदभिन्नानां** आग्नावैष्णवादीनां भेदेनानुष्ठानं राजसूये । ११।४।१।१-३.

* **दक्षिणायोग्यानि** रथ-शकट-दासी-निष्क-इत्यादीनि सप्तदश द्रव्याणि । प्रतिद्रव्यं च सप्तदशसंख्या । वाजपेये । वि. १०।३।२० । अत्र आपस्तम्बसूत्रं ( तै. सं. भाष्ये १।३।६ ) इत्थं – दक्षिणाकाले सप्तदश रथान् ददाति, सप्तदश अनांसि, सप्तदशाश्वान्, सप्तदश हस्तिनः, सप्तदश निष्कान् सप्तदश दासीः सप्तदशाजाः सप्तदशावीः सप्तदश वासांसि, सप्तदश गवां शतानि इति । अत्र दशैव द्रव्याण्युक्तानि । **के.**

* **दक्षिणारूपयोः** वासोवत्सयोः आग्रयणे अन्वाहार्यधर्मानुष्ठानम् । **भा.** १०।३।७।३५. * **दक्षिणारूपाणां** गवाश्वाश्वतरादिमाषान्तानां सङ्घ एका दक्षिणा ज्योतिष्टोमे । वि. १०।३।१४, * **दक्षिणारूपगोगतद्वादशाधिकशतसंख्याया** ज्योतिष्टोमगतायाः तद्विकृतिगतसंख्या-ऽन्तरेण बाधः । १०।३।११.

* **दक्षिणाविधाने** गोदानस्य विहितत्वात् । **भा.** २।१।६।३१.

* **दक्षिणाशब्दः** कर्मकरानतिसाधनवचनः । **भाट्ट.** ३।७।८. * दक्षिणाशब्दः गुणवचनः यदा द्रव्ये उपसर्जनीभूतः, तदा द्रव्यस्यैव यल्लिङ्गसंख्यं तदेव लभते । **टुप्.** १०।३।१४।५७. * दक्षिणाशब्दश्च परिक्रयार्थो भवति । **भा.** १०।२।११।३८, * दक्षिणाशब्दः दक्षिणाऽवयवे ब्रह्मभागे निविशमानो गौणः स्यात् । न च विद्यमाने मुख्ये गौण उपादीयते । १०।३।१९।७१.

* **दक्षिणाग्नेः** अजस्रपक्षे प्रत्युद्धरणमेव आधानम् । गतश्रियां तु कर्मकाले प्रादुष्करणमेव आधानम् । **संकर्ष.** ३।२।६, * दक्षिणाग्नेः कर्मकाले गार्हपत्यात् प्रत्युद्धरणमेव, न तु पुनःपुनराधानम् । ३।२।६, * दक्षिणाग्नेः निर्मन्थ्यात् गार्हपत्यादेव वा आधानम् । ३।२।४. * '**दक्षिणाग्नौ** अन्वाहार्यं ( नाम दक्षिणार्थं चरुं ) पचन्ति' अत एवासौ 'अन्वाहार्यपचनः' इत्युच्यते । **वि.** १२।२।१. * दक्षिणाग्नौ कर्तव्यौ पिष्टलेपफलीकरणहोमौ स्वस्थानावेव ज्योतिष्टोमे आग्निमारुतादूर्ध्वमनुयाजो-

र्कर्षेऽपि । प्रकृतौ हि अनुयाजोत्तरं तौ भवतः । वा. ५।१।१५।२८.

**दग्धेन्धनवह्निन्यायः** । यथा दग्धानीन्धनानि येन सोऽग्निर्यथा स्वयमेव प्रशाम्यतीति । उक्तं च 'यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति । तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति ॥' इति । साहस्री. २६१.

**दग्धपटन्यायः** । अग्निना दग्धेऽपि पटे यथा चिह्नं दग्धं न भवति, एवं नष्टेऽपि सर्वपदार्थे अभिमानो विद्यते एव, एवंविषयेऽयं प्रवर्तते इति । साहस्री. ५९३.

* अत एव अविद्या **दग्धपटन्यायेन** तावत् तिष्ठति इत्यपि निरस्तम् । निरवयवे एतन्न्यायासंभवात् इति चेन्न । अद्वैत. ४।५।२६. * न च दग्धपटन्यायेन जीवन्मुक्तस्य देहेन्द्रियादिभेदज्ञानसंबन्ध इति वाच्यम् । दग्धपटोऽपि पटवद्भासते शीतनिवारकत्वादिक्रियासिद्ध्यभावात् । श्रीकर. १।१।२ ब्रसू.

**दग्धपत्रन्यायः** यथा पत्रस्य दग्धत्वेऽपि पूर्वाकारेणावस्थानं गृह्यते, एवं यत्र वस्तुनो दाहेऽपि तदाकारप्रतीतिः, तत्रास्य प्रवृत्तिः । साहस्री. २८४.

**दग्धबीजन्यायः** । यथा दग्धस्य बीजस्य नाङ्कुरोत्पादकता, एवमविवेकनाशे न संसारवृक्षप्ररोहः इत्येवं यत्र विवक्षा, तत्रास्य प्रवृत्तिरिति । साहस्री. ४९७.

**दग्धरशनान्यायः** । रशना रज्जुः । दन्त्यमध्योऽपि रसनाशब्दः । यथा दग्धरज्जुः पूर्ववत् त्रिगुणत्वादिरूपेण प्रतीयमानाऽपि निःसारा बुध्यते बुधैः, तथा प्रपञ्चं संसारं प्रतीयमानमपि निःसारं वेत्ति बुध इति । साहस्री. २८३.

* **दण्डः** अपराधिनाम् । 'शारीरो निग्रहो यत्र, तत्र प्रत्येकमिन्नता । हिरण्यादानदण्डस्तु समुदाये समाप्यते ॥' यथा गर्गाः शतं दण्डयन्तामिति गर्गसमुदाये दण्डः । वा. ३।१।६।१२ पृ. ६९७. * दण्ड एक एव सत्रे प्रैषानुवचने । भाट्ट. ४।२।६ पृ. ११६. * दण्डः दीक्षासंस्कारव्यञ्जकः न तु यजमानस्य संस्कारकः । वि. ५।३।११. * दण्डः हस्तचतुष्टयम् । सु. पृ. १२८.

* **दण्डस्य** उपयोगाः । यथा पूर्वे तमोऽवगाहते, अपः प्रविशति, गां च सर्पं च वारयति, अवलम्बनं च भवति । भा. ४।२।६।१७. * दण्डस्य भूतभाव्युपयोगित्वेन संभवत्यपि भाव्यत्वे मैत्रावरुणाय इति चतुर्थ्या 'दण्डी प्रैषानन्वाह' इति प्रैषानुवचनकर्तृत्वेन भाव्युपयोगित्वेन मैत्रावरुणस्यैव भाव्यत्वमुक्तम् । व्यवहारमयूख. पृ. ४८–४९. * दण्डानां सर्वेषां मैत्रावरुणाय दानं सत्रे । भाट्ट. ४।२।६ पृ. ११६. * न तु अप्रतीते दण्डे दण्डिप्रत्ययोऽस्ति । भा. १।३।९।३३ पृ. ३१८.

**दण्डापूपन्यायः** । यथा दण्डनद्धापूपानां दण्डानयनात् अवश्यमानयनम्, तथा युगनद्धवाहित्वादीनि इति केचिदाहुः । वस्तुतस्तु एकत्र स्थापितयोर्दण्डापूपयोः यदा अपूपो नास्ति दण्डस्तु मूषकैर्भक्षितो वर्तते । तत्र यथा मूषकाणां दुष्करदण्डभक्षणसिद्धौ तत्सहचरितापूपभक्षणमपि सिध्यति इति । तथा 'मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः । स्थावरस्य तु सर्वस्य न पिता न पितामहः ॥' इति स्मृतौ स्थावरग्रहणात् निबन्धद्विपदयोः दण्डापूपन्यायात् दानादिनिषेधसिद्धिरिति । साहस्री. १७२.

* तस्मात् लौकिकपरमार्थरजतमेव इदंपदास्पदे स्वरूपेण निषिध्यते इत्येव त्वत्प्राचामाचार्याणां वाचामर्थः । तत्र भ्रमबाधवैयधिकरण्यादिदोषस्तु **दण्डापूपन्यायेन** ममानुकूल एवेति । इति द्वैतिनां शङ्का । सिद्धिव्याख्या. पृ. १३०.

**दण्डापूपिकन्यायः** । 'अन्तरङ्गानपि विधीन्' इत्यत्र अपिशब्दः दण्डापूपिकन्यायद्योतनार्थः । दण्डापूपिकन्याये 'केसरिणमपि हन्यात्' इत्यादौ केसरिहन्तृत्वं, अन्येषामपि सत्त्वानां च हन्तृत्वं लभ्यते । कमुतिकन्याये तु अन्यार्थे तात्पर्यं पर्यवसीयते स्वार्थे निषेधश्च भवति । तत्त्वप्रकाशिका. पृ. २००. * दण्डापूपिकन्यायः । दण्डाकर्षणेन तत्रावलम्बमानमध्वपूपस्यापि आकर्षणमर्थसिद्धम् । इति न्यायार्थः । संग्रहः.

* **दण्डकलितं** आवृत्तिन्यायानां न्याय्यम् । तथा क्रमानुग्रहो भवति । तद्यथा कश्चिदुच्यते अनुवाकः त्रिः पठ्यतां इति । दण्डकलितवदसौ पठ्यते क्रमानुग्रहाय ।

भा. १०।५।२५।८३. * **दण्डकलितवत्** अभ्यासः गवामयने द्वादशाहात् प्राप्तासु त्र्यनीकासु पूर्वपक्षे स्वस्थानविवृद्धया सिद्धान्ते । १०।५।२५।८३, * दण्डकलितवत् आवर्तनीयानां धर्मः । यो ह्युच्यते 'त्रिरनुवाकः पठ्यताम्' इति स आदित आरभ्य परिसमाप्य पुनरादित आरभते इति दडकलितवदावृत्तिः । ५।३।२।३ । यथा दण्डेन भूप्रदेशं संमिमानः पुरुषः आमूलाग्रं कृत्स्नं दण्डं पुनःपुनः पातयति, न तु दण्डस्य प्रत्यवयवं पृथगावृत्तिं करोति तद्वत् । वि. ५।३।२. * दण्डकलितवत् न उपसदां षट्त्वादिसंख्यासंपत्तिः, किंतु स्वस्थानविवृद्धया अग्निचयने । भा. ५।३।२।३.

* **दण्डकल्प्यः** प्रतिषेधो यथा कर्मप्रदीपे 'यजनीयेऽह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते । तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद् द्विजातये ॥' इति । नेयं दक्षिणा ऋत्विगभावात् । अत्र पूर्वदिने अन्वाधाने दण्डविधिरेव कल्प्यः, तेन तु निषेधः कल्प्यते । बाल. पृ. ३०.

* **दण्डचक्रन्यायः** । यथा दण्डचक्रसूत्रसलिलादेर्घटत्वाद्यनेकधर्मावच्छिन्नं प्रति कारणत्वम्, एवं विवक्षायामस्य प्रवृत्तिः । एतेन काव्यमात्रे अदृष्टस्य कारणता, अदृष्टाभ्यासप्रतिभानां च दण्डचक्रन्यायेन कारणतेति काव्यप्रकाशोक्तिः परास्तेति गागाभट्टाः । साहस्री. ४३४.

* **दण्डदानं** मैत्रावरुणाय अग्नीषोमीयविकारे निरुढपशौ असत्यपि दीक्षिते दण्डोत्पत्त्युपादानयोः प्रयोजकम्, तत्पालनस्य तु अप्रयोजकं तदभावात् । बाल. पृ. १०७. * दण्डदानं मैत्रारुवणसंस्काराय अर्थकर्म, न तु प्रतिपत्तिः । 'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति' 'दण्डी प्रैषानन्वाह' । वि. ४।२।६. * **दण्डदानस्य** प्रयोजकं प्रैषानुवचनम्, मैत्रावरुणाय । भाट्ट. ४।२।६.

**दण्डदानन्यायः** । दण्डन्यायः । दण्डप्रदानाधिकरणम् । मैत्रावरुणदण्डदानन्यायः । ज्योतिष्टोमे मैत्रावरुणाय दण्डदानं संस्कारकमर्थकर्म, न प्रतिपत्तिः ॥

**प्रासनवन्मैत्रावरुणाय दण्डप्रदानं, कृतार्थत्वात् । ४।२।६।१६ ॥**

**भाष्यम्**— ज्योतिष्टोमे श्रूयते 'वाग्वै देवेभ्योऽपाक्रामत् यज्ञायातिष्ठमाना । सा वनस्पतीन् प्राविशत् । सैषा वाग् वनस्पतिषु वदति । या दुन्दुभौ, या तूणवे, या वीणायाम् । यद्दीक्षितदण्डं प्रयच्छति वाचमेवावरुन्धे' इति । तथा 'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति' इति । मैत्रावरुणाय दण्डं प्रयच्छति, इत्येतदुदाहरणम् । तत्र संशयः किं दीक्षितधारणे शेषभूतस्य दण्डस्य मैत्रावरुणधारणं प्रतिपत्तिः अथवा अर्थकर्मेति । किं प्राप्तम् ? मैत्रावरुणाय दण्डदानं प्रतिपत्तिः । कुतः ? दीक्षितधारणे कृतार्थत्वात् । 'दण्डेन दीक्षयति' इति शेषभूतस्य अन्यत्र व्यापारे प्रतिपत्तिर्न्याय्या । यथा 'चात्वाले कृष्णविषाणां प्रास्यति' इति कण्डूयने शेषभूतायाः प्रासनं प्रतिपत्तिः । एवमत्रापि द्रष्टव्यम् । द्वितीया च दण्डे विभक्तिः । तस्मात् प्राधान्यमिति ।

**टुप्**— दानस्य मैत्रावरुणः प्रयोजकः, कृष्णविषाणा चात्वाले प्रतिपाद्या इति प्रतिपत्तिः । प्रसङ्गेन उपरितनी चिन्ता । किं सोमलिप्तानां अवभृथगमनं प्रतिपादनम्, उत अर्थकर्मेति ( ४।२।८ इत्यत्र ) । देशार्था अवभृथश्रुतिः ( इत्युक्ते ) देशसंबन्धात् ( देशप्रसङ्गात् ) अन्योऽपि देशः ( समादिः मनसि ) विपरिवर्तमानः ( कालः कर्ता च ) चिन्त्यते किमनूद्यते, ( उत ) नियम्यते इति । नियमप्रसङ्गेन तथोत्तरे अधिकरणे अवतरतः गुणसंस्कारयोरपि नियम एवेति । करणद्रव्यं संस्कुर्वत् (अवघातादि) तेन ( करणेन ) संबध्यते । तस्य ( करणस्य ) स्वरूपमाख्यायते । कीदृशेन व्यापारेण करणमनुष्ठितं भवति इत्यनेन प्रसङ्गेन यागनिरूपणमायातम् । एवं जुहोतिरपि ।

**अर्थकर्म वा, कर्तृसंयोगात् स्रग्वत् । १७ ॥**

**भाष्यम्**— अर्थकर्म वा स्यात् । कर्तृसंयोगात् । कर्तृसंयोगो भवति 'मैत्रावरुणाय दण्डम्' इति । तस्मिंश्च दण्डो गुणभूतः, पुरुषः प्रधानभूतः पुरुषं हि स प्रचरितुं समर्थं करोति । कथम् ? यथा (दण्डसाहाय्येन) पूर्वं तमोऽवगाहते, अपः प्रविशति, गां च सर्पं च वारयति, अवलम्बनं च भवति । अतः पुरुषप्राधान्यान्न प्रतिपत्तिः । स्रग्वच्च द्रष्टव्यम् । यथा स्रजमुद्गात्रे ददाति, इति असत्यपि उपकारे पुरुषस्य प्रयोजनवत्त्वात् निष्प्रयोजनत्वाच्च स्रजो भवति पुरुषप्राधान्यम् । एवमिहापि द्रष्टव्यम् । तस्मान्न प्रतिपत्तिरिति । अथ यदुक्तं द्वितीया-

श्रवणात् दण्डप्राधान्यमिति । उच्यते । 'तथा युक्तं चानीप्सितम्' इति द्वितीया द्रष्टव्या । कुतः ? मैत्रावरुणे चतुर्थीनिर्देशात् । संप्रदाने हि चतुर्थी भवति । संप्रदानं च कर्मणा अभिप्रेयते । तत्र दण्डात् अभिप्रेततरो मैत्रावरुणः इति गम्यते ।

टुप्— दण्डो व्याप्यमानः क्रियया, शब्देनैव मैत्रावरुणार्थः उपदिश्यते । या च द्वितीया दण्डमिति, साऽपि न प्राधान्येन ईप्सितार्था, किं तर्हि, व्याप्यमानतया । मैत्रावरुणो हि तत्र प्रधानभूतः । अत आह **तथायुक्तं चानीप्सितम्** इति द्वितीया भविष्यतीति । तस्मान्न दण्डः प्रधानभूतः । न च दण्डदानमदृष्टाय । तमोऽवगाहनादिषु दृष्टायैव ।

**कर्मयुक्ते च दर्शनात् । १८ ॥**

**भाष्यम्**— 'दण्डी प्रैषानन्वाह' इत्यनूद्यते । तेन प्रचरतो दण्डं प्रदर्शयति । तदर्थकर्मणि सति उपपद्यते । प्रतिपत्तौ तु दण्डो मैत्रावरुणाय दत्तः ततोऽपवृज्येत । तत्कर्म कर्तव्यं च कृतम्, इति न तेन प्रयोजनमिति न धार्येत । तत्रैतद्दर्शनं नोपपद्यते । तथा अहिस्त्वां दशतीति मैत्रावरुणं ब्रूयात्, अहिरिव ह्येष द्रष्टव्य इति । तथा 'मुशल्यन्वाह' इति । मुशलशब्दश्च दण्डे प्रसिद्धः । यथा, कथं नु खलु मुशलिनो माणवका गङ्गां नावतरेयुरिति । तस्मादपि अर्थकर्म ।

टुप्—'दण्डी प्रैषानन्वाह' इत्यनूद्यते (दण्डित्वम्) तेन प्रचरतो दण्डं दर्शयति । प्रतिपत्तित्वे न तस्य धारणं भवेत् । अथ अर्थकर्म ततो ध्रियमाणस्य (दण्डस्य अनुवाददर्शनमुपपद्यते इति परेण संबन्धः), प्रकरणाविशेषात् यद्यत् कुर्यात् तत्तत् दण्डसंयुक्तेन (कर्तव्यं) इति, तस्मात् सर्वत्र दण्डभावात् अनुवाददर्शनमुपपद्यते। ननु अरुणाऽधिकरणे दण्डविधानमुक्तम् 'उपसर्जनार्थो विधीयते' इति (कदाचित् उपसर्जनीभूतोऽर्थो विधित्सितः प्रधानीभूतोऽनुवादः । तद्यथा दण्डी इति उपसर्जनीभूतदण्डकपुरुषप्रधानकः शब्दः अवगम्यते, कदाचित्तु निर्ज्ञाते पुरुषे दण्डगुणविधानार्थमुच्चार्यते 'दण्डी प्रैषानन्वाह' इति अनेन भाष्येण, तत् कथमिह दण्डानुवादोऽभिधीयते ? ) उच्यते । प्रकरणात् सर्वार्थे (दण्डवत्त्वं) प्राप्तं प्रैषानुवचनयोर्निर्दिश्यते (उपसंह्रियते इत्यर्थः) । एवं सति नास्ति (पूर्वापर–) विरोधः । दण्डानुवादोऽपि घटते, (प्रकरणात् प्राप्ते) नियमविधानात् (तत्) उपसर्जनार्थे विधानमपि (अरुणाऽधिकरणोक्तं घटते एव । ततः सिद्धं मैत्रावरुणः प्रयोजकः इति ) ।

**उत्पत्तौ येन संयुक्तं, तदर्थं तच्छ्रुतिहेतुत्वात्, तस्यार्थान्तरगमने शेषत्वात् प्रतिपत्तिः स्यात् । १९॥**

**भाष्यम्**— यदुक्तं यथा कृष्णविषाणाप्रासनमिति । तत्रोच्यते । युक्तं तत्र, उत्पद्यमानं यत् येन प्रयोजनेन संबद्धमुत्पद्यते, तत् तदर्थमेव न्याय्यम् । तस्यान्यत्र गमने प्रतिपत्तिः इत्येतदुपपद्यते, यदि न दृष्टं प्रयोजनं भवति । इह तु दृष्टं प्रयोजनं मैत्रावरुणस्य धारणम् । तस्मात् विषममेतत् ।

शा— दीक्षितस्य दण्डधारणं विधाय पुनराम्नातं 'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति' इति । किं मैत्रावरुणाय दण्डप्रदानं दण्डस्य प्रयोजकमर्थकर्म, उत प्रतिपत्तिकर्म अप्रयोजकमिति । तत्र '**द्वितीयाश्रुतिसंयोगात् कृतार्थत्वाच्च धारणे । मैत्रावरुणहस्तेऽस्य प्रक्षेपः प्रतिपादनम् ॥**' उच्यते । '**चतुर्थ्या संप्रदानत्वं प्रशास्तुरवगम्यते । कर्मणा यमभिप्रैति संप्रदानं तदुच्यते ॥**' द्वितीया तु 'तथायुक्तं चानीप्सितम्' (पा० १।४।५० । ईप्सिततमवत् क्रियया युक्तं अनीप्सितमपि कारकं कर्मसंज्ञं स्यात् । ग्रामं गच्छन् तृणं स्पृशति । तथायुक्तत्वं च समभिव्याहृतधात्वर्थप्रधानव्यापारप्रयोज्यफलाश्रयत्वम्) इति भविष्यति । '**उपयुक्तस्य संस्कारादुपयोक्तव्यसंस्क्रिया । गरीयसी, प्रशास्तुश्च दृष्टं तेन प्रयोजनम् ॥**' स्थित्वा हि प्रैषानुवचने कुर्वतः आलम्बनं भवन् दृष्टार्थ एव दण्डः । निरूढपशौ असत्यपि दीक्षिते मैत्रावरुणार्थेन दण्डोपादानसिद्धिः विचारप्रयोजनम् । (प्रैषानुवचनात् पूर्वं दण्डनाशे पुनस्तत्प्रयुक्तिश्च प्रयोजनम्) ।

सोम— पूर्ववत् प्रत्यवस्थानात् **संगतिः** ।

वि— 'मैत्रावरुणके दण्डदानस्य प्रतिपत्तिता । उतार्थकर्मता, ऽऽद्योऽस्तु धारणे कृतकृत्यतः ॥, युक्तोप-

युक्तसंस्कारादुपयोक्तव्यसंस्क्रिया । स्थित्वा प्रैषानुवचने दण्डोऽपेक्ष्योऽर्थकर्म तत् ॥'

**भाट्ट—** सोमे 'दण्डेन दीक्षयति' इत्यनेन दण्डस्य दीक्षाऽभिव्यञ्जकत्वं विधाय 'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति' इति श्रुतम् । तत्र पूर्ववदेव द्वितीया-संयोगात् मैत्रावरुणसंबन्धिदानं दण्डप्रतिपत्तिः । चतुर्थी षष्ठ्यर्थलक्षिका, 'वेदविदे गां ददाति' इतिवद्वा प्राधान्या-भावेऽपि संप्रदानत्वार्थिकैव । अत एव दीक्षितदण्डस्य दानमात्रेण प्रतिपत्तिसिद्धेर्नावश्यं स एव दण्डो 'दण्डी प्रैषानन्वाह' इत्यनेन प्रैषानुवचने विनियुज्यते । तेन न प्रैषानुवचनं दण्डदानस्य प्रयोजकमिति निरूढपश्वादावपि न तदनुष्ठेयम् । इति प्राप्ते, 'कर्मणा यमभिप्रैति स संप्रदानम्' इति स्मृत्या क्रियां प्रति व्याप्यमानं कर्मकारकं प्रत्यपि संप्रदानस्य व्याप्यमानत्वावगतेर्विधिबलेन कस्य-चिद्व्याप्यमानस्य ईप्सितत्वे कल्प्यमाने '**व्याप्यव्याप्यस्य सुतरां व्याप्यत्वम्**' इति न्यायेन मैत्रावरुणे एव तदवगतेः तस्यैवोद्देश्यत्वम् । संभवति च मैत्रावरुणस्य उपयोगादुद्देश्यत्वम् । वेदविदादौ तु बाधात् स्वर्गादेरेव उद्देश्यता । दृष्टं चालम्बनं दण्डस्य प्रयोजनमिति नादृष्टार्थ-त्वमपि । न चैवं 'दण्डं' इति द्वितीयाऽनुपपत्तिः, सक्तुवत् करणत्वलक्षणार्थत्वात् । यत्तु मूले अनीप्सित-कर्मत्वेन तदुपपत्तिरित्युक्तम्, तत् जुहोतेरपि 'तृतीया च होश्छन्दसि' इत्यादिस्मृत्या सकर्मकत्वावगतेः सक्तुष्वपि तदापत्तेः अनीप्सितकर्मत्वेऽपि च उद्देश्यानेकत्वनिमित्त-कवाक्यभेदापरिहारस्य कौस्तुभे एवोक्तत्वादुपेक्षितम् । अस्तु वा दण्डस्य अनीप्सितकर्मत्वेनैव अन्वयः संप्र-दानस्य तु सत्यपि प्राधान्ये संप्रदानत्वेनैव अन्वयान्न द्विकर्मकत्वापत्तिरित्यपि बोध्यम् । अतश्च दण्डविशिष्ट-दानस्य उपयोगापेक्षायां 'दण्डी प्रैषानन्वाह' इत्यादिना प्रैषानुवचनार्थत्वेन विनियुज्यते । अतो निरूढपश्वादौ दीक्षासोमक्रयाभावेऽपि दण्डदानानुष्ठानं तस्य प्रैषानु-वचनप्रयुक्तत्वान्नानुपपन्नम् ।

**इदं त्विह वक्तव्यम्** । दानस्य दण्डं प्रति अर्थकर्मत्वे-ऽपि दीक्षादण्डस्य कथं दानाङ्गत्वम् । नहि स्वत्वत्यागे कृते यजमानेन स्वयं पुनर्व्यवहर्तुं शक्यम् । न चैतावदेव दण्डकार्यं दीक्षाऽभिव्यञ्जकालम्बनं न परप्राप्तिः, येनोपा-दानलाघवानुरोधेन प्रकृत: एव गृह्येत । न च दान-विध्यनुरोधेन कार्यसंकोचः, तस्य लौकिकदण्डेनापि उप-पत्तेः । प्रतिपत्तित्वे तु कृष्णविषाणावदेव युक्तस्तत्संकोच इति । अत्र ब्रूमः । श्रौतविधेरर्थकर्मत्वेऽपि अस्मदुक्त-प्रयाजशेषाभिघारणन्यायेन आर्थिकदानप्रतिपत्तिविध्यन्तर-कल्पनया प्रकृतेऽपि कार्यसंकोचोपपत्तिः । न चात्र मध्ये प्रतिपत्त्यपेक्षाऽभावेन कल्पकाभावात्तन्न्यायवैलक्षण्यम्, दानविधेर्दण्डान्तरप्रयोजकत्वशक्तिकल्पनाभिया कार्य-संकोचमङ्गीकृत्यापि मध्ये तदपेक्षोपपत्तेः । दृष्टश्च लोके अन्यानुरोधेनापि अवश्यापेक्षितविषये स्वकार्यसंकोचेन अकाले एव तदपकर्षः । शक्यते चात्र स्वत्वत्यागांशस्य मैत्रावरुणोपकारकत्वाभावात् तदंशे दण्डप्रतिपत्त्यर्थत्वं वक्तुम् । स्वस्वत्वात्यागेऽपि समर्पणमात्रेणापि प्रैषानुवचनो-पपत्तेः । अतश्च प्रतिपत्त्यनुरोधेन दीक्षितदण्डस्य तद्वि-षयत्वसिद्धिः । अत एव सत्रे सर्वेषां दण्डानां दानम्, एवं च परप्रयुक्तदण्डोपजीवित्वान्न श्रौतदानविधेः प्रैषानुवचना-देर्वा दीक्षितदण्डसत्त्वे दण्डान्तरानाक्षेपकत्वम्, तन्नाशादौ तु दण्डान्तराक्षेपकत्वं अक्षाभ्यञ्जनन्यायेन ( ४।१।१० ) इष्टमेव । श्रौतदानविधौ एकत्वश्रवणादेकदण्डदानमेव मैत्रावरुणोपकारकमिति सत्रे प्रैषानुवचने एक एव दण्ड इत्यपि बोध्यम् । इदं च दीक्षितदण्डप्रापकवचनस्य पार्थ-सारथ्यादिमीमांसकैरलिखितत्वात् तदभावमभिप्रेत्यो-क्तम् । वस्तुतस्तु तैत्तिरीयशाखायाम् 'यद्दीक्षितदण्डं प्रयच्छति' इति सार्थवादकवाक्यान्तरश्रवणात् 'क्रीते' इति दीक्षितपदरहितवाक्ये प्रतिपत्तिविध्यन्तराकल्पनेऽपि न क्षतिः, तैत्तिरीयवाक्येनैव मैत्रावरुणपदाश्रवणेन दानस्य प्रतिपत्तित्वसिद्धेः । क्रीतवाक्ये तु मैत्रावरुणपद-श्रवणेन तत्प्राधान्यावगतेः तदुपकारार्थत्वमेव । अतश्च तैत्तिरीयवाक्ये यच्छतेः संप्रदानापेक्षायां क्रीतवाक्ये स्वतन्त्रदण्डाक्षेपशक्तिकल्पनागौरवपरिहारार्थं च परस्परा-पेक्षतया दीक्षितदण्डस्यैव मैत्रावरुणोपकारार्थत्वसिद्धिः । न च तैत्तिरीयवाक्ये क्रीतवाक्यविहितदण्डे एव दीक्षासंबन्ध-विधानोपपत्तेः न प्रतिपत्तिविधायकत्वमिति वाच्यम् । तथात्वे दण्डोद्देशेन दीक्षितत्वविधानेऽपि एकप्रसरता-

भङ्गापत्तेः दानस्य अर्थकर्मत्वे प्रमाणाभावः । प्राप्तदानानुवादेन कालमैत्रावरुणरूपोभयविधाने वाक्यभेदापत्तिः । अतः उभयत्रापि दानविधिः, तत्र च दीक्षितपदयुक्तवाक्ये प्रतिपत्तिविधिरेव, संप्रदानाश्रवणात् दीक्षितपदश्रवणाच्च । क्रीतवाक्ये तु उक्तयुक्त्या अर्थकर्मत्वमेव । उभयत्र प्रयोजनं पूर्ववत् । वस्तुतस्तु क्रीतवाक्येऽपि प्रैषानुवचनोपयोगिदण्डसंस्कारकत्वमेव दानस्य इति दण्डस्यापि ईप्सितकर्मत्वमेव । न त्वेतावता दण्डप्रतिपत्तित्वम्, उपयोक्ष्यमाणसंस्कारस्य न्याय्यत्वात् । मैत्रावरुणस्य तु संप्रदानत्वेनैवान्वय इति न कश्चिद्दोषः । सत्रे प्रैषादौ दण्डैकत्वं तु 'दण्डी प्रैषानन्वाह' इत्यत्र प्रथमातिक्रमे कारणाभावादेकवचनान्तेन व्युत्पत्तिमङ्गीकृत्य समर्थनीयमिति दिक् ।

मण्डन— 'दण्डप्रदानं पुनरर्थकर्म ।'

शंकर—'दण्डदानं त्वर्थकर्म ।'

* **दण्डमेखलादयः** दीक्षितस्य दीक्षितत्वाभिव्यञ्जनमात्रार्थाः । **भा.** ५।३।११।२९–३१.

**दण्डसर्पमारणन्यायः** । यत्रायासं विना साक्षात्सिद्धयन्तमर्थमुपेक्ष्य आयासेन परंपरया स एवार्थः साध्यते, तत्रायं न्यायोऽवतरतीति । यथा कश्चित्सर्पं दृष्ट्वा तन्मारणाय दण्डमिच्छन् तमलभमानश्च कुठारं गृहीत्वा तच्छेदाय प्रवर्तते । तस्य दण्डगवेषणायासो यथा वृथा, कुठारेणैव सर्पस्य शक्यवधत्वादिति । **साहस्री.** २५०.

* **दण्डी** इति उपसर्जनीभूतदण्डकपुरुषप्रधानकः शब्दः अवगम्यते, कदाचित्तु निर्ज्ञाते पुरुषे दण्डगुणविधानार्थे उच्चार्यते 'दण्डी प्रैषानन्वाह' इति । यथा 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इति । **भा.** ३।१।६।१२ पृ. ६८७. * 'दण्डी' इति दण्डनिमित्तः पुरुषवचनः, दण्डोऽस्य निमित्तं नाभिधेयः । ( एवं स्वर्गशब्दः प्रीतिसाधनवचनः, न प्रीतिवचनः ) । **भा.** ६।१।१।१ पृ. १३४७ । यत्तूक्तं दण्डिशब्दवदिति, सोऽपि प्रतीते शब्दात् दण्डे, दण्डिनि प्रत्ययमादधाति, अन्तर्गतस्तत्र दण्डशब्दः, स दण्डस्य वाचकः । इह तु स्वर्गशब्द एव प्रीतेरभिधाता । पृ. १३५०, * 'दण्डी प्रैषानन्वाह' इति निर्ज्ञाते पुरुषे दण्डगुणविधानार्थे दण्डपदमुच्चार्यते । अत्र उपसर्जनीभूतोऽर्थो विधित्सितः, प्रधानीभूतश्च अनुवादः । **भा.** ३।१।६।१२ पृ. ६८७. * 'दण्डी प्रैषानन्वाह' इति प्रैषानुवचनार्थत्वेन दण्डदानं विनियुज्यते । **भाट्ट.** ४।२।६. * 'दण्डी प्रैषानन्वाह' मैत्रावरुणः दण्डमवलम्ब्य स्थित्वा प्रैषाननुब्रूयात् । **के.** ४।२।६.

* **दण्डिशब्दः** केवले दण्डे न प्रयुज्यते इति विशिष्टवचनोऽवधार्यते । **वा.** १।३।९।३३ पृ. ३१८. * दण्डिशब्दः विशेषणभूतं दण्डमनभिधायापि तं निमित्तीकृत्य पुरुषमेव वक्ति । **रत्न.** ६।१।१।१. * **दण्डिशब्देन** न तावत् दण्डोऽभिधीयते, अथ च दण्डविशिष्टोऽवगम्यते । **भा.** १।३।९।३३ पृ. ३१७. * **दण्डिशब्दे** हि प्रकृत्या दण्डोऽभिहितः प्रत्ययेन पुरुषः । **रत्न.** ६।१।१।२.

* **दतो धावते** इति ज्योतिष्टोमे दन्तधावनस्य मेधमेवमुपैति इति फलश्रुतिः फलार्थवादः, न तु फलविधिः । **भा.** ४।३।१।१–४.

**दत्ते तु** ( दत्ते त्वर्धं प्रकल्पयेत्—याज्ञ. २।१४८) इति **न्यायः** । यथा जीवत्पितृकविभागे आद्यपक्षे, एवं अन्यपक्षद्वये 'दत्ते तु' इति न्यायेन निर्वाहवत्, पुत्रेच्छयैव पितृवत् निर्वाहो बोध्यः । **बालम्भट्टी.** २।११५.

**दत्ततिलाञ्जलिन्यायः** । यत्र पुत्रादिदत्ततिलाञ्जलिवत् वस्तु उत्सृज्यते, तत्रास्यावतार इति संक्षेपः । **साहस्री.** ५६६.

* **ददातिरुत्सर्गपूर्वकः परस्वत्वेन संबन्धः ।** इदं सुबोधिनीवृत्तौ अधिकं सूत्रम् । ४।२।१४।२९ ॥ मण्डनाचार्यैश्च मीमांसानुक्रमण्यां इदमधिकरणं दानलक्षणप्रतिपादकं पृथक् गृहीतम् । 'अथ ददातिः किंलक्षणकः इति । आत्मनः स्वत्वव्यावृत्तिः परस्य स्वत्वेन संबन्धः । ... ददातिरुत्सर्गपूर्वकः परस्वत्वेन संबन्धः इति' इति च भाष्यम् । 'स्वीयं द्रव्यं परित्यज्य परकीयं यथा भवेत् । तथा संपादनं दानम्' इति विस्तरः । **के.**

* **ददातिः** परस्वत्वमात्ररूपफलवाची । संकल्पितस्वीकरणपूर्वकपरस्वत्वापत्तिस्वस्वत्वध्वंसफलकद्रव्यत्यागः ददातिपदवाच्यः । **मणि.** पृ. १०२.

* दध-शब्दो भागधेयवचनः। तद्यथा कङ्कटकाय दधम्, नापिताय दधं इति । देवदधानि देवभागा इत्यर्थः। भा. १०।८।१२।३२.

* दधि अग्निहोत्रहोमे नित्यं नैमित्तिकं च उभयविधम्। भा. ४।३।३।५–७, * दधि द्व्यहकालम्। ८।२।३।१६. * 'दधि मधु घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यम्' इत्यत्र मधुनि उदके च आज्यधर्माः कर्तव्याः। न सांनाय्यगतपयसो धर्माः। वि. ८।१।१९.

* दध्नेन्द्रियकामस्य जुहुयात् इति अग्निहोत्रात् न कर्मान्तरम्। वि. २।२।११. * दध्नेन्द्रियकामस्य जुहुयात् इत्यत्र प्रकरणप्राप्तमपि सन्तं होममेव धातुरनुवदति, न विधानार्थमपि अन्यदेव गमनादि धात्वर्थान्तरं ब्रवीति। वा. ३।१।७।१४ पृ. ७२२. * दध्नेन्द्रियकामस्य जुहुयात् इत्यत्र होमसंबन्धात् दध्यादेर्गुणात् फलं न तु दधिगुणकं होमान्तरम्। भा. २।२।११।२५–२६.

* दध्नेन्द्रियाधिकरणम् । इन्द्रियकामाधिकरणं द्रष्टव्यम्। भा. २।२।११।२५–२६.

* दध्नेन्द्रियकामाधिकरणन्यायेन एकविंशत्यादेः गुणात् फलावगतिः ( सामिधेनीषु )। सु. पृ. १०५७.

* दध्ना जुहुयात् इन्द्रियकामस्याग्निहोत्रम्। भा. २।२।११।२५, * 'दध्ना जुहोति' इति न कर्मान्तरम्, किंतु अग्निहोत्रे एव गुणविधिः वैकल्पिकः। २।२।१०।२४. * 'दध्ना जुहोति' इत्यादौ गुणविधिना विशिष्टविधिर्बाध्यते। बाल. पृ. १४०. * 'दध्ना जुहोति' इत्यादौ दध्यादिद्रव्यस्य अक्रियारूपत्वेऽपि क्रियाविशेषणतया विधेयता। वि. ५।१।१ वर्णकं २, * 'दध्ना जुहोति' 'दध्नेन्द्रियकामस्य' इति वाक्याभ्यां अग्निहोत्रे दध्नः काम्यत्वं नित्यत्वं चाविरुद्धम्। ४।३।३, * 'दध्ना जुहोति' 'व्रीहिभिर्यजेत' इत्यादौ दध्नो व्रीहीणां च गुणत्वेन विधिः, यागनामत्वासंभवात्। १।४।२, * दध्ना मधुमिश्रेण अग्निचयने अग्नेः प्रोक्षणम्। तच्च सकृदेव, न प्रतीष्टकम्। ९।१।८.

* दध्नः अवदानाभिघारणासादनानि पश्चात् आग्नेयस्य तु पूर्वम्, मुख्यक्रमस्य प्रवृत्तिक्रमात् बलीयस्त्वात्। भा. ५।४।२।२–४. * दध्नः एकस्य क्रत्वर्थत्वे पुरुषार्थत्वे च 'दध्ना जुहोति' 'दध्नेन्द्रियकामस्य जुहुयात्' इति संयोगपृथक्त्वं कारणं इत्युक्ते, 'शेष इति चेत्' ( ४।३।६ ) इति सूत्रेण 'दध्ना जुहोति' इति विहितस्य दध्नः फलापेक्षायां इतरेण इन्द्रियफलत्वोक्तेः एकवाक्यत्वात् संयोगपृथक्त्वाभावमाशङ्क्य, 'नार्थपृथक्त्वात्' ( ४।३।७ ) इति सूत्रेण होमार्थत्वेन विहितस्य दध्नः फलानाकाङ्क्षत्वात् एकवाक्यताभावं वक्ष्यति। सु. पृ. ८३७. * दध्नः एष स्वभावः, यत् पूर्वेद्युरुपक्रान्तं अपरेद्युरभिनिर्वर्तते। भा. ३।६।८।२९.

दध्नः स्यान्मूर्तिसामान्यात्। ८।२।३।१५॥

अग्नीषोमीयः पशुः सांनाय्यविकारः इत्युक्तम्। इदानीं तत्रापि विशेषो वक्तव्यः। अयं अग्नीषोमीयः पशुः, सांनाय्यमध्ये यत् दधि तस्य दध्नः विकारः स्यात्। दध्नो विध्यन्तः पशौ। मूर्तिसामान्यात्। मूर्तिः घनरूपत्वम्। पशुरपि घनः दधि अपि घनमेवेति।

पयो वा, कालसामान्यात्। १६॥

पूर्वपक्षं वाशब्देन निरस्यन् सिद्धान्तमाह। न दधि प्रकृतिः, किंतु पशोः प्रकृतिः पयः, कालसामान्यात्। सद्यस्कालं पयः, पशुरपि सद्यस्कालः इति पयः अन्तरङ्गम्। दधि तु द्व्यहकालं इति बहिरङ्गम्।

पश्वानन्तर्यात्। १७॥

सिद्धान्ते हेत्वन्तरमाह। पयसः पशोः आनन्तर्यं अव्यवहितत्वम्, दध्नस्तु पयसा व्यवहितत्वम्। एतस्मादपि हेतोः पयः अन्तरङ्गं भवति इति तदेव पशोः प्रकृतिः, न दधि।

द्रवत्वं चाविशिष्टम्। १८॥

ननु अग्नीषोमीयस्य पशोः पयो न प्रकृतिः पयो हि द्रवम्। पशुस्तु न द्रवः इति चेत्। न, यद्यपि पशौ कियांश्चित् भागः घनः, तथापि कियांश्चित् भागः द्रवोऽपि वर्तत एव। इति पयसः पशोश्च द्रवत्वं गतिमत्त्वं अविशिष्टं समानमेव। तस्मात् अग्नीषोमीये पशौ ऐष्टिकसांनाय्यैकदेशस्य पयसो विध्यन्तः इति सिद्धान्तः। के.

* दधनि इज्यार्थे प्रणीताधर्माः पाके उपकुर्वन्ति। भा. ३।१।७।१४ पृ. ७१६.

⌛ **दधनिसितान्यायः** । सामिधेनीषु– 'ऋचि प्रणवं दधाति' इति विधानात् प्रत्यृचमन्ते प्रणवः प्रयोज्यः । स च कुण्डबदरन्यायेन ऋगक्षरासंमिश्रो वा दधनिसितान्यायेन तत्संमिश्रो वेति द्वेधाऽपि संभवति । इति पूर्वपक्षः । **संकर्ष** ४।१।११.

* '**दधंश्चरुम्**' इति चन्द्राभ्युदितेष्टौ । तत्र दधनि इज्यार्था धर्माः कर्तव्याः । **भा.** ९।४।१०।४१–४२, * 'दधंश्चरुम्' इति पशुकामेष्टौ । तत्र दधनि प्रदेयधर्मा न भवेयुः । ९।४।११।४३–४४.

* **दध्यभावे** अन्येनाम्लेनापि काञ्जिकादिना ( पयो दधि ) क्रियते । तत्रापि चामिक्षा शब्दो भवति । **भा.** ८।२।४।२२.

* **दध्यादेः** नित्यनैमित्तिकोभयार्थत्वम् । अग्निहोत्रे 'दध्ना जुहोति' इति नित्यार्थं सत् , 'दध्नेन्द्रियकामस्य जुहुयात्' इति नैमित्तिकार्थम् । **भा.** ४।३।३।५–७.

* **दध्यानयनं** आमिक्षाप्रयोज्यम् । यदुद्देशप्रवृत्तकृतिव्यापत्वं यस्य, तत् तस्य प्रयोज्यम् । **भाट्ट.** ४।१।१.

⌛ **दधिक्षीरन्यायः** । ननु दधिक्षीरन्यायवत् स्वस्वरूपपरित्यागपूर्वकरूपान्तरप्राप्तिरेव परिणामः इति चेन्न । ( क्षीरस्वरूपपरित्यागपूर्वकः दधिरूपेण क्षीरस्य परिणामो भवति न स्वरूपमपरित्यज्य ) । **श्रीकर.** १।४।२६ ब्रसू.

⌛ **दधिग्रहः अंश्वदाभ्यानन्तरमेव न तु प्राक्॥**

दधिग्रहो नित्य इत्युक्तम् । स चोपांश्वादिभ्यः पूर्व एव ग्राह्यः । एतदपूर्वविधेस्तेभ्यः पूर्वं पाठात् 'ज्येष्ठो वा एष ग्रहाणाम्' इति श्रुत्याऽपि सर्वग्रहप्राथम्योक्तेः । प्रथमोत्पन्नस्यैव ज्येष्ठत्वेन व्यवहारात् **इति प्राप्ते**, ब्राह्मणक्रमान्मन्त्रक्रमस्य बलवत्त्वात् उपांश्वादिमन्त्रोत्तरमेव दधिग्रहमन्त्रपाठात् प्रशंसायामेव ज्यादेशविधानेन 'ज्येष्ठा वा एता ब्राह्मणाः विदामक्रन्' इत्यादाविव ज्येष्ठशब्दस्य प्राथम्यवाचकत्वाभावात् उपांश्वादिभ्यः परत एव तदिज्या । अत एव गवामानयनकाले दधिग्रहेज्याप्रदर्शनार्थः अर्थवादः 'यथा गावः संजानानाः संगच्छमानाः संगम्यान्योन्यं घ्नन्ति' इत्यादिः संगच्छते । **संकर्ष.** ३।३।८.

* दधिग्रहः । अग्निष्टोमे प्रातःसवने । 'दधिग्रहेण प्रचरति' । **सत्या.** ८।२।१, दधिग्रहपात्रे दधिग्रहं गृह्णाति । हरति ( आहवनीयं प्रति होमार्थं ) । जुहोति । २ । दधिग्रहस्य अंशोरदाभ्यस्य च समानं पात्रम् । २८। औदुम्बरं चतुस्स्रक्ति दधिग्रहपात्रम् । दध्ना द्रव्येण ग्राह्यो ग्रहः दधिग्रहः । **के.** * दधिग्रहः नित्य एव ज्योतिष्टोमे 'यां वै कांचिदध्वर्युर्यजमानश्च देवतामन्तरितः तस्या आवृश्च्येते, यत् प्राजापत्यं दधिग्रहं गृह्णाति, शमयत्येवैनाम्' 'ज्येष्ठो वा एष ग्रहाणाम्' इति देवताक्षोभतत्समाधानोपन्यासस्तु विधेयदधिग्रहस्तुतये अर्थवादः । **वि.** ४।४।५.

⌛ **दधिग्रहः नित्यः काम्यश्च संयोगपृथक्त्वेन॥**

तत्प्राये एव 'दधिग्रहं गृह्णीयात् पशुकामस्य' इति पठिते विधौ अपि उक्तन्यायेन कर्मान्तरत्वे प्राप्ते, लाघवात् फलोद्देशेन धात्वर्थविधिमात्रम्, गुणपदं तु अनुवादः विहितस्य पुनःफलाय विधानात् संयोगपृथक्त्वेन ऐन्द्रवायवाग्रतावत् नित्यकाम्यत्वम् । **संकर्ष.** ३।३।१०.

⌛ **दधिग्रहो नैमित्तिकः श्रुतिसंयोगात्। ४।४। ५।८॥**

ज्योतिष्टोमे 'प्राजापत्यं दधिग्रहं गृह्णाति' इति श्रुतम् । सोऽयं दधिग्रहः किं नित्यः नैमित्तिको वेति विचारे पूर्वपक्षमाह । दधिग्रहः नैमित्तिकः देवतात्यागजन्यदोषपरिहारार्थः । श्रुतिसंयोगात् 'यां वै कांचिदध्वर्युश्च यजमानश्च देवतामन्तरितः तस्या आवृश्च्येते, यत् प्राजापत्यं ग्रहं गृह्णाति शमयत्येवैनाम्' इतिश्रुत्या संयोगात् श्रुत्या निमित्तसंबन्धेन उक्तत्वात् ।

**नित्यश्च ज्येष्ठशब्दात्। ९॥**

द्वितीयं पूर्वपक्षमाह । नित्यश्च नित्यो दधिग्रहः, चकारेण नैमित्तिकश्च । ज्येष्ठशब्दात् । 'ज्येष्ठो वा एष ग्रहाणां यद्दधिग्रहः' इति दधिग्रहे ज्येष्ठशब्दप्रयोगात् । ज्येष्ठत्वं चात्र प्रशस्तत्वम् । तस्मात् नित्यश्च नैमित्तिकश्चासौ ।

**सार्वरूप्याच्च। १०॥**

द्वितीये पूर्वपक्षे हेत्वन्तरमाह । 'सर्वेषां वैतत् देवानां रूपम्, यदेष ग्रहः' इति दधिग्रहस्य सर्वदेवरूपताया उक्तत्वात् नित्यत्वमस्य । तस्मात् नित्यो नैमित्तिकश्चायम् ।

**नित्यो वा स्यादर्थवादात् तयोः कर्मण्यसंबन्धाद्, भङ्गित्वाच्चान्तरायस्य । ११ ॥**

वाशब्दो द्वितीयं पूर्वपक्षं निवर्तयति । दधिग्रहः नित्य एव स्यात् ज्येष्ठशब्दरूपात् सर्वदेवतासारूप्यरूपाच्च अर्थवादात् । यत्तु प्रथमपूर्वपक्षे श्रुतिसंयोग उक्तः तत्राह, कर्मशब्देनात्र क्रियते इति कर्मव्युत्पत्त्या फलं गृह्यते । तयोः अध्वर्युयजमानयोः कर्मणि देवतान्तरायप्रयुक्तदोषपरिहाररूपे कादाचित्के फले दधिग्रहस्य साधनतया असंबन्धात् संबन्धाभावात् नित्यानित्यसंयोगविरोधात् । अन्तरायस्य च भङ्गित्वात् कादाचित्कत्वात् । तस्मान्न नैमित्तकः । तथा च नित्य एव दधिग्रहः इति सिद्धान्तः । **के.**

* दधिग्रहः नैमित्तिकः श्रुतिसंयोगात् ( ४।४।५।८ जै. ) । ज्योतिष्टोमे श्रुतं 'यां वा अध्वर्युश्च यजमानश्च देवतामन्तरितः तस्या आवृश्च्येते यत् प्राजापत्यं दधिग्रहं गृह्णाति शमयत्येवैनाम्' इति । अत्र देवताऽन्तरायो निमित्तं पूर्ववत् यच्छब्दात् इति पूर्वपक्षिते, सिद्धान्तितम् । अकर्तृसमानाधिकरणस्य यच्छब्दस्य निमित्तता प्रतिपादकत्वाभावात् अर्थवादमात्रं अन्तरायश्रवणं इति नित्यो दधिग्रहः इति । अर्थवादश्चायं निमित्तविधिसरूपः । **बाल.** पृ. ५५. * **दधिग्रहस्य** इज्या उपांश्वादिभ्यः परत एव । **संकर्ष.** ३।३।८.

**दधिग्रहाधिकरणम्** । ज्योतिष्टोमे दधिग्रहो नित्यः ॥

**दधिग्रहो नैमित्तिकः श्रुतिसंयोगात्।४।४।५।८॥**

**भाष्यम्**— ज्योतिष्टोमे श्रूयते 'यां वै कांचिदध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्या आवृश्च्येते, यत् प्राजापत्यं दधिग्रहं गृह्णाति, शमयत्येवैनाम्' इति । तत्र संदेहः किं नित्यो दधिग्रहः, उत नैमित्तिक इति । किं प्राप्तम् ? दधिग्रहो नैमित्तिकः स्यात्, श्रुतिसंयोगात् । देवताऽन्तराये निमित्ते श्रूयते । न च नित्योऽन्तरायः । तस्मान्नैमित्तिक इति ।

**नित्यश्च ज्येष्ठशब्दात् । ९ ॥**

**भाष्यम्**—यदुक्तं नैमित्तिक इति, तत् गृह्यते किन्तु नित्यश्च । कुतः ? ज्येष्ठशब्दात् । ज्येष्ठशब्दो भवति, 'ज्येष्ठो वा एष ग्रहाणां यस्यैष गृह्यते, ज्यैष्ठ्यमेव गच्छति' इति । ज्येष्ठशब्दश्च प्राधान्ये प्राथम्ये वा स्यात् । नैष प्रथमो न प्रधानम् । यदि नित्यः, एवं प्रशस्यत्वादुपपद्यते । न जातु चलाचलं प्रशंसन्ति । तस्मान्नित्यश्च नैमित्तिकश्चेति । विनाऽपि निमित्तेन ग्रहीतव्यः, निमित्तेनापि पुनरिति ।

**सार्वरूप्याच्च । १० ॥**

**भाष्यम्**—सर्वरूपता च श्रूयते 'सर्वेषां वैतद्देवानां, रूपं यदेष ग्रहो, यस्यैष गृह्यते सर्वाण्येवैनं रूपाणि पशूनामुपतिष्ठन्ते' इति । नहि देवतारूपमस्माकं किंचिदन्यत् प्रत्यक्षम्, अन्यदतो नित्यत्वात् । तस्मादपि नित्यश्च नैमित्तिकश्चेति ।

**नित्यो वा स्यादर्थवादस्तयोः कर्मण्यसंबन्धाद्, भङ्गित्वाच्चान्तरायस्य । ११ ॥**

**भाष्यम्**— यदुक्तं नित्यो नैमित्तिकश्चेति, तत्र नित्य एव स्यात् । ज्येष्ठशब्दात् सार्वरूप्याच्च । यदुक्तं देवताऽन्तराये निमित्ते श्रूयते इति । न देवताऽन्तरायो निमित्तत्वेन गम्यते । तयोरध्वर्युयजमानयोः कर्मणि अन्तरायेण संबन्धात् । नहि एतत् श्रूयते अध्वर्युणा देवता अन्तरितव्या यजमानेन वेति । अनित्यो हि अन्तरायः । न चैवं शब्दोऽस्ति, 'अन्तराये सति दधिग्रहो ग्रहीतव्यः' इति । विनैव संयोगेन दधिग्रहस्य ग्रहणम्, अन्तरायसमाधानं तु अस्य प्रयोजनमिति । तदेतन्नित्यवत् ग्रहणम्, अनित्यं प्रयोजनम् । नित्यं गृह्णीयात् अनित्यमन्तरायं समाधातुमिति नावकल्पते । तत्र प्रयोजने अनित्यत्वात् ग्रहणे नित्यवच्छ्रुतिर्बाध्येत । अर्थवादत्वे तु न बाध्यते । नहि तदन्तरायं समाधातुं गृह्यते । अन्यदेव प्रयोजनं अस्यास्तीति प्रशंसितुमभिधीयते । दधिग्रहस्य तु सोमाङ्गतैव प्रयोजनमिति । भङ्गित्वाच्च अन्तरायस्य । भङ्गी चान्तरायः अनित्यो नित्यप्रशंसार्थं संकीर्त्यते । तस्मान्नैष दोषः । नित्य एव दधिग्रह इति ।

**टुप्**— नित्य एव स्यात् । कुतः ? निमित्तसंयोगाभावात् । सप्तम्या हि निमित्तमुच्यते । यद्वृत्तेन वा यदिशब्देन वा । इह तु एषामश्रवणम् । अत आह– न चैवं शब्दोऽस्ति यो निमित्तं प्रतिपादयतीति । निमित्तं

ज्योतिष्टोमापूर्वमेव । अतो यदा ज्योतिष्टोमस्तदा निमित्तस्य विद्यमानत्वात् ग्रहणम् । अनित्यस्य च ( अन्तरायस्य ) अर्थेनेति पूर्वमुत्तरेण न संबध्यते । न चेदृक् वचनमस्ति , अन्तरायः कार्य इति , येन कर्म गृह्येत तच्चोभयमपि नास्तीत्युक्तमेव ।

**शा—** ' देवताऽन्तरितो यागो निमित्तेऽयं विधीयते । तस्मान्नैमित्तिकः, सत्यं नित्योऽपि ज्येष्ठशब्दतः ॥ तस्मादुभयरूपः स्यात् नन्वेवं नित्य एव सः । न तु नैमित्तिकः, कस्मान्निमित्तत्वाश्रुतत्वतः ॥' अर्थवादमात्रमन्तरायश्रवणम् , इति नित्य एव स्यात् ।

**सोम—** आमनहोमानां फलश्रुतिसंयोगाभावात् फलार्थत्वाभावेऽपि दधिग्रहस्य निमित्तश्रुतिसंयोगात् नैमित्तिकत्वं इति प्रत्यवस्थानात् संगतिः । अन्तरितः यागात् बहिष्कृतः विस्मृतः । आवृश्च्येते द्रुह्येते । सूत्रे श्रुतिसंयोगात् देवताऽन्तरायनिमित्तश्रुतिसंयोगादित्यर्थः ।

**वि—** ' नित्यनैमित्तिकत्वे वा नित्यतैव दधिग्रहे ।, देवान्तरायाज्ज्यैष्ठ्याच्च स्यादस्योभयरूपता ॥, निमित्तत्वद्योतिनोऽत्र यदिशब्दादयो नहि । अतोऽस्य न निमित्तत्वं केवला नित्यतोचिता ॥ '

**भाट्ट—** सोमे ' यां वै कांचित् अध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्या आवृश्च्येते प्राजापत्यं दधिग्रहं गृह्णीयात् ' इति दधिग्रहो नैमित्तिक एव । यद्यपि चायं यच्छब्दो न निमित्तत्वप्रतिपादकः , देवतापदसमभिव्याहृतस्य अन्तरायनिष्ठनिमित्तत्वाप्रतिपादकत्वात् , देवतायाश्च अन्तरायान्विताया नित्यायाः स्वरूपेण निमित्तत्वायोगाच्च , तथापि देवताऽन्तरायनिमित्तदोषपरिहारफलवत्त्वावगमात् , तस्य च कादाचित्कत्वान्नैमित्तिकत्वम् । अर्थवादान्वयार्थं पदान्तराध्याहारस्यावश्यकत्वाद्वा नैमित्तिकत्वम् । 'ज्येष्ठो ह वा एष ग्रहाणां यद्दधिग्रहः' इति तु वैगुण्यपरिहारार्थत्वेनापि श्रेष्ठत्वादुपपन्नम् । इति प्राप्ते , न तावदार्थवादिकं फलं पर्णमयीन्यायविरोधात् । अर्थवादान्वयस्तु यत्र देवताभावे प्रधानस्यैव लोपापत्तेः तन्निमित्तकमपि वैगुण्यं परिह्रियते , तत्र इतराङ्गवैगुण्यपरिहारे प्रधानसाद्गुण्ये वा का संभावनेत्येवं नानुपपन्नः । न च अन्तरायजनितवैगुण्यध्वंसस्य क्लृप्तत्वेन तं प्रत्येव आर्थवादिकस्य जनकत्वस्य कल्पनयोपपत्तौ द्वारीभूतादृष्टांशकल्पने गौरवमिति वाच्यम् , ज्येष्ठत्वसंस्तवस्य आञ्जस्यानुपपत्तेः, पक्षद्वयेऽपि अन्यतरार्थवादस्य अनाञ्जस्यावश्यकत्वेन प्रकरणपाठस्य पाक्षिकत्वपरिहारार्थं अन्तरायार्थवादस्यैव तदौचित्याच्च । लाघवस्य प्रमाणानुग्राहकत्वेन प्रमाणविरोधे अकिञ्चित्करत्वात् । अतो देवताऽन्तरायनिमित्तवैगुण्यस्य दधिग्रहेण परिहर्तुमशक्यत्वान्नित्यमेव अङ्गं दधिग्रहः ।

**मण्डन—** ' नित्यमियेष दधिग्रहहोमम् । ' सूत्रकारः ।

**शंकर—** ' नित्य एव दधिग्रहः । '

**⌛ दधिग्रहविकारः आज्यसोमग्रहौ कर्मान्तरम् ॥**

दधिग्रहमेव प्रकृत्याम्नातम् ' आज्यग्रहं गृह्णीयात् तेजस्कामस्य , सोमग्रहं गृह्णीयाद् ब्रह्मवर्चसकामस्य ' इति । नित्यत्वेन दध्नः करणत्वेन प्राप्तौ तदपवादेन तद्यागमाश्रित्य फलाय गुणविधी एतौ इन्द्रियकामवाक्यवत् । इति प्राप्ते , ' दध्नेन्द्रियकामस्य ' इत्यत्र दध्नेति तृतीयया गुणस्यैव फलभावनाकरणत्वप्रतीतेः गुणफलसंबन्धविधानेऽपि आज्यसोमयोरिह ग्रहपदेन समस्तयोः तत्रैव करणत्वेन धात्वर्थस्यैव फलभावनाकरणतया दधिग्रहविकृतिभूतयोः काम्यग्रहयोः कर्मान्तरयोरेव इमौ विधी । संकर्ष. ३।३।९.

**⌛ दधिग्रहविकारे सोमग्रहे न सोमधर्माः ॥**

दधिग्रहविकारेऽपि सोमग्रहे सोमधर्मा भवेयुः । ' सोमं क्रीणाति ' इत्यादिसोमविधिषु अपूर्वसाधनसोमोद्देशेन धर्मविधानात् । उद्देश्यताऽवच्छेदकस्य विधेयव्याप्यत्वनियमात् । इति प्राप्ते , ' सोमेन यजेत ' इति विधिगम्यापूर्वसाधनत्वस्यैव उद्देश्यताऽवच्छेदकतया प्रकृतित एव धर्मप्राप्तेः यागस्य कथम्भावानाकाङ्क्षतया च न तत्र सोमधर्माः । संकर्ष. ३।३।११.

**⌛ दधिग्रहविकारे सोमग्रहे सोमधर्माभावेऽपि अभिषवस्याक्षेपः ॥**

उक्तन्यायेनैव अभिषवस्यापि अप्राप्तत्वात् सोमलतांशुभिरेव यागः कार्यः । इति प्राप्ते , चतुःस्रक्तिना पात्रेण ग्रहणस्य प्रकृतितः प्राप्तत्वात् तस्य च प्रथमान्त्यन्यायेन द्रवद्रव्यसाधनत्वेन व्यवस्थितत्वात् , पात्रवशादेव प्रकृतावपि

सान्द्रतरदध्न एव करणत्वेन नियमयितुं युक्तत्वेन आर्थिकत्वाभावात् चोदकतोऽपि द्रवद्रव्याधारत्वद्वारैव पात्रप्राप्तेरभिवस्याक्षेपः । संकर्ष. ३।३।१२.

* दधिग्रहविकृतिभूतौ काम्यौ कर्मान्तरभूतौ सोमग्रहाज्यग्रहौ । संकर्ष. ३।३।९.

⌛ दधित्रापुषं प्रत्यक्षो ज्वर इति न्यायः । ज्वरनिमित्तमिति गम्यते । ( दधिसहिते त्रपुसे नाम फले भक्षिते धातुवैषम्योत्पत्त्या ज्वरः संजायते ) । साहस्री. १९४.

* दधिद्रव्यकत्वं इष्टिप्रकृतिलिङ्गम् । बाल. पृ. ११९.

* दधिन्यायेन महाव्रते काम्येन 'अग्निं नरो दीधितिभिः' इति आज्यशस्त्रार्थे सूक्तप्रयोगेण पुरुषार्थेन क्रतुरपि निष्पद्यते इत्येकस्यैव सूक्तस्य चोदकप्रत्यक्षवचनाभ्यां उभयार्थत्वमविरुद्धम् । संयोगपृथक्त्वन्यायः द्रष्टव्यः । ऐआसा. १।१।२।२२. * नहि अत्र ( 'त्रिवृदग्निष्टुदग्निष्टोमः तस्य वायव्यासु' इत्यत्र ) दधिन्यायेन ( ४।३।३।५–७ ) गुणस्योत्पत्तौ अन्वययोग्यत्वम् । कौ. २।२।१२।२६ पृ. २८०, * रेवतीमात्रं प्राप्ताग्निष्टोमस्तोत्रोत्पत्त्यनुवादेन विधेयं फलोद्देशेन यागविनियोगश्च इति वाक्यभेदतादवस्थ्यात् दधिन्यायेन अत्र लाघवात् गुणफलसंबन्धविधिरेव ( पूर्वपक्षे ) । २।२।१२।२६ पृ. २८०. * लाघवात् गुण एव रेवत्यधिकरणकवारवन्तीयाख्यः रेवत्याख्य एव वा अप्राप्तत्वात् फलोद्देशेन विधियते इति द्वितीयः पूर्वपक्षः । अतो दधिन्यायेन गुणफलसंबन्ध एव युक्तः । भाट्ट. २।२।१२.

* दधिपयसी— इज्यार्थे प्रणीताधर्मानुपलभेते । ( अभ्युदितेष्टौ यागार्थयोरपि दधिपयसोः सह श्रपयति इति प्राकरणिकेन वाक्येन तण्डुलैः सह श्रपणविधानेन प्रसङ्गात् प्रणीताकार्यापन्नत्वेन तद्धर्माः प्राप्नुवन्ति ) । वा. २।२।१२।२७ पृ. ५५५.

⌛ दधिपयसी प्रत्यक्षो ज्वरः इति न्यायः । ज्वरजनकत्वात् दधिपयःसमाहारस्य ज्वरत्वेन व्यपदेशः । संग्रहः.

* दधिपयसोः इज्यार्थयोः प्रणीताकार्यश्रपणानङ्गत्वेऽपि श्रपणोपकारित्वात् तद्गतानां प्रणीताधर्माणां श्रपणाङ्गत्वोपपत्तिः । दधिपयसोः श्रपणापूर्वसिद्ध्यर्थत्वात् निरङ्गयोश्च अपूर्वसाधनत्वायोगात् श्रपणापूर्वसाधनीभूतदधिपयोऽर्थतया चोदकेन प्रणीताधर्माणां विधानात् श्रपणाङ्गत्वं युक्तम् । सु. पृ. १४९०. * दधिपयसोः चतसृभिः कुम्भीभिरेव साकंप्रस्थायीये होमे कृते सति हविःशेषाभावात् स्विष्टकृदादिशेषकार्यलोपः । वि. ३।५।२.

⌛ दधिपयसोः पशुकामेष्टौ प्रदेयधर्मा नानुष्ठेयाः ॥

अपनयो वाऽर्थान्तरे विधानाच्चरुपयोवत् । ९।४।११।४३ ॥

भाष्यम्— अस्ति पशुकामेष्टिः 'यः पशुकामः स्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात् । ये क्षोदिष्ठास्तानग्नये सनिमतेऽष्टाकपालं निर्वपेत्, ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुम्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम्' इति । शृते चरुम्, दधंश्चरुं इत्येतदुदाहरणम् । अत्र संदेहः किं शृते दधनि च इज्यार्था दधिपयोधर्माः कर्तव्याः, उत नेति । किं प्राप्तम् ? पूर्वेणाधिकरणेन कर्तव्या इति । समाना हि श्रुतिर्भवतीति । सिद्धवच्च शृतोपदेशः, सत्सु प्रदानार्थेषु धर्मेषूपपद्यते । एवं प्राप्ते, ब्रूमः । अपनयो वा धर्माणां भवेत् । अर्थान्तरे हि एतत् पयो विधीयते दधि च श्रयणार्थे, न प्रदानार्थे, सप्तमीसंयोगात् । चरुपयोवत् । यथा प्रायणीये चरौ पयसि प्रदेयधर्मा न क्रियन्ते, सप्तमीसंयोगात् । एवमिहापि ।

लक्षणार्था शृतश्रुतिः । ४४ ॥

भाष्यम्— अथ यदुक्तं सिद्धवत् शृतोपदेशो भवतीति, नैष दोषः । श्रयणेन द्रव्यं लक्षयिष्यति । अर्थप्राप्तं हि चरौ श्रयणम्, तत्संबद्धं लक्ष्यते । श्रयणवति द्रव्ये चरुरिति । तस्मात् प्रदेयधर्मा न भवेयुरिति ।

सोम—पूर्वापवादात् संगतिः । सूत्रार्थस्तु—प्रदेयत्वापनयो वा चरुपयोवत् प्रणीताकार्ये विधानात् इति ।

वि— 'स न्यायः पशुकामेष्टौ प्रायणीयनयोऽथवा ।, तुल्यश्रुतित्वात् स्यादाद्यो, ऽपूर्वकर्मत्वतोऽन्तिमः ॥' प्रणीताधर्मा एवात्र कार्याः ।

भाट्ट— 'यः पशुकामः स्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्, ये क्षोदिष्ठास्तानग्नये सनिमतेऽष्टाकपालं निर्वपेत्, ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुम्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम्' इत्यत्रापि यद्यपि अपनयविध्यभावात् कर्मान्तरत्वं षष्ठे उपपादितम्, तथापि अभ्युदितेष्टितुल्यश्रुतित्वात् वत्सापाकरणश्रुतिबलाच्च सप्तम्यर्थाविवक्षया प्रदेयत्वावगतेः प्रदेयधर्मान् मन्वानस्योत्तरम्। वत्सापाकरणविधिबलेन हृदस्यपयोव्याचृत्तावपि अधिकरणत्वाविवक्षायां प्रमाणाभावात् प्रदेयत्वानुपपत्तेर्न प्रदेयधर्माः आदित्यचरुवत्। ९।४।१०.

मण्डन—'न ते स्युः पशुकामेष्टौ।' ते प्रदेयधर्माः।

शंकर— 'पशुकामेष्टौ तु नैवम्।' १२. एवं अभ्युदयेष्टाविव प्रदेयधर्माः न।

* दधिपयसोः प्रणीताधर्मानुष्ठानं (चन्द्रस्य-) अभ्युदितेष्टौ। भा. ९।२।१४।४३–४६, * दधिपयसोः प्रदेयधर्मा अनुष्ठेयाः (चन्द्रस्य) अभ्युदितेष्टौ। ९।४।१०।४१–४२. * दधिपयसोः सौविष्टकृताग्नेयपूर्वोत्तरत्वयोरबाधात् तन्त्रता। 'अग्नये भ्राजस्वते पुरोडाशमष्टाकपालम्' इत्यादिना विहितायां चक्षुष्कामेष्टौ। संकर्ष. ४।४।९.

* दधियागः पशुकामेष्टौ सप्तयागगतः सांनाय्यस्य विकृतिः। वि. १२।२।७ वर्णकं २.

* दधिविशिष्टस्य होमस्य फले विधौ स्वपदार्थस्यैव अन्यान्वयविधानात् संनिकृष्टविध्युपपत्तिः। सु. पृ. ८४४.

* दधिहोमसंबन्धो वाक्येन विधीयते इति पूर्वाधिकरणभाष्योक्तेन न्यायेन रेवतीषु इति सप्तमीश्रुतेः (२।२।११) अधिकरणभूताभ्यो रेवतीभ्यः फलं इत्यवगमात्। सु. पृ. ८५४.

* दन्तधावनं संस्कारः न फलप्रयुक्तः, तत्र फलश्रुतिरर्थवादः, तच्च क्रत्वर्थं याजमानं ज्योतिष्टोमे। भा. ४।३।१।१–४, * दन्तधावनस्य 'दतो धावते' इत्यस्य ज्योतिष्टोमे 'मेधमेवमुपैति' इति फलश्रुतिः फलार्थवादः, न तु फलविधिः। ४।३।१।१–३.

* दब्धिमन्त्रः 'दब्धिरस्यदब्धो भूयासममुं दभेयं' इति मध्यवर्ती सन् मध्यवर्तिनः उपांशुयाजस्याङ्गं यथासंख्यपाठात् दर्शपूर्णमासयोः। दब्धिः घातुकमायुधम्। वि. ३।३।५.

* दमयन्ती नलस्य पत्नी। वा. ३।४।१।९.

* दरिद्रस्यापि धनार्जनोत्तरमधिकारः कर्मसु। वि. ६।१।८.

⌛ दर्पणप्रतिबिम्बन्यायः। अयं न्यायः सुरेश्वराचार्येण विवृतः। तथाहि 'अन्तरस्मिन्निमे लोका अन्तर्विश्वमिदं जगत्। बहिर्वन्मायया भाति दर्पणे प्रतिबिम्बवत्॥' इति। साहस्री. ९०६.

⌛ दर्पणमुखावलोकनन्यायः। अयं यादृशं मुखं दर्पणे पश्यति, तादृशमेव दृश्यते इति विषये प्रवर्तते। साहस्री. ८८६.

* दर्भाः दशविधाः। ('कुशाः काशा यवा दूर्वा उशीराश्च सकुन्दकाः। गोधूमा व्रीहयो मौञ्जा दश दर्भाः सबल्वजाः॥'। (धर्मसिन्धुः श्रावणे)। 'कुशः काशः शरो गुन्द्रो यवा दूर्वाऽथ बल्वजाः। गोकेश—मुञ्ज—कुन्दाश्च पूर्वाभावे परः परः॥' निर्णयसिन्धुः (३।२ श्राद्धवस्तूनि इत्यत्र)। वि. ३।२।१. * दर्भैः वेदिस्तरणार्थेभ्यो भिन्नैः विधृती पवित्रं च कर्तव्यम्। भा. ३।८।१७।३२, * न तैरेव दर्भैः प्रयोगान्तरमपि क्रियते। ११।३।४।६. * दर्भाणां प्रागग्रत्वमुदगग्रत्वं वा दैवे कर्मणि। पैतृके कर्मणि तु दक्षिणाग्रत्वम्। वि. ३।४।४. * दर्भाणां लवने प्रतिलवनं 'बर्हिर्देवसदनं दामि' इति लवनमन्त्रस्य आवृत्तिः दर्शपूर्णमासयोः। भा. ११।४।१४।४४–४५.

* 'दर्भपिञ्जूलैः पावयति' अत्रोत्पत्तिवाक्यगताऽपि संख्या कर्मगता न भवति, तेन कर्मभेदो नास्ति तत्र। सोम. २।२।७, * दर्भपिञ्जूलानां एकविंशतेः समुदायेन पावनस्यानुसमयः। भा. ५।२।३।४–५.

* दर्भमन्त्रयोः (दर्भस्य मन्त्रस्य च) प्राकृतयोः वाजपेये माहेन्द्रस्तोत्रोपाकरणसाधनभूतेन रथघोषादिना बाधः। भा. १०।४।१।१–२ वर्णकं ३.

* 'दर्भमयं परिदधाति'। दर्भमयादिवस्त्रं कार्पासादिवस्त्रे सत्यपि परिधेयं अपूर्वार्थत्वात्। वि. ६।८।७. * दर्भमयं वासः पत्नी परिधत्ते महाव्रते। तस्य प्राकृतेन अहतवाससा समुच्चयः। भा. १०।४।७।१३–१५.

मनुवादः यागस्तुत्यर्थः । न चात्र नामधेयं विष्णुः, द्वितीयान्तस्य यजतिसामानाधिकरण्याभावात् । ( एवं दृष्टान्तं परिशोध्य प्रकृतमनुसंधत्ते- ) प्रयाजेष्वपि च मान्त्रवर्णिको देवताविधिः । अग्निसमिदादयश्च ( अग्निशब्देन तनूनपात् प्रदर्शितः ), एवमेव (विष्ण्वादिवदेव) अनूद्यन्ते । संज्ञारूपा वा ( समिदादिशब्दाः ) । यद्यपि ( तत्प्रख्यन्यायेन यजि- ) सामानाधिकरण्यमस्ति, तथापि न च सा ( संज्ञा ) भेदिका, किन्तु अभ्यास एव भेदकः । तदुक्तं द्वितीये ( २।२।२।२ ) ।

**शा**—'**उद्देशपूर्वकस्त्यागो याजिना ह्यभिधीयते । त्यागे च नास्ति कर्मत्वं देवतायाः कथंचन ॥**' तस्मादाराद्दुपकारकाः प्रयाजाः ।

**सोम**— पूर्ववत् उत्थानात् **संगतिः** ।

**वि**—'देवता यजयो वा स्युः प्रयाजे समिदादयः ।, विष्ण्वादिवद् देवतात्वं, न चतुर्थ्याद्यभावतः ॥'

**भाट्ट**— समिदादीनां चतुर्णां प्रयाजानां यदि समिदादिपदैर्द्वितीयाऽन्तैः 'विष्णुं यजति' इतिवत् देवताविधिः, यदि वा विशिष्टविधिगौरवापत्तेर्मन्त्रवर्णादेव समिदादिदेवताविधिः । उत्पत्तिवाक्यस्थं तु समिदादिपदं देवतानुवादो नामधेयमेव वा । सर्वथा संनिपत्योपकारकत्वलाभाय तत्तद्देवतासंस्कारार्थत्वमेव पावर्णहोमस्वाहाकारोत्तमानुयाजादिवदिति । न च समिदादीनामुपयोगाभावः, वेदे सर्वत्र समिदादिपदानामग्निसामानाधिकरण्यदर्शनेन आग्नेये उपयोगसंभवात् । समिन्मात्रस्यैव वा समिन्धनादौ उपयोगसत्त्वेन तस्यैव संनिपत्योपकारकत्वम् । **इति प्राप्ते**, सत्यपि वेदे समिदादिपदानामग्निपदसामानाधिकरण्ये इन्द्रमहेन्द्राधिकरणन्यायेन समिदादिपदैः तत्तत्प्रकाशनानुपपत्तिः । शब्दस्य देवतात्वेन तद्भेदे पदान्तरप्रयोगानुपपत्तेः । **न च** पूर्णमासादिशब्दस्य पार्वणहोमयोर्देवतात्वेऽपि तदर्थस्यापि आग्नेयादेः उद्देशांशविषयशब्दप्रतिपाद्यत्वसंबन्धेन उद्देश्यसंबन्धित्वात् पार्वणहोमसंस्कार्यत्ववत् इहापि समिदादिपदस्य देवतात्वे तत्प्रतिपाद्यस्याग्नेः संस्कार्यत्वोपपत्तिः **इति वाच्यम्** । तथात्वेऽपि 'समिधो अग्न आज्यस्य वियन्तु, तनूनपादग्न आज्यस्य वेतु' इत्यादिमन्त्रवर्णेषु अग्नेः संबोधनेन ततो भिन्नस्यैव समिदादिपदार्थस्य क्रियाऽन्वयप्रतीतेः समिदादिपदस्य अग्निप्रतिपादकत्वाभावात् अग्निसंस्कारकत्वे पशौ अतिदेशानुपपत्तेश्च । यत्तु इतरप्रयाजानां आराद्दुपकारकत्वेऽपि समिद्यागस्य समिन्धनाङ्गभूतसमित्संस्कारकत्वमिति, तन्न । तथात्वे 'यो वै प्रयाजानां मिथुनं वेद, समिधो बह्वीरिव यजति' इति लिङ्गानुपपत्तेः । अत्र हि इवशब्देन वस्तुतो बहुत्वाभावेन आरोपितं बहुत्वमिति सूच्यते । न च तत् समिन्धनाङ्गसमित्सु युज्यते, वस्तुत एव तासां बहुत्वात् । आराद्दुपकारकत्वपक्षे तु सत्यपि बहुवचनान्तसमित्पदस्य देवतात्वे प्रातिपदिकसंज्ञाबलेन एकस्यैव समित्पदार्थस्य सिद्धौ लिङ्गवशेन युक्तो बहुत्वारोपः । तस्मात् चत्वारोऽपि प्रयाजाः आराद्दुपकारका एवेति न विकृतौ ऊहितव्याः । १९.

**मण्डन**— 'समिदादौ यजिविधिः ।' २७.

**शंकर**— 'प्रयाजा अर्थकर्म च ।' ३१.

* दर्शपूर्णमासयोः **प्रयाजे** उत्तमे मान्त्रवर्णिको देवताविधिः । **टुप्**. १०।१।७।१४, * दर्शपूर्णमासयोः **प्रयाजेषु** पाठक्रमो नियामकः । पाठक्रमाधिकरणम् । **भा**. ५।१।४।४, * दर्शपूर्णमासयोः प्रयाजेषु वाक्यपाठेन प्रतीतस्य क्रमस्य नियमोऽस्ति । **वि**. ५।१।४. * दर्शपूर्णमासयोः **प्रयाजादीनां** अङ्गत्वं प्रकरणात् । प्रकरणान्तराधिकरणम् । **भा** ३।३।४।११. * दर्शपूर्णमासयोः प्रयाजादीनां सर्वेषामङ्गानां प्रधानसमुदाये एक एवोपकारो मुख्यः । **वि**. ११।१।२. * दर्शपूर्णमासयोः **प्रयाजद्रव्यार्थं** समानयनं औपभृताज्यस्य प्रयोजकम् । आज्यसमानयनाधिकरणम् । **भा**. ४।१।१५।४०-४१, * दर्शपूर्णमासयोः **प्रयाजवाक्ये** श्रूयते, 'अभिक्रामं जुहोति अभिजित्यै' इति । तस्य अभिक्रमणस्य प्रयाजेष्वेव निवेशः, न सर्वस्मिन् प्रकरणे । अभिक्रमणाधिकरणम् । ३।१।१०।१९-२०, * दर्शपूर्णमासयोः **प्रयाजशेषेण** हविरभिघारणार्थं शेषधारणतत्पात्रे पृथक् न कर्तव्ये । प्रयाजशेषाभिघारणन्यायः । ४।१।१४।३३-३९, * दर्शपूर्णमासयोः **प्रयोगभेदेन** सर्वे कामाः, न तु एकेनैव प्रयोगेण । योगसिद्ध्यधिकरणम् । ४।३।११।२७-२८, * दर्शपूर्णमासयोः **प्रयोगभेदेऽपि** फलैकत्वात् समास-

वचनं 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । ११।४।१।२, * दर्शपूर्णमासयोः **प्रस्तरस्य** प्रहरणं 'आशीर्भिः प्रस्तरं प्रहरति' ( आशीर्भिः सूक्तवाकेन )। ११।३।५।१२. * दर्शपूर्णमासयोः प्रस्तरस्य प्रहरणं 'सह शाखया प्रस्तरं प्रहरति' । **वि.** ४।२।४ । 'सूक्तवाकेन प्रस्तरं प्रहरति' । ९।१।१५. * दर्शपूर्णमासयोः **प्रागूर्ध्वं** चेति सोमस्य द्वौ कालौ । **टुप्.** ५।४।३।६. * दर्शपूर्णमासयोः '**प्राचीमाहरति**' इति शाखावादः, न दिग्वादः। शाखावादः इत्यत्राधिकरणम् । **भा.** ४।२।२।७, * दर्शपूर्णमासयोः **प्राशित्रावदानं** सर्वेभ्य एव, न केवलं आग्नेयादेव । ३।१।१५।२६. * दर्शपूर्णमासयोः **प्राशित्रादिभक्षणं** ऋत्विग्भिरेव कर्तव्यम्, न यजमानेन । वि. ६।४।३. * दर्शपूर्णमासयोः **प्रैषो** नित्यः 'प्रोक्षणीरासादय' इत्यादिः । **भा.** ६।८।८।२८.

**दर्शपूर्णमासयोः प्रैषप्रैषार्थौ भिन्नकर्तृकौ ।** प्रोक्षण्यासादनादि कर्म नाध्वर्योः, किन्तु अग्नीधः ॥

**प्रैषेषु च पराधिकारात् । ३।८।११।२३ ॥**

**भाष्यम्—** स्तो दर्शपूर्णमासौ । तत्र प्रैषाः समाम्नाताः 'प्रोक्षणीरासादय, इध्माबर्हिरुपसादय, स्रुवं च स्रुचश्च संमृड्ढि, पत्नीं संनह्याऽऽज्येनोदेहि' इति । तत्र संदेहः किं य एव प्रैषे, स एव प्रैषार्थे, उतान्यश्च प्रैषेऽन्यश्च प्रैषार्थे, इति । किं प्राप्तम् ? एक एव प्रैषप्रैषार्थयोरिति । कुतः ? समाख्यानात् । अन्यः इति चाश्रुतत्वात् । नन्वात्मनः प्रैषो विप्रतिषिध्यते । उच्यते । न प्रैषो भविष्यति । प्राप्तकाले लोटं वक्ष्यामः । आह । प्राप्तकालेऽपि सति युष्मदादिष्वेव उपपदेषु मध्यमादयो व्यवस्थिताः । न पुरुषसंकरो भवति । उच्यते । सत्यां विवक्षायां युष्मदादिषु मध्यमादयः । यदा तव प्राप्तः काल इति विवक्ष्यते तदा युष्मद्येव मध्यमः, नास्मदि शेषे वा । यदा खलु क्रियायाः प्राप्तः कालः इत्येतावत् विवक्ष्यते, न तव मम वेति, न तदा युष्मदादीनामनुरोधेन मध्यमादयो भवितुमर्हन्ति । न चेदं युगपत् विवक्षितुं शक्यते, पदार्थस्य प्राप्तः कालः तव चेति । भिद्येत हि तथा वाक्यम् । तेन यदि वा निर्ज्ञाते पदार्थकाले 'तव कालः' इति शक्यते वदितुम्, यदि वा तवेति निर्ज्ञाते 'पदार्थस्य कालः' इति । तत्र पदार्थस्य कालो वदितव्यः, न तु युष्मदर्थस्य । तेन हि स्मृतेन प्रयोजनम् । स हि कर्तव्यः इत्यवगतः, न तु युष्मदर्थस्तथा । तस्मात् समाख्यानात् अध्वर्योरेव प्रैषप्रैषार्थौ । **इति प्राप्ते, ब्रूमः** । प्रैषेषु अन्यः, अन्यस्तदर्थेषु इति । कुतः ? पराधिकारात् । परस्मिन् हि प्रैषे उपपद्यते, नात्मनि इति । आह, ननूक्तं प्राप्तकाले भविष्यतीति । उच्यते । न संभवति प्रैषे, प्राप्तकालता न्याय्या । तस्मात् युष्मदर्थो गम्यमानो न विवक्षितः इत्युच्यते । संभवति चात्र प्रैषार्थः तस्मात् प्रैषः । प्रैषश्चेत्, अन्यः प्रैषार्थः इति सिद्धम् ।

**वा—** प्रैषस्य प्रैषार्थस्य च आध्वर्यवसमाख्यातुल्यत्वात् अध्वर्युप्रयोज्यत्वे अवधारिते कथमात्मनः प्रैषः इति चेदाह- नैवायं प्रैषः, किं तर्हि ? **प्राप्तकालतायां लोटं वक्ष्यामः** इति । प्रैषवादी तु आह, प्रत्यगात्मविषया चेत् प्राप्तकालता विवक्षिता, हन्त उत्तमपुरुषेण भवितव्यम् । नहि परविषययुष्मदर्थमन्तरेण मध्यमपुरुषो लभ्यते । प्रैषे तु स्वभावतः परविषयत्वात् सुलभ इति । परस्तु आह, यदा समाख्याऽवगतात् समानकर्तृत्वात् प्रैषबुद्धिरपनीता, तदा प्राप्तकालत्वमभिधीयमानं किं क्रियाणामभिधीयताम्, उत कर्तृणामिति, क्रियाणां इत्येव गम्यते। ताः हि चोदितत्वात् प्रयोजनवत्यः प्रथमतरं प्रतीताः । तासां च अनुष्ठानार्थं प्राप्तकालत्वस्मरणं दृष्टार्थम् । कर्तृप्राप्तकालप्रकाशने तु सर्वं विपरीतम् । आख्यातेषु च प्रथमादेः पुरुषस्य कस्यचित् अवश्यम्भावित्वात् नान्तरीयककृत एव मध्यमपुरुषो भविष्यति । क्रियैव चोच्यते तव प्राप्तकाल इति । यदि च कर्तुः प्राप्तकालत्वमुच्येत, ततः 'किं कर्तुम्' इति साकाङ्क्षमेव स्यात् । अथ 'प्रोक्षण्यासादनादि कर्तुम्' इति ( अध्याह्रियते ), तथा विशिष्टार्थप्रेषणात् वाक्यभेदः स्यात् । तस्मादपि क्रियायाः प्राप्तकालत्वं प्रकाश्यते । अथापि प्रैषोऽयं आश्रीयते, तथापि आत्मानमेव कथञ्चित् शरीरशरीरिणोः अवस्थाऽन्तराणां वा भेदेन प्रेषकं प्रेष्यं च व्यपदेक्ष्यति । इति समानकर्तृकत्वे प्राप्ते, ब्रूमः । प्रैषेषु च इतरमन्यः कुर्यात् इति संबन्धः । ( अत्र प्रैषेषु च इति प्रकृतसूत्रस्थम्,

इतरमन्यः इति पूर्वसूत्रादनुवृत्तम्, कुर्यात् इति अध्याहृतम्) कुतः? स्वभावेनैव तेषां परविषयत्वात् परिक्रयवत्। यत्तु नैवायं प्रैष इति, तदयुक्तम्, मन्त्ररूपादेव प्रैषप्रत्ययोपपत्तेः। यो हि समानकर्तृकतया तं बाधते, तेन समाख्यया लिङ्गं बाधितं स्यात्। न च प्राप्तकालतया लिङ्गविरोधः परिह्रियते, मध्यमपुरुषस्य असंपादनात्। न च शब्दान्तरेण अनुपात्ता क्रिया एवं शक्यते वक्तुं 'तव प्राप्तः कालः' इति। यद्यपि च शक्यते, तथापि न दृष्टः कश्चिदर्थः स्यात् चेतनविषयत्वात् ईदृशस्य प्रयोगस्य। तथा आत्मभेदपरिकल्पनायामपि नैव दृष्टं प्रयोजनम्। गौणताऽत्र स्थितैव। मुख्यं च कार्यं मन्त्राणां इत्यवधारितम् (३।२।१)। ततश्च यद्यपि प्राप्तकालतायामेव लोट्, तथापि परस्यैव सा कथ्यते इति पराधिकारो निवर्तते। न च वाक्यभेदः, विशिष्टार्थप्रेषणात्। अवश्यं चात्र विशिष्टता अभ्युपगन्तव्या प्रोक्षणीपदोपादानात्। न च एकपदोपात्तः अनेकोऽर्थः वाक्यं भिनत्ति। सर्वाख्यातेषु क्रिया–कर्तृ–संख्या–उपग्रह–पुरुषविशेषभावनानां युगपदुपादानस्य अपरिहार्यत्वात्। न च ईदृशं विशिष्टविधानं क्वचित् नाभ्युपगन्तव्यम्। प्राप्तकालत्वे च क्रियायुष्मदर्थयोः पृथक्त्वात् भेदेन शक्तिः कल्प्येत। प्रैषे तु तस्य नित्यमेव युष्मदर्थविषयत्वात् मध्यमपुरुषः अनुवादः। एवं चैषा (प्रैष–)समाख्या अनुगृह्यते। तस्मात् लिङ्गेन समाख्याबाधात् अन्यः प्रैषः, अन्यश्च प्रैषार्थः इति।

**सोम**— पूर्वत्र वचनबलात् आतिदेशिकस्य प्राकृतसमाख्यालब्धस्य कर्तुर्बाधेऽपि, इह वचनाभावात् न समाख्यालब्धकर्तृबाधः इति प्रत्यवस्थानात् **संगतिः**। **सूत्रार्थस्तु**- प्रैषेषु प्रैषार्थमन्यः कुर्यात्, तेषां स्वभावतः परविषयत्वादिति।

वि— 'प्रोक्षण्यासादनं कुर्यादध्वर्युरितरोऽथवा।, आख्ययाऽऽद्यः, सादयेति प्रेषितोऽन्योऽस्तु लिङ्गतः॥'

**भाट्ट**— 'प्रोक्षणीरासादय' इत्यादयः प्रैषाः, प्रैषार्थाश्च प्रोक्षण्यासादनादयः समाख्यानात् अध्वर्युणैव एकेन कर्तव्याः। न च स्वस्मिन् स्वस्य प्रैषानुपपत्तिः 'चेतो वृथा खिद्यसे' इत्यादाविव स्वस्मिन्नपि स्वस्योपदेशसंभवात्। वस्तुतो नैवायं प्रैषः, अपि तु 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' (पा० ३।३।१६३) (कृत्यप्रत्ययाः लोट् च एतेषु अर्थेषु स्युः। तत्र प्रैषो विधिः। अतिसर्गः कामचारानुज्ञा।) इति चकारेण लोटोऽपि प्राप्तकालतायां विधानात् प्राप्तकालतायामयं लोट्। प्रोक्षण्यासादनस्य प्राप्तः काल इति। युष्मदर्थको मध्यमपुरुषस्तु साधुत्वार्थः। अथवा 'हे प्रोक्षण्यासादन तव प्राप्तः कालः' इति क्रियायां चेतनत्वाध्यारोपेण सः। यत्र तु 'अग्नीदग्नीन् विहर' इत्येवं प्रैषः, तत्रास्तु संबोधनानुरोधेन प्रैषार्थस्य आग्नीध्रकर्तृकत्वम्। वस्तुतस्तु 'हे अग्नीत् ममाग्निविहरणस्य प्राप्तः कालः' इति व्याख्यातुं शक्यत्वात् न तत्रापि समाख्याबाधः। **इति प्राप्ते**, समाख्याऽनुरोधेन मध्यमपुरुषस्य साधुत्वेन क्रियायां चैतन्याध्यारोपेण व्याख्याने प्रमाणाभावात् संबोधनमध्यमयोश्च अदृष्टार्थत्वापत्तेः प्रैषत्वसमाख्याबाधापत्तेश्च प्राप्तकालार्थकत्वानुपपत्तेः प्रैषस्यापि स्वस्मिन् औपचारिकत्वापत्त्या एकत्राध्वर्युसमाख्याबाधेन उभयोर्भिन्नकर्तृकत्वमेव।

**मण्डन**— 'प्रैषे तदर्थे च न कर्तुरैक्यम्।' १२.

**शंकर**— 'प्रैषप्रैषार्थकर्तृभित्।' कर्त्रोः भिदा। १४.

* दर्शपूर्णमासयोः **प्रोक्षणं** न व्रीहिस्वरूपप्रयुक्तम्, किन्तु अपूर्वप्रयुक्तम्। **भा.** ९।१।५।११–१९, * दर्शपूर्णमासयोः **प्रोक्षणादीनि** संनिपत्योपकारकाणि अपूर्वप्रयुक्तानि। हन्तिपिष्यधिकरणम्। ९।१।२।२–३, * दर्शपूर्णमासयोः '**प्रोक्षणीरासादय**' इति प्रोक्षणीशब्दः यौगिकः। तेन क्वचित् घृतं प्रोक्षणं भवति। प्रोक्षण्यधिकरणम्। १।४।८।११, * दर्शपूर्णमासयोः **प्रोक्षण्यासादनादि** कर्म नाध्वर्योः, किन्तु अग्नीधः। प्रैषा आध्वर्यवाः इत्यत्राधिकरणम्। ३।८।१२।२४–२५, * दर्शपूर्णमासयोः **फलदेवताप्रकाशका** मन्त्राः अपूर्वप्रयुक्ताः। फलदेवताधिकरणम्। ९।१।३।४–५, * दर्शपूर्णमासयोः **फलभावनायां** अङ्गोपकार उपयुज्यते, नापूर्वस्य फलस्योत्पत्तौ। यद्यपूर्वं फलं अङ्गैरुत्पाद्येत, अङ्गफलमेव तत् स्यात्। ११।१।७।३५. *दर्शपूर्णमासयोः **फलीकरणहोमः** 'अग्नेऽदब्धायो' इति मन्त्रेण अनुयाजोत्तरं दक्षिणाग्नौ।

फलीकरणानि तण्डुलकणाः । असौ चरौ पुरोडाशे च । वि. ५।१।१५, * दर्शपूर्णमासयोः बर्हिः असकृदाच्छिन्नं भवति । पितृयज्ञे तु सकृदाच्छिन्नम् । भा. ११।१।७। ३६–३७. * दर्शपूर्णमासयोः बर्हिः द्विविधं मुख्यं गौणं च । मुख्यं कुशकाशादिदशविधदर्भरूपम् । गौणं तु तृणान्तरं 'उलपं' इत्युच्यते । वि. ३।२।१. * दर्शपूर्णमासयोः बर्हिः बर्हिर्धर्माः वेदिः वेदिधर्माश्च अङ्गप्रधानार्थाः, न केवलं प्रधानार्थाः । वेदिबर्हिर्धर्मन्यायः । भा. ३।७। १।१–५. * दर्शपूर्णमासयोः बर्हिः (मुख्यं) 'यज्ञस्य घोषदसि' इत्यस्मिन्ननुवाके (तैसं. १।१।२) प्रोक्तैर्मन्त्रैः दात्रेण छित्त्वा संपाद्यते । वि. १०।१।१. * दर्शपूर्णमासयोः 'बर्हिर्लुनाति' 'आज्यं विलापयति' 'पुरोडाशं पर्यग्नि करोति' इति बर्हिराज्यपुरोडाशशब्दाः जातिशब्दाः, न संस्कारशब्दाः । भा. १।४।७।१०, * दर्शपूर्णमासयोः 'बर्हिर्लुनाति' इति बर्हिःशब्दो जातिवाची, न संस्कारवाची । तस्मात् यूपावटस्तरणबर्हिर्लौकिकम् । बर्हिराज्याधिकरणम् । १।४।७।१०. * दर्शपूर्णमासयोः बर्हिः संस्कृतं वेद्यामास्तरणे उपक्षीणम्, इति पवित्रं विधृती च परिभोजनीयैः कार्याणि । वि. ३।८।१८, * दर्शपूर्णमासयोः बर्हिः सधर्मकम्, यूपावटस्तरणबर्हिस्तु निर्धर्मकम् । ७।३।७, * दर्शपूर्णमासयोः 'बर्हिषा पूर्णमासे व्रतमुपैति, वत्सैरमावास्यायाम्' । पूर्णमासे बर्हिःसंपादनकाले व्रतग्रहणम्, दर्शे च वत्सापाकरणकाले व्रतग्रहणम् । संनयतः असंनयतश्चेदं व्रतग्रहणम् । असंनयतस्तु वत्सापाकरणोपलक्षिते काले इति विशेषः । ६।४।१२,१३. * दर्शपूर्णमासयोः बर्हिर्धर्माः अङ्गप्रधानोभयार्थाः । द्रव्यसंस्कारन्यायः इत्यत्राधिकरणम् । भा. ३।८।१५।३१. * दर्शपूर्णमासयोः बर्हिर्लवने प्रतिमुष्टि लवनमन्त्रावृत्तिः । वि. ११।४।१५, * दर्शपूर्णमासयोः बर्हिर्लवनादि न सर्वार्थम् । विधृतिपवित्राधिकरणम् । भा. ३।८।१७।३३. * दर्शपूर्णमासयोः बर्हिर्लवनकाले अयुग्वा युग्वा मुष्टीर्लुनाति । वि. ११।४।१५. * दर्शपूर्णमासयोः बर्हिर्लवनमन्त्रस्य मुख्ये कुशे एव विनियोगः । बर्हिर्न्यायः । भा. ३।२।१।१–२, * दर्शपूर्णमासयोः ब्रह्मणो वरणं प्रणीताप्रणयनकाले । प्राक् वरणात् न किञ्चित् ब्रह्मत्वमस्ति, वरणादुत्तरकालं ब्रह्मणः कार्यम् । आनन्तर्थमेव तत् । तत्र अमावास्यायां 'पूर्वेद्युरमावास्यायां वेदिं करोति' इति वचनेनोपदिष्टम् । तस्मिन्नपकृष्यमाणे परिग्रहोऽपि अपकृष्टः प्रसवोऽपि ब्रह्मवरणमपि, प्रधानदेशकालत्वात् गुणानाम् । एवं सति पौर्णमास्यां प्रणयनकाले ब्रह्मवरणम्, अमावास्यायां पूर्वेद्युः । उभयत्रापि अप्रवृत्ते ब्रह्मत्वे एव ब्रह्मवरणम् । तस्मात् उभयत्रापि आनन्तर्थम्, नादृष्टार्थम् । १२।१।१८।३७–४१, * दर्शपूर्णमासयोः भक्षाः इडा–प्राशित्र–चतुर्धाकरण–शंयुवाककालाः सन्ति । १०।२।३।१३. * दर्शपूर्णमासयोः भक्षार्थमवत्तस्य नाशे भक्षलोपः प्रतिपत्तित्वात् । वि. ६।४।२, * दर्शपूर्णमासयोः 'भिन्ने जुहोति', 'स्कन्ने जुहोति' इति भेदनहोमः स्कन्दनहोमश्च दर्शपूर्णमासाङ्गम्, लौकिके नासौ होमः । ६।५।१५. * दर्शपूर्णमासयोः भेदनस्कन्दनाद्यावृत्तौ नैमित्तिकस्य प्रायश्चित्तस्यापि आवृत्तिः । क्रत्वर्थानां नैमित्तिकानां इत्यत्राधिकरणम् । भा. ६।२।९।३०. * दर्शपूर्णमासयोः 'मन्द्रया (वाचा) आज्यभागान्तम्' । सु. पृ. ११८१. * दर्शपूर्णमासयोः 'मयि दक्षक्रतू' इति मन्त्रपाठः क्रतुयुक्तजञ्जभ्यमानपुरुषसंस्कारः । वि. ३।४।९, * दर्शपूर्णमासयोः 'मलवद्वाससा न संवदेत' इति निषेधः केवलपुरुषार्थः, न क्रत्वर्थः । तस्मात् तस्य प्रकरणादुत्कर्षः । क्रतौ तु निषेधोऽर्थसिद्धः 'तामपरुद्ध्य यजेत' इति विधानात् । ३।४।११. * दर्शपूर्णमासयोः मुसलम् 'उलूखलं च मुसलं च यज्ञायुधम्' । वि. ३।८।१० । तदुपयोगस्तु 'उलूखलमुसलाभ्यामवहन्ति' । ३।१।५, * दर्शपूर्णमासयोः 'यजमानः प्रस्तरः' इत्यत्र यजमानशब्दः प्रस्तरस्तुत्यर्थो यागसाधनत्वेन गौणः । १।४।१३. * दर्शपूर्णमासयोः 'यजमानपञ्चमा ऋत्विजः इडां भक्षयन्ति' । भा. १२।१।१५।३१. * दर्शपूर्णमासयोः 'यज्ञं तन्विष्यन्तौ अध्वर्युयजमानौ वाचं यच्छतः' प्रोक्षणमारभ्य हविष्कृदाह्वानपर्यन्तम् । वि. ९।१।७, * दर्शपूर्णमासयोः यज्ञायुधानि तत्तत्क्रियासु व्यवस्थितानि– 'स्फ्येनोद्धन्ति' 'कपालेषु श्रपयति' 'अग्निहोत्रहवण्या हवींषि निर्वपति' 'शूर्पेण विविनक्ति' 'कृष्णाजिनमधस्तादुलूखलस्यावस्तृणाति' 'शम्यायां

दृषदमुपदधाति ' ' उलूखलमुसलाभ्यामवहन्ति ' ' दृषदुपलाभ्यां पिनष्टि ' इति । ३।१।५, * दर्शपूर्णमासयोः **यज्ञायुधानां** दशानां न पुरोडाशादिना समुच्चयो विकल्पो वा संभवति, किन्तु यज्ञसाधनत्वरूपयज्ञायुधत्वानुवादेन ' यज्ञायुधानि संभरति ' इति संभरणविधिः स्तूयते ' स्फ्यश्च कपालानि च, अग्निहोत्रहवणी च शूर्पं च, कृष्णाजिनं च शम्या च, उलूखलं च मुसलं च, दृषच्चोपला च एतानि वै दश यज्ञायुधानि ' इति वाक्येन । ३।१।५. * दर्शपूर्णमासयोः **यज्ञक्रतो**श्चत्वारः ऋत्विजः इति कर्तृणां नियमविधिः नानुवादः । ( ब्रह्मा अध्वर्युः होता आग्नीध्रश्चेति ) । भा. ४।२।९। २३–२४.

**दर्शपूर्णमासयोः याजमानानां प्रयाजाद्यनुमन्त्रणमन्त्राणां क्रमो न नियामकः ॥**

**अनियमोऽन्यत्र । ५।१।३।३ ॥**

**भाष्यम्**— अस्मिन् विषये क्रमस्य नियमो नास्ति। यथा दर्शपूर्णमासयोर्याजमानानां प्रयाजानुमन्त्रणादीनां नानाशाखान्तरसमाम्नातानां ' वसन्तमृतूना प्रीणामि ' इत्येवमादीनां ' एको मम ' इत्येवमादीनां च ।

**टुप्**— ' एको मम ' ' वसन्तमृतूनां प्रीणामि ' इति ( शाखाभेदेन आम्नातानाम् ) प्रयाजानुमन्त्रणमन्त्राणां ( अदृष्टार्थत्वात् ) समुच्चयः । ( तत्र प्रथमे प्रयाजे नियमप्रमाणाभावात् अनियमः । द्वितीयादिषु प्रवृत्त्या नियममाशङ्क्य प्रमाणाभावमाह– ) पाठस्तावत् नास्ति शाखाऽन्तराम्नानात् । श्रुतिरपि नास्ति । नापि अर्थो नियामकः । ( शङ्कते– ) यदि समित्प्रयाजः काठकानुमन्त्रणेन अनुमन्त्रितः, तनूनपात्प्रयाजेऽपि प्रवृत्त्या तदेव प्रथमम् । इति चेत् । तन्न । ये हि सह चोदिताः ( यथा प्राजापत्याः पशवः ), तेषां प्रवृत्तिर्नियन्त्री ( भवति ) । न चैते ( मन्त्राः ) सह चोदिताः । तस्मात् द्वितीयादिष्वपि अनियमः । काण्डक्रमोऽपि नास्ति । भिन्नदेशानां हि ( प्राशानां पशूनामिव साद्यस्के ) सहानुष्ठाने चोदिते ( सति ) ' कः प्रथम आरभ्यताम् ' इति ( अपेक्षायाम् ) यस्यैव बोधकः ( स्मारकः ) पदार्थो विद्यते ( सवनीयपशोः परिग्याणम् ) स प्रथमं क्रियते । इह तु एतदपि नास्ति ( तस्मान्न स्थानक्रमः ) । मुख्यक्रमोऽपि नास्ति । तत्र प्रधानक्रमेण नियमः क्रियते सहचोदितानाम् । इह हि ईदृशमपि नास्ति । अतः ( षण्णामपि क्रमप्रमाणानामभावात् ) अनियमः ।

**शा**— यत्र उक्तवक्ष्यमाणनियमकारणाभावः तत्र अनियम एव क्रमस्य ( अनेन सूत्रार्थ उक्तः । ) ।

**सोम**— यद्यपि सर्वप्रमाणव्युत्पादनानन्तरं ' अनियमोऽन्यत्र ' इति वक्तुं युक्तम्, तथापि नानाशाखागतानां श्रुत्यर्थावेव क्रमनियमे कारणम्, तदभावे तु अनियम एव, तस्य तत्राप्रवृत्तेः इति ज्ञापनाय प्रमाणद्वयव्युत्पादनानन्तरमेतत् **संगतं** इत्याहुः ।

**वि**— ' स्याद् वसन्तादिमन्त्राणां क्रमो नो वा, ऽन्यवद् भवेत् ।, शाखाऽन्तरे व्यत्ययेन न क्रमो नियतोऽत्र हि ॥ '

**भाट्ट**— यत्र उक्तवक्ष्यमाणक्रमनियामकप्रमाणाभावः तत्रानियम एव । यथा प्रयाजानुमन्त्रणानां ' वसन्तमृतूनां प्रीणामि ' इत्यादीनां ' एको मम ' इत्यादीनां च शाखाभेदेन आम्नातानां परस्परम् । अत्र हि यद्यपि वसन्तादिप्रकाशकानां न देवताकल्पकत्वम्, उभयाकाङ्क्षाप्रमाणकाङ्क्षाभावयाज्यामन्त्रकल्प्यसमिदादिदेवताऽवरोधे अन्यतराकाङ्क्षाप्रमाणकाङ्क्षाभावानुमन्त्रणमन्त्रेण तत्कल्पनाऽनुपपत्तेः । एवम् ' एको मम ' इत्यादीनामपि न फलकल्पकत्वम्, निर्ज्ञातपारार्थ्यात् श्रुत्यविनियुक्तत्वाच्च । न चोत्कर्षः, प्रयाजानुमन्त्रणसमाख्यया अत्रैवान्वयेन अन्यत्र सामान्यसंबन्धबोधकप्रमाणाभावात् । अतश्च मनोतामन्त्रवत् लक्षणया प्रयाजीयक्रतूपकाराख्यफलदेवताप्रकाशकत्वेऽपि भिन्नकार्यत्वात् समुच्चय एवोभयोरेकैकस्मिन् प्रयाजे । यत्तु **तन्त्ररत्नादौ** अदृष्टार्थत्वेन समुच्चयाभिधानम्, तत् दृष्टार्थत्वसंभवे तदयोगात्, ' मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत् । शेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम् ॥ ' इत्यनुमन्त्रणलक्षणानुपपत्तेश्चोपेक्षितम् । तत्र च एकैकस्मिन् प्रयाजे द्वयोर्द्वयोर्मन्त्रयोः पठ्यमानयोर्न क्रमनियमः, प्रमाणाभावात् । **ननु** समित्प्रयाजे नियामकाभावेऽपि येन क्रमेण समिदनुमन्त्रितः, तेनैव तनूनपातादयोऽपि, प्रवृत्तिक्रमादिति **चेन्न**, प्राजापत्यपशुषु हि

एकप्रयोगविधिपरिगृहीतेषु पदार्थानुसमये सति प्रकृतौ पाठेन क्लृप्तक्रमयोरुपाकरणनियोजनयोः औपदेशिकपशुसाहित्यानुरोधेन षोडशक्षणव्यवधानेऽपि तदधिकव्यवधाने प्रमाणाभावात्, येनैव क्रमेणोपाकरणम्, तेनैव क्रमेण नियोजनमिति प्रवृत्तिक्रमो युक्तः। प्रकृते तु एकप्रयाजगतयोर्नानाशाखास्थानुमन्त्रणयोः पाठाद्यभावेन अक्लृप्तक्रमत्वात्, सत्यपि च सर्वप्रयाजानामेकप्रयोगविधिपरिग्रहे पदार्थानुसमयासंभवात् एकैकस्मिन् प्रयाजे द्वयोर्द्वयोर्मन्त्रयोः पठनीयत्वान्न प्रयाजान्तरीयमन्त्रस्य प्रयाजान्तरीयमन्त्रेण प्रवृत्तिक्रमः। न च नानाशाखास्थयोः क्लृप्तक्रमत्वाभावेऽपि एकशाखास्थानां पञ्चानामपि मन्त्राणां पाठेन क्लृप्तक्रमत्वात् शाखाऽन्तरीयेणापि अनियतव्यवधाने प्रवृत्तिक्रमबाधापत्तिः, पञ्चानां मन्त्राणां पञ्चप्रयाजाङ्गत्वेन एकशेष्यङ्गत्वाभावात् अवान्तरप्रयोगविधिभेदेन भिन्नप्रयोगविधिपरिगृहीतानां पाठेन क्रमानियमात्। इष्यते च पाशुकानूयाजानां ऐष्टिकपिष्टलेपफलीकरणहोमस्य च महाप्रयोगैकत्वेऽपि भिन्नावान्तरप्रयोगविधिपरिगृहीतत्वेन अक्लृप्तक्रमत्वम्। तस्मादनियमः।

**मण्डन**—'अन्यत्रानियमो भवेत्।' ४.

**शंकर**—'नियतो न त्वमानतः।' क्रमः। ५.

* दर्शपूर्णमासयोः **याज्याऽनुवाक्याऽऽदिमन्त्रपाठ**बलात् आग्नेयपुरोडाशस्य अवदानादिप्रदानान्तं कृत्वा पश्चात् सांनाय्ये तदनुष्ठीयते। **वि. ५।४।२**, * दर्शपूर्णमासयोः **याज्यापाठस्तिष्ठता** कार्यः, **अनुवाक्यापाठस्तु** आसीनेन। १०।४।२२.

**दर्शपूर्णमासयोः याज्यापुरोऽनुवाक्याऽनुवचनं देवतासंस्कारार्थम्॥**

**अन्वाहेति च शस्त्रवत् कर्म स्याच्चोदनाऽन्तरात्। १०।४।२०।३९॥**

**भाष्यम्**— दर्शपूर्णमासयोः श्रूयते 'याज्यामन्वाह' 'पुरोऽनुवाक्यामन्वाह' इति। तत्र संशयः किं याज्यापुरोऽनुवाक्यानुवचनं प्रधानकर्म, उत संस्कारकर्म इति। किं प्राप्तम्? 'अन्वाह' इति प्रधानकर्म स्यात्। कुतः? चोदनाऽन्तरात्। यदि संस्कारकर्म, ततो रूपादेव तयोर्वचनं प्राप्नोति, पुनः 'अन्वाह' इति वचनमनर्थकम्। प्रधानकर्मत्वे तु वक्तव्यम्। नहि अन्यथा तस्य कर्तव्यता गम्यते इति। अतः श्रुत्या कर्तव्यताऽवगमात् प्रधानकर्मेति। शस्त्रवत्। यथा स्तोत्रशस्त्रे, स्तौति शंसतीति कर्तव्यताऽवगमात् प्रधानकर्मणी एवमिहापि द्रष्टव्यम्।

**संस्कारो वा, चोदितस्य शब्दवचनार्थत्वात्। ४०॥**

**भाष्यम्**— संस्कारकर्म वा स्यात्। कुतः? चोदितस्यार्थस्य यः शब्दः, स तद्वचनार्थो भवति। स तस्य दृष्टोऽर्थः। तस्मिन् सति अदृष्टकल्पनायां हेतुर्नास्ति। तस्मात्संस्कारकर्मेति।

**अवाच्यत्वान्नेति चेत्। ४१॥**

**भाष्यम्**— इति यदुक्तम्, तत् परिहर्तव्यम्।

**स्याद् गुणार्थत्वात्। ४२॥**

**भाष्यम्**— स्यात् उपपद्येत 'अन्वाह' इति वचनम्। कुतः? गुणार्थत्वात्। 'तिष्ठन् याज्यामन्वाह' 'आसीनः पुरोऽनुवाक्यामन्वाह' इति स्थानासनगुणार्थं पुनर्वचनमुपपद्यते। तस्मात् संस्कारकर्मणी याज्यापुरोऽनुवाक्ये इति।

**सोम**— पूर्ववैषम्येणोत्थानात् **संगतिः। सूत्रार्थस्तु**—अन्वाहेति विधीयमानमनुवचनं अदृष्टार्थकर्म स्यात् चोदनाऽन्तरात् अदृष्टार्थतया विधानबलात् शस्त्रवत् इति। २१.

**वि**—'अन्वाहेत्यर्थकर्म स्यात् संस्कारो वा, ऽर्थकर्मता। शस्त्रवत् कार्यताज्ञानाद्, दृष्टार्थत्वेन संस्कृतिः॥' २२.

**भाट्ट**—याज्याऽनुवाक्ययोर्लिङ्गात् देवताप्रकाशनार्थत्वसंभवेऽपि 'तिष्ठन् याज्यामन्वाह, आसीनः पुरोनुवाक्याम्' इत्यादिवचनानर्थक्यप्रसङ्गात् स्तोत्रशस्त्राणामिव अनुवचनस्य अदृष्टार्थत्वम्। नहि अनुवचनानुवादेन अत्र गुणविधिः संभवति, अतिप्रसङ्गसांकर्यापत्तेः। याज्याऽनुवाक्ययोर्विशेषणत्वे विशिष्टोद्देशापत्तेश्च। याज्याद्युद्देशेनैव तद्विधौ याज्याऽऽदिकर्मकाध्वर्यवप्रैषेऽपि तदापत्तेः। 'अन्वाह' इत्यनुवादानुपपत्तेश्च। दृष्टार्थत्वे द्वयोर्विकल्पापत्तेः 'आसीनः पुरोनुवाक्याम्' इत्यत्र याज्यापुरोवृत्तित्वस्यापि विधौ वाक्यभेदापत्तेश्च। अतो गुणविशिष्टानु-

वचनस्य अदृष्टार्थत्वात् न देवताऽन्यत्वे विकृतौ प्राकृतयाज्याऽनुवाक्ययोर्बाधः, अपितु वैकृतयाज्याऽनुवाक्यापाठसत्त्वे तेन समुच्चय एव । इति प्राप्ते, यद्यपि लिङ्गकल्प्यविधिप्रवृत्तेः पूर्वं एतद्विधिप्रवृत्तिमङ्गीकृत्य विशिष्टानुवचनविधिः स्यात्, तथापि दृष्टे संभवति अदृष्टकल्पनस्य अन्याय्यत्वात् देवतास्मरणार्थत्वमेव अनुवचनस्य भवेत्, न तु अदृष्टार्थत्वम्। वस्तुतस्तु याज्योद्देशेन अत्र गुणमात्रविधानमेव । न च याज्याकर्मकप्रैषे तदापत्तिः, 'होतारं प्रेष्यति' इति होतुरेव प्रैषे कर्मत्वेन याज्यायास्तत्कर्मत्वाभावात् । अतः अनुवचनस्य नित्यप्राप्ततया याज्योद्देशेनैव गुणमात्रविधिः । 'पुरोऽनुवाक्यामनूच्य याज्यया यजति' इति वाक्यान्तरेणैव समुच्चयप्रतीतेः नासीनवाक्ये पुरःपदार्थविध्याशङ्का । अतो दृष्टार्थत्वात् युक्त एव विकृतौ बाधः । २१.

मण्डन-- 'याज्याऽनुवाक्ये संस्कारौ ।' २३.

शंकर--'याज्याऽनुवाक्या चैवं स्यात् ।' संस्क्रिया । २३.

* दर्शपूर्णमासयोः यावज्जीवमावृत्तिः, पौर्णमास्यमावास्याकालविशिष्टजीवननिमित्तकत्वात्तयोः । वि. ६।२।८. * दर्शपूर्णमासयोः योक्त्रेण पत्नीं संनह्यति । तत् ज्योतिष्टोमे ऐष्टिकेषु कर्मसु सौमिकेन प्रसङ्गसिद्धम् । भा. १२।१।१३।२९. * दर्शपूर्णमासयोः लवनमन्त्रस्य मुख्ये कुशे एव विनियोगः । बर्हिर्न्यायः । वि. ३।२।१, * दर्शपूर्णमासयोः वत्सापाकरणं दोहधर्मः । ३।६।८, * दर्शपूर्णमासयोः वत्सापाकरणं पलाशशाखया । 'यत् पर्णशाखया वत्सानपाकरोति' । ४।२।२, * दर्शपूर्णमासयोः वत्सोपावसर्जनम् ( स्तनपानार्थं मातृसमीपे वत्सस्य मोचनम् ) । द्वादशद्वंद्वगतमिदम् । 'वत्सं चोपावसृजति उखां चाधिश्रयति' । ३।८।१०. * दर्शपूर्णमासयोः वत्सोपावसर्जनउखाधिश्रयणादीनि द्वादश द्वंद्वानि अध्वर्योः कर्म, न यजमानस्य । के. ३।८।९।१९-२१. * दर्शपूर्णमासयोः वाग्यमः 'यज्ञं तन्विष्यन्तौ अध्वर्युयजमानौ वाचं यच्छतः' । अत्र वाग्यमस्य परमापूर्वं न प्रयोजकम्, किन्तु हविष्कृदाह्वाने वाग्विसर्गस्य विहितत्वात् आह्वानात् प्राक् ये प्रोक्षणादयः पदार्थाः तदीयापूर्वं वाग्यमस्य प्रयोजकम् । वि. ९।१।७, * दर्शपूर्णमासयोः विद्वद्वाक्यं 'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजते' इति समुदायानुवादकम् । २।२।३. * दर्शपूर्णमासयोः विद्वद्वाक्यद्वये कालयोगनिमित्तनामधेयावच्छेदेन यजेः कालयोगियागविषयत्वावसायात् भिन्नवाक्यविहितानामपि एककालान्वयात् समुदायः संभवति । सु. पृ. ७२९. * दर्शपूर्णमासयोः विधृती परिभोजनीयादर्भैः कर्तव्ये । भा. ३।८।१७।३३. * दर्शपूर्णमासयोः वेदः दर्भमयी संमार्जनी । 'वेदं कृत्वा वेदिं करोति' । वि. ११।३।१. * दर्शपूर्णमासयोः 'वत्सज्ञानुं पशुकामस्य वेदं कुर्यात्' इति पुरुषार्थम्, न क्रत्वर्थम् । भा. ४।१।२।२ वर्णकं २. * दर्शपूर्णमासयोः वेदद्वयविहितेषु अङ्गेषु नानावेदस्वरे प्राप्ते गुणमुख्यव्यतिक्रमन्यायेन याजुर्वेदिकप्रधानधर्मैः उपांशुत्वं प्राप्नोति, ततो वाचनिकः स्वरो भवति 'मन्द्रया आज्यभागान्तम्, परं मध्यमया, उत्तमया अनुयाजादि' इति । वा. ३।३।२।९ पृ. ८११. * दर्शपूर्णमासयोः वेदवेदीध्मबर्हिरादीनां स्वस्वकाले करणम्, न तु प्रधानस्य काले । अङ्गप्रधानयोः भिन्नदेशकालकर्तृत्वमपि इत्यत्राधिकरणम् । के. ११।३।१।१. * दर्शपूर्णमासयोः वेदिं 'देवस्य त्वा सवितुः प्रसवे इति खनति' । 'स्फ्येन वेदिं परिलिखन् परिगृह्णाति' । 'स्फ्येनोत्तमां त्वचमुद्धन्ति' । परिलेखः परिग्रहश्च परस्तात् वक्ष्यते । वि. १०।१।१. * दर्शपूर्णमासयोः वेदेः 'पूर्वेद्युरमावास्यायां वेदिं करोति' इति पूर्वेद्युरपकर्षः । भा. ५।१।१६।२९. * दर्शपूर्णमासयोः वेद्याः त्रिः प्रोक्षणे 'वेदिरसि बर्हिषे त्वा' इति मन्त्रस्य प्रथमप्रोक्षणे पाठः एकदैव, न प्रतिप्रोक्षणं मन्त्रावृत्तिः, वेदेरेकत्वात् । प्रोक्षणावृत्तिस्तु वाचनिकी । वि. ११।४।१६, * दर्शपूर्णमासयोः वेदिकरणादौ 'योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' इति मन्त्रो द्वेषाभावेऽपि पठनीयः, अपूर्वार्थत्वात् । भा. ६।८।८।२८, * दर्शपूर्णमासयोः वेदिधर्माः अङ्गप्रधानोभयार्थाः । द्रव्यसंस्कारन्यायः । ३।८।१५।३१. * दर्शपूर्णमासयोः वेदिपरिग्रहः ( वेदिमापनं प्राथमिकम् ) 'स्फ्येन वेदिं परिलिखन् परिगृह्णाति' ।

परिलेखनं नाम परितः रेखाकरणम् । वि. १०।१।१. * दर्शपूर्णमासयोः **वेदिप्रोक्षणाङ्गमन्त्रस्य** सकृत् प्रयोगः । वेदिप्रोक्षणन्यायः । भा. ११।४।१५।४९-५०, * दर्शपूर्णमासयोः **वेदिबर्हिरादयः** पदार्थाः सर्वाङ्गप्रधानहविरर्थाः, न प्रधानमात्रार्थाः । वेदिबर्हिर्धर्मन्यायः । ३।७।१।१-५. * दर्शपूर्णमासयोः **वेदिस्तरणे** 'त्रिधातु पञ्चधातु वा वेदिं स्तृणाति' इति तत्र प्रतिधातु स्तरणमन्त्रावृत्तिः । धातुः परिपाटी इति धूर्तस्वामी । मुष्टिमेया दर्भाः ऐकध्येन एकः धातुः इत्युच्यते । वि. ११।४।१५, * दर्शपूर्णमासयोः वेदिस्तरणे मन्त्रः 'स्तृणीत बर्हिः परिधत्त वेदिं जामिं मा हिंसीरनु या शयाना । दर्भैः स्तृणीत हरितैः सुपर्णैर्निष्का इमे यजमानस्य ब्रघ्ने ॥' इति ( के. ) । तत्र मौद्गे चरौ 'पुण्डरीकैः स्तृणीत हरितैः' इत्यूहः कर्तव्यः । ९।३।२. * दर्शपूर्णमासयोः **वैमृधेष्टिः** पूर्णमासस्यैवाङ्गम् । वैमृधन्यायः । भा. ४।३।१३।३२-३५. * दर्शपूर्णमासयोः ( एव ) **वैश्यस्य** सामिधेनीसप्तदश्यम् । ( वार्तिके द्रष्टव्यम् ) । के. ३।६।३।१०. * दर्शपूर्णमासयोः '**वैश्वानरं** द्वादशकपालं निर्वपेदमावास्यां वा पौर्णमासीं वाऽतिपात्य' । अतिपातनं स्वकाले अकरणम् । अस्या वैश्वानरेष्ट्याः पाथिकृतेष्ट्या विकल्पः, अन्योन्यनिरपेक्षत्वात् । वि. १२।३।५, * दर्शपूर्णमासयोः **वैश्वानरेष्टिः** पत्नीसंयाजेषु कपालाग्निहोमे प्रायश्चित्तम् । १०।२।१६.

**दर्शपूर्णमासयोः व्रते वत्साद्युपलक्षितकालस्य विधानम् ॥**

**वत्ससंयोगे व्रतचोदना स्यात् । ६।४।१२।३४ ॥**

**भाष्यम्**— दर्शपूर्णमासयोः श्रूयते 'बर्हिषा वै पौर्णमासे व्रतमुपयन्ति, वत्सैरमावास्यायाम्' इति । तत्र संदेहः किं वत्ससाधनकं व्रतं विधीयते, उत व्रतस्य कालः इति, अथ वत्सो व्रताङ्गमिति । किं प्राप्तम् ? वत्ससाधनकं व्रतं विधीयते इति । अमावास्यायां वत्सैर्व्रतं कुर्यात् इति वत्सव्रतसंयोगः अपूर्वः, स विधीयते । तस्मिंश्च विधीयमाने उभयमपि विहितं भवति, वत्सो व्रतं च ।

**टुप्**— एतदौपोद्घातिकम् । अनेन कालेन कस्मिन् पक्षेऽधिकार इति ।

**कालो वोत्पन्नसंयोगाद् यथोक्तस्य । ३५ ॥**

**भाष्यम्**— यथोक्तस्य वा वचनान्तरेण प्राप्तस्य व्रतस्य कालोऽयं विधीयते । कुतः ? उत्पन्नसंयोगात् । उत्पन्नसंयोगोऽयं व्रतस्य, नोत्पत्तिसंयोगः । कथम् ? 'अमाषममांसं बहुसर्पिष्कं व्रतं व्रतयति' इति विहितं पूर्वं व्रतम् । अप्रज्ञातश्च कालः । तस्मात् कालविधिरिति ।

**अर्थापरिमाणाच्च । ३६ ॥**

**भाष्यम्**— न च शक्योऽत्रार्थः परिमातुम्, वत्सेन व्रतमुपयन्तीति । किं वत्सोऽत्र व्रतयितव्यः एवं वत्सेन व्रतमुपगतं भवति । किं वत्सेन हस्तस्थानीयेन व्रतयितव्यमिति, एवं तदुपेतं भवति । उत वत्सं सनिधाय अन्यदेतदुपेयादिति, नैव व्यवतिष्ठते शास्त्रार्थः । करणं हि एतन्निर्दिष्टम्, नेतिकर्तव्यता । एतावदुक्तम्, वत्ससाधनं व्रतं कुर्यात् । कथमित्येतत् अविशेषाकाङ्क्षमेवावतिष्ठेत । नैवार्थः परिच्छिद्यते, व्रते किं वत्सेन क्रियते इति । अथवा यद्वातद्वेति । तथा वत्सो व्रतेन संबध्यमानः इष्टः स्यात् अपरार्थतामापद्येत । परार्थतां चास्य द्योतयति विभक्तिस्तृतीया । साधकतमे हि सा भवति । तस्मादपि कालार्थः संयोगः ।

**वत्सस्तु श्रुतिसंयोगात्तदङ्गं स्यात् । ३७ ॥**

**भाष्यम्**— यदुक्तं विहितत्वात् व्रतस्यानुवाद इति । सत्यमेवम् । यत्तूक्तम्, कालविधानार्थं इति, तन्न । वत्सस्तदङ्गत्वेन विधीयते । कुतः ? श्रुतिसंयोगात् । वत्से अङ्गे विधीयमाने श्रुतिर्निमित्तम्, काले लक्षणाशब्दः स्यात् । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या । तस्मादङ्गं वत्सः इति ।

**कालस्तु स्यादचोदना । ३८ ॥**

**भाष्यम्**— कालस्तु एष निर्दिश्यते, न वत्सोऽङ्गं विधीयते । नैषा चोदना 'बर्हिषा वै पौर्णमासे व्रतमुपयन्ति, वत्सैरमावास्यायाम्' इति । कथमवगम्यते ? विधिनैकवाक्यत्वात् । परस्ताच्च विधिः समाम्नायते 'पुरा वत्सानामपाकर्तोर्दंपती अश्नीयाताम्' इति । यदि एषोऽपि

विधिः स्यात् वाक्यं भिद्येत । अनुवादश्च तथाभूतस्यार्थस्य भवति । न च वत्साङ्गता प्राप्ता । प्राप्तस्तु कालः ।

**अनर्थकश्च कर्मसंयोगे । ३९ ॥**

**भाष्यम्**— न च शक्यो वत्सोऽत्र व्रतयितुम् । कर्मसंयोगे वत्सेन नार्थः शक्यते कश्चित्कर्तुम् । तस्मादपि न वत्सोऽङ्गम् ।

**अवचनाच्च स्वशब्दस्य । ४० ॥**

**भाष्यम्**-- न चैतदुच्यते 'विशस्य श्रपितं वत्सं व्रतयिष्यते' इति । न चास्यार्थस्य स्वशब्दः श्रूयते । वत्स इत्याकृतिशब्दो मांसे न वर्तते । तस्मादपि काल इति ।

**सोम**-- **सूत्रार्थः**-- 'वत्सैरमावास्यायाम्' इति वत्सव्रतसंयोगे वत्सविशिष्टव्रतवधिः स्यादिति ।

वि-- 'वत्सैर्दर्शे सवत्सस्य वत्समात्रस्य वा विधिः । व्रतकालं लक्षयेद्वा, वत्सयुक्ते व्रते विधिः ॥ भाति रागाद् व्रतप्राप्तेर्वत्समात्रं विधीयते ।, व्रतस्याकरणं वत्सः कालगीस्तदपाकृतेः ॥' वत्सः नाम वत्सापाकरणम् । तदपाकृतेः वत्सापाकरणस्य ।

**भाट्ट**-- सत्रे अप्रवृत्तस्य विश्वजिदित्युक्ते सांनाय्ये अप्रवृत्तस्यैव व्रतमित्युक्त्यर्थं उत्तराधिकरणम्, तदुपोद्घातत्वेन इदं विचार्यते । 'दर्शपूर्णमासयोः बर्हिषा पूर्णमासे व्रतमुपैति, वत्सैरमावास्यायाम्' इति श्रुतम् । तत्र तृतीयया वत्सकरणकभक्षणापरपर्यायव्रतविधिः रागप्राप्तभक्षानुवादेन 'अमाषममांसमसर्पिष्कं व्रतं व्रतयति' इति वचनान्तरप्राप्तभक्षानुवादेन वा वत्समात्रविधिः । इति प्राप्ते, न तावत् वत्सस्य व्रते हस्तादिवत् करणत्वम्, नापि भक्ष्यत्वेन अशक्यत्वात् । नापि मांसप्रकृतित्वेन, विना वचनं विशसने प्रमाणाभावात् । अतः 'पुरा वत्सानपाकर्तोर्दंपती अश्नीयाताम्' इति वचनान्तरैकवाक्यतालाभाय 'बर्हिषा पूर्णमासे' इत्येतत्प्रायपाठाच्च वत्सप्रातिपदिकेन वत्सापाकरणं लक्षयित्वा तृतीयां च इत्थम्भूतलक्षणे व्याख्याय अमावास्योद्देशेन वत्सापाकरणपूर्वकालो व्रताश्रितत्वेन विधीयते । व्रतं च प्रकरणप्राप्तमिति न कश्चिद्विरोधः ।

**मण्डन**-- 'वत्सेन कालं कलयेद् व्रतस्य ।'

**शंकर**-- 'वत्सकाले व्रतं च स्यात् ।'

* दर्शपूर्णमासयोः **व्रतग्रहणं** संनयतः असंनयतश्च । तत्र संनयतः पूर्णमासे बर्हिःसंपादनकाले, दर्शे च वत्सापाकरणकाले । असंनयतस्तु दर्शे वत्सापाकरणोपलक्षिते काले इति विशेषः । व्रतं भोजनम् 'अमाषं अमांसं बहुसर्पिष्कं व्रतयति' । **वि.** ६।४।१२-१३, * दर्शपूर्णमासयोः **व्रीहयः** प्रधानमात्रपर्याप्ताः स्विष्टकृदादिशेषकार्येषु अपर्याप्ता एव यदा लब्धाः, तदाऽपि व्रीहय एवोपादेयाः, शेषकार्याणां तु लोपः कर्तव्यः । तदा च प्रतिनिधिर्न ग्राह्यः । ६।३।२१, * दर्शपूर्णमासयोः '**व्रीहीनवहन्ति**' इत्यवघातो नापूर्वजनकः, दृष्टफलकत्वात् । नियमापूर्वहेतुत्वेन तु विधेयता । २।१।३. * दर्शपूर्णमासयोः 'व्रीहीन् प्रोक्षति' इति प्रोक्षणं न व्रीहिद्रव्यप्रयुक्तम्, किन्तु अपूर्वप्रयुक्तम् । **भा.** ९।१।५।११-१९. * दर्शपूर्णमासयोः **व्रीहीणामपचारे** प्रतिनिधिना कर्म समापनीयम् । **वि.** ६।३।४. * दर्शपूर्णमासयोः व्रीहीणामलाभे प्रतिनिधीनां नीवाराणां प्रयोगे 'व्रीहीणां मेध' इति मन्त्रे व्रीहिपदस्य नोहः । **भा.** ९।३।९।२३-२६. * दर्शपूर्णमासयोः व्रीहीणामसंभवेन नीवारस्वीकारे द्रव्यभेदेऽपि न कर्म भिद्यते । **वि.** ६।३।३, * दर्शपूर्णमासयोः व्रीहीणां यवानां च परस्परं न प्रतिनिधित्वम्, वैकल्पिकत्वात् । ६।३।१२. * दर्शपूर्णमासयोः **व्रीहि**-**आज्य**-सांनाय्यधर्मा व्यवस्थयैव कर्तव्याः, न सांकर्यम् । तेषामर्थाधिकरणम् । **के.** ३।१।४।७-१०. * दर्शपूर्णमासयोः **व्रीहिमयं** ( पुरोडाशं ) संकल्प्य यवमयो न दातव्यः, 'नानृतं वदेत्' इति निषेधात् । **वा.** ३।४।४।१३ **पृ.** ९४३. * दर्शपूर्णमासयोः **व्रीहियवयो**-**र्विकल्पः** । एककार्याणां गुणानामेकस्मिन् कर्मणि विकल्पः । विकल्पाधिकरणम् । **के.** १२।३।४।१०-१५. * दर्शपूर्णमासयोः **शंयू द्वौ** पत्नीसंयाजानां पुरस्तादेकः पश्चादपरः । **वि.** १०।७।१३. * दर्शपूर्णमासयोः **शंयुवाकः** 'तच्छंयोरावृणीमहे' इति मन्त्रः । **के.** * दर्शपूर्णमासयोः **शंयुवाककालीनः** शेषभक्षः कश्चित् । **वि.** १०।२।४, * दर्शपूर्णमासयोः **शम्या** । 'कृष्णाजिनं च शम्या च' यज्ञायुधम् । 'शम्यायां दृषदमुपदधाति' इति तदुपयोगः । ( शम्याः नाम शकटयुगाग्रयोः कृतेषु

छिद्रेषु प्रक्षेप्याः हस्तमात्राः स्थूलशीर्षका यष्टिविशेषाः)। ३।१।५, * दर्शपूर्णमासयोः **शूर्पम्** । 'अग्निहोत्रहवणी च शूर्पं च' इति यज्ञायुधम् । 'शूर्पेण विविनक्ति' इति तदुपयोगः । विवेचनं तुषेभ्यः कणेभ्यश्च तण्डुलानां पृथक्करणम् । ३।१।५. * दर्शपूर्णमासयोः **शेषभक्षः** ऐडादिः संस्कारार्थः उपयुक्तशेषत्वात् द्वितीयानिर्देशाच्च । **भा.** १२।१।१५।३१, * दर्शपूर्णमासयोः **शेषभक्षाः** न परिक्रयार्थाः, किन्तु संस्कारार्थाः । १०।२।९।२९–३३, * दर्शपूर्णमासयोः '**संक्रमयज्ञेन** यजेतान्नाद्यकामः' इति फलविशेषाय गुणविशेषविधिः, न तु संक्रमयज्ञः कर्मान्तरम् । दाक्षायणयज्ञाधिकरणम् । २।३।४।५, * दर्शपूर्णमासयोः **संमार्जनं** पर्यग्निकरणं च गुणकर्म, न प्रधानकर्म । अग्निसंमार्गाधिकरणम् । २।१।४।९–१२, * दर्शपूर्णमासयोः **संयवनं** पुरोडाशधर्मः 'प्रणीताभिर्हवींषि संयौति' । तस्य चरौ बाधः । १०।१।१३।५१ (५४), * दर्शपूर्णमासयोः **संवपनं** पुरोडाशधर्मः । तस्य चरौ बाधः । १०।१।१४।५२ (५५), * दर्शपूर्णमासयोः **सत्यवचनं** क्रत्वर्थमुपेयते पुरुषार्थत्वेन वर्तमानमपि संयोगपृथक्त्वात् । १२।१।११।२२. * दर्शपूर्णमासयोः **सदनकरणं** पुरोडाशस्य, पात्र्यां 'स्योनं ते सदनं०' इति मन्त्रेण । **वि.** ३।३।८. * दर्शपूर्णमासयोः '**समे** दर्शपूर्णमासाभ्यां यजेत' इति देशस्य नियमविधिः न तु अनुवादः । **भा.** ४।२।९।२३–२४. * दर्शपूर्णमासयोः 'समे यजेत इति देशस्य संबन्धः कर्मणा सह विधीयते न तु कर्मान्तरम् । **वि.** २।३।१३, * दर्शपूर्णमासयोः '**समिधो यजति**, तनूनपातं यजति०' इत्यादियजतिपदस्याभ्यासात् भावनाभेदः, तेन कर्मभेदः । २।२।२. * दर्शपूर्णमासयोः **समिदादिजन्यानामपूर्वाणां** भेदः । **भा.** २।२।२।२, * दर्शपूर्णमासयोः **समिदादिशब्दाः** कर्मनामधेयानि । देवताविधिस्तु मान्त्रवर्णिकः । ९।२।१०। ५९–६०. * दर्शपूर्णमासयोः **सर्वफलकत्वेऽपि** प्रतिफलं पृथगनुष्ठानं कर्तव्यम् । योगसिद्ध्यधिकरणम् । **वि.** ४।३।११, * दर्शपूर्णमासयोः **सांनाय्यं** सोमादूर्ध्वमुत्कृष्यते 'नासोमयाजी संनयेत्' इति निषेधात् । सांनाय्यविकारोऽपि 'वैश्वदेव्यामिक्षा' सोमादूर्ध्वमुत्कृष्यते। ५।४।८, * दर्शपूर्णमासयोः **सांनाय्यधर्माः** वत्सापाकरणदोहनादयः प्रथममाम्नाताः, पुरोडाशधर्मा निर्वापावघातादयः पश्चात् । प्रवृत्तिक्रमात् मुख्यक्रमस्य बलवत्त्वात् आग्नेयस्य प्रथममवदानादिप्रदानान्तं कृत्वा पश्चात् सांनाय्यस्य कर्तव्यम् । ५।४।२, * दर्शपूर्णमासयोः **सांनाय्यपात्रशोधनशेषः** 'शुन्धध्वं०' इति मन्त्रः क्रमस्य समाख्यापेक्षया प्राबल्यात् । ३।३।११. * दर्शपूर्णमासयोः '**साकंप्रस्थायीयेन** यजेत पशुकामः' इत्यनेन साकंप्रस्थाप्य( स्थायीय )रूपो गुणः फलाय विधीयते, न कर्मान्तरम् । दाक्षायणयज्ञाधिकरणम् । **भा.** २।३।४। ५–११. * दर्शपूर्णमासयोः **सादनं** पुरोडाशस्य पात्र्यां 'तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' इति मन्त्रेण । **वि.** ३।३।८, * दर्शपूर्णमासयोः **सामिधेन्यः** अङ्गम् । तत्र काम्यपक्षाः 'एकविंशतिं प्रतिष्ठाकामस्य, चतुर्विंशतिं ब्रह्मवर्चसकामस्य' इत्यादि । ४।३।१०, * दर्शपूर्णमासयोः सामिधेन्यः पञ्चदश । पठिता ऋचस्तु एकादशैव । 'त्रिः प्रथमामन्वाह, त्रिरुत्तमाम्' इति विधानात् आवृत्त्या पञ्चदशत्वं संपद्यते । ५।३।३, * दर्शपूर्णमासयोः सामिधेन्यः पञ्चदश, वैश्यस्य तु सप्तदश । ६।६।७, * दर्शपूर्णमासयोः सामिधेन्यः 'प्र वो वाजा अभिद्यवः' इत्याद्याः अग्निसमिन्धनार्थाः ऋचः । **वि.** ३।६।२। सम्यगिध्यते अग्निर्याभिर्ऋग्भिः, ताः सामिधेन्यः । ३।१।११.

**दर्शपूर्णमासयोः सामिधेनीनां काम्यसंख्यायाः विवृद्धौ प्रथमोत्तमे त्रिरभ्यस्य अवशिष्टानामृचामागमेन संख्यायाः पूरणं नाभ्यासेन ॥**

**अभ्यासेन तु संख्यापूरणम्, सामिधेनीष्वभ्यासप्रकृतित्वात् । १०।५।८।२७॥**

**भाष्यम्—** स्तो दर्शपूर्णमासौ । तत्र काम्याः सामिधेनीकल्पाः । 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य, चतुर्विंशतिमनुब्रूयाद् ब्रह्मवर्चसकामस्य, एकविंशतिं च–अनुब्रूयादन्नकामस्य, द्वाविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य, षड्विंशतिमनुब्रूयात् पशुकामस्य' इत्येवमादयः । तत्र अयमर्थः सांशयिकः किं सामिधेनीषु आगमेन संख्या पूरयितव्या, उत अभ्यासेन, उत

यावदुक्तमभ्यस्य शेषमागमेनेति । किं प्राप्तम् ? पूर्वेण न्यायेन आगमः इति । अपिच अविशेषोऽर्थः । अभ्यासेन हि पूर्यमाणा न सामञ्जस्येन स्यात् । तस्मात् आगम इति । एवं प्राप्ते, ब्रूमः । अभ्यासेन तु संख्यापूरणमिति । तुशब्दः पक्षव्यावर्तकः । न आगमः, किं तर्हि ? अभ्यासः । कुतः ? अभ्यासप्रकृतित्वात् । प्रकृतौ अभ्यासेन संख्या पूरिता 'त्रिः प्रथमामन्वाह, त्रिरुत्तमाम्' इति । कथम् ? 'पञ्चदश सामिधेन्यः' इति श्रुतिः, एकादश च समाम्नाताः । तत्र अभ्यासेन आगमेन वा संख्यायां पूरयितव्यायां अभ्यास उक्तः 'त्रिः प्रथमामन्वाह, त्रिरुत्तमाम्' इति । अनेन नियमेन प्रथमोत्तमयोरभ्यासः कर्तव्यः इति । यावत्कृत्वस्तयोरभ्यासे क्रियमाणे पञ्चदशसंख्या पूर्यते तावत्कृत्वः अभ्यसितव्यं इत्येतदभिप्रायं त्रित्वम् । तथा हि दृष्टार्थता । त्रिसंख्याऽभिप्राये अदृष्टं कल्प्यं स्यात् । तस्मात् इहापि तत्प्रकृतित्वात् यावत्कृत्वः अभ्यस्यमानयोः यथोदिता संख्या पूर्यते, तावत्कृत्वः अभ्यसितव्यमिति ।

**अविशेषान्नेति चेत् । २८ ॥**

**भाष्यम्**— इति यदुक्तम्, तत् परिहर्तव्यम् ।

**स्यात् तद्धर्मत्वात् प्रकृतिवदभ्यस्येताऽऽसंख्यापूरणात् । २९ ॥**

**भाष्यम्**— स्यादभ्यासः । कुतः ? प्रकृतिधर्मत्वं हि विकृतेः । तस्मात् आ संख्यापूरणात् अभ्यसितव्यम् । एवं प्रकृतिवत् कृतं भविष्यति । चोदकानुरोधेन अभ्याससामञ्जस्यं अभ्युपगन्तव्यम् । तस्मात् अभ्यास इति ।

**यावदुक्तं वा, कृतपरिमाणत्वात् । ३० ॥**

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति । नैतत् 'आ संख्यापूरणात् प्रथमोत्तमे अभ्यसितव्ये' इति । यावदुक्तमभ्यस्य अवशिष्टानां आगमेन पूरयितव्या संख्येति । कुतः ? कृतपरिमाणत्वात् अभ्यासस्य । कृतं हि अभ्यासस्य परिमाणम् 'त्रिः प्रथमामन्वाह, त्रिरुत्तमाम्' इति । त्रिसंख्या चाभ्यासेन विवक्षिता, न पूरणी संख्या । तथा श्रुतिः परिगृहीता स्यात् । इतरथा लक्षणा । अथ यदुक्तं 'दृष्टार्थता चैवं भवति' इति, नैतदेवम् । आदर्तव्यो हि त्रित्वानुरोधः । द्विचतुष्केणापि हि संख्या पूर्यते । तथापि प्रथमोत्तमयोः त्रिः अभ्यास अनुष्ठेयः, तेन संख्या पूरयितव्येति । इहापि तेनैव अभ्यासेन संख्या पूर्यते । भवति हि सोऽपि अत्र संख्यापूरणः । प्रकृतौ प्रथमोत्तमे च त्रिरभ्यस्ते, संख्या च पूरिता । इहापि तद्वदेव कर्तव्यम् । प्रथमोत्तमे च त्रिरभ्यसितव्ये संख्या च पूरयितव्या । न प्रकृतावेष शब्दार्थो गम्यते 'अनेनाभ्यासेन संख्या पूरयितव्या' इति । अभ्यासः कर्तव्य इति वचनादवगम्यते, संख्या पूरयितव्येति सामर्थ्यात् । सा च प्रकृतौ अर्थात् अनेन पूरिता । यश्च अर्थात् कृतः, न स चोदनार्थः । तस्मात् नानेनाभ्यासेन संख्या पूरयितव्येति चोदक आह । एवं चेत् यावदुक्तमभ्यस्य अवशिष्टानामागम इति ।

**अधिकानां च दर्शनात् । ३१ ॥**

**भाष्यम्**— इतश्च आगम इति । अधिकदर्शनं हि भवति 'न जगत्या परिदध्यात् । यज्जगत्या परिदध्यात्, तच्छन्दांसि गमयेत् । त्रिष्टुभा परिदधाति' इति । अभ्यासे च जगतीपरिधानाशङ्का नावकल्पते । तस्मादपि आगम इति ।

**कर्मस्वपीति चेत् । ३२ ॥**

**भाष्यम्**— इति चेत् पश्यसि यावदुक्तमभ्यस्य अधिका आगमयेदिति, धुरिसामकर्मसु अपि एवमेव स्यादिति ।

**न, चोदितत्वात् । ३३ ॥**

**भाष्यम्**— नैतदेवम् । धुरिसामकर्मसु युक्तम् । चोदितस्तत्र अभ्यासः 'आवृत्तं धूर्षु स्तुवते, पुनरावृत्तं पृष्ठैरुपतिष्ठते' इति । इह तद्वचनं नास्ति । तस्मात् यावदुक्तमभ्यस्य अवशिष्टानां आगमेन संख्या पूरयितव्येति ।

**सोम**— पूर्वत्र यथा न सामागमः, एवमिहापि न सामिधेन्यन्तरागमः इत्युत्थिते: **संगतिः । सूत्रे**—अभ्यासप्रकृतित्वात् प्रकृतौ 'त्रिः प्रथमाम्' इत्यभ्यासेन संख्यापूरणस्य दृष्टत्वात् इत्यर्थः ।

**वि**—'सामिधेनीविवृद्धौ किमागमोऽभ्यस्यतामुत ।, आगमः पूर्ववं, न्मैवमभ्यासः प्रकृतित्वतः ॥' (पुनरपि संशयादि) 'तत्राप्याद्यन्तयोर्यावत्पूर्त्यभ्यासो यथोक्ति वा ।, अभ्यस्यागमतः पूर्तिः पूरणार्थत्वतोऽग्रिमः ॥, त्रित्वं न

पूरणायोक्तमन्यथाऽप्यत्र पूरणात् । विवक्षितमबाधित्वा भवेत् पूरणमागमात् ॥'

**भाट्ट--** 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' इत्यादिना यत्र सामिधेनीविवृद्धिः श्रुता, तत्र न्यायप्राप्तोऽपि आगमो न प्रवर्तते । प्रकृतौ 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति वचनेन एकादशसंख्यानां पठितानामृचां प्रथमोत्तमयोः यावत्पञ्चदशसंख्यापरिपूर्त्यभ्यासविधानेन आगमबाधावगतेः । न चानेन प्रथमोत्तमयोः त्रिरभ्यासमात्रविधानेन ततोऽधिकानामागमे बाधकाभावः, त्रिरभ्यासावधौ अदृष्टार्थत्वापत्तेः अनेन वचनेन प्रयाजशेषाभिघारणन्यायेन लक्षणया 'पञ्चदश सामिधेनीरनुब्रूयात्' इति विहितपञ्चदशसंपत्त्यर्थत्वेन अभ्यासमात्रविधानात् । एकादशानां हि ऋचां प्रथमोत्तमयोः यावत्संख्यासंपत्त्यभ्यासे 'समं स्यादश्रुतत्वात्' इति न्यायेन प्रत्येकं त्रिरभ्यास एव संपद्यते । अत एव द्विश्चतुरभ्यासेनापि संख्यासंपत्तिसिद्धेः त्रित्वानुवादानुपपत्तिरिति पार्थसारथ्युक्तमपास्तम् । अतश्च लक्षणया यावत्संख्यासंपत्ति प्रथमोत्तमे अभ्यसेत् इतिवाक्यार्थावगमात् एकविंशत्यादिसंपत्त्यर्थमपि तयोरेवाभ्यासः । न च प्रथमोत्तमयोः उद्देश्यन्वे तदनेकत्वनिमित्तो वाक्यभेदः, 'अर्धमन्तर्वेदि' इतिवत् तदुभयत्वस्य लक्षणया उद्देश्यतावच्छेदकत्वात् । **इति प्राप्ते**, निषादस्थपत्यधिकरणन्यायेन अदृष्टार्थत्वापत्तावपि लक्षणाया अन्याय्यत्वात् प्रयाजशेषाभिघारणन्यायस्यापि अत एव अस्माभिरन्यथोपपादितत्वात् क्रियापदानुषङ्गेण अप्यत्र वाक्यद्वयेन प्रथमाद्युद्देशेन त्रिरभ्यास एव विधीयते । अत एव एकादशानामृचां प्रथमोत्तमयोः त्रिस्त्रिरभ्यासे पञ्चदशत्वसंपत्तेः वस्तुतः 'पञ्चदश सामिधेनीरनुब्रूयात्' इत्यत्र नैव संख्या विधीयते इत्युक्तं कौस्तुभे । अतः पञ्चदशसंख्याया अप्राप्तत्वात् तत्संपत्त्यर्थत्वेन लक्षणया अभ्यासविध्यनुपपत्तेः त्रिरभ्यासः एवानेन विधीयते । 'ताः पञ्चदश संपद्यन्ते' इति तु 'त्रिः प्रथमामन्वाह' इत्यस्यार्थवादमात्रमिति ध्येयम् । अतश्च एकविंशत्यादावपि प्रथमोत्तमे त्रिरभ्यस्य अवशिष्टानां प्राकृताधिकानामागमः इति सिद्धम् ।

**मण्डन--** 'अभ्यस्या यथोक्तं खलु सामिधेनी ।'

**शंकर--** 'सामिधेनीषु चागमः ।'

* दर्शपूर्णमासयोः सामिधेनीनां स्थानं आहवनीयाग्नेः पश्चिमो देशः । ज्योतिष्टोमे तु दक्षिणहविर्धानशकटसमीपो देशः । **वि.** ३।७।७, * दर्शपूर्णमासयोः **सामिधेनीषु** 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' इति । तत्र अधिकानां षण्णामृचां आगन्तूनामन्ते निवेशः । ५।३।३.

**⌛ दर्शपूर्णमासयोः सामिधेनीत्रिरभ्यासः प्रथमोत्तमस्थानधर्मः, न तु प्रवोवाजादिऋग्विशेषधर्मः ॥**

**अभ्यासः सामिधेनीनां प्राथम्यात् स्थानधर्मः स्यात् । ९।१।१०।३३ ॥**

**भाष्यम्--** स्तो दर्शपूर्णमासौ । तत्र सामिधेनीः प्रकृत्योच्यते 'त्रिः प्रथमामन्वाह, त्रिरुत्तमामन्वाह' इति । तत्र एषोऽर्थः सांशयिकः किं ऋग्धर्म एषः यत्रतत्रस्था प्रवोवाजा त्रिरभ्यसितव्या, उत स्थानधर्मः या अन्याऽपि प्रथममुच्यते सा त्रिरभ्यसितव्येति । कुतः संशयः ? उभयथोपपत्तेः । यदि एवमभिसंबन्धः क्रियते, या असौ उच्चरितानां सामिधेनीनां प्रथममुच्चरिता सा त्रिरभ्यसितव्येति, ततः प्रवोवाजायाः ऋचो धर्मः । अथ एवं विज्ञायते प्राथम्यसंयुक्तं त्रिर्ब्रूयादिति, ततो वचनस्य स्थानधर्मता । किं तावत् प्राप्तम् ? ऋचो धर्म इति । कुतः ? प्राथम्यस्य व्यक्त्या संबन्धात्, व्यक्तेरभ्यासेन । कथमवगम्यते ? स्त्रीलिङ्गनिर्देशात् । व्यक्तिविशेषो हि स्त्री नाम । यदि तद्विशेषणं प्राथम्यं स्यात्, ततो लिङ्गविशेषनिर्देशः अवकल्पते, साऽपि स्त्री अभ्यासेन संभन्त्स्यते । अथ प्रथममनुब्रुवता त्रिरभ्यसितव्यमिति, ततो व्यक्तिविशेषो न विवक्ष्येत, तत्र स्त्रीलिङ्गविशेषनिर्देशो नोपपद्यते । अपि च वाक्यभेदः प्रसज्येत प्रथममुक्तं त्रिरभ्यसितव्यम्, प्रथममुक्ता ऋक् त्रिरभ्यसितव्येति । मत्पक्षे पुनः प्राथम्यलक्षिताया ऋचो धर्म उच्यते । तत्र एकार्थविधाने न भवेत् वाक्यभेदः । अपि च श्रुत्या प्राथम्येन स्त्री संबध्यते, वाक्येन अभ्यासः । तस्मात् ऋग्धर्मो यत्रतत्रस्था प्रवोवाजा त्रिरभ्यसितव्येति । **एवं प्राप्ते, ब्रूमः ।** योऽयं सामिधेनीनां प्रथमायाः त्रिरभ्यासः उच्यते, स प्रथम-

स्थाननिमित्तो धर्मः, न ऋचः कस्याश्चित् जातिनिमित्तः। कुतः ? न हि कृत्स्नेऽपि ऋग्वेदे प्रथमा नाम काचित् ऋक् विद्यते, या त्रिरभ्यस्येत, तत्र प्राथम्यमुपलक्षणार्थं स्यात्। इतरस्मिन् पक्षे श्रुतिः न लक्षणा, श्रुतिश्च ज्यायसी लक्षणायाः। तस्मात् अस्मत्पक्षः। अथ यदुक्तं 'स्त्रीलिङ्गसंबधात् अस्मत्पक्षे एव श्रुतिः, वाक्यं च न भिद्यते, स्त्रीलिङ्गोपपत्तिश्च' इति। अत्रोच्यते। गुणवचनानां हि शब्दानां आश्रयतो लिङ्गवचनानि भवन्ति इति अविशेष्यमाणायामपि व्यक्तौ यत् अवश्यं प्राप्तं लिङ्गम्, तदाश्रयभूतं गुणस्य भवति। अविधित्सितेऽपि तस्मिन् लिङ्गविशेषनिर्देशः अनुवादभूतो भवत्येव। यथा शुक्लः पुमान्, शुक्ला स्त्री, शुक्लं नपुंसकम्। शुक्लः एकः, शुक्लौ द्वौ, शुक्ला बहवः इति। शुक्लां शाटीमानयेति यद्यपि शाट्याद्यानयनं न विधीयते, शुक्लसंबन्धमात्रविधित्सा भवति, न तत्र लिङ्गेन विशेषणं क्रियते, तथापि अनुवादभूतः स्त्रीलिङ्गनिर्देशो भवत्येव 'शुक्लामानय' इति। अनुवादभूतत्वाच्च न वाक्यभेदो भविष्यति। एवं च सति यद्यपि प्राथम्यस्य स्त्रीलिङ्गसंबन्धः श्रौतः, तथापि प्राथम्यस्यैव अभ्यासेन संबन्धः, न लिङ्गस्य। यदि लिङ्गस्य एतेन संबन्धः अभिधीयते, प्राथम्यस्य अनुवादता कल्प्येत। प्राथम्यसंबन्धेऽपि अभिधीयमाने वाक्यं भिद्येत। अपि च नैवात्र विवदितव्यं प्रातिपदिकविशेषणं हि स्त्रीशब्दः 'स्त्रियां यत् प्रातिपदिकं वर्तते ततः टाबादयः' इति। न विशेषणस्य पदान्तरेण संबन्धो भवति यथा 'राजपुरुषो गच्छति' इति। यदा तु प्राथम्यस्य अभ्यासेन संबन्धः, तत्र प्राप्तमनूद्यते स्त्रीत्वम्। यानि सामिधेनीषु वचनानि, ऋचस्ताः, स्त्रीलिङ्गश्च ऋक्शब्दः। तत्र यत् प्रथमं वचनम्, तस्याश्रयः ऋक्। गुणवचनानां च शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति इति अविशेषितायामपि ऋचि स्त्रीलिङ्गं भविष्यतीति। यत् प्रथमवचनं तत् त्रिराह इति स्त्री च सा ऋक् सामिधेनी। तस्मात् 'त्रिः प्रथमामन्वाह' इति प्राप्तस्य लिङ्गस्य अनुवादः। 'त्रिः प्रथमामन्वाह, त्रिरुत्तमाम्, ताः पञ्चदश संपद्यन्ते' इति पञ्चदशानां सामिधेनीनां संपत्तये त्रिर्वचनमुच्यमानं परिपूर्णाया ऋचो भवति, न ऋगवयवस्य। परिपूर्णा च समिन्धनवती, न ऋगवयवः। तस्मात् प्राप्तानुवादो लिङ्गस्य इति प्राथम्यस्य धर्मः, न ऋचः।

**शा**— **'तत्र स्त्रीलिङ्गनिर्देशादृगनेनाभिधीयते। तस्या एव त्रिरभ्याससंबन्धोऽत्र विधीयते॥' उच्यते 'श्रुत्या प्रथमशब्देन प्राथम्यमभिधीयते। ऋक् तु लक्षणयोच्येत, तस्मात् प्राथम्यधर्मता॥'**

**सोम**— पूर्वत्र यथा अपेक्षितविधिलोमेन पत्नीसंयाजान्तत्वमुत्तमवर्जं इत्युक्तम्, एवं पाञ्चदश्यसिद्ध्यर्थं अपेक्षितः ऋगभ्यास एव विधीयते इति प्रतिपादनात् संगतिः। सूत्रार्थस्तु– सामिधेनीनां मध्ये प्रथमोत्तमाभ्यासः प्राथम्यसंबन्धात् प्रथमशब्देन उपस्थितत्वाद्वा स्थानधर्मः इति।

**वि**— 'त्रिरनूक्तिर्ऋचो धर्मः स्थानधर्मोऽथवा, ऽग्रिमः। स्त्रीलिङ्गत्वात्, न तत्प्रातिपदिकप्रबलत्वतः॥' स्थानान्तरे पठितायाः 'प्र वो वाजाः' इत्यस्या ऋचः नास्त्यभ्यासः।

**भाट्ट**— दर्शपूर्णमासयोः सामिधेन्यवान्तरप्रकरणे 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति श्रुतम्। तत्रानुवचनं तावत् प्रकरणप्राप्तमनूद्यते, त्रिरभ्यासमात्रं तु विधीयते। प्रथमामिति च उद्देश्यसमर्पकमित्यविवादमेव। तत्रापि प्रथमामिति विशेष्यनिघ्नं प्राथम्यविशिष्टमभिधत्ते शुक्लादिपदवत्। तच्च विशेष्यं स्त्रीलिङ्गनिर्देशात् सामिधेनीप्रकरणाच्च ऋगेव। प्राथम्यरूपविशेषणयोगाच्च ऋग्विशेषप्रतीतिरार्थिकी, न तु प्रवोवाजादित्वप्रकारिका उपस्थितिः शाब्दी, तद्वाचकपदाभावात्। अत एव प्राथम्यमेव उद्देश्यतावच्छेदकं ग्रहत्वादिवत्। न तु तदुपलक्षितप्रवोवाजादित्वं विना कारणं लक्षणायां प्रमाणाभावादित्यविवादमेव। इदं तु विचार्यते। प्रथमास्वरूपे आनर्थक्ये प्रसक्ते अपूर्वसाधनत्वलक्षणायां अपूर्वसाधनीभूताग्निसमिन्धनप्रकाशकऋक्त्वमात्रलक्षणे अतिप्रसङ्गापत्तेः, तन्निराकरणार्थं उद्देश्यतावच्छेदककोटौ ऋक्त्वविशेषणतया प्रवोवाजादित्वस्य विवक्षणम्, उत प्राथम्यस्य इति चिन्तायाम्, प्राथम्यरूपस्य अश्रुतस्य उद्देश्यतावच्छेदकस्य व्रीहित्वादिवत् अपूर्वसाधनत्वलक्षणोपयोगिशक्योपस्थितौ उपक्षीणत्वेन निरुक्तापूर्वसाधनत्वरूपोद्देश्यतावच्छेदककोटिप्रवेशे

प्रमाणाभावात् प्रवोवाजादित्वमेव ऋक्त्वविशेषणम्। अतश्च विकृतौ यत्रकुत्रस्था प्रवोवाजैव त्रिरभ्यसितव्या। न तु प्रथमस्थानपतितमृगन्तरम्। **इति प्राप्ते**, अतिप्रसङ्गपरिहारार्थमवश्यकल्प्येन क्वचित् तत्तद्व्यापारकसाधनत्वातिरिक्तेन विशेषणं उपस्थितत्वात् उपक्षीणेनापि प्राथम्येनैव विशेषणं न तु अनुपस्थितेन प्रवोवाजत्वेन। अवघातादौ तु तण्डुलनिष्पत्तिव्यापारकसाधनतामात्रेणैव उद्देश्यत्वपर्यवसानात् यवानां धर्माकाङ्क्षाबलेन यवसाधारण्यकल्पनेऽपि च वाक्यवैयर्थ्याभावात् नातिप्रसङ्गपरिहारार्थं व्रीहित्वप्रवेशः। प्रकृते तु अतिप्रसङ्गाङ्गीकारे प्रथमोत्तमापदघटितवाक्यद्वयवैयर्थ्यापत्तेः 'ताः पञ्चदश संपद्यन्ते' इत्यर्थवादानुपपत्तेश्च विशेषणविवक्षा आवश्यकी। अतश्च याकाचित् प्रथमोत्तमा त्रिरभ्यसितव्या इत्यूहोपयोगोऽपि।

**मण्डन**—'अभ्यासक्रिया स्यात् प्रथमोत्तमाऽन्ते।' अन्ते स्थाने।

**शंकर**—'त्रिरभ्यास ऋचां न च।' १६.

**दर्शपूर्णमासयोः सामिधेनीसंख्यायां काम्यविवृद्धौ आगन्तूनामृचामन्ते निवेशः ॥**

**समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युर्द्यावापृथिव्योरन्तराले समर्हणात्। ५।३।३।४ ॥**

**भाष्यम्**— दर्शपूर्णमासयोः सामिधेन्यः 'सामिधेनीरन्वाह' इति। तत्र काम्याः सामिधेनीकल्पाः 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' इत्येवमादयः। तत्र आगमेन संख्यापूरणं वक्ष्यते (१०।५।८)। तत्र संदेहः किमागन्तूनां अन्ते निवेशः, उत समिध्यमानवतीं समिद्धवतीं चान्तरेण निवेशः इति। किं तावत् प्राप्तम्? अन्ते निवेशः 'अन्ते तु बादरायणः' इत्यनेन न्यायेनेति। **एवं प्राप्ते, ब्रूमः।** समिध्यमानवतीं समिद्धवतीं चान्तरेण निवेश इति। कुतः? द्यावापृथिव्योरन्तराले समर्हणात् संस्तवादित्यर्थः। 'इयं वै समिध्यमानवती द्यौः, असौ समिद्धवती पृथिवी, यदन्तरा तद् धाय्याः' इति अन्तरिक्षसंस्तुत्या तस्मिन् अन्तराले विधीयन्ते। तस्मात् नान्ते स्युरिति। ('समिध्यमानो अध्वरे' इत्यादिः समिध्यमानवती, 'समिद्धो अग्न आहुतः' इत्यादिः समिद्धवती)।

**तच्छब्दो वा। ५ ॥**

**भाष्यम्**— अथवा या धाय्याशब्दिकाः, तास्तत्र भवितुमर्हन्ति। तेन हि शब्देन तत्र संस्तवः। संस्तवाच्च विधानम्। यथा 'पृथुपाजवत्यौ (पृथुपाजा० तं सबाध० इति द्वे) धाय्ये' 'उष्णिक्ककुभौ धाय्ये' इति। (तैत्तिरीयायां 'प्रसो अग्ने तवोतिभिः, प्रहोत्रे पूर्व्यम्' इति धाय्ये– **सोम.**) काः पुनरेता धाय्या नाम, नास्य शब्दस्य प्रसिद्धिमुपलभामहे। उच्यते। सामिधेन्यो धाय्याः। कुतः? एवं हि भगवतः पाणिनेर्वचनम् 'पाय्य–सांनाय्य–निकाय्य–धाय्या–मान–हविर्–निवास–समिधेनीषु' (पा० ३।१।१२९) इति। अस्मात् वचनात् श्रुतिमनुमिमीमहे। कतमासु सामिधेनीषु इति? उच्यते। अविशेषात् सर्वासु इति गम्यते। इह तु समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युरिति। सर्वासु सामिधेनीषु सतीषु धाय्यावचनात् विशिष्टानां सामिधेनीनां धाय्याशब्द इति गम्यते। ननु पाणिनिवचनात् अविशेषेण सर्वा धाय्याः। नेत्याह। विशिष्टास्वपि वचनमुपपद्यते एव। यदि विशिष्टाः ततः का इति। उच्यते। यासु धाय्याशब्दः श्रूयते, तास्तावत् धाय्याः। तासु च धाय्यासु सतीषु वचनमर्थवत् भवति। अर्थवति च सति वचने, नान्या धाय्याः प्रमाणाभावादिति।

**उष्णिक्ककुभोश्चान्ते दर्शनात्। ६ ॥**

**भाष्यम्**— उष्णिक्ककुभोश्च अन्ते प्रयोगो दृश्यते 'यज्ञगत्या परिदध्यात् अन्तं यज्ञं गच्छेत्। अथ यत् त्रिष्टुभा परिदधाति, नान्तं गच्छति' इति। (तैत्तिरीयायां अग्ने त्री ते वाजिना इति परिधानीया इति **शा.**)। ननु त्रिष्टुप् अत्रान्ते दृश्यते, नोष्णिक्ककुभौ इति। उच्यते। त्रिष्टुभमेव अयं (सूत्रकारः) उष्णिक्ककुभौ इति ब्रूते। कथम्? 'त्रिष्टुभो वीर्यम्' इत्येवं संस्तुतेः। त्रिष्टुभो वा एतद्वीर्यम्, 'यदुष्णिक्ककुभौ' इति कारणे कार्यवत् उपचारः कृतः (वेदेनैव, ततः सूत्रकारेणापि)।

**सोम**— पूर्ववदिहापि प्राकृतक्रमाबाधः इति प्रत्यवस्थानात् **संगतिः। सूत्रार्थस्तु**– धीयमानतया धाय्याः सकला आगन्तवः स्युः समिध्यमानवतीं समिद्धवतीं चान्तरेण द्यावापृथिव्योरन्तरालसंस्तवात् इति।

प्रसिद्धत्वात् कर्मभेदोऽत्र संज्ञया ।, गुणो व्युत्पत्ति-शेषाभ्यामावृत्त्याख्यो न नाम तत् ॥ '

**भाट्ट**— दर्शपूर्णमासयोः 'दाक्षायणयज्ञेन स्वर्गकामो यजेत ' इति श्रुतम् । तथा 'साकंप्रस्थायीयेन यजेत पशुकामः ' इति च । तत्र दाक्षायणादिपदवाच्यस्य गुणस्य लोके अप्रसिद्धत्वात् उद्भिदादिवत् नामधेयत्वावगतेः संज्ञया अभ्यासाद्वा कर्मान्तरं विधीयते फलसंबन्धस्यापि सार्वकाम्यवाक्यवशादेव प्राप्तत्वेन अन्यपरत्वाभावात् । इति प्राप्ते, अभिधीयते । यद्यपि लोके गुणो न प्रसिद्धः, तथापि दक्षस्य यजमानस्य इमे दाक्षाः ऋत्विजः, तत्कर्तृकं अयनं प्रयोगावृत्तिर्यस्य यज्ञस्येति व्युत्पत्त्या आवृत्तिपरत्वावगतेः, सह प्रस्थानं यत्रेति व्युत्पत्त्या च सहत्वपरत्वावगतेर्नातिरिक्तशक्तिकल्पनया नामधेयत्वाध्यवसानम् । अतः अप्राप्तावृत्तिरूपः सहत्वरूपश्च गुण एव फलोद्देशेन विधीयते । आवृत्तिश्च कियतीत्यपेक्षायां 'द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत ' इति वाक्येन विशेषविधानात् द्विरावृत्तिरेव । सहत्वं च प्रस्थाने केनेत्यपेक्षायां 'सह कुम्भीभिरभिक्रामेत् ' इति वचनात् कुम्भीभ्याम् । अनेनैव च वचनेन सहत्वाश्रयत्वमभिक्रमणस्य विदधता अवान्तरप्रकरणाभावेऽपि तस्याश्रयत्वसिद्धिः । आवृत्तेस्तु प्रकरणात् दर्शपूर्णमासावेवाश्रयः । अतोऽत्र संज्ञात्वाभावात् गुणफलसंबन्धपरत्वेन च अभ्यासाभावान्न कर्मान्तरम् । वस्तुतस्तु 'पूर्वपदात् संज्ञायामगः ' ( पा० ८।४।३ पूर्वपदस्थान्निमित्तात् परस्य नस्य णः स्यात् संज्ञायाम्, न तु गकारव्यवधाने द्रुणसः, ऋगयनम् ) इति स्मृत्या संज्ञात्वाभावे णत्वानापत्तेः दाक्षायणयज्ञपदे संज्ञात्वावश्यंभावेऽपि अवयवार्थप्रतीत्या योगरूढिस्वीकाराद-वयवार्थरूपावृत्तिः अप्राप्तत्वात् फलोद्देशेन विधीयते इति न विरोधः ।

**मण्डन**—'भेदो दाक्षायणे नहि ।'

**शंकर**— 'दाक्षायणगुणात् फलम् ।'

**अत्र कुतूहलम्**— तदेतदपरे न क्षमन्ते । नहि दर्शपूर्णमासयोः संनिधौ दाक्षायणयज्ञादिविधिः, येन तत्र गुणविधानं स्यात् । कौषीतकिब्राह्मणे हि तृतीयेऽध्याये दर्शपूर्णमासौ अनुक्रम्य चतुर्थेऽध्याये पूर्णमासे संस्थिते अनुनिर्वाप्यं वैमृधम्, दर्शे संस्थिते अदितियागं च विधाय अभ्युदितेष्टिं अभ्युदृष्टेष्टिं च विधाय 'अथातो दाक्षायणयज्ञस्य । दाक्षायणयज्ञेन एष्यन् फाल्गुन्यां पौर्णमास्यां प्रयुङ्क्ते ' इत्यादिना दाक्षायणयज्ञसाकंप्रस्थायीयादीनि बहूनि कर्माणि अनुक्रान्तानि । तत्र अथशब्देन प्रकरणविच्छेदात् 'अथैष ज्योतिः ' इत्यादिवत् उत्पत्तिशिष्टसंज्ञाऽन्तरकत्वात् प्रकृतकर्मणि संज्ञाऽन्तरस्य समावेशासंभवाच्च कर्मान्तरत्वमेव युक्तम् । नापि दाक्षायणशब्दः दर्शपूर्णमासयोः आवृत्तिगुणयोगात् वर्तितुमर्हति, नहि दक्षस्य इमे दाक्षाः ऋत्विजः, तत्कर्तृकमयनं आवृत्तिः इति अवयवव्युत्पादनमुचितम्, येन वाक्यान्तरप्रसिद्धगुणपरत्वं स्यात् । 'दक्षो वै पार्वतिः एतेन यज्ञेनेष्ट्वा सर्वान् कामानवाप ' ( कौषी. ४।४ ), 'स वै दक्षो नाम तत्, यदनेन सोऽयजत, तस्मात् दाक्षायणयज्ञ इत्याख्या ' इति कौषीतकिवाजसनेयकयोः अन्यथैव निर्वचनावगतेः । अतो दाक्षायणशब्दस्य गुणविधिपरत्वासंभवात् कर्मान्तरत्वमेव युक्तम् । एवं शतपथब्राह्मणेऽपि हव्यवाहकाण्डे दर्शपूर्णमासौ अनुक्रम्य संभरणकाण्डे आधानं पुनराधानं अग्निहोत्रं चानुक्रम्य दाक्षायणयज्ञः अनुक्रान्तः । तथा च प्रकरणविच्छेदात् कर्मान्तरत्वमेव युक्तम् । यद्यपि तैत्तिरीयादिशाखायां दर्शपूर्णमासप्रकरणे दाक्षायणादिवाक्यं श्रुतम्, तथापि दाक्षायणादिशब्दस्य गुणपरत्वं उक्तरीत्या अनुपपन्नम्, इति कर्मान्तरत्वमेव युक्तम् । अधिकरणं तु गवामयनप्रकरणस्थोत्सर्गिणामयनादिविषयं योज्यम् । इत्यास्तां तावत् । इति ।

संक्रमयज्ञविषयकं वाक्यं यत्रक्वचिच्छाखायामन्वेषणीयम्, तत्रैव च संक्रमशब्दस्य गुणविशेषपरत्वे वाक्यशेषश्च अन्वेषणीयः इत्युक्तं एकादशे सूत्रे ।

* **दाक्षायणयज्ञाधिकरणस्य** ( २।३।४ ) अपवादः ईषाऽऽलम्भाधिकरणम् ( २।३।५ ) । **कौ.** २।३।५।१२ पृ. ४५, * इन्द्रियकामाधिकरणसिद्धस्यैव गुणफलसंबन्धस्य आक्षेपसमाधानात् न तेनास्य ( **दाक्षायणयज्ञाधिकरणस्य** २।३।४ ) पौनरुक्त्यम् । **कौ.** २।३।४।५ पृ. ३६, * **दाक्षायणयज्ञादिवत्** अग्निहोत्रसायंप्रातर्होमयोः संकल्-कर्मावृत्तिप्रज्ञानात् । **वा.** २।२।५।१६ पृ. ५०८. * न

च अन्त्यपक्षे तृतीयान्तेन ( तस्य वायव्यासु एकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो ह्येतेन यजेत इति) एतच्छब्देन विलिङ्गसंख्यत्वात् रेवतीमात्रनिर्देशानुपपत्तिः । तेन रेवतीविशिष्टवारवन्तीयनिर्देशेऽपि **दाक्षायणयज्ञन्यायेन** अप्राप्तरेवतीमात्रस्यैव फलसंबन्धोपपत्तेः । दाक्षायणयज्ञाधिकरणम् । **भाट्ट.** २।२।१२. * 'वायव्यं श्वेतमालभेत', 'ईषामालभेत' इत्यादौ दाक्षायणयज्ञन्यायेन गुणमात्रविधानं इति पूर्वपक्षः प्रथमः । **कौ.** २।३।५।१२ पृ. ४५.

* **दाक्षिणानि** । न च दाक्षिणानि नाम गुणः कश्चित् प्रसिद्धः इति सामानाधिकरण्यात् नामधेयत्वमेव युक्तम् । **वा.** २।२।१।११ पृ. ४६६ । दाक्षिणशब्दस्य दक्षिणाकालवाचित्वात् प्रसिद्धेः विधौ चावाचकशब्दायोगात् अर्थाक्षिप्तसाध्यांशसामानाधिकरण्याच्च नामत्वावगतेः कर्मण एव विधेयत्वात् सिद्धो भेदः । **सु.** पृ. ७१०.

* **दाक्षिणाग्निकौ** होमौ पिष्टलेपफलीकरणहोमौ । **के.** ५।१।१५।२८.

**दाक्षिणाग्निकहोमानपकर्षाधिकरणम्** । ज्योतिष्टोमे अनुयाजोत्कर्षेऽपि दाक्षिणाग्निकयोः पिष्टलेपफलीकरणहोमयोर्नोत्कर्षः ॥

**प्रासङ्गिकं च नोत्कर्षेदसंयोगात् । ५।१।१५।२८॥**

**भाष्यम्—** ज्योतिष्टोमे श्रूयते 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति । अनुयाजा उत्कृष्यमाणा दाक्षिणाग्निकौ होमौ उत्कर्षन्ति, नेति संशयः । संबन्धादुत्कर्षन्ति इति प्राप्ते, उच्यते । नैतौ उत्कृष्टुमर्हन्ति, येन तयोस्तु अनुयाजाः संबद्धाः तेन प्रयुक्ताः, परकीयैस्तेषामर्थो निर्वर्तित इति । पदार्थानां च क्रमो भवति, न पदार्थप्रयोजनानाम् । यौगपद्येन हि पदार्था उपकुर्वन्तीति वक्ष्यामः । पदार्थानां चोत्पत्तिः क्रमवती । पृथक्शब्दत्वात् उत्पत्तेः । न पदार्थप्रयोजनस्य, युगपत् प्रयोगवचनेनाभिहितत्वात् । अतः अनुयाजोत्पत्तेः उत्कर्षिकाया अभावाद् दाक्षिणाग्निकौ होमौ नोत्कृष्येयातामिति । अपि च अनुयाजमात्रमुत्कृष्य कृतार्थे शब्दे दाक्षिणाग्निकयोर्होमयोः स्वक्रमबाधो न भविष्यतीति ।

**टुप्—** ( सिद्धान्तमाह— ) यद्यपि प्रकृतौ अनुयाजोत्तरकालीनौ ( दाक्षिणाग्निकौ ) होमौ दृष्टौ, तथापि अनुयाजोत्कर्षे नोत्कृष्येते । कुतः ? असंयोगात् । कथमसंयोगः ? ( प्रसङ्गन्यायं दर्शयितुं प्रश्नः । प्रसङ्गन्यायं दर्शयति— ) उपमितलक्षितप्रापणेन (उपमितेन वाक्यान्तरेण लक्षिता या इतिकर्तव्यता तस्याः प्रापणेन) अग्नीषोमीयात् (पशोः) अयं (सवनीयः) धर्मान् गृह्णाति । तत्रायं ( सवनीयः ) त्रिष्वपि सवनेषु विप्रकृष्यते ( 'वपया प्रातःसवने चरन्ति' इत्यादिवचनात् ) । इतिकर्तव्यता चास्य तद्विप्रकर्षादेव विप्रकृष्यते । पदार्थप्रयोजनानां एककालत्वात् ( एकस्मिन्नेव काले संभूय सर्वैरवान्तरोपकारैः प्रधानानि उपकर्तव्यानि । तेन ) यावत् क्रतूपकारः ( सर्वाङ्गजन्यः ) अभिनिर्वर्त्यते, तावत् अग्न्यन्वाधानादिजनितः ( अवान्तरः ) उपकारः आशेते । यावत् पशोः अन्त्यः पदार्थः, तावदाद्यः ( अवान्तरोपकारद्वारेण पदार्थः अवतिष्ठते ), अन्त्योऽपि यावदाद्यः । एवं वितते पशौ मध्ये निपतन् पुरोडाशः उपमितलक्षणप्रापणेन अग्नीषोमीयपुरोडाशात् यागगतं व्यापारं (विचित्रप्रकारं) अभिलषन् तमुत्पादयति प्रापयति च । ( ननु सवनीयस्य पशोराग्नेयत्वात् तत्पुरोडाशस्यापि आग्नेयविकृतित्वे सति, कथं अग्नीषोमीयविकृतित्वमुच्यते । नैष दोषः । अग्नीषोमीयपशुपुरोडाशस्तावत् अग्नीषोमीय एव । स एव च सवनीयपशुपुरोडाशेऽपि अतिदिष्टः । तेन सवनीयपशुपुरोडाशस्य देवतासाम्यात् आग्नेयत्वेऽपि पूर्वावगताग्नीषोमीयप्रकृतिकत्वं नापैति, इति युक्तमुक्तं अग्नीषोमीयपुरोडाशयागगतं व्यापारं अभिलषन् इत्यादि ) । प्रापितान् ( च ) समस्तान् ( प्रकारान् ) समीपे प्रयोगवचनः उपसंगृह्णाति ( योजयति । तत्रापवादमाह— ) तत्र पशुना प्रयुक्तस्य यागगतव्यापारस्य समीपे गृहीतत्वात् (पुरोडाशः स्वयं ) समीपे न करोति ( नहि अन्यप्रयुक्तेनापि कार्यसिद्धौ सत्यां स्वयंप्रवृत्तिर्युक्ता । अस्यापि अपवादमाह— ). उपसंगृह्णता तु पशुना ये ( अंशाः ) न समीपे कृताः, तेषां ( पिष्टलेपादीनां पशुना उपसंग्रहाभावात् ) उत्पत्तिप्राप्त्युपसंग्रहान् अपेक्षते ( पुरोडाशः । इतरेषां तु उत्पत्तिमात्रं करोति नोपसंग्रहम् ) । तत्रासौ व्यापारः

अपूर्वमन्तरेण नोपपद्यते । अपूर्वाण्यपि पदार्थैर्विना न सन्ति । इति अन्यथाऽनुपपत्त्या ( व्यापारप्रयोजकेन– ) विधिना पदार्था आक्षिप्यन्ते । यांस्तु ( परप्रयुक्तान् ) प्रसङ्गेन उपकारान् गृह्णाति, तेषु तस्य ( प्रसङ्गिनो विधेः ) व्यापारो नास्ति, येनैव ते प्रयुक्ताः तस्यैव ( तन्त्रिणः पशुविधेः ) तत्र व्यापारः । ( प्रकृतमनुत्कर्षं दर्शयति– ) पदार्थानां च क्रमः आकाङ्क्ष्यते, न पदार्थप्रयोजनानाम् । तस्मात् दाक्षिणाग्निकहोमयोः (पुरोडाशार्थयोः) अनुयाजानां च (पाशुकानां) नास्ति सः ( क्रमः ) । अनुयाजजनितः तेन ( पुरोडाशेन ) उपकारो गृह्यते, न पदार्थः । अतः परकीयैः पदार्थैरुत्कृष्यमाणैः न दाक्षिणाग्निकौ होमौ उत्कृष्येते ।

अत्र ( भाष्य– ) ग्रन्थः 'पदार्थानां च क्रमो भवति, न पदार्थप्रयोजनानाम् । यौगपद्येन हि पदार्था उपकुर्वन्ति इति वक्ष्यामः' इति । कथमित्याकाङ्क्षायां यौगपद्येन उपकारा गृह्यन्ते । तत्र यस्मिन्नेव क्षणे एकः ( उपकारः ) संबध्यते, तस्मिन्नेव द्वितीयादयोऽपि । तस्मात् कथम्भावग्रहणवेलायां नास्ति क्रमः । अत्र अपरः ( भाष्य– ) ग्रन्थः 'पदार्थानां चोत्पत्तिः क्रमवती पृथक्शब्दत्वादुत्पत्तेः, न पदार्थप्रयोजनस्य' इति । ( तत् व्याचष्टे– ) पदार्थग्रहणे हि क्रमो भवति ( अनेन उत्पत्तिः क्रमवती इति व्याख्यातम् । पृथक्शब्दत्वादुत्पत्तेः इत्येतत् व्याचष्टे– ) शब्देन हि पदार्थोऽवबोध्यते, एवं द्वितीयस्तृतीयोऽपि ( शब्देनैव ) तत्र ( उत्पादकस्य शब्दस्य क्रमवत्त्वात् ) अवश्यं भवितव्यं क्रमेण अनुष्ठानावबोधेन । ( न पदार्थप्रयोजनस्य इत्यस्यार्थमाह– ) यः पुनरुपकारस्तदीयः, स एकः (एकेन प्रयोगवचनेन एकस्मिन्नेव काले एकस्येत्थंभावस्य विशेषणतया कल्प्यमाना उपकाराः एकतामापन्ना भवन्ति ) । तस्मिन् ( युगपत् ) गृह्यमाणे कीदृशः क्रमः ( नास्तीत्यर्थः ) । अतो न ( पाशुक– ) प्रयोगवचनापरिगृहीतानां तन्त्रमध्यपतितानामपि ( पिष्टलेपादीनां तदीयैरनुयाजैः ) अस्ति क्रमः । तस्मात् स्वस्थानावेव दाक्षिणाग्निकौ होमौ ( नोत्कृष्येते इति ) ।

**सोम**—पूर्ववैषम्येण संगतिः । सूत्रार्थस्तु– प्रसङ्गादुपकारकं प्रासङ्गिकं पाशुकानूयाजादिकं दाक्षिणाग्निकहोमादीन् नोत्कर्षेत् असंयोगादिति ।

**वि**— 'सवनीये पिष्टलेपफलीकरणहोमकौ । उत्कृष्टव्यौ न वा, ऽऽद्यः स्यादनुयाजोत्तरत्वतः ॥, परस्वर्थाः स्युरनूयाजाः पुरोडाशगताविमौ । उभौ होमौ प्रयोगस्य भेदान्नोत्कर्षमर्हतः ॥'

**भाट्ट**— सवनीयपशुतन्त्रं सवनीयहविःषु प्रसज्यते । दैक्षपशुतन्त्रं च पशुपुरोडाशे इति वक्ष्यते । प्रसङ्गे च ये उपकाराः प्रयाजानूयाजादिजन्याः तन्त्रतो लब्धाः तज्जनकीभूतपदार्थांशे नातिदेशः, अपेक्षाऽभावात् । ये तु न लब्धाः आज्यभागपिष्टलेपफलीकरणहोमादिजन्याः, तत्पदार्थांशेऽस्त्येवातिदेशः इत्यपि वक्ष्यते । तदिह पाशुकानूयाजानां दैक्षे हृदयादियागोत्तरत्वात् सवनीये चाग्निमारुतशस्त्रोत्तरत्वात् तत्पूर्वभाविसवनीयहविःपशुपुरोडाशादीनामङ्गभूताः पिष्टलेपफलीकरणादिहोमाः किमनूयाजोत्तरमुत्क्रष्टव्याः, उत नेति चिन्तायाम्, प्रकृतौ दर्शपूर्णमासयोः पिष्टलेपफलीकरणहोमानां परप्रयुक्तानूयाजैरेव बद्धक्रमत्वात् इहापि सत्यपि भिन्नप्रयोगविधिपरिग्रहे अङ्गभूतस्य अन्याङ्गभूतानुयाजोत्तरत्वस्यापि संभवेन उत्कर्षे प्राप्ते, न तावत् विकृतावेव क्रमक्लृप्तिः, भिन्नप्रयोगविधिपरिग्रहात्, पुरोडाशादिप्रयोगविधिना विहितानां पिष्टलेपफलीकरणहोमेडाभक्षणानां व्यवधायकाभावात्, व्यवधायकाभावविशिष्टप्रकृतिदृष्टपौर्वापर्यस्य क्रमकल्पकत्वेन उत्कर्षे तत्क्रमबाधप्रसङ्गाच्च, पाशुकप्रयोगविधिविहितानां समिष्टयजुःपत्नीसंयाजानां उक्तप्रमाणेनैव क्रमक्लृप्तेः तद्बाधस्यापि प्रसङ्गाच्च । नापि प्रकृतितः अनूयाजोत्तरत्वक्लृप्तिः, प्रकृतौ हि पाठकल्पितवाक्येन क्रमनियम एव विधीयते, न तु क्रमोऽपि, तस्य प्रयोगविध्याक्षेपादेव प्राप्तेः । अतश्च प्रकृते भिन्नप्रयोगविधिपरिगृहीतानां सामान्यतः क्रमस्याप्राप्तौ तदाश्रितस्य नियमस्याप्राप्तिः । न ह्यत्राक्षेपात् पूर्वमेव अवघातविधिवत् प्रवृत्त्यङ्गीकारेण पाठकल्पितवाक्यस्य क्रमविधायकत्वमेवेति शक्यं वक्तुम्, तद्वदिह पाठकल्प्यस्य विधेः क्लृप्तत्वाभावेन समतया आक्षेपप्रतिबन्धायोगात् । इतरथा दधियागपयोयागयोरपि पाठेन क्रमापत्तेः । अतश्च प्रकृतितोऽपि अनूयाजोत्तरत्वस्याप्राप्तेः पुरोडाशाद्यङ्गेडाभक्षणोत्तरमेव पिष्टलेपफलीकरणहोमौ ।

मण्डन— ' नोत्कृष्यते पिष्टलेपि ।' पिष्टलेपः अस्ति अस्मिन् कर्मणि तत् पिष्टलेपि । १७.

शंकर— ' नैवं प्रासङ्गिके मतः ।' १९.

*** दाक्षिणात्यः** । ' स्वमातुलसुतां प्राप्य दाक्षिणात्यस्तु तुष्यति ' । **वा.** १।३।३।७ पृ. २०४, *** दाक्षिणात्याः** ' श्यामा बृहन्तो लोहिताक्षाः ' इति भाष्यम् । ' यच्चिह्नं दाक्षिणात्यानां लोहिताक्षादि कल्प्यते । अन्येषामपि तत् दृष्टम् ' ॥ १।३।७।१८ पृ. २४९. *** दाक्षिणात्यैः** आह्नीनैबुकं नाम कर्म क्रियते । तच्च स्वस्वकुलागतं करञ्जार्कादिस्थावरदेवतापूजनम् । **वि.** १।३।८. *** दाक्षिणात्यानां** मातुलदुहितृद्वाहासन्दीस्थभोजनादीनि, मित्रस्वजनोच्छिष्टस्पृष्टभोजनम्, सर्ववर्णपरस्परस्पृष्टताम्बूलादन–तदवसानानाचमन– निर्णेजकधौतगर्दभारूढवस्त्रपरिधान – ब्रह्महत्यातिरिक्तमहापातककार्यपरिहरणादीनि च धर्मव्यतिक्रमोदाहरणानि । **वा.** १।३।३।७ पृ. २०४.

*** दातुः** वारुणचतुष्कपालेष्टिः, न तु अश्वस्य प्रतिग्रहीतुः । **वि.** ३।४।१५, * दातुः समर्पणादिरूपः एको व्यापारः, अपरः प्रतिग्रहीतुः स्वीकरणरूपः । इति दाने द्वौ व्यापारौ । **वा.** ३।४।१०।२८ पृ. ९६०, *** दातृदोषेण** सर्वद्रव्यप्रतिग्रहाणां दुष्टत्वात् । ३।४।१०। २८ पृ. ९५९, *** दातृव्यापार** एवासौ परस्वत्वापादनं नाम । ३।४।१०।२८ पृ. ९६०.

*** दात्रादि** ( दात्रं लवित्रं ) यन्निष्पन्नम्, तत् करणत्वं प्रतिपत्तुं शक्नोति । **वा.** ६।१।१।१ पृ. १३४७.

*** दानं अदृष्टार्थं** सारस्वतसत्रगतकामेष्टौ । **भा.** १०।२।१५।४४–४५. * दानं आत्मसंबन्धत्यागपूर्वकं परकीयस्वत्वापादनम् । **वि.** ६।७।१. * दानं आधाने अपरिमितस्य नाम सहस्राधिकस्य । **भा.** ६।७।११।२३ –२५, * दानं आधाने उक्तैकादिभिन्नसंख्याकगवाम् । ६।७।१०।२१–२२, * दानं गवायुतस्य अश्वसहस्रस्य च सकृत् पौण्डरीके । १०।६।१७।६२–६८, * दानं दक्षिणार्थनिर्दिष्टभागस्यैव सर्वस्य विश्वजिति । ६।७।७। ८–१३. * दानम् । दातव्यस्यैव तद् रूपं यत् स्वत्वपरित्यागेन परस्वत्वापादनम् । **भा.** १०।३।१२।५० । ददातिश्च स्वत्वनिवृत्तिपरस्वत्वापादनरूपम् । तच्च यज्ञे एकैकं प्रति कर्तव्यम् । यदि समुदायं अङ्गीकृत्य परित्यजेत्, तथा सति त्याग एव कृतो भवेन्न ददातिः । **टुप्.** * दानं द्वेष्याय अदृष्टमात्रार्थं दार्शपौर्णमासिकपत्नीसंयाजगतकपालाभिहोमनिमित्तकवैश्वानरेष्टौ । **भा.** १०। २।१६।४७, * दानं नाम आत्मीयस्य द्रव्यस्य परस्वत्वापादनम् । तच्च परः स्ववान् स्यादित्येवमर्थम् । १२।४। ५।९, * दानं नास्ति अश्वादीनां ( उभयतो दतां ) विश्वजिति सर्वस्वदाने । ६।७।३।४, * दानं नास्ति पित्रादीनां विश्वजिति सर्वस्वदाने । ६।७।१।१–२, * दानं नास्ति महाभूमेः विश्वजिति सर्वस्वदाने । ६।७।२।३, * दानं नास्ति विश्वजिति धर्मार्थसेवकस्य शूद्रस्य । ६।७। ५।६, * दानं प्रभवता हि शक्यं दातुम्, नाप्रभवता । ३।४।१७।५०, * दानं यज्ञे ऋत्विग्भ्यः परिक्रयार्थमेव, न तु धर्ममात्रम् । १०।२।८।२२–२८. * दानं विप्रसामान्याय न संभवति, किन्तु तद्विशेषस्य । **संकर्ष.** २।४।२. * दानं विभज्य कर्तव्यं ज्योतिष्टोमे द्वादशोत्तरशतगोदक्षिणायाः । **भा.** १०।३।१२।५०–५२. * दानं विश्वजिति दक्षिणाकाले विद्यमानस्य स्वीयस्य । ६।७।६।७, * दानं विश्वजिति विद्यमानस्यैव सर्वस्य स्वीयस्य । ६।७।४।५, * दानं सर्वस्य अष्टरात्रान्तर्गतेऽपि विश्वजिति ( भाष्यमते, वार्तिकमते तु द्वादशाहदक्षिणा अहर्गणस्थेऽपि विश्वजिति ) । ६।७।८।१४–१७.

*** दानानि** सदाचारः । **वा.** १।३।३।७ पृ. २०१. *** दानस्य** पुरुषार्थस्य दीक्षितकर्तृकत्वपर्युदासः ज्योतिष्टोमे । **भा.** १०।८।७।१२–१५. * दानस्य विधिलक्षणत्वे सति दानाङ्गत्वेन अचोदितेऽपि प्रतिग्रहे, विहिते दाने साध्ये तत्सिद्ध्यै प्रयोगविधिना प्रतिग्रहस्य अनुमतत्वात् न तत्करणे पदार्थपरिमाणबाधापरत्याख्यो दोषः । **सु.** पृ. १४९०.

## ⌛ दानेऽपाकोऽर्थलक्षणः । १०।३।८।३६ ॥

आग्रयणे ' वत्सः प्रथमजो दक्षिणा ' । तत्र अन्वाहार्यधर्माः कर्तव्याः इत्युक्तम् । परंतु वत्सस्य दाने कर्तव्ये अपाकः पाको न कर्तव्यः । जीवन्नपि हि वत्सः अर्थलक्षणः परिक्रयं लक्षयितुं समर्थः । यदि पाकः क्रियेत

अश्रुतः प्राणिवधः आचारविरुद्धोऽनुष्ठीयेत । तस्मात् वत्से न पाकः इति सिद्धान्तः । के.

* **दाने द्वौ व्यापारौ** एकः प्रतिग्रहीतुः स्वीकरणम्, अपरो दातुः तत्समर्थाचरणं समर्पणादिरूपम् । **वा.** ३।४।१०।२८ पृ. ९६०.

* **दानक्रिया** उद्देशत्यागलक्षणा क्रिया । ब्राह्मणोद्देशेन पक्वेऽपि अन्ने तदुद्देशेन त्यागं विना ब्राह्मणसंबन्धाप्रसिद्धेः, अन्याप्रियमाणेऽपि च 'तुभ्यमिदं न मम' इति तदुद्देशेन त्यागे कृते तत्संबन्धप्रसिद्धेः अन्वयव्यतिरेकाभ्यां उद्देशत्यागलक्षणैव क्रिया संबन्धापादिका अवसीयते । **सु. पृ. ९३०.**

* **दानविधानेनैव** प्राक् परस्वत्वापादनात् अपर्यवस्यता तस्य ( प्रतिग्रहस्य ) आक्षिप्तत्वात् । **वा.** ३।४। १०।२८ पृ. ९५९.

* **दानशब्दः** अन्नहिरण्यादीनां अदृष्टार्थे त्यागे प्रसिद्धः । दृष्टार्थायां भृतावपि दानशब्दः 'भृतिर्देया' इत्यादौ प्रसिद्धः । वि. १०।२।८. * दानशब्दः कर्मकरेषु सत्सु परिक्रयार्थ इत्युक्तम् । **भा.** १०।२।१५।४४.

* **दानहोमपाकानामुत्कर्षो** दीक्षाकालोत्कर्षे । **भा.** ६।५।१०।३८–३९. * दानपाकहोमानां क्रतुप्रयुक्तभिन्नानां प्रतिषेधः पर्युदासः ज्योतिष्टोमे । १०।७।७। १२–१५.

⌛ '**दामव्यालकटन्यायो** न तव ( रामस्य ) स्यात् कदाचन' इति वसिष्ठ उवाच ( दामः व्यालः कटः एते त्रयो राक्षसाः अतीवयुद्धदुर्मदा अपि द्वैतनिष्ठत्वात् कामक्रोधलोभाविष्टा भूत्वा अन्ते विनष्टा एवेति कथा योगवासिष्ठे ) । **संग्रहः.**

* **दारसंग्रहः** न द्विः । अपिच एवं स्मर्यते 'धर्मे च अर्थे च कामे च नातिचरितव्या' इति । एवं सती अतिचरिता स्यात् । अतोऽपि न द्विर्दारसंग्रहः । एकैव भार्या कर्मार्था अपत्यार्था च । **भा.** १०।८।२।१७, * दारसंग्रहः विद्याग्रहणोत्तरकालः । ६।८।२।१३.

* **दारुहारो** नैष्कर्तृको निष्कर्तनभृतः कर्मयोगे वर्तते, एवं वा एते यज्ञस्य ऋत्विजः । **भा.** १०।२।८।२८.

* **दार्विहोमिको** ब्राह्मणः शिबीनाम् । अम्बष्ठानां दार्विहोमिको ब्राह्मणः । ( दार्विहोमिकः स्मार्तकर्मकर्ता उपाध्यायः ) । **भा.** ८।४।२।२.

* **दार्शपौर्णमासिकं** होतुर्वरणं प्रवृत्ते कर्मणि क्रियते । **भा.** १२।१।१८।३५. * दार्शपौर्णमासिकं हौत्रकाण्डम् ( तैब्रा. ३।५।७), आध्वर्यवकाण्डम् ( तैसं. १।१।४ ), याजमानकाण्डं च ( तैसं. १।६।२ ) । **के.** * **दार्शपौर्णमासिकानि** पात्राणि जुह्वादीनि सौमिकपात्रैर्ग्रहचमसैः सवनीयपुरोडाशादिषु प्रसङ्गसिद्धानि न भवन्ति । **भा.** १२।१।४।१०–११, * **दार्शपौर्णमासिको** विध्यन्तः ऐन्द्राग्नादिषु इष्टिषु । ८।१।४।११। पशौ च । ८।१।५।१२, * दार्शपौर्णमासिको विध्यन्तः चातुर्मास्यादिगतवाजिने सौत्रामणीगतसुराग्रहेषु च । औषधविकृतिः सुरा, सांनाय्यविकृतिर्वाजिनम् । ८।२।१। १–९, * दार्शपौर्णमासिको विध्यन्तः दीक्षणीयायां आतिथ्यायां प्रायणीयायाम्, पशौ च । ८।१।३।३, * **दार्शपौर्णमासिकस्य** फलनियमकर्तृसमुदायस्य सौर्यादौ नातिदेशः । ८।१।१३।२०–२२.

* **दार्शपौर्णमासिकनिर्वापालम्भन्यायेन** (आलम्भनिर्वापन्यायेन २।३।५।१२–१५ ) यदि विशेषणमिष्यते ततो दार्शन्यायेन कर्तव्यतावचनेन लिङ्गेन विशेष्टव्यम् ( **सुधा**— कर्तव्यतावाचिना प्रत्ययेन उपलक्षणीभूय व्यावृत्त्याख्यविशेषणं कर्तव्यम् ) । **वा.** ३।२।८।२१ पृ. ७७५. * 'यदि आलम्भनिर्वापौ विधीयेते ततो न प्राकृतौ तौ विहितौ । यदि न विधीयेते ततः प्राकृतौ लक्ष्येते यौ आलम्भनिर्वापौ कर्तव्यौ' इति आलम्भनिर्वापाधिकरणभाष्योक्तन्यायेन कर्तव्यतावाचिना प्रत्ययेन उपलक्षणीभूत्वा व्यावृत्त्याख्यविशेषणं कर्तव्यमित्युक्तम् । **सु. पृ.** ११२३.

* **दार्शपौर्णमासिकपत्नीसंयाजाङ्गभूतेन** आज्येन सह विकल्प्यमाना जाघनी । **वा.** ३।३।१०।२३ । 'जाघन्या पत्नीः संयाजयन्ति' । **भा.** । न आज्ये पत्नीसंयाजा इज्यन्ते । **कु.**

दार्शपौर्णमासिकपत्नीसंयाजगतकपालाभिहोमनिमित्तकवैश्वानरेष्टौ द्वेष्याय दानं अदृष्टमात्रार्थम् ॥

**द्वेष्ये चाचोदनाद् दक्षिणाऽपनयः स्यात् । १०।२।१६।४७॥**

**भाष्यम्**—दर्शपूर्णमासयोः इदमाम्नायते 'यदि पत्नीः संयाजयन् कपालमभि जुहुयात् ( कपालं अभिलक्ष्य कपालोपरि इत्यर्थः ), वैश्वानरं द्वादशकपालं निर्वपेत् । तस्य एकहायनो गौर्दक्षिणा । तं स द्वेष्याय दद्यात्' इति । तत्र संशयः किं परिक्रयार्थे एकहायनस्य दानम्, उत धर्ममात्रमिति । किं प्राप्तम् ? दक्षिणाशब्दात् परिक्रयार्थमिति । परिक्रयार्थे हि दक्षिणाशब्दो भवति । एवं प्राप्ते, ब्रूमः । द्वेष्ये च धर्ममात्रं दानमिति चशब्देन अन्वादिश्यते । कुतः ? अचोदनात् द्वेष्यस्य ऋत्विजः । नहि द्वेष्यः ऋत्विक् भवति, 'ऋत्विगाचार्यौ नातिचरितव्यौ' इति । यदा परिक्रेतव्येनैव कर्त्रा प्रयोजनं नास्ति, तदा किं दक्षिणाशब्दः करिष्यति ? अपिच परिक्रयार्थे सति दक्षिणाऽपनयः स्यात् चोदकप्राप्तः अन्वाहार्यः अपनीयेत; तत्र चोदको बाध्येत । तस्मात् धर्ममात्रं एकहायनस्य दानम्, अनृत्विजे दातव्यमिति ।

**टुप्**— द्वेष्ये चाचोदनाद् दक्षिणाऽपनयः स्यात् । ( अत्र टुप्टीकायां अचोदनात् इति पञ्चम्यन्तः पाठः । रत्ने तु अचोदनेन इति तृतीयान्तः पाठः । सूत्रार्थकथनकाले तु 'अचोदितत्वात्' इति व्याख्यातम् ) **अपिच परिक्रयार्थे सति** दक्षिणाशब्दः **स्यात् । चोदकप्राप्तः अन्वाहार्यः अपनीयेत, तत्र चोदको बाध्येत** इति अयुक्तोऽयं ( भाष्य– ) ग्रन्थः । कथम् ? पत्नीसंयाजनवेलायां अन्वाहार्यो दत्तः । यद्यपि निमित्ते इयमिष्टिः ( वैश्वानरी ) विधीयते, तथापि ( प्रधानदक्षिणयैव ) प्रसङ्गेनैव ( कार्यस्य ) निर्वृत्तत्वात् नान्वाहार्यः ( चोदकेन ) प्राप्नोति ।

**शा**— दर्शपूर्णमासयोरेव नैमित्तिकमङ्गं तन्त्रमध्ये एव क्रियते ।

**सोम**— पूर्वत्र दक्षिणाशब्दाभावात् परिक्रयार्थत्वाभावेऽपि इह दक्षिणाशब्दात् परिक्रयार्थत्वमिति संगतिः । सूत्रार्थस्तु— द्वेष्ये च यद् दानम्, तस्य दक्षिणात्वात् अपनयः स्यात् अदृष्टार्थता स्यादितियावत् । द्वेष्यस्य ऋत्विजः अचोदितत्वादिति ।

**वि**—'क्रीत्यै धर्माय वा द्वेष्ये दानं स्याद्, दक्षिणोक्तितः । क्रयाय, मैवं द्वेष्यत्वं नर्त्विजो धर्मकृत् ततः ॥' धर्मकृत् अदृष्टजनकम् ।

**भाट्ट**— दर्शपूर्णमासयोः 'यदि पत्नीः संयाजयन् कपालमभिजुहुयात्, वैश्वानरं द्वादशकपालं निर्वपेत् तस्यैकहायनो गौर्दक्षिणा, तं स द्वेष्याय दद्यात्' इति श्रुतम् । तत्र किमिदं दक्षिणादानमदृष्टार्थम्, उत ऋत्विगानत्यर्थमिति चिन्तायाम्, दक्षिणाशब्दस्य आनतिकरद्रव्यवाचित्वेन तद्दानस्य आनत्यर्थत्वप्रतीतेः, नादृष्टार्थत्वकल्पनोचिता । न चास्याः प्रयोगमध्यवर्तिनिमित्तानन्तर्यबलेन प्रयोगमध्यवर्तितया प्रधानदक्षिणयैव प्रसङ्गसिद्धेर्दक्षिणान्तरानपेक्षत्वादेव नानन्तर्यार्थता, दक्षिणाविधानान्यथाऽनुपपत्त्या आनतिविशेषकल्पनेन तदर्थत्वोपपत्तेः । अस्तु वा दक्षिणाऽऽम्नानबलात् अस्याः प्रयोगबहिर्भूतत्वमेव । निमित्तानन्तर्यं तु जातेष्टिवत् व्यवधानेऽपि न विरुध्यते । न चैवमपि 'ऋत्विगाचार्यौ नातिचरितव्यौ' इति स्मरणात् ऋत्विजां द्वेष्यत्वानुपपत्तेः द्वेष्यसंप्रदानकदानस्य आनत्यर्थत्वानुपपत्तिः, ऋत्विक्त्वसंपत्त्युत्तरं तस्य द्वेषनिषेधेऽपि पूर्वकृतद्वेषस्य आर्त्विज्ये बाधकाभावात्, सत्यपि द्वेष्यस्यार्त्विज्यनिषेधे तस्य पुरुषार्थतया निषेधमुल्लङ्घ्यापि क्रतुकरणे वैगुण्याभावाच्च । क्रत्वर्थत्वेऽपि वा निषेधस्य सामान्यविषयत्वेन दक्षिणाऽऽम्नानबलकल्प्यद्वेष्यनियमविधिना विशेषविषयेण बाधोपपत्तेश्च । अतोऽस्य दक्षिणात्वात् कर्तव्या एव अन्वाहार्यधर्माः, पाकादयस्तु अर्थलोपात् निवर्तन्ते । **इति प्राप्ते**, न तावदत्र प्राकृतदक्षिणादानानुवादेन गुणमात्रविधिः संभवति, प्राकृतदानकार्यस्य आनतेः प्रधानार्थान्वाहार्येणैव निष्पन्नतया प्राकृतदानस्य इह अप्राप्तत्वात्, तदनुवादेन अनेकगुणविधानासंभवाच्च । अतश्चावश्यं तच्छब्दवाच्यं गुणद्वयविशिष्टं द्रव्यम्, द्वेष्यश्च संप्रदानमिति उभयविशिष्टं दानान्तरमेवात्र विधेयम् । तदपि च न प्राकृतकार्यार्थतया, तस्य पूर्वमेव निष्पन्नत्वात्, द्वेष्यकर्तृकत्वनैयत्यस्य दर्श-

पूर्णमासयोः प्रमाणान्तरासिद्धतया तत्संप्रदानकत्वस्य नैयत्यासंभवेन आनतिविशेषस्यापि कल्पयितुमशक्यत्वाच्च। द्वेष्यसंप्रदानकदानाम्नानबलादेव अस्यां प्रायश्चित्तेष्टौ प्रयोगबहिर्भावे द्वेष्यकर्तृविधिनिमित्तानन्तर्यबाधं प्रयाजाद्यंशे अतिदेशं चानपेक्षितं च प्रकल्प्य आनत्यर्थत्वकल्पने तु तवैव गौरवम्। न हीदं फलमुखम्, एतत्कल्पनमन्तरेण आनतेरबुध्यमानत्वात्। अतो वरमदृष्टार्थमेवेदं दानं प्रयोगमध्यक्रियमाणाया एव प्रायश्चित्तेष्टेरङ्गम्। दक्षिणाशब्दस्तु तच्छब्दापेक्षितार्थसमर्पकार्थवादे श्रुतो द्वेष्यानतिकरत्वमात्रेण अगत्या कथञ्चिन्नेयः। अतः अन्वाहार्यधर्माणामप्रसक्तत्वादेव निवृत्तिः। अध्यायसंगतिस्तु पूर्वपक्षे पाकलोपात् द्रष्टव्या। १५.

**मण्डन**— 'दानं द्वेष्याय नानतिः।'

**शंकर**— 'द्वेष्य ऋत्विङ् न नो मतः।' नः अस्माकम्।

* **दार्शपौर्णमासिकी** वेदिः सौमिकेष्टिपश्वादिषु सौमिकवेद्या प्रसङ्गसिद्धा। सौमिकवेदिन्यायः। **भा.** १२।१।३।८–९, * दार्शपौर्णमासिकी वेदिः हविषामासादनार्था। सौमिकी प्रचारार्था। १२।१।३।८.

* **दार्शिकसांनाय्यपयोधर्मातिदेशः** वैश्वदेव्यामिक्षायाम्। **वि.** ८।२।४.

* **दाशतयी** दशमण्डलयुक्ता ऋक्संहिता। **वि.** ३।२।८. * **दाशतयीभ्यः** उत्पन्नगायत्रीणां समानयनं बृहस्पतिसवादौ। **भा.** ८।३।६।१२–१६, * दाशतयीभ्यः मानवीनामेकादशानामृचामानयनं विकृतिविशेषे सोमारौद्रेष्टौ सामिधेन्यर्थम्। १०।६।१९।७३–७६.

* **दास्यादिभागान्तरस्य** अध्वर्योः वाजपेयश्रुतयजुर्युक्तरथेन न बाधः। **भा.** १०।३।२१।७४–७५.

* **दाहे** कृत्स्नपुरोडाशस्य जाते क्षामेष्टिः प्रायश्चित्तम्। **भा.** ६।४।५।१७–२१, * दाहे सोमस्य पञ्च गाः दक्षिणां दद्यात्। १०।३।१५।५९.

**दाहकदाह्यन्यायः**। दाहकः अग्निः दाह्यकाष्ठाकारं भजते, तथा चैतन्यं विषयाकारं भजते। **संग्रहः, साहस्री.** ३६८.

* **दिक्** आकाशदिक्कालात्मनां परमाणुदृष्टान्तबलेन नित्यत्वम्। **वा.** १।३।८।२७ पृ. २८५. * दिक् प्रत्यक्षैव मीमांसकमतेन। **रत्न.** १०।४।१२।२३. * **दिशः** षडिन्द्रियजन्यप्रत्यक्षविषयत्वं बाह्यविषयसंबन्धित्वेन प्राच्यां पर्वतो दृश्यते इत्याद्यनुभवात्। **मणि.** पृ. १७०. * **दिशामवेष्टीनां** द्वेधा प्रयोगः राजसूयान्तःपाती बहिःपाती च। अन्नाद्यकामेन ब्राह्मणेन वैश्येन वा दिशामवेष्टयः स्वातन्त्र्येण कर्तुं शक्यन्ते। तत्राङ्गानां तन्त्रम् 'एतयाऽन्नाद्यकामं याजयेत्'। **वि.** ११।४।३, * दिशामवेष्टीनां यान्यङ्गानि, तेषां राजसूये अन्तःप्रयोगे भेदः उत्पत्तिशिष्टेन दक्षिणाभेदेन प्रयोगभेदावगमात्। बहिष्प्रयोगे तु तन्त्रम्। ११।४।३.

* **दिङ्मोहाभिधानं** आकुलीभावसामान्यात्। तथा च लोके कर्तव्यतासु 'दिशो मे परिभ्रमन्ति' इति वक्तारो भवन्ति। **वा.** १।२।१।१० पृ. १२६.

* **दिग्वादः** शाखावादश्च। दर्शपूर्णमासयोः वत्सापाकरणाद्यर्था शाखामधिकृत्य 'प्राचीमाहरति उदीचीमाहरति प्रागुदीचीमाहरति' इति श्रुतम्। अत्र प्राच्यादिशब्देन दिगुक्ता, प्राच्यादिदिशं गत्वा शाखा आहर्तव्या इति यो वादः स दिग्वादः। अथ प्राच्यादिशब्दो न दिग्वाचकोऽत्र, किन्तु कांचिद्दिशं गत्वा पलाशवृक्षस्य या प्राच्यादिदिशि विरूढा शाखा, सा आहर्तव्या इति यो वादः स शाखावादः। वादः पक्षः इत्यर्थः। ताविमौ वादौ 'शाखायां तत्प्रधानत्वात्' ४।२।२।७ इत्यत्र उदाहृतौ भाष्ये। **के.**

* **दिग्विभागः** अर्थवादः प्राचीनवंशस्तुतये। ज्योतिष्टोमे 'प्राचीनवंशं करोति देवमनुष्या दिशो व्यभजन्त। प्राचीं देवाः, दक्षिणां पितरः, प्रतीचीं मनुष्याः, उदीचीं रुद्राः। यत् प्राचीनवंशं करोति देवलोकमेव तद्यजमान उपावर्तते' इति। **वि.** ३।४।६.

**दिग्विभागश्च तद्वत् संबन्धस्यार्थहेतुत्वात्। ३।४।२।१०॥**

ज्योतिष्टोमे दिग्विभागः श्रूयते 'प्राचीं देवा अभजन्त, दक्षिणां पितरः, प्रतीचीं मनुष्याः, उदीचीमसुराः' ('उदीचीं रुद्राः' इति शाखाऽन्तरे) इति। तत्र

प्रतीचीं मनुष्याः इत्यत्र विधिर्वा अर्थवादो वा इति विचारे सिद्धान्तमाह । 'प्राचीनवंशं करोति' इत्यनेन विधिना एकवाक्यत्वात् सर्वं दिग्विभागवाक्यं अर्थवादः, न विधिः । तद्वत् पूर्वोक्तनिवीतवाक्यं यथा उपवीतविधेरर्थवादः तथा इदमपि । कुतः ? संबन्धस्य मनुष्यप्रतीचीसंबन्धस्य अर्थहेतुत्वात् अर्थवादार्थभूतस्तुतौ आलम्बनतया हेतुत्वोपपत्तेः । अथवा पूर्वाह्णे म्याप्रियमाणानां मनुष्याणां आदित्यं पृष्ठतः कर्तुं प्रतीचीसंबन्धस्य अर्थतः हेतुत्वात् इति । के.

ꕤ दिग्विभागाधिकरणम् । ज्योतिष्टोमे श्रुतो दिग्विभागः प्राचीनवंशविधेरर्थवादः ॥

**दिग्विभागश्च तद्वत् संबन्धस्यार्थहेतुत्वात् । ३।४।२।१०॥**

**भाष्यम्**— ज्योतिष्टोमं प्रकृत्य श्रूयते 'प्राचीं देवा अभजन्त दक्षिणां पितरः प्रतीचीं मनुष्या उदीचीमसुराः' इति । अपरेषाम् 'उदीचीं रुद्राः' इति । तत्र संदेहः किं विधिः, उतार्थवादः । विधिः सन् किं मनुष्यधर्मः, उत कर्मधर्मः । अथवा प्रकरणे मनुष्यप्रधाने कर्मणि निवेशः, किंवा आतिथ्ये इति । किं तावत् प्राप्तम् । दिग्विभागश्च तद्वत्, संबन्धस्यार्थहेतुत्वात् । य एष दिग्विभागः, स निवीतवत् विचार्यः । यो निवीते पूर्वपक्षः स इह पूर्वपक्षः, यो मध्यमः स मध्यमः, यः सिद्धान्तः स सिद्धान्तः । अर्थवत्त्वात् विधिः, मनुष्यसंबन्धान्मनुष्यधर्मः इति पूर्वपक्षः । प्रत्यङ्मुखा उदङ्मुखा वा पृष्ठतः आदित्यं प्राशु पदार्थाननुतिष्ठन्ति मनुष्या इत्यनुवादः । विधिरेव, प्रकरणानुग्रहाच्च ज्योतिष्टोमधर्मः । वाक्यप्रकरणानुग्रहाय ज्योतिष्टोमे मनुष्यप्रधाने दक्षिणाव्यापारे निवेश इत्यपरः पक्षः । भिन्नत्वात् वाक्यानां आतिथ्ये निवेशः इत्यपरं मतम् । अर्थवादोऽयं प्रकरणानुग्रहाय । 'प्राचीनवंशं करोति' इत्यनेन विधिना एकवाक्यत्वस्य प्रत्यक्षसिद्धत्वादिति सिद्धान्तः ।

शा— 'प्रतीचीं मनुष्याः' इत्यत्र निवीताधिकरणवत् सर्वे पक्षा रचयितव्याः । 'व्यभजन्त' इति पुराकल्पेन पूर्वपुरुषाचरितत्वेन प्रशंसा गम्यते, तया च विधित्वं गम्यते इति विशेषाशङ्का । तां निवर्तयितुं अधिकरणम् ।

**सोम— सूत्रार्थतु**— दिग्विभागः प्रतीच्याः दिशः मनुष्यकर्तृको विभागोऽपि निवीतवत् अर्थवादार्थः । प्रायेण पूर्वाह्णे म्याप्रियमाणानां मनुष्याणां आदित्यं पृष्ठतः कर्तुं प्रतीचीसंबन्धस्य अर्थतः प्राप्तत्वेन तत्र विध्ययोगात् इति । अत्र 'संबन्धस्य अर्थहेतुत्वात्' इति सूत्रावयवः निवीताधिकरणद्वितीयसूत्रावयवोक्तार्थस्मारकत्वेन अनतिप्रयोजनत्वात् आचार्यैः नोक्तः, तदनुसारेण ग्रन्थकृताऽपि न पठितः । ( मुद्रकैस्तु अनवधानात् मुद्रितः ) ।

वि— 'दिशं प्रतीचीं मनुजा व्यभजन्तेत्यसौ विधिः । वादो वा, ऽत्र पुराकल्पस्तुत्यर्थो विधिमर्हति ॥, प्राचीनवंशवाक्योक्तेर्विधावस्यैकवाक्यतः । दिग्विभागोऽर्थवादोऽयमुपवीते निवीतवत् ॥'

**भाट्ट**— सोमे 'प्राचीनवंशं करोति' इत्येतद्विधिशेषः 'देवमनुष्या दिशो व्यभजन्त प्राचीं देवा दक्षिणां पितरः प्रतीचीं मनुष्या उदीचीं रुद्राः' इत्ययं श्रुतः । तत्र मनुष्यसंयुक्ते निवीताधिकरणवत् औदुम्बराधिकरणवच्च विधित्वं निरस्तमपि पूर्वाधिकरणवत् मनुष्यकर्तव्यवैदिककर्मणि तावत् दिगन्तरस्यैव सामान्यविशेषादिवचनेन प्राप्ततया प्रतीच्या अप्राप्तेः, लौकिके च कर्मणि प्रतीच्या नित्यप्राप्त्यभावात् । विधित्वं विधिकल्पकत्वं वा । इति प्राप्ते, इह प्रतीच्या मनुष्यसंबन्धमात्रोपादानेऽपि कर्मविशेषानुपादानात् सर्वत्र विधानस्य त्वयैव निरस्तत्वात्, यस्यामेव क्रियाव्यक्तौ प्रतीचीदिगभिमुखत्वं लोके यदृच्छया सिद्धम्, तादृशक्रियागतमेव मनुष्यप्रतीचीसंबन्धं गृहीत्वा स्तुत्युपपत्तेर्नातिरिक्तविध्यन्तरकल्पनं प्रमाणवत् । 'उपरि हि' इत्यत्र तु दैवाग्निहोत्रत्वावच्छेदेन उपरिभावश्रवणात्, तस्य च अप्राप्तत्वेन विध्यन्तरकल्पनया दैवाग्निहोत्राङ्गसमिद्धारणानुवादेन उपरिभावविधिः । अनुमितवाक्यत्वाच्च न विशिष्टोद्देशः इति वैषम्यम् ।

**मण्डन**— 'प्राचीनवंशस्तुतये प्रतीची ।' २.

**शंकर**— 'दिग्विभागो निवीतवत् ।' ८.

* **दित-पूर्ण**- घृत- विदग्धानां समूलत्व- पात्राधोभाग- नवनीत- यथोचितपाकानां स्तुतये अनुवादः । परुषिदिताधिकरणम् । भा. ३।४।३।११.

*** दिनैर्द्वादशभिः** प्रत्येकं दीक्षोपसत्सुत्याः साध्याः द्वादशाहे। भा. ११।४।५।१५-२२.

* **दिवसपरत्वेन** संवत्सरशब्दस्य विश्वसृजामयने सहस्रसंवत्सरे मनुष्याधिकारः। अधिकारशब्दे अधिकरणम्। भा. ६।७।१३।३१-४०.

* '**दिवा** संध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः। कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः॥' इति कालतः वाचनिकव्यवस्थाविधिः। बाल. पृ. १८.

* **दीक्षणीया** अश्वमेधे त्रैधातवीया इष्टिरेव। वि. ९।१।२ वर्णकं २. * दीक्षणीया ज्योतिष्टोमे 'आग्नावैष्णवमेकादशकपालं निर्वपेत् दीक्षिष्यमाणः'। भा. १२।२।९।२५. * दीक्षणीया पुरुषसंस्कारद्वारेणोपकरोति, न आरम्भार्थतया। दीक्षासंजननमस्या उत्पत्तिवाक्येनैवावगम्यते। टुप्. १०।१।२।४ पृ. १८०५. * दीक्षणीया साग्निचित्ये उखासंभरणोत्तरम्। के. * **दीक्षणीयायाः** इष्टेरन्ते दीक्षितशब्दस्य प्रवृत्तिः स्यात्। भा. ५।३।११। ३०, * दीक्षणीयायाः पूर्वं सावित्रहोमाः उखासंभरणं इष्टकाः पशुश्च कर्तव्याः, ततो दीक्षणीया। सावित्रहोमन्यायः। ५।२।११।२२. * दीक्षणीयायाः याजुर्वेदिकत्वात् साङ्गायामुपांशुत्वं प्राप्नोति। तच्चोदकेन बाध्यते। 'प्राक् स्विष्टकृतः प्रथमस्थानेन' 'मध्यमेनेडायाः' 'शेषं तृतीयस्थानेन' इत्येतत् स्वरवैचित्र्यं चोदकप्राप्तम्। तत् 'अग्नीषोमीयात्' इत्युपांशुत्वेन बाध्यते। 'यावत्या वाचा कामयेत' इत्यनेन दीक्षणीयाशब्दवाच्ये वाङ्नियमो विधीयते। स दीक्षणीयाशब्दः प्रधानमात्रे वर्तते नाङ्गेषु। तस्मात् उपांशुत्वमङ्गेषु प्रधानेषु (तु) 'यावत्या वाचा' इति। टुप्. ९।१।६।२५ पृ. १६६७-६८. * **दीक्षणीयायां** द्वादशमानं हिरण्यं दक्षिणा श्येने। भा. ८।१।९।१६. * दीक्षणीयायां यावत्या वाचा कामयेत तावत्या अनुब्रूयात्। अयं स्वरः दीक्षणीयाऽपूर्वप्रयुक्तः, न परमापूर्वप्रयुक्तः। ज्योतिष्टोमे। वा. ३।३।२।९ पृ. ८१२. * दीक्षणीयायां स्वरः (उच्चावचध्वनिः) अङ्गापूर्वप्रयुक्तः। दीक्षणीयावाङ्नियमन्यायः। भा. ९।१। २।२-३ वर्णकं २.

* दीक्षणीयाऽग्निरेव सोमान्तं धारणीयः। **संकर्ष.** ३।२।१०.

* **दीक्षणीयाऽधिकरणम्**। अङ्गगुणविरोधन्यायः। सुत्या पर्वणि दीक्षा अपर्वणि। भा. १२।२।९।२९.

* **दीक्षणीयाऽन्ते** दीक्षितत्वसिद्धिः, दीक्षितधर्मानुष्ठानम्। ज्योतिष्टोमे दीक्षणीयेष्ट्या इत्यत्राधिकरणम्। भा. ५।३।११।२९-३१.

* **दीक्षणीयाऽऽदयो** धर्माः अग्निष्टोमसंस्थं ज्योतिष्टोमं प्रकृत्य उक्ताः, न सर्वसंस्थम्। संस्थाऽधिकरणम्। भा. ३।६।१६।४१-४७. * दीक्षणीयाऽऽदयः पुरुषसंस्काराः फलप्रतिग्रहणयोग्यं पुरुषं कुर्वन्तो यागकार्ये वर्तमानास्तदर्थाः। टुप्. ७।३।१४।३६. * **दीक्षणीयाऽऽदीनि** कर्माणि दर्शपूर्णमासप्रकृतिकानि ज्योतिष्टोमे। भा. १०।१।२।४. * **दीक्षणीयाऽऽदीनां** ज्योतिष्टोमाङ्गत्वात् सोमविकृतिषु अतिदेशः। सोमयागप्राधान्याधिकरणम्। **सोम.** ४।४।१२. * **दीक्षणीयाऽऽदिषु** अग्न्यन्वाधानं देवतापरिग्रहार्थमपि न कर्तव्यम्। अग्न्यन्वाधानशब्दे अधिकरणम्। भा. १२।१।१२।२४-२८, * दीक्षणीयाऽऽदिषु अन्वाहार्यदक्षिणा सौमिक्या दक्षिणया प्रसङ्गसिद्धा। सौमिकदक्षिणान्यायः। १२।१।१६।३२, * दीक्षणीयाऽऽदिषु आरण्याशनं सौमिकेन पयोव्रतादिना प्रसङ्गसिद्धम्। १२।२।१४।३०. * दीक्षणीयाऽऽदिषु आरम्भणीया न क्रियते। टुप्. १०।१।२।४. * दीक्षणीयाऽऽदिषु जागरणं दार्शपौर्णमासिकं सौमिकेन दीक्षाकालीनजागरणेन प्रसङ्गसिद्धं न भवति। जागरणन्यायः। भा. १२।१।८।१७, * दीक्षणीयाऽऽदिषु दार्शिकाग्निसमिन्धनं (अग्न्यन्वाधानम्) न कार्यम्। १२।१।१०। १९, * दीक्षणीयाऽऽदिषु पत्नीसंनहनं सौमिकेन प्रसङ्गसिद्धम्। १२।१।१३।२९, * दीक्षणीयाऽऽदिषु व्रतोपायनं 'अग्ने व्रतपते' इत्यादिरूपं सौमिकप्रायणीयाऽऽदिषु प्रागेव उपेतत्वात् पुनर्नानुष्ठेयम्। १२।१।११। २०-२३, * दीक्षणीयाऽऽदिषु शेषभक्षः ऋत्विग्भिः प्रतिपत्त्यर्थः कर्तव्यः। १२।१।१७।३३-३४, * दीक्षणीयाऽऽदिषु शेषभक्षः यजमानेन कर्तव्य एव। १२।१।५।११-

–३२, * दीक्षणीयाऽऽदिषु होतुर्वरणं सौमिकेन प्रसङ्गसिद्धं न भवति । १२।१।१८।३५–४१.

* **दीक्षणीयाऽऽदिपरिसाम्नां** दीक्षणीयादिप्रयोगानन्तर्गतत्वेऽपि अग्नीषोमीयप्राचीनत्वाविशेषात् उपांशुता। सु. पृ. ११८३.

* **दीक्षणीयाऽऽदिविकृतौ** अन्वारम्भणीयायाः बाधः। आरम्भणीयायाः इत्यत्राधिकरणम्। भा. १०।१।२।४.

* **दीक्षणीयेष्टिः** अस्थियज्ञे मृताधिकारपक्षे लुप्यते (क्त्वाचिन्ता)। वि. १०।२।१८, * **दीक्षणीयेष्ट्या** दीक्षासिद्धिः, दण्डमेखलाऽऽदिकं तु दीक्षाऽभिव्यञ्जकम्। ५।३।११, * **दीक्षणीयेष्ट्यादयः** इष्टयः ज्योतिष्टोमे अङ्गम्, ज्योतिष्टोमप्रकरणे उपदिष्टत्वात्। सोमयागाः प्रधानम्। ४।४।१२.

* **दीक्षणीयादिनकृत्यान्ते** रुक्मप्रतिमोचनादिकं कार्यं अग्निचयने। भाट्ट. ५।२।१२.

**दीक्षणीयावाङ्नियमन्यायः। स्वरनियमः॥**

**संस्कारे युज्यमानानां तादर्थ्यात् तत्प्रयुक्तं स्यात्। ९।१।२।२ वर्णकं २॥**

**भाष्यम्**— एवं वा अस्ति ज्योतिष्टोमः। तत्रेदं समाम्नायते 'यावत्या वाचा कामयेत, तावत्या दीक्षणीयायामनुब्रूयात्। मन्द्रं प्रायणीयायाम्, मन्द्रतरमातिथ्यायाम्, उपांशूपसत्सु' इति। तत्रायमर्थः सांशयिकः किं परमापूर्वप्रयुक्ता एते धर्माः, उत दीक्षणीयाद्यपूर्वप्रयुक्ता इति। किं प्राप्तम्? परमापूर्वसंस्कारे दीक्षणीयाऽऽद्यपूर्वे युज्यमानस्यास्य धर्मस्य परमापूर्वार्थत्वात् दीक्षणीयाऽऽदीनां परमापूर्वार्थतैव स्यात्। परमापूर्वं हि फलवत्। यत् कर्तव्यतयाऽभिसंबध्यते, तदेव धर्मैरभिसंबध्यते, नाङ्गापूर्वम्। निष्प्रयोजनं हि तदिति।

**टुप्**— संस्कारे दीक्षणीयाऽऽख्ये यो धर्मः, स परमापूर्वयुक्तः (न स्वरूपप्रयुक्तः)। कुतः? परमापूर्वप्रयुक्तत्वात् दीक्षणीयायाः, स्वयं निष्फलत्वात्।

**तेन त्वर्थेन यज्ञस्य संयोगात् धर्मसंबन्धस्तस्माद् यज्ञप्रयुक्तं स्यात् संस्कारस्य तदर्थत्वात्। ३॥**

**भाष्यम्**— तेन त्वर्थेन दीक्षणीयादिना, यस्मात् परमापूर्वस्य संबन्धः, तस्मात् परमापूर्वमेवंजातीयकेन धर्मेण धर्मवत्। तस्मादङ्गयज्ञप्रयुक्तमेवंजातीयकं धर्मजातम्। तथा श्रुतिः शब्दो भवति। इतरस्मिन् पक्षे लक्षणा स्यात्। न च प्रायणीयाऽऽद्यपूर्वं निष्प्रयोजनम्। ज्योतिष्टोमस्य हि तदुपकारकम्। न च तद्विना एवंजातीयकेन धर्मेण प्रायणीयाऽऽद्यपूर्वं सिद्धम्। अवहन्तिपिषिवत्। यदुच्यते, विनैव धर्मेण तदपूर्वं भविष्यतीति। तन्न। कुतः? तदपि हि अपूर्वं शब्दादेवावगम्यते अस्तीति न प्राक् शब्दादन्येन प्रमाणेन उपसंख्यायते। एवंजातीयके च शब्दप्रमाणके यत् शब्द आह, तदस्माकं प्रमाणम्। शब्दश्च प्रायणीयाऽऽद्यपूर्वस्य उपकारकमिमं धर्ममाह, न परमापूर्वस्य, वचनप्रामाण्यात्। एवं च आ-परमापूर्वनिष्पत्तेः अजरमविनाशि चात्र धर्मः प्रतिष्ठितः, न परमापूर्वं संक्रमिष्यति। एवमपि प्रयोजनसमर्थम्। तस्मादेवंजातीयकं धर्मजातं अङ्गापूर्वप्रयुक्तमेवेति। किं भवति प्रयोजनमितरस्मिन्नितरस्मिन् वा पक्षे इति? उच्यते। अश्वमेधे समाम्नायते, त्रैधातवीया भवतीति। यदि परमापूर्वप्रयुक्त एवंजातीयको धर्मः, ततस्तस्योपकारविशेषे निबद्ध इति तत्कार्यापन्नायां त्रैधातवीयायां भविष्यति। अथ आग्नावैष्णवाऽपूर्वप्रयुक्तः, ततो नेदमाग्नावैष्णवापूर्वमिति तत्र त्रैधातवीयाऽपूर्वं न तेन धर्मेण संभन्त्स्यते इति।

**टुप्**—'तेन त्वर्थेन...तदर्थत्वात्।' ३॥ दीक्षणीयाद्यर्थेन यो धर्मः संयुक्तः स न परमापूर्वप्रयुक्तः (किन्तु स्वापूर्वप्रयुक्तः)। कुतः? दीक्षणीया आत्मीयमपूर्वं लक्षयति, तेन धर्माणां संबन्धः (तदतिक्रमे कारणाभवात्)। तस्मिन् पक्षे लक्षणैव (केवला, न लक्षितलक्षणा)। यदा तु (लक्षितं) दीक्षणीयाऽपूर्वं परमापूर्वं लक्षयति तदा लक्षितलक्षणया धर्माणां संबन्धः। (यदि सिद्धान्तेऽपि लक्षणा, कथं तर्हि भाष्ये श्रुत्यभिधानम्? अत आह—) तस्मात् लक्षणां श्रुतिं ब्रवीति (भाष्यकारः) लक्षितलक्षणाऽपेक्षया (संनिकृष्टार्थत्वात्)। अथवा (दीक्षणीयाऽऽख्यं) अङ्गं संबन्धात् अङ्गिनं (ज्योतिष्टोमम्) शक्नोति लक्षयितुम्। तेन अङ्गि-

संबन्धे लक्षणा अङ्गसंबन्धे तु श्रुतिः ( अङ्गिसंबन्धे विवक्षिते लक्षितेन अङ्गिना तदपूर्वं लक्षयितव्यम्, अङ्गापूर्वसंबन्धे तु श्रुतयैव दीक्षणीयया स्वापूर्वलक्षणा । तदनेन प्रकारेण पूर्वपक्षे लक्षितलक्षणा, सिद्धान्ते तु लक्षणा इत्येतदेव प्रतिपादितम् ) [ ' अथवा ' इत्यादिग्रन्थः लिखितटुप्टीकायां नास्ति । तन्त्ररत्ने तु व्याख्यातत्वात् अस्त्येव सः ] ।

पूर्वपक्षे ' त्रैधातव्या दीक्षणीया भवति ' इति आग्नावैष्णवकार्यापत्त्या ( त्रैधातव्या ) तद्धर्मैर्युज्यते यथा नीवाराः प्रोक्षणेन ( युज्यन्ते ) । सिद्धान्ते तु आग्नावैष्णवापूर्वप्रयुक्ता धर्माः त्रैधातवीयायां च अपूर्वान्तरम् । न चापूर्वान्तरं अपूर्वान्तरधर्मान् गृह्णाति । (भाष्योक्तं प्रयोजनमाक्षिपति—) अनुपपन्नमिदं प्रयोजनम् । ( कथम् ? ) ' त्रैधातवीया दीक्षणीया भवति ' इति सामानाधिकरण्यम् ( अनयोः ) । तत्र यदि मुख्यवृत्ते द्वे अपि पदे गृह्येयातां (ततः) सामानाधिकरण्यं नोपपद्यते । तस्मात् एकमत्र गौणं पदम्, अन्यत् मुख्यम् । तत्र प्राथम्यात् अविरोधाच्च त्रैधातव्यापदं मुख्यम्, दीक्षणीयापदं तु ( जघन्यत्वात् संजातविरोधं च ) आत्मीयं क्रतूपकारं लक्षयति । तस्मिन् लक्षिते त्रैधातव्या विधीयते ( त्रैधातव्या दीक्षणीयाकार्यकारिणी भवतीति ) । सा ( च ) विधीयमाना तत्कार्यापन्नत्वात् तद्धर्मान् लभते । सिद्धान्तेऽपि यथा खलेवाली यूपकार्ये विधीयमाना तद्धर्मान् (अञ्जनादीन्) लभते । तस्मात् उभयोः पक्षयोः तुल्या धर्मप्राप्तिरिति । अथोच्येत ' त्रैधातव्या दीक्षणीया भवति ' इत्यनेन त्रैधातवीयायाः यत् कार्यम्, तत् निवार्य दीक्षणीयाकार्ये ( तस्यां ) विधीयते । तच्च ( दीक्षणीयाकार्यम् ) आत्मीयैरेव ( यथासिद्धैः ) धर्मैः आत्मीयेन चापूर्वेण त्रैधातव्या साधयिष्यति, न दीक्षणीयाधर्मान् ग्रहीष्यति सिद्धान्तवादिनः । ( एतत् दूषयति— ) पूर्वपक्षेऽपि यदि दीक्षणीयाकार्ये ( यथासिद्धे ) त्रैधातवीया वर्तेत, तथा सति आत्मीयैरेव धर्मैः तत्कार्यं साधयिष्यति प्रसिद्धधर्मकत्वात् । अथ न वर्तते ( दीक्षणीयाकार्ये त्रैधातवीया, तदा ) सुतरां आत्मीया एव धर्मास्तस्याः । अपि च परमापूर्वप्रयुक्ततायामपि वाङ्नियमस्य प्रकृतौ आग्नावैष्णवो विशिष्टं द्वारभूत् ( आग्नावैष्णवापूर्वमित्यर्थः ) । तच्चेह ( द्वारम् ) नास्ति । तस्मात् नास्ति ( पूर्वपक्षे ) वाङ्नियमः ।

ननु अनेन न्यायेन नीवारेषु प्रोक्षणं न प्राप्नोति ( आग्नावैष्णवपदं यथाश्रुतं मन्वानस्य चोद्यम् ) । उच्यते । सत्यं विशिष्टं द्वारं ( व्रीहयः ) प्रोक्षणस्य । इयांस्तु ( नीवारत्रैधातव्ययोः ) विशेषः, व्रीहयो दृष्टेन ( तण्डुलनिर्वृत्त्या अपूर्वस्य ) उपकुर्वन्ति, नीवाराश्च तत्कार्यं प्रत्यक्षतः साधयन्तो दृश्यन्ते । तत्र तत्कार्यापत्त्या धर्मप्राप्तिर्युक्ता । इह तु ( दीक्षणीयायाम् ) अदृष्टं द्वारम् ( अपूर्वम् ) तस्मिन् कार्ये त्रैधातव्या वर्तते इति नास्ति प्रमाणम् । अथवा दूरादेवेदं भ्रष्टं प्रयोजनम् । ( कथम् ? ) त्रैधातवीया यादृशी एवोत्पन्ना, तादृशी एव ( अश्वमेधे दीक्षणीयात्वेन ) चोद्यते, त्रैधातवीयाशब्देन सैव विपरिवर्तते । आख्याताभावात् कर्मान्तरमपि न ( भवति ) । तस्मात् यादृशी तत्र विज्ञाता, तादृशी ( एव ) अत्र ( कर्तव्या ) । यद्यपि च कर्मान्तरं स्यात् तथापि नाम्ना धर्मान् गृह्णीयात्, न चोदकेनेति ।

शा—' फलवत् परमापूर्वं तच्छेषत्वं ततो भवेत् ।
स्वापूर्वं क्रतुशेषत्वान्न स्वयं फलवद् यतः ॥
फलवच्छेषता युक्ता न तु निष्फलशेषता । तस्मात् तत्साधने रूपे स्वरभेदो विधीयते ॥ ' उच्यते ।
' एवमाश्रीयमाणे हि भवेत् लक्षितलक्षणा । स्वापूर्वे लक्षणामात्रं तस्मात् तच्छेषता वरम् ॥ '

सोम— पूर्वत्र हन्तिपिष्यर्थत्वे आनर्थक्यात् प्रोक्षणस्य अपूर्वार्थत्ववत् इहापि निष्फलदीक्षणीयाऽपूर्वार्थत्वे आनर्थक्यात् फलवज्ज्योतिष्टोमापूर्वार्थत्वं इत्युत्थितेः संगतिः । सूत्रे संस्कारशब्देन दीक्षारूपो यजमानसंस्कारो विवक्षितः, तच्छब्देन च परमापूर्वं विवक्षितम् ।

वि— ' मन्द्रादिकमपूर्वाय परायावान्तराय वा ।,
फलादाद्यो, नो समत्वाल्लक्षणा तु विशिष्यते ॥ '

भाट्ट— एवं वा । एवं तावदुद्देश्यस्वरूपे आनर्थक्यप्रसक्त्या अपूर्वसाधनत्वलक्षणेत्युक्तम् । तत्र प्रधानजन्यापूर्वमेव लक्ष्यते उताङ्गजन्यमपीति चिन्तायाम्, यत्र तावत् अवघातपेषणादौ न व्रीह्यादिजन्यं मध्ये अपूर्वान्तरम्, तत्र प्रधानजन्योत्पत्त्यपूर्वसाधनत्वलक्षणा अविवादैव । यत्र तु

अदृष्टार्थसंनिपत्योपकारकेषु प्रोक्षणीयाऽऽदिषु स्वजन्यादृष्टमस्ति, तत्रापि तदङ्गानामुत्पवनादीनां 'यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात्' इत्यादीनां च स्वराणां दर्शपूर्णमासज्योतिष्टोमाद्युत्पत्त्यपूर्वसाधनत्वलक्षणया तदर्थत्वमेव। न तु प्रोक्षणदीक्षणीयाऽऽदिजन्योत्पत्त्यपूर्वार्थत्वम्, तस्मिन्नपि फलवत्त्वाभावेन आनर्थक्यापत्तेः। इति प्राप्ते, साक्षात्फलवत्त्वाभावेऽपि परंपरया अग्निवत् फलवत्त्वोपपत्तेः अङ्गापूर्वाणामपि अनिर्ज्ञातोपायत्वेन स्वाङ्गाभावे निष्पत्तौ प्रमाणाभावात् अङ्गापूर्वस्वरूपेऽपि आनर्थक्याभावेन तत्साधनत्वलक्षणायामपि बाधकाभावात् प्रधानापूर्वार्थत्ववादिनाऽपि च अङ्गापूर्वाणामतिप्रसङ्गपरिहारार्थं द्वारत्वस्य आवश्यकत्वेन तदर्थतयैव उपपत्तौ प्रधानापूर्वपर्यन्तगमने प्रमाणाभावात् लक्षितलक्षणाप्रसङ्गाच्च। झटित्युपस्थितदीक्षणीयाऽऽद्यपूर्वसाधनत्वमेव दीक्षणीयाऽऽदिपदैर्लक्ष्यते इति ते धर्मास्तत्प्रयुक्ता एव। अत एव आरादुपकारकाङ्गानां अभिक्रमणयूपादीनां प्रयाजदैक्षादिजन्यापूर्वार्थत्वमेव। न तु दर्शज्योतिष्टोमाद्यपूर्वार्थत्वम्, अव्यवहितापूर्वेऽपि आनर्थक्याभावात्।

प्रयोजनं--ज्योतिष्टोमानङ्गभूतपशुषु मेष्यादिद्रव्यकेषु उपाकरणादीनामूहाभावात् अकरणं पूर्वपक्षे, ज्योतिष्टोमापूर्वस्थानापन्नापूर्वाभावेन प्राकृतकार्याभावात्। सिद्धान्ते तु ऊहः इति द्रष्टव्यम्। एवं दैक्षधर्मानतिदेशोऽपि पूर्वपक्षे प्रयोजनमनुसंधेयम्। यत्तु भाष्यकारेण अश्वमेधे 'त्रैधातवीया दीक्षणीया भवति' इति वचनेन दीक्षणीयाकार्ये यजमानसंस्कारे विहितायां त्रैधातवीयायां पूर्वपक्षे दीक्षणीयाधर्मप्राप्तिः, सिद्धान्ते तु प्रसिद्धत्रैधातवीयाया धर्मा एवेति प्रयोजनमुक्तं तन्न, पूर्वपक्षवत् सिद्धान्तेऽपि स्थानापत्तौ बाधकाभावात्। यदि तु स्थानापत्त्यतिदेशापेक्षया त्रिविधातिदेशस्यापि बलवत्त्वस्य अष्टमे साधितत्वात् नामातिदेशेन प्रसिद्धत्रैधातवीयाया धर्मा एवेत्याशङ्क्येत तत् पूर्वपक्षेऽपि तुल्यम्। वस्तुतस्तु नेयं त्रैधातवीया प्रसिद्धत्रैधातवीयातः कर्मान्तरम्, सत्यपि अनुपादेयगुणयोगे आख्यातसामानाधिकरण्याभावात्। अतः प्रसिद्धायाः सधर्मकाया एव त्रैधातवीयायाः यजमानसंस्कारार्थत्वेन विधानात् धर्माकाङ्क्षाविरहेण क्व स्थानापत्त्यतिदेशप्रसक्तिः।

**मण्डन**-- 'वाचां स्वरस्त्वङ्गविधिप्रयुक्तः।' ३.

**शंकर**-- 'दीक्षणीयाङ्गता स्वरे।' ८.

* न चात्र **दीक्षणीयावाङ्नियमन्यायः**। दीक्षणीया हि संनिपत्योपकारकत्वेऽपि न ज्योतिष्टोमोत्पत्त्यपूर्वजनिका, तथात्वे ज्योतिष्टोमतुल्यत्वेन प्राधान्यापत्तेः। किन्तु स्वापूर्वद्वारेण उत्पत्त्यपूर्वसंपादनानुकूलज्योतिष्टोमवृत्तियोग्यतासंपादनार्था इत्युक्तम्। अतश्च दीक्षणीयापदे स्वापूर्वादिद्वारा ज्योतिष्टोमोत्पत्त्यपूर्वप्रयोजकत्वस्य कारणकारणत्वापरपर्यायस्य लक्षणायां लक्षितलक्षणाऽऽपत्तेः न सा आश्रिता। प्रकृते तु यागस्य स्वर्गसाधनत्वान्यथाऽनुपपत्त्या द्वारत्वेन कल्पितं उत्पत्त्यपूर्वं प्रतीव परमापूर्वं प्रत्यपि साधनत्वाविशेषात् उत्पत्त्यपूर्वं अतन्त्रीकृत्य प्रधानत्वेन फलापूर्वसाधनत्वलक्षणायां बाधकाभावः। कौ. ३।१।४।८ पृ. १४४. * यूपस्य तत्साध्यपश्वपूर्वस्य वा सप्तदशारत्नित्वं विनापि प्रकृतौ तत्सिद्धिदर्शनात् तत्स्वरूपेऽपि आनर्थक्यापत्तेः **दीक्षणीयावाङ्नियमं** बाधित्वा लक्षितलक्षणया अधिकाराख्यप्रकरणसहकृतेन यूपशब्देन वाजपेयापूर्वसंबन्धित्वस्यैव यूपनिष्ठस्य लक्षणात् वाजपेयापूर्वप्रयुक्तत्वसिद्धिः। इति सिद्धान्ते। कौ. ३।१।९।१८ पृ. १८९. * **दीक्षणीयावाङ्नियमन्यायेन** तत्तत्संस्कारसमूहप्रयुक्ता एव तत्तद्धर्माः इति न प्रकृतौ (अग्निष्टोमे) सांकर्यम्। भाट्ट. ९।२।१४, * 'एकं साम तृचे क्रियते' 'यद्योन्यां गायति' इत्यादेः **दीक्षणीयावाङ्नियमन्यायेन** प्राकृततत्तत्स्तोत्रीयर्चामेव उद्देशेन अप्राकृते अप्रवृत्तेः। ९।२।७ वर्णकं २, * गुणाभिधानजन्यस्यापूर्वस्य एकस्यैव अग्निष्टोमस्तोत्रे चयनादौ च उपयोगात् धर्माणां च गीत्यादीनां गिरापदकार्यगुणाभिधानजन्यावान्तरापूर्वप्रयुक्तस्यैव दीक्षणीयावाङ्नियमन्यायेन अङ्गीकारात्। ९।१।१८, * ग्रहधर्माणां ग्रहस्वरूपे आनर्थक्यप्रसक्तौ ग्रहयागाभ्यासापूर्वसाधनत्वमेव ग्रहपदेन लक्ष्यते दीक्षणीयावाङ्नियमन्यायेन, न तु ज्योतिष्टोमापूर्वसाधनत्वम्। इति पूर्वपक्षे। ३।६।११. * यदि उपस्थानस्य अदृष्टार्थत्वं स्यात् तदा तन्मन्त्रस्यापि प्रोक्षण-

मन्त्रवत् उपस्थानजन्यादृष्टार्थत्वमेव दीक्षणीयावाङ्नियमन्यायेन भवेत्, तस्य तु अभिधानफलकस्य ( मन्त्रस्य ) करिष्यमाणमण्डपवृत्तिपदार्थानुष्ठानोपयोगितया दृष्टार्थत्वात् अवघातमन्त्रवदेव तन्मन्त्रस्य क्रत्वपूर्वार्थत्वमावश्यकम् । कौ. ३।२।८।२३ पृ. २६७, * यद्यपि प्रकृतायाः ( 'अग्न आ याहि ' इति आग्नेय्याः ऋचः स्तोत्रादिवाक्येषु स्वातन्त्र्येण अपूर्वार्थत्वक्लृप्तिः, तथापि तस्याः दीक्षणीयावाङ्नियमन्यायेन स्तोत्रजन्यापूर्वार्थत्वस्यैव क्लृप्तेः । पूर्वपक्षः । ३।२।८।२१ पृ. २६३, * सप्तदशारत्नित्वं वाजपेयोद्देशेन विधीयते ... अन्यथा हि दीक्षणीयावाङ्नियमन्यायेन पश्वपूर्वार्थत्वं यूपमात्रार्थत्वं वा आपद्येत इति वाजपेयानङ्गत्वात् तद्बाधापत्तिः । इति पूर्वपक्षे । ३।१।९।१८ पृ. १८८, * 'समानयते जुह्वामौपभृतम्' 'प्रयाजशेषेण हवींष्यभिघारयति ' । अत्र हि दीक्षणीयावाङ्नियमन्यायेन प्रधानसंबन्धायोगात् अङ्गाधिकारस्यैव तात्पर्यग्राहकत्वमावश्यकम् । ३।१।१०।२० पृ. १९५. * उद्देश्यभागस्य स्वरूपे आनर्थक्ये प्रसक्ते भागजन्यापूर्वसद्भावे प्रमाणाभावात् **दीक्षणीयावाङ्नियमन्यायासंभवेन** भागसंबन्धियज्ञजन्यपरमापूर्वसाधनत्वमेव भागनिष्ठं लक्ष्यते इति परमापूर्वप्रयुक्तं उपांशुत्वम् । **भाट्ट.** ९।१।६.

* **दीक्षा** अपर्वणि कर्तव्या सुत्या पर्वणि । अङ्गगुणविरोधन्यायः । **भा.** १२।२।९।२५, * दीक्षा गवामयनस्य माघ्याः पौर्णमास्याः पुरस्ताच्चतुरहे । ६।५।९। ३०-३७, * दीक्षा च व्रतानि । १०।२।१८।४९. * दीक्षा दीक्षणीयेष्ट्या संपन्नः संस्कारः । **वि.** ६।५।८. * दीक्षा यमनियमव्रतविषयसंकल्पः । व्रतशब्देन ब्रह्मचर्यादिः विवक्षितः । **सोम.** १०।२।१८. * **दीक्षाः** गवामयने द्वादश, 'द्वाभ्यां लोमावद्यति ' इत्यादिना षण्णां दीक्षायुग्मानां उपन्यस्तत्वात् । **वि.** ८।१।१०, * दीक्षाः तिस्रः ज्योतिष्टोमे । **भा.** ३।७।५।११, * दीक्षाः द्वादशाहे तन्त्रेण कर्मप्रयोगात् पृथक्कालत्वात् । ( आदौ द्वादशसु अहःसु दीक्षाद्वादशकं कृत्वा ततः सुत्याऽऽरम्भः इत्यर्थः) । ११।३।१०।२१, * दीक्षाः द्वादशाहे द्वादशैव । ११।४। ५।१५-२२, * दीक्षाः प्रधानार्थाः । दीक्षादक्षिणन्यायः । ३।७।५।११-१२.

* **दीक्षायाः** एकत्वपक्षे एका दीक्षा तिस्र उपसदः पञ्चमे दिने सुत्या । त्रित्वपक्षे तिस्रो दीक्षाः तिस्र उपसदः सप्तमे दिने सुत्या । चतुष्ट्वपक्षे-चतस्रो दीक्षाः तिस्र उपसदः अष्टमे दिने सुत्या । **के.** * दीक्षायाः फलीभूतयमनियमपरिग्रहोपयोगिदीक्षितत्वज्ञानजनकतयैव दीक्षणीयाऽर्थत्वं दीक्षाऽर्थत्वमेव वा अङ्गीकर्तुमुचितम् । **भाट्ट.** ५।३।११. * **दीक्षाणां** उन्मोचनार्थो हि अवभृथः । **भा.** ६।५।१२।४२. * दीक्षाणां उपसदां च स्वस्थानविवृद्धया प्रयोगो द्वादशाहे । **टुप्.** ११।४।५।१८. * दीक्षाणां द्वादशत्वपक्षः एव द्वादशाहे नियतः । तत्र च द्वादश दीक्षाः, द्वादशोपसदः, द्वादश सुत्याश्चेति । 'षट्त्रिंशदहो वा एष, यद् द्वादशाहः' । **वि.** ६।५।९. * दीक्षाणां द्वादशाहे क्रमविशेषनियमः । **भा.** ५।१। ११ वर्णकं ३. * **दीक्षायां** मुष्टीकरणं सर्वाङ्गम् । तेन हस्तचापलं निवार्यते । **वि.** ३।१।१४. * **दीक्षासु** अग्नीषोमीययूपमात्रस्य प्रतिकर्षः, न तु ततोऽर्वाचीनानामपि सौमिकानामग्नीषोमप्रणयनादीनाम् । **भा.** ५।१।१४।२७, * दीक्षासु यूपमात्रापकर्षः । यूपकर्मन्यायः । ५।१।१४। २७, * दीक्षासु विनिर्देशो भवति, इदं क्रत्वर्थम्, इदं भक्षार्थम्, इदमानमनायेति । ६।७।७।१३. * दीक्षासु सोमक्रयसमीपे अग्निषोमीयः पशुः समाम्नायते । **वा.** ३।६।७।१८.

* **दीक्षाऽर्थाभ्यङ्गे** ज्योतिष्टोमे नवनीतं ग्राह्यम् । तत्स्तुतये च 'घृतं देवानाम्, मस्तु पितॄणाम्, निष्पक्वं मनुष्याणाम्' इत्यनुवादः । **वि.** ३।४।७.

* **दीक्षाऽऽवेदनं** आध्वर्यवं ज्योतिष्टोमे । **वा.** ३।१।१४।२४.

* **दीक्षाऽऽहुतयः** प्राकृत्यो वैकृत्यश्च । तासां समुच्चयः कर्तव्यः, चयने । तत्र प्राकृत्यः षट् 'आकूत्यै प्रयुजेऽग्नये स्वाहा' इत्यादयः । वैकृत्यश्च 'आकूतिमग्निं प्रयुजं स्वाहा' इत्यादयः । **भा.** १०।३।४।२३-२९, * **दीक्षाऽऽहुतिमन्त्राणां** अग्निचयनप्रकरणे श्रुतानां

सौमिकदीक्षाऽऽहुतिमन्त्रैः समुच्चयः । अग्निचयनप्रकरणे इत्यत्राधिकरणम् । १०।३।४।२३-२९.

**दीक्षोत्कर्षे अग्निहोत्रादीनामपि उत्कर्षः ॥**

**दीक्षाकालस्य शिष्टत्वादतिक्रमे नियतानामनुत्कर्षः प्राप्तकालत्वात् । ६।५।१०।३८॥**

**भाष्यम्**— इदं श्रूयते, 'तस्माद्दीक्षितो न ददाति, न पचति, न जुहोति' इति । ज्योतिष्टोमे समामनन्ति 'तिस्रो दीक्षाः' इत्येवमादि । यदि तु दैवान्मानुषाद्वा प्रतिबलात् दीक्षाकालः उत्कृष्यते, तत्र संदेहः किं दानहोमपाकानामुत्कर्षः, उत नेति । किं प्राप्तम् ? अनुत्कर्षः । नियता हि दानहोमपाकाः 'यावज्जीवमग्निहोत्रं जुहोति' इत्येवमादिभिः श्रुतिभिः । तेषामपवादः, येष्वहःसु साङ्गो ज्योतिष्टोमो विहितः, तावन्ति अहानि मुक्त्वा अन्येष्वहःसु कर्तव्याः । ज्योतिष्टोमविधानकालात् परतः अप्रतिषिद्धाः । तस्मात् कर्तव्याः । प्राप्तो हि तेषां कालः इति ।

**उत्कर्षो वा, दीक्षितत्वादविशिष्टं हि कारणम् । ३९ ॥**

**भाष्यम्**—वाशब्दात् पक्षो विपरिवर्तते । यदुक्तं नैषामुत्कर्ष इति, नैतदेवम् । उत्कष्टव्याः । कुतः ? दीक्षितत्वात् । दीक्षितस्य ते प्रतिषिद्धाः, न दीक्षितो यस्मिन्काले । लक्षणा हि एवं स्यात् । यथा तु वयं ब्रूमः, तथा श्रुतिः कारणम् । प्राक् चावभृथादयं दीक्षित एव । अविशिष्टं हि कारणम् । यदेव ज्योतिष्टोमविधानकाले, तदेव अतिक्रान्तेऽपि । उभयत्र हि दीक्षितत्वं हि कारणम् । तस्मात्तेषामुत्कर्ष इति ।

**सोम**— दीक्षाप्रसङ्गागतविचारानन्तरं यदर्थं दीक्षापरिमाणं निरूपितम्, तद्विचारात् संगतिः । सूत्रार्थस्तु— दीक्षाकालस्य निषेधाङ्गतया शिष्टत्वात् शास्त्रीयदीक्षाकालातिक्रमे नियतानामग्निहोत्रादीनां प्राप्तकालत्वात् अनुत्कर्षः इति । ११.

**वि**— 'कुतोऽप्यवभृथोत्कर्षे जुहुयादग्निहोत्रकम् । न वा,ऽऽद्योऽप्रतिषिद्धत्वा, न्नैवं दीक्षाऽनुवर्तनात् ॥' ११.

**भाट्ट**—सोमे 'दीक्षितो न जुहोति' इत्यादिना पुरुषार्थानामग्निहोत्रादीनां क्रत्वङ्गत्वेन पर्युदासः प्रतिषेधो वा दीक्षितस्य श्रुतः । अवभृथे च कृते दीक्षामुक्तिः । तद्यदा दैवादिना कारणेन संध्यातः पूर्वं क्रियमाणावभृथस्य उत्कर्षः, तदा कालेऽग्निहोत्रं कर्तव्यमेव । यावन्तं कालं शास्त्रवशेन दीक्षाऽनुवृत्तिः, तावत्कालम् 'न जुहोति' इति तत्प्रतिषेधशास्त्रावधारणात् । इति प्राप्ते, काललक्षणायां प्रमाणाभावात् दीक्षैव निषेधावधिः । तस्याश्च अनिवृत्तत्वान्न कर्तव्यमेवाग्निहोत्रादि । ११.

**मण्डन**— 'यावद्दीक्षं निषिद्धानि ।' ११.

**शंकर**— 'दीक्षितोऽवभृथावधि ।' ११.

* दीक्षोत्कर्षे ज्योतिष्टोमे अवभृथोत्कर्षेण दैवाज्जाते, तावति काले अग्निहोत्रहोमलोपः स्यात् । होमनिषेधादेव च लुप्तहोमानां प्रतिहोमा न कर्तव्याः । वि. ६।५।१२.

* **दीक्षोन्मोचनार्थः** अवभृथः । **भा.** ११।४।५।२०,

* **दीक्षोन्मोचनवचनं** नक्तंसंस्थापनस्य अर्थवादः । 'वरुणपाशाभ्यां वा एषोऽभिधीयते (अभिधानं बन्धनम्) यो दीक्षितः । अहोरात्रे वै वरुणपाशौ । यद् दिवा संस्थापयेत् ( यज्ञं समापयेत् ) अनुन्मुक्तो वरुणपाशाभ्यां स्यात् । नक्तं संस्थाप्यः । वरुणपाशाभ्यामेवोन्मुच्यते, आत्मनः अहिंसायै' इति । ९।१।८।३१.

* **दीक्षोपक्रमदिन**मारभ्य पञ्चमे सप्तमेऽष्टमे वा दिने सुत्या भवति । ततोऽवभृथेन दीक्षानियमनिवृत्तिः । वि. ६।५।११.

* **दीक्षोपसत्सुत्यानां** प्रत्येकं द्वादशदिनसाध्यत्वं द्वादशाहे । **भा.** ११।४।५।१७-२५.

**दीक्षाकालस्य शिष्टत्वादतिक्रमे नियतानामनुत्कर्षः प्राप्तकालत्वात् । ६।५।१०।३८ ॥**

ज्योतिष्टोमे 'तिस्रो दीक्षाः' इत्यादि उक्तम्, 'दीक्षितो न ददाति, न जुहोति, न पचति' इति चोक्तम् । अवभृथपर्यन्तं च दीक्षितत्वम् । यदि दीक्षाकालस्य कस्माच्चित् कारणात् वृद्धिः स्यात् तदा विचारः । दीक्षाकालस्य दीक्षाणां कालः दीक्षाकालः । दीक्षाकालः एव कालः यस्य दानहोमपाकस्य सः दीक्षाकालः । उत्तरपदलोपोऽत्र समासे । दीक्षाकालसमानकालानामेव दानहोमपाकानां निषिद्धत्वेन शिष्टत्वात्, तेषां निषेधस्य विहितत्वात् इत्यर्थः । अतिक्रमे दीक्षाणां कालस्य अति-

**अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात् तस्य प्रीतिप्रधानत्वात् ॥ १०॥**

**भाष्यम्**—यदुक्तं अतिथिवदिति । तत् परिहर्तव्यम् । आतिथ्यं अतिथिप्रयुक्तं स्यात् । आतिथ्ये हि तत्प्रीतिर्विधीयते । अतिथिः परिचरितव्यः । यथा प्रीयते, तथा कर्तव्यमिति । दानं भोजनं वा कार्यमिति । यद्यत् अतिथये रोचते, तत्कर्तव्यम् । यत्तस्मै न रोचते, न तद्बलात् कारयितव्यमिति । इह तु कर्मणि अभावः प्रीतिविधानस्य । तस्मात् विषममतिथिनेति ।

**शा**— ( पूर्वः पक्षः– ) '**इन्द्रादेः संप्रदानत्वात् कर्मणोऽपि प्रधानता । यागः पूजा तदङ्गं स्याददतिथेर्भोजनं यथा ॥**' एवं प्राप्ते, ब्रूमः '**यागस्यैव पदश्रुत्या फलसाधनतोच्यते । देवतायाश्च तादर्थ्यं तन्निर्वृत्त्युपयोगतः ॥ यागश्च साध्यरूपत्वात् साधनत्वेन देवताम् । गृह्णाति सिद्धरूपा च देवता तस्य साधनम् ॥**' तस्मात् अपूर्वप्रयुक्ता धर्माः ।

**सोम**— प्राधान्येऽपि प्रयोजकता न स्यात् इति पूर्वोक्तापूर्वप्रयोजकत्वमाक्षिप्य समर्थ्यते इति **संगतिः**। **सूत्रार्थस्तु**— देवतैव सर्वान् धर्मान् प्रयोजयेत् भोजनस्य यागस्य इदं हविः देवता भोक्ष्यते इति क्रियमाणत्वात् यागस्य भोजनशब्देन निर्देशः । देवताऽर्थत्वात् भोजनस्य भोक्त्रर्थत्वे दृष्टान्तः अतिथिवदिति ।

**वि**— 'देवः प्रयोजकोऽपूर्वं वा, ऽऽद्योऽस्य फलदत्वतः ।, न विधेये गुणो ह्येषोऽपूर्वस्य फलितोचिता ॥'

**भाट्ट**— एवं तावदपूर्वमङ्गीकृत्यैव देवताप्रसादस्य प्रयोजकत्वं निराकृतम् । इह तु तदनङ्गीकृत्य देवताप्रसादः एव प्रयोजकोऽस्तु इत्याशङ्का प्रसङ्गान्निराक्रियते । तत्र देवतायाः संप्रदानत्वात् तस्य च कर्मकारकापेक्षयाऽपि अभिप्रेयमाणत्वेन प्राधान्यात् यागस्य पूजारूपस्य तत्संस्कारकत्वावगतेः, तस्याश्चोपयोगापेक्षायां 'स एवैनं भूतिं गमयति' 'तृप्त एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयति' इत्याद्यर्थवादानुसारात् प्रसन्नायाः फलदातृत्वावगतेः, यागस्यैव फलजनकत्वे प्रमाणाभावे अपूर्वसाधनत्वे सुतरां प्रमाणाभावः । अस्तु वा देवताया अभिप्रेयमाणत्वोक्तावपि तस्य 'ब्राह्मणाय गां ददाति' इत्यादौ ब्राह्मणस्य फलदातृत्वासंभवेन उपयोगाभावात् प्राधान्यासंभवेन प्राधान्यव्यभिचारेण तत्कल्पनाऽनुपपत्तेः, प्रत्युत भावार्थाधिकरणन्यायेन यागकरणिकायां भावनायां भाव्यापेक्षायां स्वर्गस्यैव तत्त्वेनान्वयात्, देवताया अपि संस्कार्यत्वे उद्देश्यत्वानेकत्वनिमित्तवाक्यभेदापत्तेः देवताया एव यागाङ्गत्वम्, तथापि यागस्य फलजनकत्वे व्यापारापेक्षायामश्रुतापूर्वकल्पनाऽपेक्षया रात्रिसत्रवत् आर्थवादिकदेवताप्रसादस्यैव द्वारत्वकल्पनात् तत्प्रयुक्तत्वसिद्धिः । प्रसादस्य च विग्रहभोगादिव्यतिरेकेण अनुपपत्तेः अर्थवादाद्यनुसारेण विग्रहभोगादिकल्पनेऽपि न दोषः । **इति प्राप्ते**, प्रसादो हि यदि इच्छारूपः, तदा तस्येच्छात्वेन तत्फलं प्रति कारणत्वे अतिप्रसङ्गापत्तेरवश्यं दर्शादिकर्तुस्तत्फलं भवतु इत्येवमाकारकेच्छात्वेन तद्वाच्यम्, तथा च कारणताऽवच्छेदके गौरवम् । दर्शादिजन्यफलभोगे जातेऽपि तत्कर्तृत्वानपायात् अन्यकृतदर्शपूर्णमासजन्यप्रसादात् अन्यस्य फलापत्तिश्च । अतस्तत्फलव्यक्तित्वावच्छिन्नं प्रति तद्व्यक्तिकर्तुः सा फलव्यक्तिर्भवतु इत्येवमाकारकेच्छात्वेन कारणत्वं वाच्यम् । तथा चानेककार्यकारणभावकल्पनं कारणताऽवच्छेदके गौरवं च ।

किञ्च एतादृशप्रसादो यदि ब्राह्मणतर्पणान्ते, तदा यागानां नष्टत्वादेव उत्पत्त्यनापत्तिः । यदि तु तत्तद्यागेभ्योऽपि अवान्तरप्रसादा आग्नेयव्यक्तिकर्तुस्तद्व्यक्तिजन्यं फलं भवतु इत्याकारिका इष्यन्ते, तदा देवतानां अमोघेच्छत्वस्य अर्थवादेषु प्रतिपादनात् दैवादग्नीषोमीयाद्यकरणेऽपि फलापत्तिः । अथैतस्यार्थवादत्वमेव अभ्युपगम्य तादृशमहाप्रसादस्य विजातीयेच्छात्वेनैव अपूर्ववादिन इव विजातीयफलत्वावच्छिन्नं प्रति कारणता, अवान्तरप्रसादानां च विजातीयतत्तदिच्छात्वेनैव महाप्रसादं फलं च प्रति कारणता, कारणताऽवच्छेदकसंबन्धश्च स्वजनकयागसमवायित्वम्, कार्यताऽवच्छेदकसंबन्धश्च फलांशे समवायः, नातः कर्त्रन्तरे फलापत्तिः । अवान्तरप्रसादमहाप्रसादयोः परस्परं कार्यकारणभावे प्रत्यासत्तिस्तु उभयत्र स्वजनकयागसमवायित्वमेव । देवतानिष्ठमेव वा तं कार्यकारणभावमङ्गीकृत्य समवायः एव प्रत्यासत्तिरस्तु इति चेत्, संबन्धगौरवस्यैव दोषत्वात्, यागनिष्ठकारणतानिरूपितकार्यता-

घटकसंबन्धस्य भवता निर्वक्तुमशक्यत्वाच्च । मन्मते तु सर्वकार्यकारणभावानां समवायः एव संबन्ध इति लाघवम् । एतेन प्रसादो नाम सुखविशेष इत्यपि पक्षः प्रत्युक्तः ।

न च अस्य गौरवस्यार्थवादिके प्रसादाख्ये व्यापारे सिद्धे फलमुखत्वमिति वाच्यम् । अर्थवादस्य स्तावकतयाऽपि उपपत्तौ स्वतस्तत्कल्पकत्वाभावात्, व्यापारापेक्षायां रात्रिसत्रन्यायेन तद्वाचकपदान्तरकल्पनया तस्य व्यापारत्वकल्पने च व्यापारत्वस्य कारणताघटितत्वेन तस्याः संबन्धावगमपूर्वकत्वात् संबन्धगौरवस्य फलमुखत्वानुपपत्तेः । अतो ये तावत् प्रसादादिप्रतिपादकाः, ते देवस्यत्वादिमन्त्रवदेव प्रसादादिविशिष्टदेवताप्रकाशनार्थाः सन्तो विशेषणांशे प्रकाशनस्य अदृष्टार्थत्वात् नानुपपन्नाः । वैशिष्ट्यघटकसंबन्धश्च आहार्यो वा अनाहार्यो वेत्यन्यदेतत् । अर्थवादाश्च तेनैव संबन्धेन स्तावका इति तेष्वपि न स्तुतिलक्षणा, अतोऽन्या काचिल्लक्षणा। अस्तु वा सा, तथाऽपि विधौ गौरवापत्तेः सा न दोषः ।

न च एवं विध्यनपेक्षितत्वात् आर्थवादिकप्रसादाद्यकल्पनेऽपि लक्षणया प्राशस्त्यतात्पर्यकस्यापि अर्थवादस्य असति प्रमाणान्तरविरोधे स्वशक्यार्थेऽपि प्रामाण्याभ्युपगमात् विग्रहभोगप्रसादादिस्वीकारात् अपूर्वान्ते एव प्रसादस्वीकरणमस्त्विति वाच्यम् । अन्यतात्पर्यकस्य वाक्यस्य अन्यत्र प्रामाण्यायोगात् । अन्यथा शुद्धपुरुषतात्पर्यके 'यष्टीः प्रवेशय' इत्यादौ परान्नभोजननिवृत्तितात्पर्यके 'मृदं भुङ्क्ष्व' इत्यादौ च प्रमाणान्तराविरोधात् स्वशक्यार्थेऽपि प्रामाण्यापत्तिः । अतः सकृदुच्चरितस्य शब्दस्य अनेकार्थबोधकत्वाभावनियमानुरोधेन शाब्दबोधत्वावच्छिन्नं प्रति तात्पर्यज्ञानस्य कारणत्वानुरोधेन चार्थवादानां शक्यार्थे प्रामाण्यानुपपत्तेर्न देवताविग्रहादिस्वीकारः ।

न च तथापि शक्यार्थविशिष्टप्राशस्त्ये एव लक्षणया अर्थवादानां तात्पर्यात् विशेषणांशेऽपि प्रामाण्योपपत्तिः, लक्ष्यताऽवच्छेदके गौरवापत्तेः । अन्यथा व्रीहित्वादेरपि विवक्षाऽऽपत्त्या ऊहानापत्तिः । अतः कथमपि न विग्रहादिस्वीकारः । किन्तु शब्दमात्रं देवता । अर्थस्तु प्रातिपदिकानुरोधात् चेतनोऽचेतनो वा कश्चित्स्वीक्रियते । न तु विग्रहादिमान् । उपासनाऽऽदौ परं ध्यानमात्रमाहार्यं तस्येति जैमिनिमतनिष्कर्षः । मम तु एवंवदतोऽपि वाणी दुष्यतीति हरिस्मरणमेव शरणम् ।

मण्डन— 'न देवता कर्मणि तु प्रधानम् ।' ५.

शंकर—' देवताविग्रहादि न ।' प्रधानम् । १०.

* देवताऽधिकरणे दाशमिके ( १०।४।१२।२३ ) देवतायाः स्वरूपेण कर्मणि समवायनिषेध उक्तः । सु. पृ. १३४२, * देवताऽधिकरणे देवताप्राधान्यस्य निषेध्यमानत्वात् । पृ. ४३८. * देवताऽधिकरणे (ब्र.) वक्ष्यमाणेन न्यायेन 'एतस्यैव रेवतीषु वारवन्तीयम्' इति वाक्ये रेवतीनां वारवन्तीयस्य च आधाराधेयभावस्येव यज्ञादीनां विविदिषायाश्च क्रियाकारकभावस्यापि समभिव्याहारादेव सिद्ध्युपपत्तेः । परिमल. १।१।१ ब्रसू. पृ. ६१. * देवताऽधिकरणे विग्रहादिपञ्चकाभावस्य प्रतिपादनात् । सोम. ६।१।२. * आगमनस्वरूपस्य देवतासांनिध्यस्य देवताऽधिकरणे निराकृतत्वात् । श्राद्धमयूखः पृ. ७१. * क्रममुक्तिनिर्वाहाय देवतानां विग्रहवत्त्वस्थापनेन ब्रह्मविद्याऽधिकारस्तासामुक्तः, अन्यथा उपासनादिकर्मभिः तत्तद्देवतास्वरूपप्राप्त्या मुक्तिफलोपपादिकानां श्रुतिस्मृतीनामप्रामाण्यमेव प्रसज्येत इति शारीरकमीमांसायां देवताधिकरणे (ब्र.) स्थापितम् । वैजयन्ती. १।१।१. * तत्तत्प्रासादाट्टालगोपुरतोरणाद्युपजननिदर्शनसहस्रैः सुपरिनिश्चितं यथा चेतनाधिष्ठानात् अचेतनानां कार्यारम्भकत्वमिति, तथा चैतन्यं देवताया असति बाधके श्रुतिस्मृतीतिहासपुराणप्रसिद्धं न शक्यं प्रतिषेद्धुं इत्यपि स्पष्टं निरटङ्कि देवताऽधिकरणे । भामती. ३।२।८।४१ ब्रसू. * ननु एवं अन्यपरस्यापि 'वज्रहस्तः पुरंदरः' इत्याद्यर्थवादस्य स्वार्थेऽपि प्रामाण्ये देवताऽधिकरणविरोध इति चेन्न, देवताऽधिकरणे सूत्रकृता ( जैमिनिना ) याग एव फलस्य प्रयोजकः, देवता तु यागस्य गुणः, न तु यागाराधिता देवता फलं प्रयोजयति इत्येवं 'देवताया गुणभावो यागं प्रति' इत्येतावदेव व्यवस्थापयिष्यते, देवताविग्रहादिकं तु भाष्यकृतैव उत्सूत्रं निराकरिष्यते प्रौढिवादेन । कु. १।१।८।३२. * नहि प्रमाणान्तरयोग्यविषयकत्वं इत्येतावता अर्थवादादीनां प्रमाणान्तरमूलकत्वं

संभवति । तदुक्तं देवताऽधिकरणे भामत्याम् । सना. प्रा. प्रकाशे पृ. ९५. * शास्त्रदीपिकायां 'लक्ष्मीकौस्तुभवक्षसं.... वन्दे मुकुन्दं मुदा' इति मङ्गलं कृतम् । तत्र सिद्धान्तचन्द्रिका—न चैवं देवताऽधिकरणविरोधः उद्देश्याया एव तद्विषयत्वात्, सोमाय स्वाहा इत्येवंरूपा या देवता कर्माङ्गभूता तस्या एव देवताऽधिकरणे विग्रहादिपञ्चकनिराकरणात् । उक्तं च 'नास्माकं शब्द एव देवता, नाकसदामिन्द्रादीनां देवतात्वाङ्गीकारात्' इति । अत एव वार्तिककारैः 'विशुद्धज्ञानदेहाय' इत्यादिना ग्रन्थादौ महादेवो नमस्कृतः । के.

**देवताऽधिकरणन्यायः** । यत्तु केचिन्मन्यन्ते विग्रहबोधकश्रुत्यादेः उपासनापरत्वात् आरोपितविग्रहेणापि उपासनासिद्धेः नेशस्योक्तविग्रहसिद्धिरिति,— तन्न । उपासनापरेभ्योऽपि अविरोधे देवताऽधिकरणन्यायात् प्रतीयमानार्थसिद्धेरनिवार्यत्वादित्युक्तं संग्रहे । ( देवताऽधिकरणं द्रष्टव्यम् ) । साहस्री. ८४५.

* **देवताऽधिकरणन्यायेन** (ब्र.) 'उपासनायाः कार्यत्वे विष्णोरात्मत्व एव च । उभयत्रापि तात्पर्यमात्मोपासाऽऽदिके विधौ ॥' इति प्रतिवाद्युक्तस्मृतेः विधेः स्तावकत्वे स्वार्थपरत्वे चेति उभयसिद्धिपरत्वात् । अद्वैत. २।४।१९३. * देवताऽधिकरणन्यायेन भूतार्थवादतया व्यवस्थाहेतुता अस्याः ( शुको मुक्तः इत्यादेः ) स्थेया । संक्षेपशा. टीका. २।२।७. * देवताऽधिकरणन्यायेन मन्त्राणामपि प्रतीयमानार्थप्रामाण्यमङ्गीकरणीयमेव । सना. विवाह. पृ. २८६. * अत्र विश्वसत्यत्वस्य पारमार्थिकस्य देवताऽधिकरणन्यायेन कल्पनीयतया, तन्न्यायस्य च श्रुतिविरोधे अप्रवृत्तेः न प्रतिप्रसवार्थत्वम् । चतुर्ग्रन्थी. पृ. ४३९. * अन्यपदादपि परामर्शात् आश्रमान्तराणि प्रतीयमानानि देवताऽधिकरणन्यायेन आत्मनोऽपि सिद्धिसंभवात् । आभरणम्. ४।१।१।२ ब्रसू. * असति बाधके देवताऽधिकरणन्यायेन शब्दतः प्रतीयमानं परित्यक्तुमशक्यम् । भामती. ३।३।१५।२६ ब्रसू. * देवतावत् भागधर्मत्वानुपपत्तेः यागद्वारा अपूर्वधर्म एवायं ( पौष्णपेषणे ) देवताऽधिकरणन्यायेन विज्ञायते । वा. ३।३।१५।४४ पृ. ८८७. * स्तुतिपराणामपि उक्तश्रुतीनां देवताऽधिकरणन्यायेन (ब्रसू.) विश्वसत्यत्वेऽपि तात्पर्यस्य अङ्गीकरणीयतया बाधकत्वस्य संभवात् । चतुर्ग्रन्थी. ४३८, * नागमबाधिताः दृश्यत्वादयः प्रत्यक्षादिसिद्धतात्त्विकसत्त्वपरत्वकल्पनाया अयुक्तत्वेन देवताऽधिकरणन्यायाप्रवृत्तेः । पृ. ४३९.

* **देवताऽन्तरत्वं** ( इन्द्रः महेन्द्रः इत्यत्र ) सत्यपि द्रव्यैकत्वे सगुणनिर्गुणाश्रयणात् । वा. २।१।५।१७ पृ. ४२४.

* **देवताऽन्वाधानं** अग्न्यन्वाधानात् पृथङ् न विद्यते । वि. १२।१।१२.

* **देवताऽपनयः** अभ्युदितेष्टौ उपांशुयाजेऽपि । भा. ६।५।२।१०-११, * देवताऽपनयो दर्शे अभ्युदयेष्टौ नैमित्तिकः । ६।५।१।१-९.

* **देवताऽभिधानं** आवाहनादौ विधिगतशब्देनैव अतिदेशस्थले । भाट्ट. १०।४।१४. * देवताऽभिधानं वनस्पतियागे ( ज्योतिष्टोमेऽग्नीषोमीये पशौ ) विधिगतवनस्पतिशब्देनैव निगदेषु । भा. १०।४।१६।३२-३३.

* **देवताऽर्थे** कृत्स्नस्य हविषः संकल्पितत्वेन तत्र यजमानस्य स्वामित्वाभावात् न युक्तः परिक्रयः । वि. ३।४।२१. * **देवताऽर्थता** हविषः आहवनीयप्रक्षेपेण भवति । वा. ३।४।१४।३७.

* **देवताऽऽदेः** दृष्टमात्रापेक्षत्वेन अदृष्टोपकारानपेक्षता । भाट्ट. ४।१।७.

* **देवताऽऽयतनेषु** महायात्रा सदाचारः । वा. १।३।३।७ पृ. २०५.

* **देवताऽऽराधनार्थो** यदि यागः, ततः पूज्यमाना देवता । यागश्च पूजा । पूजा च लौकिकः पदार्थः । तत्र येन प्रकारेण अग्निः पूज्यते, तेनैव सूर्यः पूज्यते इति क आश्वासः । विपरीतमपि कदाचित् स्यात् । ( पूर्वपक्षे इदम् ) । टुप्. ९।१।४।९ पृ. १६५५. * देवताऽऽराधनार्थः सर्वोऽयं प्रयासः । साऽस्य प्रसन्ना फलं ददाति । इति चेन्न । यागादेव फलम् 'स्वर्गकामो यजेत' इति हि श्रूयते । 'तृप्त एवैनमिन्द्रः' इति तु गुणत्वेन देवताश्रुतिः । गुणभूतायां तु देवतायां स्तुत्या दातृत्ववादः । तस्मात् देवता न फलं प्रयच्छति । भा. ८।१।१७।३४.

* **देवताऽऽवाहनार्थः** निगदः 'अग्निमग्न आवह' इत्यादिः होत्रा सामिधेनीप्रयाजयोर्मध्ये पठ्यते । **वि.** १०।१।१ वर्णकम् ३. * **देवताऽऽवाहनकाले** वैश्वदेवचरौ विष्णोरुरुक्रमस्यावाहनं न कार्यम् । **भा.** १०।१।११।१–३ वर्णकं ३.

* **देवताऽऽश्रयं** द्रव्याश्रयेण बाध्यते यथा ऐन्द्रपुरोडाशे देवतासामान्यात् सांनाय्यविध्यन्तः प्राप्तः, स तु द्रव्यसामान्यात् प्रवृत्तेन आग्नेयविध्यन्तेन बाध्यते । **बाल.** पृ. १४१.

* **देवतोपलक्षणार्था** याज्या । **भा.** १२।३।१५।३५.

* **देवतैक्ये** पशुगणे वसाहोमस्य तन्त्रम् । **भा.** ११।२।५।२४.

* **देवताघटितसादृश्यापेक्षया** द्रव्यघटितसादृश्यस्य बलीयस्त्वम् । **भा.** ८।१।१७।३२–३४.

* **देवतात्वं** अग्नीषोमयोर्व्यासज्यवृत्ति । **संकर्ष.** ४।४।६. * देवतात्वं त्यज्यमानद्रव्योद्देशकर्मत्वम् । **सु.** पृ.७४९. * देवतात्वं त्यज्यमानद्रव्योद्देश्यत्वम् । **मीन्या.** * देवतात्वं त्यागकालीनचतुर्थ्यन्तपदोच्चारणकर्मत्वरूपम् । **रहस्य.** पृ. १०२. * देवतात्वं नाम यस्यैव शब्देनोक्तम्, तस्यैव योग्यस्यायोग्यस्य वा भवति, इति न जातिनिमित्तम् । **वा.** २।२।९।२३ पृ. ५३७. * देवतात्वं मन्त्रप्रतिपाद्यत्वम् । **संकर्ष.** २।४।२. * देवतात्वं व्यासज्यवृत्ति अखण्डोपाधिरूपम् । **भाट्ट.** ३।१।१५.

* देवतात्वं शब्दमात्रस्य निरस्तम् । ननु शब्दमात्रस्य देवतात्वात् इन्द्रमहेन्द्रशब्दयोश्च भेदात् कथं देवतैक्यं इत्याशङ्क्याह— नचेति ( न च शब्दमात्रं देवता इति नवमदशमयोरभिधास्यते । वा.पृ.४१७) । **नवमे** 'अपि वा शब्दपूर्वत्वाद् यज्ञकर्म प्रधानं स्याद् गुणत्वे देवताश्रुतिः' इति सूत्रे ( ९।१।९ ) भूतभव्यसमुच्चारणन्यायेन देवतायाः यागं प्रति गुणत्वे अभिहिते, 'ननु कर्मणोऽपि ईप्सितादभिप्रेततत्वं देवताया गम्यते' इत्याशङ्क्य 'नास्या अभिप्रेततामपह्नुमहे । तद्धितशब्देन चतुर्थ्या वा संयुक्तस्य देवतार्थस्य वाक्यादभिप्रेतता गम्यते' ( भा. पृ. १६५२ ) इति भाष्येण अनर्थकवर्णसमूहस्य प्रातिपदिकत्वाभावे तद्धितचतुर्थीसंयोगायोगात् तत्संयोगाभिधानेन अर्थग्रहणेन (च) शब्दमात्रस्य देवतात्वं निरस्तम् । **दशमे** च 'विधिशब्दस्य मन्त्रत्वे भावः स्यात् तेन चोदना' (१०।४।२३) इत्यत्र 'आवाहनादौ येनकेनचित् पर्यायेण देवताऽभिधानसिद्धेः विधिगताग्न्यादिशब्दानादरः' इति पूर्वपक्षयित्वा "आग्नेयोऽष्टाकपालः' इतिविधिगतेन अग्निशब्देन देवताया हविःसंबन्धविधानात् मन्त्रकार्ये देवतोद्देशे विधिगतस्यैव शब्दस्योच्चारणं कार्यम्' इति सिद्धान्तिते, 'का पुनरियं देवता नाम' इति पृष्ट्वा इन्द्रादीनां द्युस्थानानां वेदे वा यत्र 'अग्निर्देवता वातो देवता' इत्यादिर्देवताशब्दः प्रयुक्तः, सा देवता इति परमतद्वयं अहःशार्दूलादीनां अनुपसंग्रहापत्तेः निरस्य, स्वमतेन 'सूक्तभाजो हविर्भाजश्च देवताः' ( भा. पृ. १९२७ ) इति भाष्येण 'अग्निर्दैवत्यं सूक्तम्' 'अग्निर्दैवत्यं हविः' इत्यादिप्रयोगात् 'आहुतिभाजो वा अन्या देवता अन्याः स्तोमभाजश्छन्दोभाजः' इति लिङ्गाच्च सूक्तस्तुत्यत्वस्य त्यज्यमानहविरुद्देश्यत्वस्य च देवतात्वाभिधानादर्थस्यैव स्तुत्यत्वोद्देश्यत्वावगतेः 'मूर्तानाममूर्तानां चेतनानामचेतनानां च श्रुत्या कञ्चिदर्थं प्रति तादर्थ्ये संकल्पनीयानां देवतात्वं भविष्यति' ( भा. पृ. १९२७ ) इति च भाष्येण मूर्तानां चेतनानां देवतात्वाभिधानात् 'यस्य वाचकं शब्दमुद्दिश्य स्मृत्वा वा हविस्त्यक्ष्यामि इति संकल्पः क्रियते सा (देवता) भवति ( तत्र )' ( भा. पृ. १९२७ ) इति च भाष्येण उच्चारणार्थत्वात् दिशेः उच्चार्यमाणेन शब्देन 'प्रजापतिं मनसा यजेत' इत्यादिविधौ वा स्मर्यमाणेन वाच्यस्य देवतात्वाभिधानात्, 'ननु एवं सति सुतरां येनकेनचित् अग्नेः शब्देन निर्देशः करणीयः' इति चाशङ्क्य 'भवेदेतदेवं यदि अग्निशब्दोऽर्थप्रत्यायनार्थमुच्चार्येत अर्थोऽपि हविःसंबन्धार्थं प्रत्याय्येत' इत्युपक्रम्य (भा. पृ. १९२७) 'देवतायाश्च यज्ञसाधनभावो न रूपेण भवति । केन तर्हि ? संबन्धिना शब्देन' इत्यादिना भाष्येण ( भा. पृ. १९२८ ) शब्दसंबन्धितद्व्यतिरिक्ताभिधानात् शब्दस्य देवतात्वं निरस्तं भवति । **सु.** पृ. ६४३. * देवतात्वं हविर्भाक्त्वम्, स्तुतिभाक्त्वम् । पृ. ६५९. * अर्थो वाचिकया श्रुत्या उच्यमानो देवतात्वं प्रतिपद्यते, नान्यथा । **वा.** ६।३।५।१८. * नहि द्रव्योद्देश्यत्वमेव देवतात्वम् । तथा

सति 'मैत्रावरुणाय दण्डं प्रयच्छति' 'आत्रेयाय हिरण्यं ददाति' इत्यादौ मैत्रावरुणात्रेयादेरपि द्रव्योद्देश्यत्वसद्भावेन देवतात्वापत्तेः। किञ्च उद्देश्यत्वमात्रस्य देवतात्वे प्रतिनिधीयमानस्यापि देवतात्वसंभवात् षष्ठे वक्ष्यमाणो देवताप्रतिनिध्यभावो विरुध्येत। **सोम.** १।४।४ पृ. ६३. * शब्दस्यैव देवतात्वम्। **भाट्ट.** ९।३।१२. * संप्रदानद्वैविध्यमभ्युपगम्य प्रतिग्रहणात्मकस्य संप्रदानस्य देवतात्वाभावेऽपि अनिराकरणात्मकसंप्रदानस्य देवतात्वमिच्छन्ति केचित्। **सु.** पृ. ८३२. * 'अर्थोऽपि यादृशो यत्र **देवतात्वेन** चोदितः। मनागपि ततोऽन्यत्वे देवतेति न गम्यते॥' देवतात्वस्य प्रत्यक्षाद्यनवगम्यत्वात् चोदनैव एकं प्रमाणम्। सा च यं यादृशं यत्र यादृशे चार्थे विदधाति, स यदि तथैव अनुष्ठानेऽपि संपाद्येत, ततः तत्प्रमितोऽयं इत्यवसीयते। किञ्चिदपि चेत् इह अन्यथा जातं निवृत्तव्यापारायां चोदनायां प्रमाणान्तरं मृग्यम्। न च तदस्ति इत्यप्रमाणता। **वा.** २।१।५।१७ पृ. ४२२, * मन्त्रेषु प्राधान्याभिधानात् अग्न्यादयः देवतात्वेन प्रज्ञाताः। १।४।६।९ पृ. ३४०, * **देवतात्वस्य** अनुष्ठानसंपाद्यत्वात्। २।३।५।१४ पृ. ६०१, * देवतात्वस्य द्विदेवत्ये व्यासज्यित्वात् (व्यासज्य वृत्तित्वात्)। ३।३।१५।४१. * 'देवतात्वस्य शब्दनिष्ठत्वेन' इत्यादिना एकदेवतात्वलक्षणमुक्त्वा 'अर्थस्य **देवतात्वपक्षे**' इत्यादिना अन्यथा लक्षणमुक्तम्। (भाट्टे ८।२।७)। **के.** * त्यज्यमानहविरुद्देश्यत्वात्मकहविर्भोक्तृलक्षणस्य **देवतात्वस्य** यागकल्पकत्वम्। **सु.** पृ. ९२९, * भोक्तृत्वरूप**देवतात्वावगमात्**। पृ. ९२६, * यागं विना **देवतात्वानुपपत्तेः**। पृ. ९२८, * विधिं विना **देवतात्वाभावः**। पृ. ७५५.

* **देवतात्वबोधकानि** च देवताशब्दः, तद्धितः, चतुर्थी, द्वितीया, मन्त्रवर्णश्चेति। 'देवतास्तर्पयति प्रजापतिर्ब्रह्मा देवताः' इत्यादौ 'रात्रिर्देवतामेके, नक्षत्रदेवतामेके' इत्यादौ च द्रव्यत्यागोद्देश्यत्वरूपदेवतात्वस्य देवतापदवाच्यस्य अन्वयः। धात्वर्थत्यागांशे अनुवादः। एवं आग्नेयः इत्यादितद्धितस्य देवतात्वविशिष्टद्रव्यविशेषवाचित्वम्। न च द्रव्यविशेषवाचित्वमसिद्धं इति वाच्यम्। बुद्धिस्थप्रकारावच्छिन्नबोधकसर्वनामार्थे 'साऽस्य देवता' (पा० ४।२।२४) इति तद्धितविधेः। एवं च तद्धितस्य देवतात्वविशिष्टे बुद्धिस्थप्रकारे अष्टाकपालत्वादौ तद्व्यक्तित्वादौ वा शक्तिः। तदवच्छिन्नस्य तु व्यक्तिन्यायेन लाभः। बुद्धिस्थत्वेन भानाभावात्तु न बुद्धिस्थत्वे शक्तिः। तेषां प्रकाराणां नानात्वेऽपि बुद्धिस्थत्वस्य उपलक्षणत्वेन शक्तिग्रहसंभवः। शक्तिग्रहोपलक्षणस्य न शक्यताऽवच्छेदकत्वं इति दिक्। **मणि.** पृ. १६२—१६३.

* **देवताद्रव्येण** स्वकार्याणि न कर्तव्यानि। **भा.** १०।७।२।७. * **देवताद्रव्ययोः** संनिपाते द्रव्यं बलीयः। **भाट्ट.** ८।१।८. * **देवताद्रव्यादीनां** प्राकृतानां विकृतौ उपदिष्टदेवताद्रव्यादिभिः बाधः। **भा.** १०।७।१७।५८—६०, * **देवताद्रव्यसंयोगः** यागविधेः प्रयोजकः। 'वायव्यं श्वेतमालभेत' 'सौर्यं चरुं निर्वपेत्'। २।३।५।१२—१५.

* **देवताध्यानं** वषट्कारात् प्रागेव होत्रा कर्तव्यम्। **संकर्ष.** ४।३।६.

**⌛ देवताध्यानं वषट्कारात् प्राक् 'तां ध्यायेद् वषट्करिष्यन्' इति लट्प्रयोगात्॥**

'यस्यै देवतायै वषट्कुर्यात् तां ध्यायेत्' इति विहितं देवताध्यानमविहितकालनियमेन यदाकदाचन कुर्यात्। इति प्राप्ते, 'जातमञ्जलिना गृह्णाति' 'जातमभिप्राणिति' इत्यादौ जननाव्यवहितोत्तरकालस्य सामर्थ्येनापि नियमदर्शनात् देवताऽर्चनविधौ ध्यानस्य प्राथमिकदर्शनाद् वषट्कारात् पूर्वमेव देवताध्यानम्। वस्तुतो 'यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन् साक्षादेव तद्देवतां प्रीणाति' इति वचनान्तरेणैव कालनियमः। **संकर्ष.** ४।३।६.

* **देवतानयः**। देवताऽधिकरणं द्रष्टव्यम्। **भा.** ९।१।४।६—१०. * प्रमाणान्तराविरोधे एव **देवतानयः** (ब्रसू.) प्रवर्तते। अन्यपराया अपि (भेदश्रुतेः) देवताऽधिकरणन्यायेन स्वार्थपरत्वमपि किं न स्यात्। **संक्षेप.** रामतीर्थ. ३।२८३.

* **देवतानिर्देशः** इदममुष्य अमुष्य च इत्यादिरीत्या समुच्चित्य कार्यः, यत्र चरवः पुरोडाशाश्च व्यतिषक्ताः। **संकर्ष.** १।३।२३.

* देवतानिष्ठगुणवाचिपदस्यापि विकृतौ आवाहनादौ प्रयोगः। भा. १०।४।१४।२६–२९.

* देवतापदस्य निर्गुणस्यैवाभिधानं पवमानेष्टिषु आज्यभागयोः। भा. १०।४।१५।३०–३१. * देवतापदस्य शब्दविशेषरूपत्वेन तदुच्चारणनियमः। संकर्ष. २।४।२.

देवतापदयोगेऽपि न सप्तदशत्वभङ्गः ॥

'अग्नयेऽनुब्रूहि' इत्यादौ इव 'अग्निं यज' 'ये यजामहेऽग्निम्' इति तत्तदेवतानाम्नां योगे सप्तदशाक्षरत्वभङ्गापत्तेः नियमादृष्टविरोधात्, अश्रुतकल्पने मानाभावात्, आकाङ्क्षितकर्मपदस्य 'छिनद्मि' इत्यादिवत् अर्थाध्याहारेणापि उपपत्तेः, अग्निपदस्य अध्याहारेऽपि तस्य प्रैषादौ प्रतिवचनान्त एवेति नियमेऽपि मानाभावात्। द्व्यक्षरपञ्चाक्षरावेव तौ प्रयोज्यौ। इति प्राप्ते, सर्वदेवतापदसाधारणांशमादायापि सप्तदशत्वोपपत्तेः अर्थाध्याहारस्य निरस्तत्वाच्च देवताविशेषपदमन्तरेण यागविशेषप्रतिपत्तेः अभावेन अनन्तराधिकरणसिद्धदृष्टार्थत्वभङ्गापत्तेश्च, देवतानाम्नां आदेशः। अत एव शाखाऽन्तरे 'अमुष्मै अनुब्रूहि', 'अमुं यज' इत्यादिवचनैः देवतानामविशेषोपलक्षकः अदःशब्दः श्रूयते। 'असावेहि' 'अवधिष्मामुम्' 'इदमहममुष्य' इत्यादिवचनैः देवतापदपौर्वापर्यनियमोऽपि एतद्बलादेव। यत्तु लिङ्गदर्शनमुक्तं मूले 'यत्तनूनपातं यज इडो यज इति ब्रूयात् जामि स्यात्, यजेत्येव ब्रूयात्' 'मारुतस्यावद्यन् मरुद्भ्योऽनुब्रूहीत्याश्राव्य मरुतो यजेति ब्रूयात्' इत्यादिज्ञापकात् अन्यत्रापि देवतापदप्राप्तिरिति, तत् शाखाऽन्तरे 'तनूनपातं यज' इत्येव पाठात् तन्निषेधार्थकत्वेन पूर्वस्य, इतरस्य तु विधिरूपत्वेनापि उपपत्तेः विपरीतसाधकं इति तत्रैवोक्तम्। संकर्ष. २।३।२.

* देवतापरो मेधपतिशब्दः अध्रिगुप्रैषगतः। भा. ९।३।१२।३२–४०.

* देवतापरिग्रहार्थं अग्निधारणार्थं वा अग्न्यन्वाधानम्। देवतापरिग्रहार्थमपि अग्निधारणार्थम्। भा. १२।२।५।१८, * देवतापरिग्रहार्थमपि अग्न्यन्वाधानं ज्योतिष्टोमे ऐष्टिकेषु कर्मसु न कर्तव्यम्, प्रधानदेवतावत् अङ्गदेवतानामपि गृहीतत्वात्। १२।१।१२।२४–२८.

* देवतापरिग्रहणं अग्न्यन्वाधानेन कृतम्। भा. १२।४।७।१९.

* देवतापूजा यागो नाम (पूर्वपक्षे)। भा. ९।१।४।६.

* देवताप्रकाशेन च प्रत्यक्ष उपकारो यागसिद्धिः। भा. २।१।५।१३.

* देवताप्रकाशकस्य मन्त्रस्यापूर्वप्रयुक्तत्वम्। भा. ९।१।३।४–५.

* देवताप्रकाशनं सौर्यादिविकृतौ आवाहनादिमन्त्रेषु विधिगतशब्देनैव। भा. १०।४।१३।२५.

* देवताप्रयुक्ता न धर्माः किन्तु अपूर्वप्रयुक्ता एव। भा. ९।१।४।६–१०.

* देवताप्रसादाभयप्रार्थनादौ संहतहस्तसंयोगमात्रं अञ्जलिः। वा. १।४।१४।२५.

* विग्रहादिसद्भावेऽपि यजेः पूजावाचित्वाभावात् यागकर्मणि देवताप्राधान्याभावः इति देवताप्राधान्यं 'अतिथौ तत्प्रधानत्वम्' (९।१।४।१०) इति सूत्रे निषेत्स्यते। सु. पृ. ७५०, * देवताप्राधान्यस्य देवताऽधिकरणे निषेध्यमानत्वात्। पृ. ४३८.

* देवताबोधकयाज्यादिक्रमादपि यागक्रमः। भाट्ट. ५।१।४.

* देवताभेदात् कर्मभेदः। बिन्दु. २।२।९.

* देवताभेदेऽपि एकजातीयेषु पशुषु (ऐकादशिनेषु) कुम्भीशूलवपाश्रपणीनां तन्त्रम्। भा. ११।४।९।३१–३६. * देवताभेदेऽपि वाचनिके पुरोडाशैकत्वे सहैवावदानम्। संकर्ष. २।२।१४। प्रदानं तु भिन्नमेव। २।२।१५. * देवताभेदे पशुगणे दैवतावदानादिप्रदानान्ते न अनुसमयः। भाट्ट. ५।२।६. * देवताभेदे पशुगणे वसाहोमस्यावृत्तिः। भा. ११।२।६।२५.

* देवतायागं अदनीयेन द्रव्येण आचरन्ति शिष्टाः, न अनदनीयेन। तत्रभवतामाचारात् तेषां स्मृतिरनुमीयते, स्मृतेः श्रुतिः। भा. १०।१।१०।३६.

* न हि देवतारूपमस्माकं किञ्चिदन्यत् प्रत्यक्षम्, अन्यदतो नित्यत्वात्। भा. ४।४।५।१०. * देवतारूपः

शब्द एव ध्यातव्यः । संकर्ष. ४।३।६ वर्णकम् २. * देवतारूपस्य अग्न्यादिशब्दस्य आनुपूर्वीविशिष्टवर्णत्वेन क्रतुं प्रतीव स्वार्थप्रतिपादनं प्रत्यपि कारणत्वात् । भाट्ट. ३।२।७.

* देवतावाचकपदस्य गुणवाचकपदरहितस्य पवमानेष्ट्यादिषु अभिधानम् । भा. १०।४।१५।३०–३१.

* देवताविग्रहचैतन्यादिकं नवमे यद्यपि निराकरिष्यते, तथापि तत् उत्सूत्रं भाष्यकृता, न तु सूत्रकृता । प्रत्युत सूत्रकारस्य देवताविग्रहादिकं अभिमतं वार्तिकामिमतं च इति षाष्ठतिर्यगधिकरणे प्रपञ्चयिष्यते । कु. १।२।४।४३ पृ. ४७.

* देवताविधिः 'तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन चेष्यते । देवतासंगतिस्तत्र दुर्बलं तु परंपरम् ॥' वा. २।२।९।२३ पृ. ५३३. * देवताविधिः तद्धित–चतुर्थी–मन्त्रवर्ण–द्वितीया–अर्थवादभेदात् पञ्चविधः । बाल. पृ. २२. * देवताविधिः प्रयाजेषु मान्त्रवर्णिकः । टुप्. ९।२।२०।६०.

* देवताविधिसरूपः अर्थवादः 'विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति । बाल. पृ. ५३.

* देवताव्यापारे शास्त्रकृते उपक्रम्य अपरिसमाप्यमाने शिष्टविगर्हणम् । भा. ६।२।४।१६.

* देवताशब्दस्य विधिगतस्यैव त्यागादौ उच्चारणम् । विधिशब्दाधिकरणम् । भा. १०।४।१२।२३–२४.

* देवताश्रवणं ग्रहग्रहणे न यागे । प्रसङ्गात्तु यागं निर्वर्तयति, न तु तासां यागं प्रति तादर्थ्ये प्रमाणमस्ति । कथम् ? क्रत्वर्थेन देवताः संयुक्ताः, ता यागमभिलषन्ति । यागोऽपि देवताभिलाषी । तयोः संबन्धोऽर्थात् भविष्यति । यागोऽपि द्रव्यं गृह्णन् तदाश्रितां देवतां गृह्णाति । टुप्. ८।१।३।५.

* 'देवतासंबन्धाभावात् आलभतिर्न यागवचनः । दृष्टार्थत्वाच्च वत्स आलभ्यमानो गां प्रस्नावयिष्यति' इति न्यायः 'विशये प्रायदर्शनात्' ( २।३।७।१६–१७ ) इत्यधिकरणसिद्धान्तबीजम् । के.

* देवतासंस्कारार्थः उत्तमः प्रयाजः । भा. १०।१।७।१४–१५, * देवतासंस्कारार्थः पशुपुरोडाशः । ३।६।७।२६,१०।१।९।२८–२९,१२।२।२।९, * देवतासंस्कारार्थाः याज्याऽनुवाक्याः । १०।४।२०।३९–४२.

* देवतासमर्पकत्वं वाक्यशेषस्य, उपक्रमस्य नैराकाङ्क्ष्यात् निराकृतम् 'संयुक्तस्त्वर्थशब्देन॰' इत्यधिकरणे ( २।३।७।१८ ) । पराक्रमः. ४४।२.

* देवतासाधकं विग्रहादिपञ्चकं नाम । विग्रहः, हविःस्वीकारः, तद्भोजनम्, तृप्तिः, प्रसादश्चेति । तत्र विग्रहः 'सहस्राक्षो गोत्रभिद् वज्रबाहुः', हविःस्वीकारः 'अग्निरिदं हविरजुषत', हविर्भोजनम् 'अद्धीदिन्द्र प्रस्थितेमा हवींषि', तृप्तिप्रसादौ 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' । एतेषां विग्रहादीनां प्रतिपादकयोर्मन्त्रार्थवादयोः स्वार्थे तात्पर्याभावात्, देवानां वस्तुसामर्थ्यात् फलप्रदत्वं न सिध्यतीति मीमांसकसिद्धान्तः । वि. ९।१।४.

* देवतासामान्यं बलीयो हविःसामान्यात् । कुतः ? सर्वोऽयं प्रयासो देवताऽऽराधनार्थ एव, सा अस्य प्रसन्ना फलं ददाति । एवं श्रूयते 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' इति । यश्च इन्द्रस्य प्रसादनोपायः इति ज्ञातः पुनरपि इन्द्रे प्रसादयितव्ये स एवास्थेयो भवति, तस्मात् देवतासामान्यं बलीय इति । अत्र ब्रूमः । स्यादेतदेवं यदि देवतातः फलं स्यात् । यागात्तु फलं 'स्वर्गकामो यजेत' इति श्रूयते । यत्तु 'तृप्त एवैनमिन्द्रः' इति, तत्रेदमुच्यते, गुणत्वेन देवताश्रुतिः । यागे गुणभूता देवता । तस्या दातृत्वं स्तुत्योच्यते । यथा 'अमात्येन मे ग्रामो दत्तः, सेनापतिना मे ग्रामो दत्तः' इति । न च अमात्यः सेनापतिर्वा ग्रामस्य प्रभवति । राजैव प्रभवति । इतरस्मिन् गुणभूते स्तुत्या दातृत्ववादः । तस्मात् यथोक्तेन न्यायेन हविःसामान्यमेव बलीयः इति । भा. ८।१।१७।३४, * देवतासामान्यात् आग्नावैष्णवादौ अग्नीषोमीयपुरोडाशधर्माणां शुचिपावकादिषु आग्नेयपुरोडाशधर्माणां चातिदेशः । ८।३।१।१–२. * देवतासामान्यात् हविःसामान्यं बलवत् । त्यागरूपे कर्मणि हविः प्रत्यासन्नम्, देवता तु बहिरङ्गम् । अतः

'ऐन्द्रमेकादशकपालं निर्वपेत्' इत्यादौ पुरोडाशधर्मातिदेशः, न तु सांनाय्यधर्मातिदेशः। वि. ८।१।१७. * देवतासामान्यस्य उत्पत्तिसमयावगतस्य प्रयोगकालावगतक्रमात् बलवत्त्वम्। संकर्ष. २।३।५.

* देवतास्वत्वं त्यागमात्रेण न च भवति। प्रतिग्रहेण हि स्वस्वामिसंबन्ध आपद्यते। न च परिगृहीतं देवतया इति किंचन प्रमाणमस्ति। भा. ३।३।१५।४४.

* देवदत्तस्य गुरुकुलम्। संबन्धिशब्दानां प्रतिसंबन्धिनमपेक्षमाणानामपि न सामर्थ्यविघातो भवति। रत्नाकरः. पृ. ३४७.

* देवदत्तादिशब्दो द्रव्यवचनो न शक्तिं ब्रवीति। वा. ३।४।४।१३ पृ. ९३३.

देवदत्तपुत्रन्यायः। पितृप्राधान्यविवक्षायामेवमुच्यते, मातृप्राधान्यविवक्षायां तु देवदत्तापुत्र इति। संग्रहः.

देवदत्तहननोद्यतहतन्यायः। यथा देवदत्तहननोद्यतस्य हनने तु देवदत्तस्य भवत्येवोन्मज्जनम्, तथा रामावित्यत्र पूर्वसवर्णदीर्घेण न वृद्धेर्हननम्, किंतु हननोद्यतसजातीयस्य प्रसक्तिमात्रम्, प्रसक्तस्यैव निषेधात्। साहस्री. ३४.

देवदत्तहन्तृहननन्यायः। यथा देवदत्तस्य हन्तरि हते देवदत्तस्योन्मज्जनं न भवतीति, तथा अज्ञानबाधके ज्ञाने विनष्टे पुनरज्ञानोदयेन बन्धप्रसङ्गो न भवतीति। अयं न्यायः 'अचः परस्मिन् पूर्वविधौ' १।१।५७ इति सूत्रमहाभाष्येऽपि। साहस्री. ३३.

देवदत्तापुत्रन्यायः। यथा नहि देवदत्ताया एव पुत्रः किन्तु देवदत्तस्यापि, मातुः प्राधान्यविवक्षायां देवदत्तापुत्र इत्युच्यते। यथा च दाक्षीपुत्रः पाणिनिः। अत एव यजुर्वेदे वंशकीर्तने स्त्रीप्राधान्येनैव निर्देशः। यथा 'अथ वंशस्तदिदं वयं भारद्वाजीपुत्राद्भारद्वाजीपुत्रो वात्सीमाण्डवीपुत्राद्वात्सीमाण्डवीपुत्रः' इत्यादि (शत्रा. १४।९।४)। साहस्री. ३०.

देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते इति लोकन्यायः। भूतिः. पृ. २९८.

* देवनस्य कृत्स्नराजसूयाङ्गता। वि. ४।४।२, * देवन–जय–शौनःशेपाख्यानानि अभिषेचनीयसंनिधौ पठितान्यपि न अभिषेचनीयाङ्गम्, किन्तु प्रकरणबलेन राजसूयाङ्गम्। ३।३।१०.

* देवसुवां हवींषि अष्टौ। १ अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाम्, २ सोमाय वनस्पतये श्यामाकं चरुम्, ३ सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमाशूनां व्रीहीणाम्, ४ रुद्राय पशुपतये गावीधुकं चरुम्, ५ बृहस्पतये वाचस्पतये नैवारं चरुम्, ६ इन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं महाव्रीहीणाम्, ७ मित्राय सत्याय आम्बानां चरुम्, ८ वरुणाय धर्मपतये यवमयं चरुम्। [ आशुव्रीहयः षष्ट्या दिनैः पच्यमानाः, महाव्रीहयः स्थूलबीजम्, आम्बाः– आंबेमोहोर (भाषायां) ] एतानि च अग्नीषोमीयस्य पशुपुरोडाशतन्त्रमध्ये विहितानि इति पुरोडाशधर्मैः प्रसङ्गसिद्धानि, हविषां स्वधर्मानुष्ठानं न कर्तव्यम्। इदं अनुनिर्वाप्याधिकरणम्। के. १२।३।२।३–८. * देवसुवां हविःषु अनुनिर्वाप्येषु अग्नीषोमीयपशुपुरोडाशतन्त्रेण प्रसङ्गसिद्धिः। अनुनिर्वाप्याधिकरणम्। भा. १२।३।२।३.

* देविकाहवींषि अनुबन्ध्यामनुनिर्वाप्याणि। भा. १२।३।२।३. * देविकाहवींषि पञ्च। १ धात्रे पुरोडाशं द्वादशकपालम्, २ अनुमत्यै चरुम्, ३ राकायै चरुम्, ४ सिनीवाल्यै चरुम्, ५ कुह्वै चरुं इति। के. * देविकाहविःषु अनुनिर्वाप्येषु अनुबन्ध्यातन्त्रस्यैव प्रसङ्गः, न तु वैपरीत्यम्। भा. १२।३।२।३–८.

* देविकाहविरधिकरणम्। अनुनिर्वाप्याधिकरणं द्रष्टव्यम्। भा. १२।३।२।३–८.

* देशः अनुपादेयः। तस्य कर्मभेदकत्वे उदाहरणानि 'दक्षिणेन तीरेण सरस्वत्याः आग्नेयेनाष्टाकपालेन शम्या परासमीयात्' इत्यादीनि यद्यपि अत्र अतिरात्रादिवदेव यज्यश्रवणं तथापि प्राग् यज्यनुमानात् तद्धितान्तपदयुक्तवाक्यापरिसमाप्तेः वाक्यान्तरस्यानपेक्षणात् कर्मान्तरत्वम्। वा. २।३।१२।२५. * देश एक एवाग्नेयादीनां प्रधानानां

दर्शपूर्णमासचातुर्मास्यादौ । भा. ११।२।१।१-२,४-७. ❋ देशः 'एककालाभिसंयोगाद्भिन्नानामपि कर्मणाम् । समुदायार्पणं शक्यमेकदेशस्थवृक्षवत् ॥' यथैव हि एकदेशावस्थितान् वृक्षानालोच्य वनमिति समुदायबुद्धिर्भवति, एवं एककालयुक्तकर्मसमुदायनामधेयबुद्धिः । वा. २।२।३।३ पृ. ४८०. ❋ देशः कालः फलं निमित्तं संस्कार्यं इत्यनुपादेयपञ्चकम् । बाल. पृ. ८८, ❋ देशः दर्शपूर्णमासयोः पुनः प्रयोगे स वा अन्यो वा अनियमः । भा. ११।३।१२।३३, ❋ देशः निर्वापस्य 'अपरेण गार्हपत्यं प्रागीषं अनोऽवस्थितं भवति, तस्य दक्षिणं चक्रमारुह्य अनसोऽधिनिर्वपति' । १२।१।७।१५. ❋ देशः पात्राणि ऋत्विजश्च एकस्मिन् प्रयोगे ये उपयुक्ताः, प्रयोगान्तरे ते वा अन्ये वा इच्छया प्रयोक्तव्याः, उपयुक्ता अपि यातयामा न भवन्ति । 'कुशा दर्व्यादयो मन्त्रा ब्राह्मणाश्च बहुश्रुताः । न ते निर्माल्यतां यान्ति विनियोज्याः पुनःपुनः ॥' भाट्ट. ११।३।१२. ❋ देशः 'समे दर्शपूर्णमासाभ्यां यजेत' इति एकस्मिन् प्रयोगे तन्त्रम् । वि. ११।२।१, ❋ देशस्य नियमविधिः चातुर्मास्येषु वैश्वदेवपर्वणि 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इति । ४।२।९.

❋ **देशान्वयनिमित्तेन** साहित्येन कालान्वयसाहित्यानवगतिः । सु. पृ. ७३४.

❋ **देशादिसंबन्धं** विधातुम् 'समे यजेत' इत्यादिः दर्शादीनां पुनर्विधिः कर्मानुवादः, इति न कर्मभेदमावहति । वि. २।३।१३.

❋ **देशकर्तृविषये** अनियमः कर्मसु भिन्नेषु । भा. ११।३।१२।३३.

❋ **देशकालयोः** सिद्धवदाकाररूपोद्देश्यत्वेऽपि स्वारसिकप्रवृत्तिविषयत्वाऽऽपादकप्रयोजनाकाररूपेण उद्देश्यत्वाभावात् स्वरूपतश्च सिद्धवत्कृत्य निर्देशेऽपि कर्माङ्गत्वेन अप्राप्तत्वात् विधेयत्वोपपत्तिः । सु. पृ. ९५८.

❋ **देशकालकर्तारः** तन्त्रं अङ्गेषु दर्शपूर्णमासयोः । भा. ११।२।२।३,८-११, ❋ देशकालकर्तारः तन्त्रं प्रधानेषु दर्शपूर्णमासादिषु । ११।२।१।१-२,४-७, ❋ देशकालकर्तॄणां नियमविधिः 'दर्शपूर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विजः' इति । ४।२।९।२३-२४. ❋ देशकालकर्तॄणां प्रयोगशेषत्वम्, न तु आग्नेयादिविधिशेषत्वम् । वि. ११।२।२.

❋ **देशकालकर्त्रादीनामैक्ये** न्यायेन प्राप्ता तन्त्रता । व्यवहारमयूखः. पृ. ५९.

❋ **देशकालकर्त्रेकत्वं** अङ्गानां प्रधानैः सह । भा. ११।२।२।३,८-१२.

❋ **देशकालकर्तृभेदोऽपि** अङ्गप्रधानयोर्वचनेन भवति । भा. ११।३।१।१.

❋ **देशकालपरिमाणमपि** लोक-ज्योतिःशास्त्रव्यवहारसिद्ध्यर्थं दर्शनगणितसंप्रदायानुमानपूर्वकम् । वा. १।३।१।२ पृ. १६७.

⌛ **'देशकालवयोऽवस्थाबुद्धिशक्त्यनुरूपतः । धर्मोपदेशो भैषज्यं वक्तव्यं धर्मपारगैः ॥' इति न्यायः** । स्पष्टोऽर्थः । साहस्री. ५३२.

❋ **देशतस्तुल्यानि** दर्शपूर्णमासयोः अङ्गानि प्रधानानि च । 'समे दर्शपूर्णमासाभ्यां यजेत' इति । प्रधानैः सह अङ्गानां एकदेशकालकर्तृकत्वं वक्ष्यति, 'अङ्गानि तु विधानत्वात्' (११।२।८) इत्यत्र। भा. ११।१।१०।५६. ❋ देशतः वाचनिकी व्यवस्था यथा श्रौते 'वरुणप्रघासेषु उत्तरे विहारे अध्वर्युरध्रौ हवींष्यासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इति । स्मार्तेऽपि 'नर्मदोत्तरभागे तु कर्तव्यं सिंहयुक्तके । कुलीरसंस्थिते भानावुपाकुर्याच्च दक्षिणे ॥' इति बृहस्पतिः । बाल. पृ. १८. ❋ देशतो व्यवस्थारूपः प्रतिषेधो यथा 'कृष्णपक्षादिकं मासं नाङ्गीकुर्वन्ति केचन । येऽपीच्छन्ति न तेषामपीष्टो विन्ध्यस्य दक्षिणे ॥' इति त्रिकाण्डमण्डने । बाल. पृ. ३४.

❋ **देशपरिमाणम्** । 'तिर्यग् यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः । प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुला ॥ हस्तो वितस्तिद्वितयं दण्डो हस्तचतुष्टयम् । तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम् ॥' सु. पृ. १२८.

☒ देशपात्रादीनामुपयुक्तानां प्रयोगान्तरे उपादानेऽपि न दोषः ॥

**लौकिकेषु यथाकामी, संस्कारार्थोलोपात् । ११।३।१२।३५ ॥**

**भाष्यम्**— इह लौकिकार्था उदाहरणम् । यथा देशः 'समे दर्शपूर्णमासाभ्यां यजेत'। कर्तारः 'दर्शपूर्णमासयोर्यज्ञक्रतोः चत्वार ऋत्विजः' । स्रुगादीनि च पात्राणि । तेषु विचारः । किं प्रतिप्रयोगमन्यान्युपादेयानि, उत तानि वाऽन्यानि वोपादाय प्रयोग इति । किं प्राप्तम् ? अन्यान्यन्यानि उपादेयानीति । किं कारणम् ? निरिष्टकेन पुनः क्रियां शिष्टा नाचरन्तीति । एवं प्राप्ते, ब्रूमः । लौकिकेषु यथाकामी, तानि वाऽन्यानि वा, अनियमः । कुतः ? संस्कारानर्थलोपात् । न कश्चित्पूर्वस्मिन् प्रयोगे कर्त्रादीनां संस्कारः कृतः, योऽन्योपादाने लुप्येत । नाप्यर्थलोपः । अन्यैरपि हि शक्यते प्रयोगः कर्तुम् । तस्मादनियमः । अथ यदुक्तं निरिष्टकेन शिष्टा यागं नाचरन्तीति । एतैराचरन्तीति । तस्मान्नैष दोषः । ननु 'ऋत्विगाचार्यौ नातिचरितव्यौ' इति स्मरन्तीति । पुरुषधर्मोऽसौ, न कर्मधर्मः । कर्मसंयोगाभावात् प्रकरणाभावाच्च । देशेषु कर्तृषु च पर्यवसितम् । पात्रेषूत्तरा कथा करिष्यते ।

**सोम**— आह्वानभेदवत् देशादीनामपि भेदः इत्युत्थितेः **संगतिः** । ( निरिष्टकेन इति भाष्यादौ- ) नितरां इष्टं अनेन इति निरिष्टम्, निरिष्टमेव निरिष्टकं एकस्मिन् कर्मणि उपयुक्तम् । **सूत्रार्थस्तु**- लौकिकेषु देशादिषु पूर्वप्रयोगकृतस्य प्रयोगान्तरे उपजीव्यस्य संस्कारस्य अभावे अन्योपादानेऽपि संस्कारलोपाभावात् अन्यैरपि प्रयोगनिर्वृत्त्या अर्थलोपाभावाच्च यथाकामी इति ।

**वि**-- 'देशपात्रर्त्विजोऽन्यस्मिन् प्रयोगेऽन्य उतैच्छिकाः ।, भुक्त्यर्थपर्णवत् तेऽन्ये, वासोवत् ते स्युरैच्छिकाः ॥'

**भाट्ट**-- समादिदेशानामध्वर्य्वादिऋत्विजां स्रुवादिपात्राणां च प्रतिकर्म प्रतिप्रयोगं च भेद एव । इतरथा निरिष्टकोपधाने शिष्टाचारविरोधात् । इति प्राप्ते, 'कुशा दर्व्यादयो मन्त्रा ब्राह्मणाश्च बहुश्रुताः । न ते निर्माल्यतां यान्ति विनियोज्याः पुनः पुनः ॥' इतिवचनेन अत्र विनियुक्तविनियोगेऽपि शिष्टाचारविरोधाभावादनियमः । न च 'ऋत्विगाचार्यौ नातिचरितव्यौ' इति वचनेनातिचारनिषेधात् ते एवेति नियमः शङ्क्यः । अस्याप्रकरणस्थतया पुरुषार्थरूपस्य क्रत्वर्थत्वे प्रमाणाभावेन अन्यकरणे क्रतुवैगुण्यानापत्तेः । तस्यान्यत्र व्यासक्तत्वे क्रोधोत्पादकव्यापाररूपातिचारासंभवेन पुरुषार्थनिषेधस्याप्यनापत्तेश्च । न चैवमेकत्वपक्षे व्यक्तेरेकत्वेन आतिथ्याबर्हिःप्रोक्षणन्यायेन सकृत्कृतैरेव वरणसंमार्जनादिसंस्कारैः सर्वकर्मसु कार्यसिद्धेः प्रतिप्रयोगं वरणाद्यननुष्ठानापत्तिः, व्यक्त्यैकत्वस्य नैयत्याभावेन आतिथ्याबर्हिःप्रोक्षणन्यायाभावात् । अग्निसंमार्गवत् व्यक्त्यैकत्वनैयत्येऽपि वरणादेः प्रयोगान्तरे प्रसङ्गसिद्ध्यनापत्तेश्च । अवसितमृत्विक्षु देशे च । पात्रेषु तु चिन्त्यते ।

**मण्डन**— 'देशः कर्ताऽन्यः स वाऽन्यप्रयोगे ।'

**शंकर**--- 'ऋत्विग्देशमिदाऽपि च ।' ऐच्छिकी ।

☒ **देशपृथक्त्वान्मन्त्रोऽभ्यावर्तते । १२।१। २०।४५॥**

आतिथ्यायां उपसत्सु अग्नीषोमीये च बर्हिः साधारणम् । तस्य 'ऊर्णाम्रदसं त्वा स्तृणामि' इति स्तरणस्य मन्त्रः अभ्यावर्तते पृथगेव प्रयुज्यते । देशपृथक्त्वात् । आतिथ्यायाः प्राग्वंशः उपसदां च, अग्नीषोमीयस्य तु उत्तरवेदिसमीपः । तस्मात् आवृत्तिः स्तरणमन्त्रस्य इति सिद्धान्तः । के.

* **देशबद्धमुपांशुत्वं** (देशसंबद्ध इति च पाठः) इति नवमाधिकरणन्यायेन ( ९।१।६।२० ) प्रकृतस्य स्वरस्य यज्ञभागधर्मतया स्थितत्वात् यज्ञभागपतितस्य अपूर्वस्यापि अङ्गस्य प्राकृतस्वराख्यधर्मलाभोपपत्तेः । सु. पृ. ११८२.

* **देशभाषाऽपभ्रंशपदानि** हि विप्लुतिभूयिष्ठानि न शक्यन्ते विवेक्तुम् । वा. १।३।५।१० पृ. २२६.

* **देशलक्षणा** भवति यथा 'अग्नौ तिष्ठति' 'कूपे तिष्ठति' इति ( अग्निदेशे कूपदेशे इत्यर्थः ) । भा. ७।२।१।१२, * देशलक्षणा । 'रजनी मे कण्डूयति,

तिलको मे स्पन्दते ' इति रागाभावे तिलकाभावे च तद्देशलक्षणया भवन्ति वक्तारः । ८।४।५।२८.

* **देशविधिरयं** प्रयोगविधिरेव ' अप्सु अवभृथेन चरन्ति ' इति । **भाट्ट. ११।२।७.** * देशविधिः दर्शपूर्णमासादौ नियमार्थः । कर्तृदेशकालविषयः इत्यत्र द्रष्टव्यम् । **वि. ४।२।९.**

* **देशविधिसरूपः** अर्थवादः ' षट्त्रिंशत्प्रक्रमा प्राची त्रिंशज्जघनेन चतुर्विंशतिः पुरस्तात् ' इति विधौ वाक्यशेषः, ' इयति शक्ष्यामहे अस्यां कर्तुम् ' इति । **बाल. पृ. ५७.**

* **देशविशेषो** लक्ष्यते ' अर्धमन्तर्वेदि मिनोति, अर्धं बहिर्वेदि ' इत्यनेन । **व्यवहारमयूखः पृ. ५१.**

* **देशसंनिधेः** कर्मभेदकत्वं नास्ति । **भा. २।३। १३।२६.**

* **देशसंबद्धमुपांशुत्वम्** ( देशबद्ध—इत्यन्यत्र पाठः) इत्यत्र ' त्सरा वा एषा यज्ञस्य तस्मात् यत्किञ्चित् प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति ' इति उदाहृत्य यज्ञभागधर्मो वा एतदुपांशुत्वं पदार्थधर्मो वा इति संदिग्धे, यज्ञस्य फलवत्त्वेन धर्मप्रयुक्तसामर्थ्यात् यज्ञस्य यत् प्राचीनं इति व्यवहितेनापि यज्ञशब्देन प्राचीनशब्दस्य अन्वयप्रतीतेः श्रुत्या च प्राग्देशवाचिनः प्राचीनशब्दस्य लक्षणया तद्देशपदार्थपरत्वायोगात् यज्ञभागधर्मत्वं पूर्वपक्षयित्वा प्राचीनशब्दस्य वीप्सा किञ्चिच्छब्दसमभिव्याहृतयच्छब्दान्वयात् वीप्सायाश्च बहुविषयत्वेन एकस्मिन् देशे अनुपपत्तेः लक्षणया अग्नीषोमीयप्राग्देशपदार्थपरत्वस्यैव न्याय्यत्वात् पदार्थधर्मता इति सिद्धान्तितम् । **सु. पृ. ७३०.**

**देशसंबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशात्, तस्य च तत्र भावात् । ९।१।६।२०॥**

ज्योतिष्टोमे ' त्सरा वा एषा यज्ञस्य तस्माद् यत्किञ्चित् प्राचीनमग्नीषोमीयात् तेन उपांशु चरन्ति ' इति श्रूयते । अग्नीषोमीयात् पशोः प्राचीनः योंऽशः यज्ञस्य, सा वै त्सरा छद्मगतिः शनैः पदविन्यासः शकुनिग्राहकस्येव । तस्मात् तदानीं उपांशुना स्वरेण मन्त्रा उच्चारणीयाः इति श्रुत्यर्थः । अत्र किं अग्नीषोमीयात् प्राक्तनानि यानि कर्माणि, तत्प्रयुक्तं उपांशुत्वम्, उत परमापूर्वप्रयुक्तं इति विचारे सिद्धान्तमाह । उपांशुत्वं देशसंबद्धं श्रुतं अग्नीषोमीयात् पशोः यत् प्राचीनं कर्मजातम् । स उपांशुत्वस्य देशः । तेन तत् संबद्धं श्रुतम् । अग्नीषोमीयात् इति पञ्चमीश्रुत्या येषां कर्मणां निर्देशः, तेषां कर्मणां पञ्चमीश्रुतिनिर्देशात् उपांशुत्वं धर्मः स्यात् । अथवा ' यत्किञ्चित् प्राचीनमग्नीषोमीयात् ' इति श्रुतं वाक्यमेव श्रुतिशब्देन गृह्यते । श्रुतिनिर्देशात् तेन वाक्येन निर्देशात् । अथवा लक्षणया अग्नीषोमीयप्राग्भाविपदार्थापूर्वं श्रुतिशब्देन ग्राह्यम् । तादृशमपूर्वं निर्दिश्य उद्दिश्य उपांशुत्वं विधीयमानं तदर्थं स्यात् । तस्य च अवान्तरापूर्वस्य च तत्र तेषु अग्नीषोमीयप्राग्भाविपदार्थेषु भावात् सत्त्वात् । तस्मात् अग्नीषोमीयपशुप्राक्तनकर्मापूर्वप्रयुक्तं उपांशुत्वं इति सिद्धान्तः ।

**यज्ञस्य वा, तत्संयोगात् । २१ ॥**

उपांशुत्वं अग्नीषोमपशुप्राक्तनकर्मप्रयुक्तं इति सिद्धान्तपक्षव्यावृत्त्यर्थः वाशब्दः । उपांशुत्वं यज्ञस्य । यज्ञजन्यपरमापूर्वप्रयुक्तमुपांशुत्वम् । तत्संयोगात् ' त्सरा वा एषा यज्ञस्य तस्मात् यत्किञ्चित् प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति ' इत्यत्र यज्ञस्य यत् प्राचीनं इति यज्ञपदस्य तेन प्राचीनपदेन यज्ञप्राग्भागवाचिना संयोगात् संबन्धात् भागद्वारा भागिनो यज्ञस्यैव उपांशुत्वप्रयोजकत्वस्य युक्तत्वात् । प्राचीनपदं प्राचीनं यज्ञभागं श्रुत्या वदति प्राचीनभागगतकर्माणि तु लक्षणया । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या न लक्षणा । तस्मात् परमापूर्वप्रयुक्तमुपांशुत्वं इति पूर्वः पक्षः ।

**अनुवादश्च तदर्थवत् । २२ ॥**

' त्सरा वा एषा यज्ञस्य तस्मात् यत्किञ्चित् प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति ' इत्यत्र ' यज्ञस्य त्सरा एषा ' इत्यन्वयस्वीकारे यद्यपि उपांशुत्वं अग्नीषोमीयप्राग्भागवर्तिपदार्थानामिति ज्ञातुं शक्यम्, तथापि न तद्देशगतानां पदार्थानामर्थेन क्रियते, किन्तु तद्देशाभिगतस्य यज्ञस्यार्थेन गम्यते । ' त्सरा वा एषा यज्ञस्य यत् प्राचीनमग्नीषोमीयात् ' इति हि अनुवादः अनुवादरूपः अर्थवादः । तच्च अर्थवादवाक्यं अर्थवत् परमापूर्वप्रयोजक-

त्वबोधनेन सफलम् । तस्मात् परमापूर्वप्रयुक्तमेव उपांशुत्वं इति पूर्वः पक्षः ।

इतः परं ( २३–२४ ) सूत्रद्वयं प्रकृताधिकरणगुणत्वेन भाष्यादौ व्याख्यातमपि अन्तरागर्भिणीत्वेन अधिकरणान्तरत्वेनापि व्याख्यातम् । ततोऽस्माभिः अधिकरणान्तरत्वेनैव व्याख्यास्यते प्रदेशान्तरे इति ध्येयम् ।

**तद्देशानां वा, संघातस्याचोदितत्वात् । २५ ॥**

वाशब्दात् पूर्वपक्षस्य व्यावृत्तिः । उपांशुत्वं न परमापूर्वप्रयुक्तम्, किन्तु तद्देशानाम् । सः अग्नीषोमीयात् प्राक्तनः देशः येषां कर्मणां ते तद्देशाः, तेषां तद्देशानां कर्मणां उपांशुत्वं स्यात् प्राचीनपदार्थप्रयुक्तमुपांशुत्वं स्यात्, न ग्रहयागसंघातप्रयुक्तम्, न ग्रहयागसंघातजन्यपरमापूर्वप्रयुक्तमित्यर्थः । संघातस्य ग्रहयागसंघातस्य यो भागः प्राचीनः, तस्य उपांशुत्वसंबन्धेन अचोदितत्वात् चोदनाऽभावात् । ' त्वरा वा एषा यज्ञस्य तस्मात् यत्किञ्चित् प्राचीनमग्नीषोमीयात् ' इति वाक्ये यज्ञस्य यत् प्राचीनं इति नान्वयः शक्यः, तस्मादितिपदेन व्यवधानात् । तस्मान्न परमापूर्वप्रयुक्तमुपांशुत्वम्, किन्तु यानि अग्नीषोमीयात् प्राक्तनानि दीक्षणीयादिप्रधानवर्जं अङ्गानि, तदपूर्वप्रयुक्तं इति सिद्धान्तः । **के.**

* **देशसंयोगनिमित्तायामपि** आख्यायां देशान्निर्गतस्य तदाख्या न विरुद्धा । यत एषा योगाख्या योगमात्रापेक्षा न भूतवर्तमानभविष्यत्संबन्धापेक्षा । यतो दृश्यते मथुरामभिप्रस्थितो माथुर इति, मथुरायां वसन्, मथुराया निर्गतश्च । **भा.** १।३।७।२१.

* **देशसंस्कारकं** आतिथ्याबर्हिषः अग्नीषोमीयार्थे उत्तरवेदिसमीपे स्तरणम् । **भा.** १२।१।२०।४४.

* **देशसामान्यम्** ( क्रमः ) एकदेशत्वाख्यं इति, बुद्धिविपरिवृत्त्याख्यसंनिधिरूपः क्रमः प्रतीयते । **सु.** पृ. ११९७. * **देशसामान्यात्** देवतासामान्यं बलीयः, तेन शुचिदेवत्ये आग्नेयस्य विध्यन्तः, आग्नावैष्णवे च अग्नीषोमीयस्य । **भा.** ८।३।१।२. * ' तत्र क्रमो द्विधैवेष्टो **देशसामान्यलक्षणः** । पाठानुष्ठानसादेश्याद् विनियोगस्य कारणम् ॥ ' ( पाठसादेश्यं अनुष्ठानसादेश्यं चेति ) । **वा.** ३।३।५।१२.

* **देशीयभाषासु** काव्ये चतुर्विंशत्यक्षरसंख्यया गायत्रीछन्दस्कत्वं भवति । **वि.** ८।३।६.

* देहः महाभौतिकः । ' महाभौतिकदेहस्था यथाऽऽत्मानः सचेतनाः । कंचिदर्थं विवक्षन्ति न विवक्षन्ति चापरम् ॥ ' **वा.** ३।१।७।१३ पृ. ७०२, * ' जरायुजादयो **देहा** दृष्टा भुवि चतुर्विधाः । ' ३।१।७।१३ पृ. ७०२. * **देहानां** तैजसानामपि ' एवं यः सर्वभूतानि ब्राह्मणो नित्यमर्चति । स गच्छति परं स्थानं तेजोमूर्तिः पथर्जुना ॥ ' इति मानवाभिधानेन चेतनाधिष्ठितत्वं ज्ञायते । ( पथा ऋजुना देवयानेन ) । **सु.** पृ. १००९.

⧗ **देहाधोमुखत्वन्यायः ।** यथा वाताद्युपाधिकृतस्य स्वदेहे अधोमुखत्वादेस्तदपगमे अपगमः । **साहस्री.** ३५३.

⧗ **देहकेशन्यायः ।** चेतनत्वेन प्रसिद्धेभ्यः पुरुषादिभ्यः विलक्षणानां केशनखादीनामुत्पत्तिर्दृश्यते, तथा चेतनात् ब्रह्मणः अचेतनस्यापि जगतः उत्पत्तिः स्यात् । इदं २।१।५।६ ब्रह्मसूत्रशांकरभाष्ये स्पष्टमुक्तम् । **साहस्री.** ८९१.

* ' **देहभेदप्रकाराश्च** कर्मशक्तिवशानुगाः । प्रकृत्यारम्भवैचित्र्याद् दृश्यन्तेऽपरमात्मनाम् ॥ पार्थिवावयवप्रायाः शेषतोऽप्यनुग्रहात् । जरायुजादयो देहा दृष्टा भुवि चतुर्विधाः ॥ भूतान्तरानुबद्धेन तोयेनैव विनिर्मिताः । श्रूयन्ते वारुणे लोके देहाः स्वच्छाङ्गलक्षणाः ॥ अन्तरिक्षे च बहवः प्राणिनो वातनिर्मितैः । भ्रमन्ति लघुभिः सूक्ष्मैर्देहैर्भूम्याद्यनुग्रहात् ॥ स्वर्लोके तैजसप्राया देहाः शुद्धप्रभाऽन्विताः । आप्यायन्ते विकीर्णेन मानवीयेन तेजसा ॥ तथा व्योमशरीरोऽपि परमात्मा श्रुतौ श्रुतः । इज्यते वारिणा नित्यं यः खं ब्रह्मेति चोदितः ॥ रूपस्पर्शादयो येऽपि महाभूतगुणाः स्थिताः । प्रत्येकमात्मनां तेऽपि देहाः संभोगहेतवः ॥ शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते । तदप्यधिष्ठितं सर्वमेकेन परमात्मना ॥ तथर्ग्वेदादयो देहाः प्रोक्ता येऽपि पृथक्पृथक् । भोग्यत्वेनाऽऽत्मनां तेऽपि चैतन्यानुगताः सदा ॥ ' **वा.** ३।१।७।१३ पृ. ७०२–०३.

§ **देहलीदीपन्यायः** । अयं न्यायो यथा शालाद्वयमध्यवर्तिदेहलीनिहितदीपः शालाद्वयं स्वकिरणमण्डितं करोतीति दृष्टान्तभूतः । किंच 'एकाच उपदेशेऽनुदात्तात्' इति सूत्रस्थोपदेशपदार्थस्य एकाच्पदार्थे अनुदात्तपदार्थे चान्वय इति । अयं च न्यायः अन्वयविषये एव प्राय उदाह्रियते वृद्धैरिति बोध्यम् । **साहस्री.** २४६.

* 'अभयं सर्वभूतेभ्यो मत्तः' इतिमन्त्रस्थं 'मत्तः' इति पदं **देहलीदीपन्यायेन** हृदये निधाय 'मत्तः सर्वं प्रवर्तते' यतः तस्मात् इति हेतुमाह । आरुणेय्युपनिषत्—**शंकरानन्दः**, * 'संपश्यन् ब्रह्म परमं याति नान्येन हेतुना ।' न याति इति देहलीदीपन्यायेन संबध्यते ( संपश्यन् याति, अन्येन न याति इति यातिपदस्योभयत्रान्वयः ) । **शंकरानन्दः** कै. उ. १।१०.

* **दैक्षः** इत्यग्नीषोमीयः (पशुः) उच्यते दीक्षासंबन्धात् । **भा.** ८।१।६।१३. * दैक्षः पशुः यो हि प्रकृतिभूतः पशूनाम्, स दर्शपूर्णमासविकारो भवति । इतरे तु प्राणिद्रव्यकत्वसामान्यात् तद्विकाराः । **वा.** ३।६।७।१९.

§ **दैक्षस्य चेतरेषु । ८।१।६।१३॥**

दीक्षायां भवः दैक्षः अग्नीषोमीयः पशुः । तस्य विध्यन्तः इतरेषु पशुषु सवनीये निरूढे सौम्यादौ च । आलभतिचोदनासामान्यात् पशुत्वचोदनासामान्याच्च । तस्मात् पशूनां प्रकृतिः अग्नीषोमीयः पशुः । **के.**

* **दैक्षे** अहनि ऋत्विग्वरणं वषट्कर्तॄणामेव, न सर्वेषाम् । **संकर्ष.** ३।४।९. * दैक्षे पशौ उपभृद्द्वयं शुद्धाज्यपृषदाज्यधारणार्थं ग्राह्यं एककाले एव च ग्रहणम् । न तु प्रयाजाज्यसमानयनोत्तरं तस्यामेव उपभृति पृषदाज्यग्रहणम् । **भाट्ट.** ५।२।८. * दैक्षे पशौ ( अग्नीषोमीये ) श्रुतं पशोः शामित्रदेशे नयनकाले वपाऽऽनयनकाले च यत् उल्मुकस्य नयनं प्रत्याहरणं च, तत् वाजपेये प्राजापत्यानां ऋतुपशूनां च तन्त्रम्, तस्य श्रपणार्थत्वात् । **संकर्ष.** १।१।९. * दैक्षे पशौ स्वरुः अञ्जनप्रोक्षणादीनां न प्रयोजकः । **भाट्ट.** ४।२।१. * दैक्षे हृदयाद्यभिघारणार्थं प्रयाजशेषधारणं तत्पात्रं च न कर्तव्यम् । **वि.** ४।१।१४.

* **दैक्षानुबन्ध्यक्रमविचारे** आदौ दैक्षस्य तदुत्तरमनूबन्ध्यस्य प्रकृतिदृष्टपौर्वापर्यस्यैव नियामकान्तराभावे नियामकत्वाङ्गीकारात् । साद्यस्के सह पश्वालम्भे सवनीयोत्तरम् । **के.** ( ५।१।६।१३ वर्णकम् २ भा. )

* **दैक्षादिवाक्ये** पशोर्विनष्टत्वेन साक्षात् देवताऽन्वयायोगात् अगत्या सापेक्षतद्धिताङ्गीकारेण प्रदेयप्रकृतित्वोपपत्तिः । **सु. पृ.** १५३७.

§ **दैक्षन्यायः** । अग्नीषोमीयस्य पशोः धर्माः सवनीयादिषु अतिदेष्टव्याः ॥

**दैक्षस्य चेतरेषु । ८।१।६।१३॥**

**भाष्यम्**— इह पशुबन्धा उदाहरणम् । सवनीयो निरूढः पशुः, सौम्यादयश्च । तेषु किं दार्शपौर्णमासिको विध्यन्तः, उत दैक्षस्येति । दैक्ष इत्यग्नीषोमीय उच्यते, दीक्षासंबन्धात् । किं प्राप्तम् ? यथोक्तेन न्यायेन ( प्रयाजानुयाजाघारादिलिङ्गदर्शनरूपेण ) दार्शपौर्णमासिक इति । **तथा प्राप्ते, उच्यते** । दैक्षस्य च इतरेषु पशुषु सवनीयादिषु अग्नीषोमीयस्य विध्यन्तः । आलभतिचोदनासामान्यात् पशुत्वचोदनासामान्याच्च । तच्च दर्शयति 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने, अङ्गैस्तृतीयसवने' इति । वपापुरोडाशाङ्गप्रचारं दर्शयति । भेदेन च तथा क्वचित् 'औदुम्बरो यूपो भवति' इति यूपं दर्शयति । तस्मात् अग्नीषोमीयः पशूनां प्रकृतिः ।

**सोम**— पूर्वेण न्यायेन सवनीयादिषु ऐष्टिकविध्यन्तप्राप्तेः **संगतिपूर्वपक्षौ** ।

**वि**— 'सवनीयादिके दार्शो दैक्षो वा, प्रकृतित्वतः । आद्यो, ऽन्त्यो लिङ्गतोऽन्यत्र विकृतिः प्रकृतिर्भवेत् ॥'

**भाट्ट**— अन्येषु तु पशुषु सवनीयादिषु दैक्षस्यातिदेशः आलभतिचोदनाकत्वपशुद्रव्यकत्वाद्यधिकतरसादृश्यात् यूपाद्यधिकधर्मलाभाच्च । अत एव 'वपया प्रातःसवने चरन्ति' 'औदुम्बरो यूपः' इत्यादि लिङ्गम् । ८।१।३.

**मण्डन**— 'दैक्षस्य चान्ये पशवो विकाराः ।'

**शंकर**—'दैक्षाच्चान्यपशुष्वयम्' अयं विध्यन्तः । ७.

* सवनीयादिष्वपि साङ्गं प्रयोगं त्रेधा विभज्य मन्द्राद्युच्चारणानां **दैक्षन्यायेन** उचितत्वात् तदतिक्रमेण

अनूबन्ध्याऽऽदिषु दैक्षन्यायातिदेशो न युक्तः इत्याशङ्क्य । सु. पृ. ११८०.

* **दैक्षप्रकरणे** दार्शपूर्णमासिकप्रयाजादिदर्शनात् दैक्षे पौर्णमासधर्माति-(दर्शधर्माति-)देशावगतेः स्वोपकारस्य स्वप्रकरणे प्राकृतप्रमाणसिद्धस्य उपलम्भः । सु.पृ.११९४.

* **दैवानि** कर्माणि उदगयन-पूर्वपक्ष-अहः-पुण्याहेषु कर्तव्यानि । के. ६।८।५।२३, * **दैवात्** एकस्य स्वकालाद् भ्रंशेऽपि तदनुसारेणान्येषां भ्रंशो न कार्यः । यथा चातुर्मास्येषु सांतपन्याः भ्रंशेऽपि अग्निहोत्रस्य स्वकालात् भ्रंशो न कर्तव्यः । ५।१।१७।३०–३४.

* **दैवस्य** अधिकः पुरुषकारात् प्रभावः । सु. पृ. १३२.

* **दैवे** कर्मणि दर्भाणां प्रागग्रत्वं उदगग्रत्वं वा, पैतृके कर्मणि तु दक्षिणाग्रत्वम् । वि. ३।४।४.

* **दैवतैरवदानैः** दैवतानां सौविष्टकृतैः सौविष्टकृतानां ऐडैश्चैडानां अनुसमयः एकदेवताकपशुगणे वाजपेये प्राजापत्यपशुषु । भा. ५।२।६।१०–१२.

* **दैवतावदानं** सौविष्टकृतावदानं ऐडावदानं इति पदार्थभेदः 'दैवतान्यवदाय' इत्यादिकात् क्रमान्यत्वविधायकाद्वचनात् । असंबन्धिपदार्थान्तरव्यवधाने च एकपदार्थता न संपद्यते । अतश्च एकदैवत्ये पशुगणे दैवतावदानादिना प्रत्येकमनुसमयः, अन्ते च तन्त्रेण देवताहोमः । स्विष्टकृदिडाभक्षणे तु तन्त्रेणैव । वस्तुतस्तु असंबन्धिपदार्थान्तरव्यवधानेऽपि पञ्चावत्तहोमसंपादकत्वेन दैवतावदानस्यापि प्रदानावयवत्वोपपत्तेः विभिन्नदेवताकस्थलेऽपि दैवतावदानादिप्रदानान्तेन अनुसमयः, एकदेवताके तु पदार्थावयवानामेवानुसमय इति न कोऽपि विरोधः । भाट्ट. ५।२।६.

* **दैवताद्यवदानेषु** पदार्थानुसमयः पशौ । वि. ५।२।६.

* **दैवतैक्यवत्** 'अग्नीषोमौ देवता' इत्यत्र यथा व्यासक्तयोर्देवत्वात् दैवतैक्यम्, तथा 'यजेत' इत्यत्र दंपत्योरेकमेव कर्तृत्वम् । वि. ६।१।४.

**'दोषो नानुमिते त्वसौ' इति न्यायेन** आर्थिके प्रतिपत्तिविधौ धारणप्रयोजकत्वस्य अदोषत्वात् । (प्रयाजशेषाभिघारणवाक्ये) । मुरारि. भा. पृ. ११७३.

* महांश्चैव **दोषो** यच्छिष्टा वर्जयन्ति । भा. ६।२।५।२०, * यश्चोभयोः पक्षयोर्दोषः, न तमेकश्चोद्यो भवति । १०।१।९।२५, * यत्र दोषः, तत्र दोषविघातार्थेन भवितव्यम् । १०।८।१८।६३. * **'दोषात् त्विष्टिर्लौकिके'** इत्यादिसूत्रेण अश्वप्रतिग्रहेष्टिः लौकिकाश्वदाननिमित्ता इति पूर्वपक्षं कृत्वा 'अर्थवादो वा' इत्यादिसूत्रेण 'वैदिकाश्वदाननिमित्ता' इति सिद्धान्तितम् । पराक्रमः. २१।१–२.

**दोषात् त्विष्टिर्लौकिके स्याच्छास्त्राद्धि वैदिके न दोषः स्यात् । ३।४।१०।२८॥**

'वरुणो वा एतं गृह्णाति, योऽश्वं प्रतिगृह्णाति, यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान्निर्वपेत्' इति अश्वप्रतिग्रहेष्टिराम्नाता । सा किं लौकिके अश्वप्रतिग्रहे कर्तव्या, वैदिके वा इति विचारे, पूर्वपक्षमाह । इष्टिः अश्वप्रतिग्रहेष्टिः लौकिके मित्रादिसंप्रदानके अश्वदाने स्यात् । दोषात् तत्रैव जलोदरात्मकवरुणग्रहरूपदोषसंभवात् । वैदिके तु पौण्डरीकादौ अश्वदाने शास्त्रात् दानविधायकशास्त्रबलादेव दोषः न स्यात् । तस्मात् लौकिके अश्वप्रतिग्रहे दाने वा इयमिष्टिः स्यात् इति पूर्वः पक्षः ।

**अर्थवादो वाऽनुपपातात्, तस्माद्यज्ञे प्रतीयेत । २९ ॥**

अश्वप्रतिग्रहेष्टिः लौकिके अश्वप्रतिग्रहे अश्वदाने वा इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन परिहरन् सिद्धान्तमाह । 'वरुणो वा एतं गृह्णाति' इत्यादिः अर्थवादः इष्टिप्रशंसाऽर्थवादः, न तु दोषनिर्घातार्थवादः । कुतः ? अनुपपातात् 'स एवैनं वरुणपाशान्मुञ्चति' इति वाक्यशेषस्य मुख्यार्थे समावेशासंभवात् । नहि वस्तुतः अश्वप्रतिग्रहात् वरुणग्रहस्य जलोदररूपस्य उपपातः प्राप्तिर्भवति । ततश्च अश्वप्रतिग्रहात् जलोदरस्य अनुपपातात् अप्राप्तेः अर्थवाद एव सः इष्टिप्रशंसार्थः । तस्माद्धेतोः यज्ञे वैदिके अश्वप्रतिग्रहे विधिबलात् प्रायश्चित्तेष्टिः प्रतीयेत, न लौकिके अश्वप्रतिग्रहे । इति सिद्धान्तः । के.

* 'दोषात् त्विष्टिर्लौकिके स्यात्' इत्यधिकरणे अश्वप्रतिग्रहेष्टिः अश्वप्रतिग्रहवतः कर्मणः अङ्गम्, न स्वतन्त्रमिति स्थितम् । पराक्रमः. ८।१.

* **दोषापनयेन** यजमानस्य फलप्रतिग्रहणयोग्यता भवति । तपश्च दोषनिर्घातं करोति । वा. ३।८।३।९.

* **दोषार्थ**स्वतन्त्रार्थवादकल्प्यः प्रतिषेधो यथा 'मिथ्याभिशंसने दोषो द्विः समो भूतवादिनः । मिथ्याभिशस्तदोषं च समादत्ते मृषा वदन् ॥' इति । बाल. पृ. ३०.

* **दोषनिर्घातार्थं** अनियतनिमित्तकं नैमित्तिकं वैदिकं कर्म यथा 'योऽमावास्यां पौर्णमासीं वाऽतिपातयेत्, अग्नये पथिकृतेऽष्टाकपालं निर्वपेत्' इति । 'योऽमावास्यां पौर्णमासीं वाऽतिपातयेत् वैश्वानरं द्वादशकपालं निर्वपेत्' इति च । अनयोर्विकल्पः । बाल. पृ. ८५. * **दोषनिर्घातार्थः** नैमित्तिकः क्रत्वर्थः अधिकारविधिः द्विविधः विहितातिक्रमनिमित्तकः निषिद्धाचरणनिमित्तकश्चेति । पृ. १४. * **दोषनिर्घातार्थानां** प्रायश्चित्तानां ऐकार्थ्येन विकल्पः । विकल्पशब्दे अधिकरणम् । भा. १२।३।५।१६.

* '**दोष्णः** (दोस्–शब्दस्य दोषन् आदेशः) पूर्वार्धादग्नयेऽवद्यति, गुदस्य मध्यतः, श्रोण्या जघनतः' इति अनिज्याशेषैस्त्र्यङ्गैः स्विष्टकृत् पशौ । भा. १०।७।३। १०–११.

* **दोहः** प्राचीनावीतिना प्रेताग्निहोत्रे कार्यः । दर्शादौ तु यज्ञोपवीतिना कार्यः । वि. ३।४।४, * **दोहौ द्वौ** । अमावास्यायां रात्रावेको दोहः प्रतिपदि प्रातरपरः । ३।६।८.

**दोहयोः कालभेदादसंयुक्तं शृतं स्यात् । ३।६।८।२८॥**

दर्शे सायंदोहः श्वः प्रातर्दोहश्चेति द्वौ दोहौ उक्तौ । शाखाहरणगोप्रस्थापनादयश्च दोहधर्मा उक्ताः । ते धर्माः प्रातर्दोहस्यापि भवन्ति, न वेति विचारे, अनेन सूत्रेण पूर्वपक्षोपन्यासः क्रियते । शृतं प्रातर्दुग्धं पयः दोहधर्मैः असंयुक्तं स्यात् संयुक्तं न स्यात् । प्रातर्दोहस्य ते धर्मा न भवेयुरित्यर्थः । कुतः ? दोहयोः द्वयोः यौ द्वौ कालौ तयोर्भेदात् । धर्माणां च सायंदोहसमीपे एव च पाठात् । सायंदुग्धस्य पयसः दधि क्रियते । प्रातर्दुग्धं पयश्च तथैव गृह्यते । दध्यर्थमेव दोहधर्माः, न पयोऽर्थाः । इति पूर्वः पक्षः ।

**प्रकरणाविभागाद्वा तत्संयुक्तस्य कालशास्त्रम् । २९ ॥**

पूर्वपक्षस्य निषेधाय वाशब्दः । प्रकरणस्य दर्शप्रकरणस्य अविभागात् विभागाभावात् । उभयोरेव दोहयोः प्रकरणं समानम् । न तत्र कश्चित् प्रकरणस्य विभागः । 'ऐन्द्रं दधि अमावास्यायाम्, ऐन्द्रं पयोऽमावास्यायाम्' इति उभयं साङ्गं अमावास्यायां प्रकरणाविभागेन चोदितम् । तदिदं कालशास्त्रं तत्संयुक्तस्य उभयप्रधानसंयुक्तस्य शाखाहरणादेरेव, न तु सायंदोहसंयुक्तस्यैव । दोहधर्माश्च सायंदोहस्य क्रमे आम्नाता इति वक्तुं न शक्यते । तस्मात् उभयदोहार्था एव शाखाहरणादयो धर्माः । अत्र सुबोधिन्याम् 'ऐन्द्रं दधि' इत्यादिकालशास्त्रं तत्संयुक्तस्य प्रधानस्यैव इति व्याख्यातम् । तत्संयुक्तस्य दधियागसंयुक्तस्य धर्मजातस्य अनुष्ठाने पूर्वेद्युःकालस्य शास्त्रं विधायकं इति तत्रानुष्ठानम्, न तु तावता दधिमात्रार्थता इति तु कुतूहले व्याख्यातम् । अस्माभिस्तु वार्तिकानुसारेण व्याख्यातम् । के.

* दर्शे सायंप्रातर्दोहयोरेकहविर्नाशेऽपि पञ्चशराव ओदनः प्रायश्चित्तम् । वि. ६।४।६.

* **दोहाधिकारे** अग्निहोत्रप्रकरणस्थे 'वत्समालभेत' इति न यागविधिः किन्तु स्पर्शमात्रविधिः । वि. २।३।६.

* **दोहधर्माः** शाखाहरणम्, गवां प्रस्थापनम्, गोप्रस्नावनम्, गोदोहनं इत्येवमादयः । भा. ३।६।८।२८, * **दोहधर्माः** सायंप्रातरुभयदोहार्थाः, न केवलं सायंदोहार्थाः एव । ३।६।८।२८–२९.

* **दोहनं** न तिसृणामेव गवाम्, किन्तु स्वगृहस्थितसर्वासामेव कार्यं हविर्भूयस्त्वार्थं सांनाय्यविषये सायम् । वि. ११।१।९, * **दोहनं** सांनाय्याङ्गम्, तत्साधनं वत्सापाकरणम्, तदङ्गं पलाशशाखाहरणम् । ४।३।१०.

* **दोहनातञ्चनादयः** सांनाय्यधर्माः । वि. ३।१।४.

* **दोहननिर्वापादयो** धर्माः यजुर्वेदे समाम्नाताः । वि. ३।३।६.

* द्वादशाहिकदशाहधर्माणां द्विरात्राद्यहर्गणेषु अनुष्ठानम् । द्विरात्रन्यायः । भा. १०।५।४।१२–१३.

* द्वादशाहिकधर्माणां अहर्गणेषु अतिदेशः । भा. ८।१।१०।१७, * द्वादशाहिकधर्माणां शतोक्थ्यादिषु संस्थागणेषु अतिदेशः । ८।३।४।८–९.

* द्वादशाहिकसप्ताहधर्माणां जनकसप्तरात्रे अतिदेशः, तत्र अग्निमचतुरहे त्रिवृत्ता विधीयते । जनकसप्तरात्राधिकरणम् । भा. ८।३।२।३–५.

* द्विरवदानं दध्नो गृहीत्वा पयसो ग्राह्यम् । उपस्तरणाभिघारणयोस्तु तन्त्रम् । कल्पसूत्रेषु तु पयसो द्विरवदानं गृहीत्वा पश्चात् दध्नः इत्युक्तम्, तैत्तिरीयश्रुतौ तादृशक्रमस्य वाचनिकत्वात् । होमस्तु तन्त्रेणैव । भाट्ट. ५।२।३.

☒ द्विरुक्तत्वापत्तिलक्षणो न्यायः (३।६।१।२)। 'प्रकृतौ वा' (३।६।१।२) इति अनारभ्यवादाधिकरणसिद्धान्तसूत्रेण खादिरत्वादेः प्रकृतिविकृत्यर्थत्वे (बाधकतया) द्विरुक्तत्वापत्तिलक्षणो न्यायो य उक्तः, स एव 'तत्प्रकृत्यर्थम्' इति आधानाधिकरणपूर्वपक्षसूत्रेण (३।६।५।१४) आधाने अतिदेशात् दृढीकरणेन प्रतिपादितः । सु. ३।७ पृ. ४१.

☒ द्विरुक्तत्वन्यायः । 'प्रकृतौ वाऽद्विरुक्तत्वात्' इति सूत्रोक्तो हेतुरेवात्र न्यायः । सूत्रार्थस्तु अनारभ्याधीतं पर्णमयीत्वादि प्रकृतौ एव निविशते न विकृतौ । विकृतौ तु अतिदेशेनैव प्राप्नोति । एवं सति अद्विरुक्तत्वं भवति । विकृतावपि विधाने तु द्विरुक्तत्वं दोषः अतिदेशेन सिद्धे पुनर्विधानात् इति । के. ३।६।१।२.

* अनारभ्याधीतः प्रवर्ग्यः श्रुतः । तस्य च 'पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति' इति ज्योतिष्टोमाङ्गत्वेन विनियोगः अव्यभिचरितक्रतुसंबन्धसहकृतद्विरुक्तत्वन्यायेन तदुपस्थितेः । भाट्ट. ३।३।१२. * विधिः अतिदिष्टेष्वपि अङ्गेषु शस्त्रादिषु उपदेशात् एव प्रवर्तते न द्विरुक्तत्वन्यायात्, अतिदेशतः कर्तव्यत्वेन उद्दिश्य आचमनविधानात् कर्तव्यतायाश्च अतिदिष्टेष्वपि औपदेशिकत्वात् । बाल. पृ. ३६. * वस्तुतस्तु यूपोद्देशेन विहितस्य कालस्य द्विरुक्तत्वन्यायसहकृताव्यभिचरितक्रतुसंबन्धादेव दैक्षार्थत्वसंभवे । भाट्ट. ११।३।३.

☒ द्विर्बद्धं सुबद्धं भवतीति न्यायः । स्पष्टाऽभिप्रायकोऽयम् । किञ्च– शब्देन्दुशेखरे स्त्रीप्रत्ययप्रकरणे द्योत्यविषये हि उक्तार्थानामप्रयोग इति पूर्वोक्तन्यायो न संचरतीत्यभिप्रेत्य हृदि व्यतिलुनीते इत्यादौ द्विर्बद्धं सुबद्धं भवतीति न्यायेन समुच्चयस्य दृष्टत्वादित्युक्तमिति । साहस्री. ५८१.

* 'द्विर्हविषोऽवद्यति' इत्यर्थप्राप्तस्यावदानस्य विशेषमात्रस्य विधानम् 'हविषो द्विः' इति । के. ५।२।४।६. * 'द्विर्हविषोऽवद्यति' इति उपस्तरणाभिघारणाभ्यां सह यत् चतुरवत्तम्, तस्मिन् हविर्विषयं अवदानद्वित्वं विधातुं उच्यते । वि. ५।२।४.

* 'द्वौ अग्नी प्रणयतः ।' अयं कर्मतः वाचनिको व्यवस्थितविकल्पः । बाल. पृ. १६०. * द्वौ आनय इत्युक्तः यथा पुमांसौ आनयति न स्त्रीपुंसौ, तथा 'वसानौ' इत्युक्ते पुमांसौ इति गम्यते न तु स्त्रीपुंसौ । भा. ६।१।५।२२ पृ. १३६५.

☒ द्वौ नञौ प्रकृतमर्थं गमयतः इति न्यायः । 'करणेषूपदिष्टेषु याऽर्थात् साध्यत्वकल्पना । ताभ्यां गुणविधाने न नास्ति मत्वर्थलक्षणा ॥' (वा. पृ. ३३७) करणेषु उपदिष्टेषु सत्सु या अर्थात् साध्यत्वकल्पना, तस्यां च गुणविधाने मत्वर्थलक्षणा न नास्ति, किन्तु अस्ति, इति 'द्वौ नञौ०' इति न्यायेन योज्यः । सु. पृ. ४४७.

* 'द्वाभ्यां लोमावद्यति द्वाभ्यां मांसम्' इत्यादिना द्वादशोपसत्त्वं द्वादशाहिकं धर्मं गवामयने दर्शयति । भा. ८।१।१०।१७, * द्वयोः एकार्थत्वात् समुच्चयो न संभवति । ८।१।१५।२६. * 'द्वयोः प्रणयन्ति' इत्यनेन मध्यमयोर्द्वयोः पर्वणोः प्रणयनम् । बिन्दु. ७।३।९। २३–२५. * द्वयोर्हि साकाङ्क्षयोः संबन्धो भवति । टुप्. ११।१।२।६.

* व्यर्थत्वं च (वाक्यस्य) विप्रतिषिद्धम् । भा. ७।१।१।६.

* **व्यवदानं** यदैव आहवनीये निक्षिप्यते, तदैव याज्याऽनुवाक्याभ्यां समस्तविषयदेवतासंकल्पोत्थापनं क्रियते। वा. ३।४।१४।४१ पृ. ९८२. * व्यवदानं होमसंबद्धम् 'व्यवदानं जुहोति' इति। भा. ६।४।१।२. * **व्यवदानस्य** हविःसंस्कारकस्यापि अवत्तोद्देशेन होमविधानात् लाघवेन अवत्तहोमस्यैव प्रयोज्यत्वे अवदानांशेऽपि पृथक्प्रयोज्यत्वाकल्पनात् न पृथक्पदार्थत्वम्। भाट्ट. ५।२।७. * **व्यवदाने** अधिकमपि प्रक्षेपांशं गते सति उत्पत्तिवाक्यशिष्टं यागसाधनत्वं समस्तेनाष्टाकपालेन प्रतिपन्नमेवेत्यविरोधः। वा. ३।४।१४।४१ पृ. ९८२.

* **व्यवदानमात्रेण** अनुसमयं पूर्वपक्षयित्वा व्यवदानादिना प्रदानान्तेन अनुसमयं सिद्धान्तयिष्यति। 'मुष्टिकपालावदान' इत्यत्राधिकरणे (५।२।३।४)। सु. पृ. १३२७.

* **व्यवदानवाक्यं** (द्विर्हविषोऽवद्यति) नावदानविधायकं चतुरवत्तवाक्ये (चतुरवत्तं जुहोति) अवदानविशिष्टहोमविधानात्, किन्तु 'द्विः' इति संख्यामात्रमेव विदधाति। सोम. ५।२।३.

* **व्यहकालता** नाम प्रकृतौ दर्शे पर्वणि अग्न्यन्वाधानादिकं प्रतिपदि इष्टिः इति। वि. ५।१।११, * व्यहकालत्वं चोदकप्राप्तं विकृतिषु 'य इष्टया पशुना' इत्यादिवचनेन बाध्यते। ५।४।७, * व्यहकालत्वं पर्वण्यग्न्यन्वाधानं इध्माबर्हिषोः संपादनं च, प्रतिपदीष्टिः, इति प्रकृतौ दृष्टम्। ५।४।७.

**⌛ व्याधानं च द्वियज्ञवत्। ६।१।५।२२॥**

'क्षौमे वसानौ अग्निमादधीयाताम्' इति वाक्ये यत् अग्न्याधानमुक्तं तत् व्याधानम्, द्वयोः पुरुषयोः संभूय आधानं स्यात्। यथा दंपत्योः संभूय कर्म तद्वत् इति चशब्दार्थः। वसानौ आदधीयातां इति द्विवचनेन द्वयोः पुरुषयोरुक्तत्वात्। द्वियज्ञवत् इति दृष्टान्तः। 'एतेन द्वौ राजपुरोहितौ यजेयाताम्' इति राज्ञः पुरोहितस्य चेति द्वयोः कुलायः नाम याग उक्तः, तद्वत्। इति पूर्वः पक्षः।

**गुणस्य तु विधानत्वात् पत्न्या द्वितीयशब्दः स्यात्। २३॥**

पूर्वपक्षं सूत्रेण प्राप्तं तुशब्देन निरस्यन् सिद्धान्तमाह। नात्र वाक्ये द्वयोः पुरुषयोः संभूय एकमाधानमुक्तम्। वसानौ आदधीयातां इति द्वितीयशब्दः द्वित्ववाचकद्विवचनरूपः शब्दः द्वितीयं पुरुषमभिप्रेत्य न प्रयुक्तः स्यात् किन्तु पत्न्या द्वितीयशब्दः स्यात् द्वितीयां पत्नीमभिप्रेत्य द्विवचनं प्रयुक्तम्। तत्र अग्न्याधानं अन्यतः प्राप्तम्। वस्त्रपरिधानं च लोकत एव प्राप्तम्। क्षौमत्वरूपो गुणस्तु अन्यतो न प्राप्तः। तदर्थमेतद्विधानम्। विधीयते इति विधानं विधानत्वं विधीयमानत्वं इत्यर्थः। 'अतसी स्यादुमा क्षुमा' इत्यमरः। अतसी तन्तुभिः (अतसी–आळशी, जवस) निर्मितं वस्त्रं क्षौमम्। वस्त्रगतस्य क्षौमत्वरूपस्य गुणस्य दंपत्योर्विधानार्थत्वात् वाक्यस्य नात्र द्वयोः पुरुषयोराधानस्य विधानं इति सिद्धान्तः। के.

**⌛ व्याधानाधिकरणम्।** आधाने स्त्रीसद्वितीयस्य एकस्यैव पुरुषस्याधिकारः॥

**द्व्याधानं च द्वियज्ञवत्। ६।१।५।२२॥**

भाष्यम्— अस्त्याधानम् 'य एवं विद्वानग्निमाधत्ते' इति। तत्रेदमामनन्ति 'क्षौमे वसानौ अग्निमादधीयाताम्' इति। तत्रैषोऽर्थः सांशयिकः किं द्वौ पुरुषौ आदधीयाताम्, उत एकः पुरुष इति। कथं संशयः? उच्यते। इह एतत् श्रूयते 'वसानौ आदधीयाताम्' इति। तत्र वचनमर्थप्राप्तं पुनः श्रूयते। तत् किं पुंलिङ्गसंबन्धार्थम्, उत क्षौमविध्यर्थमिति। उभयोर्विद्यमानत्वात् भवति संशयः। यदि लिङ्गसंबन्धार्थम्, उभौ पुरुषौ आधास्येते। अथ क्षौमसंबन्धार्थम्, तत एकः। किं प्राप्तम्? व्याधानं तु द्वियज्ञवत् स्यात्। यथा 'एतेन द्वौ राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति द्वयोः पुरुषयोः द्वियज्ञो भवति, एवं व्याधानं द्वयोः पुरुषयोः स्यात्, ततः अविशेषात्। वसानौ इति श्रवणादेव पुरुषौ गम्येते। न पदान्तरगतेन क्षौमेण अस्य संबन्धः। श्रुत्यवगतं हि श्रवणादवगतम्, पदान्तरसंबन्धं वाक्यादवगतम्, श्रुतिश्च वाक्याद् बलीयसी।

वसानशब्दगतश्चार्थः आधानेन संबध्यते, न क्षौमशब्दगतः । **आह**, वसानौ इति नायं केवलं पुंलिङ्गे एव, स्त्रीपुंसयोरपि अभिधायको भवति । यथा कुक्कुटश्च कुक्कुटी च कुक्कुटौ, शूकरश्च शूकरी च शूकरौ इति । एवं वसानश्च वसाना च वसानौ स्यातामिति । **अत्रोच्यते** । यत्र नार्थः प्रकरणं वा विशेषकम्, विधायकश्च शब्दो नानुवादः, तत्र द्वौ पुमांसौ गम्येते । यथा 'द्वौ आनय' इत्युक्तः पुमांसौ आनयति, 'द्वे आनय' इति स्त्रियौ । तेन स्त्रियो वाचकमेकारान्तं द्विवचनं इति गम्यते, औकारान्तमपि द्वयोः पुंसोर्वाचकमिति । यत्र इदानीं स्त्रीपुंसयोः प्रयुज्यमानं औकारान्तं दृश्यते तत्र किं पुमान् सद्वितीयः तस्य निमित्तम्, उत स्त्री सद्वितीया इति । **उच्यते** । पुंसि सद्वितीये दृष्टः, यथा 'ब्राह्मणौ आनय' इति । इहापि पुमान् सद्वितीयोऽर्थः । तस्मात् पुंनिमित्तः इति गम्यते । अत्राह, प्रयोगो यदि दृष्टं प्रमाणं द्वयोः पुंसोर्दृष्टः, कथमेकस्मिन् स्यात् ? **अत्रोच्यते** । पुंसि च द्वित्वे च दृष्टः इति शक्यते वदितुम्, न द्वयोर्द्रव्ययोरिति । पुंभावं द्वित्वं च एष शब्दो न व्यभिचरति, द्रव्यं पुनर्व्यभिचरति । **अपि च** युगपदधिकरणवचनतायां द्वंद्वस्मृतेः द्विवचनबहुवचनोपपत्तेश्च । 'प्र मित्रयोर्वरुणयोः' इति च दर्शनात् । इतरेतरयोगे चार्थे समासविधानात् द्वंद्वापवादत्वाच्च एकशेषस्य । यथैव खदिरौ च धवौ च इति निदर्शनं क्रियते, एवमत्रापि द्रष्टव्यम् । तस्मात् पुंसि द्वित्वे च वर्तते इति गम्यते । न च स्त्रीद्वित्वे दृष्टः । **अत्राह**, ननु अत्रैव दर्शनात् स्त्रीपुंसयोर्वाचक इति गम्यते । **अत्रोच्यते** । उक्तमेतत् अन्याय्यश्चानेकार्थत्वमिति, इति पुमान् सद्वितीयः अस्यार्थो भविष्यति । स्त्रीपुंसौ चेत्यन्याय्यम् । अथ इदानीं सद्वितीयस्य पुंसो विधौ, कोऽन्यः सहा यः इति, स्त्रिया अनभिधेयत्वात् अवश्यम्भावित्वाच्च द्वितीयस्य, अपरः सद्वितीयः पुमान् । एवं इतरोऽपि इतरेण सद्वितीयः, इतरोऽपि इतरेण इति द्वावेव पुमांसौ उपादीयेते । तस्मादिह द्वौ पुमांसौ आधाने विधीयेते इत्युच्यते । **ननु** स्त्रीपुंसयोर्वाचकं औकारान्तं द्विवचनं स्मरन्ति । **नैषा** स्मृतिरस्तीति ब्रूमः । आह भगवतः पाणिनेर्वचनात् स्मृतिमनुमास्यामहे 'पुमान् स्त्रिया' ( पा० १।२।६७ ) इति । **उच्यते**, न पाणिनेर्वचनम् 'कुक्कुटौ इति औकारः स्त्रीपुंसयोर्वाचकः' इति । कथं तर्हि ? यत्र स्त्रीपुंसयोः सहवचनम्, तत्र सद्वितीयो वा पुमान् इति कृत्वा अकारान्तस्य औकारः प्राप्नोति, सद्वितीया वा स्त्री इति कृत्वा एकारः । पुंशब्दस्तत्र साधुः, न स्त्रीशब्द इति पाणिनेर्वचनम् । पुमान् शिष्यते इति च ब्रूते, तेन सुतरां गम्यते पुंसोर्वाचक औकार इति । तस्मात् द्वयोः पुंसोरधिकार इति । **ननु** क्षौमविधानपरमेतत् वाक्यम्, क्षौमसंबन्धस्य अर्थवत्त्वात् । इतरथा क्षौमवचनमनर्थकं स्यात् । **अत्रोच्यते** । वसानौ आदधीयातां इत्यस्ति संबन्धः, न क्षौमे आदधीयातामिति । तस्मात् संनिकृष्टमपि न तत् संबद्धमाधानेन । **आह**, वसानशब्देन सह संबध्यमानं अर्थवद् भविष्यति, वसानसंनिकृष्टे अपि क्षौमे न विधीयेते, विधायकस्य शब्दस्याभावात् । नहि वसानशब्दो विधायकः, न क्षौमशब्दः, नानयोः समुदायः । कस्तर्हि विधातुं शक्नोति ? आदधीयातां इत्यत्र या लिङ् । **आह**, सा खलु विधास्यति, **उच्यते**, सा स्वशब्दगतमाधानं शक्नोति विधातुं श्रवणात् । विहितत्वादाधानस्य आनर्थक्ये, वसानौ इति शक्नोति वाक्येन विधातुम् । भवति हि वसानयोराधानसंबन्धः, तत्र नात्यन्ताय स्वार्थः परित्यक्तो भवति । क्षौमवसानसंबन्धे तु विधातव्ये 'आदधीयाताम्' इत्याधानं उत्सृज्य विदधानः अत्यन्ताय श्रुतिं जह्यात् । आधानसंनिकृष्टे च लिङ्गे विधातव्ये श्रुतिः विप्रकृष्टं न क्षौमवसानसंबन्धं विधातुमुत्सहते, अर्थविप्रकर्षात् । **अपिच** उत्सृज्य श्रुतिं क्षौमवसानसंबन्धे विधीयमाने क्षौमं वसानस्य अङ्गं स्यात्, नाधानस्य । तत्र क्षौमाभावेऽपि नाधानं विगुणं इति क्षौमाभावेऽपि आधानं स्यात् । **आह**, वसानगुणतायां तर्हि कोऽर्थो विवक्ष्यते ? **उच्यते** । न कश्चित् । अत एव अस्य पक्षस्य परित्यागः । **आह**, क्षौमवसानश्रवणमिदानीं किमर्थमिति ? **उच्यते** । न शक्यते उभयं विधातुं क्षौमं लिङ्गं च । भिद्येत हि तथा वाक्यम् । तस्मात् क्षौमाक्षौमयोः क्षौमशब्दोऽनुवादः । अर्थप्राप्ते च वसने, वसानौ पुमांसौ इत्यर्थः ।

ते च प्रायेण विचेष्टमानस्य मलिने क्षौमसदृशे भवतः। विचेष्टमानस्य वा वसने शब्दवती भवतः। तस्मात् द्वयोः पुंसोरधिकार इति।

टुप्-- (अवान्तरसंगतिमाह-) यजेत इति संख्या मिथुनाभिप्राया (इदं कारकशक्तेरपि उपलक्षणम्)। आधानेऽपि प्राप्तं वसानौ इति मिथुनद्वयम्, तत् निवार्यते। अत्र पूर्वः पक्षः। यत् आदधीयाताम् (इति अनूद्य) तत् वसानौ इति (पुंद्वयं विधीयते, वसनमपि अनूद्यते प्राप्तत्वात्। ननु क्षौमविधानं युक्तमत आह-) आधाने द्वित्वविधाने (सति) धात्वर्थे किञ्चित् विहितम्, इति श्रुत्यनुग्रहः (स्यात्। ननु क्षौमविधानेऽपि अस्ति श्रुत्यनुग्रहः इति चेत् तत्राह-) इतरत्रापि (पक्षे) यदि आधाने क्षौमं विधीयते, तत्र क्षौमं अधिकरणत्वेन प्राप्नोति (आदधातिना अन्वयार्थे सप्तम्येकवचनान्तत्वस्य स्वीकार्यत्वात्। ततश्च क्षौमोपरि अग्निराधेयः स्यात्)। अथ वसने क्षौमं विधीयते (नाधाने) ततः क्षौमं वसनमात्राङ्गं (सत्) आधानस्यानङ्गत्वात् अनर्थकं स्यात्। (किञ्च) वसानप्रातिपदिकस्यैव औकारेण श्रुत्या संबन्धः। (एवकारो भिन्नक्रमः औकारेणैव श्रुत्या संबन्धः इति) पदान्तरत्वात् (तु) क्षौमसंबन्धे वाक्यं स्यात् (तच्च दुर्बलं श्रुतेः। किञ्च) तादृशस्य (वाक्यगम्यस्य क्षौमवसानसंबन्धस्य विधि-)प्रत्ययेन परामर्शात् अत्यन्तं वाक्यम् (स्यात्)। वसानौ इति संख्यासंख्येयसंबन्धः (द्वित्वपुंस्त्वयोः संबन्धः) शब्देन (गम्यते) तत्र संख्यया नान्यत् संख्येयं ग्राह्यम् (किन्तु पुमानेव। तथा) संख्येयेन च नान्या संख्या, इति (द्वयोरपि एतयोः) इतरेतरनियमः यथा अरुणैकहायन्योः। तस्मात् द्वावत्र पुमांसौ (आधातारौ) प्राप्तौ। (संख्या-पूरणार्थम्) स्त्रीग्रहणे (क्रियमाणे सति) संख्यासंख्येययोः (द्वित्वपुंस्त्वयोः) संबन्धो बाध्येत। (ननु स्त्रियाऽपि संख्यासंख्येयसंबन्धसिद्धिः, अत आह-) द्वितीयस्य पुंसः अस्ति पर्युपस्थापकः (औकारः) यथा घटौ आनीयेतामित्युक्ते द्वितीयो घट एवानीयते नाश्वादिः, एवमिहापि।

**'आह। वसानौ इति नायं केवलं पुंलिङ्ग एव** (पुंलिङ्गस्यैव), **स्त्रीपुंसयोरपि अभिधाता** (अभिधायकः। भाष्ये तु अभिधायकः इत्येव पाठः) **भवति'** इति (भाष्यम्)। अस्य (द्विवचनस्य) न पुंद्वित्वविशिष्टं द्रव्यमभिधेयम्, न च स्त्रीपुंसद्वित्वविशिष्टम् (चशब्दः अप्यर्थः)। तस्मात् उभयोः (अपि) यत् सामान्यम्, तत् वाच्यम्। किं तत्? पुंस्त्वं द्वित्वं च। तच्च प्राप्तम्, न विधेयम्। तस्मात् क्षौमं विधीयते इति अन्तर्णीताभिप्रायः परिचोदयति। अथवा शब्दार्थमेव उभयप्रकारं (स्त्रीपुंसयोर्द्वित्वं पुंद्वित्वं चेति) मन्यते, (उभयोः) प्रयोगदर्शनात्। (भाष्योक्तां शङ्कां पूर्वपक्षी परिहरति-) **'अत्रोच्यते। यत्र नार्थः प्रकरणं वा विशेषकम्, विधायकश्च शब्दो नानुवादः'** इति (परिहार-भाष्यस्य-) कोऽभिप्रायः? (अभिप्रायं दर्शयति-) 'कुक्कुटौ आनय मिथुनं करिष्यामः' इत्यत्र सामर्थ्यात् द्वितीया स्त्री आनीयते। यत्र वा स्त्रीपुंसौ अधिकृतौ, यत्र वा औकाराभिधेयं प्राप्तत्वात् न विधीयते, तत्र स्त्रीपुंसौ गृह्येते। इह इदं त्रितयमपि नास्ति। अतः (कारण-त्रयाभावात्) औकारः (स्वशक्त्या) द्वितीयं पुमांसं शक्नोति पर्युपस्थापयितुम्, न स्त्रियम्। अन्वयव्यतिरेकाभ्यां पुंस्त्वं द्वित्वं चाभिधेयम्। (एतदेव व्यनक्ति-) द्वयोरपि पुंसोः प्रयुक्तः (द्वौ पुरुषौ इति, तथा) स्त्रीपुंसयोरपि। (तत्रोभयोर्वाच्यत्वे) अनेकशक्तिकल्पनाभयात् पुंस्त्वं द्वित्वं चास्य वाच्यं इत्यध्यवसीयते। **युगपदधिकरण-वचनतायां द्वंद्वस्मृतेः** इत्येवमादिना (भाष्येण) विग्रहपर्यालोचनयाऽपि यथा संख्यापूरणी स्त्री न गृह्यते, तत् प्रतिपाद्यते। कथम्? (धवखदिरौ इत्यादौ) द्वंद्वे धवशब्दः आत्मीयमर्थं इतरापेक्षं (खदिरापेक्षम्) अभिधत्ते। इतरोऽपि (खदिरशब्दोऽपि) इतरापेक्षं (धवापेक्षं) इति ईदृशेऽर्थे (द्वंद्वः) स्मर्यते। **'द्विवचन-बहुवचनोपपत्तेश्च'** इति (भाष्यं व्याचष्टे-) यदि धव-शब्दः खदिरनिरपेक्षमात्मीयमर्थं अभिधत्ते, तत एकत्वात् तस्य एकवचनबहुवचने न स्याताम्। दृश्येते च (द्विवचन-बहुवचने)। तस्मात् तुल्यं द्वितीयं प्रातिपदिकार्थमपेक्ष्य द्वित्वादिसंभवः। **'प्र मित्रयोर्वरुणयोः'** इति च दर्श-

नात् ( ऋसं. ७।६६।१ ) इति । न द्वौ मित्रौ स्तः, न वरुणौ, तत्र (प्रत्येकम्) द्विवचनं नोपपद्यते, अन्योन्यापेक्षायाम् (तु) घटते (ततश्च द्वंद्वे युगपद्वचनता निश्चीयते इति । इतश्चैवमित्याह- ) 'इतरेतरयोगे चार्थे द्वंद्वविधानात्' (समासविधानात् इति भा-पाठः ) इति चकारः समुच्चय- अन्वाचय- इतरेतरयोग- समाहारेषु वर्तते । तत्र समुच्चयान्वाचययोः नास्ति समासः, समाहारेतरेतरयोगयोरेव ( तु समासः )। ततोऽपि युगपदधिकरणतायाम् ( एव ) द्वंद्वः ( एषितव्यः । प्रकृते किमायातं इत्यत आह- ) द्वंद्वापवादत्वाच्च एकशेषस्य इति । (तद् व्याचष्टे-) यो हि द्वंद्वस्य धर्मः (अनेकेषाम्) इतरेतरयोगो नाम, स एकशेषस्यापि । इयांस्तु विशेषः ( द्वंद्वैकशेषयोः), एकत्र ( द्वंद्वे ) शब्दश्च अर्थश्च द्वावपि भिन्नौ, इतरत्र ( एकशेषे ) अर्थो भिन्नः, शब्द एक एव । ( यत्र शब्दश्च अर्थश्च द्वावपि भिन्नौ तत्र द्वंद्वः धवखदिरादौ । यत्र तु अन्यतरस्यापि ऐक्यम्, तत्र एकशेषः अक्षाः पादाः इत्यादौ वक्रदण्डौ इत्यादौ च )। वसानौ इत्येकशेषत्वात् द्वितीयेन पुंसा भवितव्यम् । पुमान् हि श्रूयते द्विवचनश्रवणात् । स इतरसव्यपेक्षः, तस्य पुमानेव द्वितीयः । पुंसः अस्ति पर्युपस्थापकम् ( औकारः ), न स्त्रियाः । यत्र स्त्रीपुंसौ सहोच्चार्येते, तत्र पुमान् सद्वितीयः इति औकारान्तः प्राप्नोति, स्त्री सद्वितीया इति एकारान्तः । ( वसानौ इत्यत्र तु-) औकारः प्रयुज्यमानः ( पुंद्वित्वे ) साधुः, ( तस्य ) न स्त्रीपुंसौ वाच्यौ ।

[ अस्यैव सूत्रस्य टुप्टीकाकृतैव द्वितीया व्याख्या कृता । सा च आनन्दाश्रमीये पुस्तके चतुर्विंशसूत्रव्याख्योत्तरं मुद्रिताऽपि अस्माभिः योग्यतया अत्रैव लिख्यते । एवमुत्तरसूत्रेऽपि । सा चेयं व्याख्या अस्मदीये लिखिते पुस्तके नास्ति । तथापि तन्त्ररत्नेन व्याख्यातत्वात् संगृह्यते ]।

टुप्-- ( एतदेव सूत्रं विस्पष्टीकरणाय वार्तिककारेण पुनर्व्याख्यातम् ) पूर्वाधिकरणे एकवचनं मिथुनाभिप्रायं संसर्गाभिप्रायं ( दंपतीनिष्ठव्यासज्यवृत्तिकर्मत्वाभिप्रायम् ) वा इत्युक्तम् । इहापि ( वसानौ इति- ) द्विवचनं तथैव द्वे कारकशक्ती द्वे च ( वाशब्दार्थे चशब्दः ) मिथुने ब्रवीति इत्यनेन प्रसङ्गेन आरभ्यते । ( पूर्वपक्षवादार्थम् । तदनेन अधिकरणसंगतिः पूर्वपक्षहेतुश्च प्रदर्शितः )। क्षौमाधानसंबन्धो न ( विधीयते ) वसान-( शब्द- ) व्यवधानात् । ( इतश्चैवमित्याह- ) 'वसानौ आदधीयाताम्' इति सामानाधिकरण्यात् उपपद्यते संबन्धः । 'क्षामे आदधीयाताम्' इति सामानाधिकरण्याभावात् नास्ति संबन्धः । ( दोषान्तरमाह- ) संबध्यमानं च आधानस्य अधिकरणं स्यात् ( क्षौमे इति सप्तमी स्यात्, तदधिकरणकं च अग्नेराधानम्, इति । तत्रानिष्टम् । शङ्कते-) क्षौमवसानसंबन्धे ( सति ) न सामानाधिकरण्यम् ( बाधकम्, ) अधिकरणदोषश्च नास्ति, इति चेत् । ( उत्तरम्- ) वसनक्रिया कर्तुरुपसर्जनभूतत्वात् नान्येन संबन्धयितुं शक्यते । ( अथ प्रधानभूतेन कर्त्रैव क्षौमं संबध्यते, तत्राह- ) कर्त्राऽपि नास्ति संबन्धः। ( कुतः ? ) नहि कारकाणां मिथः संबन्धः । ( अथ- ) वसनक्रिया कर्तुरुपसर्जनभूताऽपि पुनर्विपरिवृत्य ( क्षौमेण ) संबध्यते इति चेत् ( उत्तरम्- ) न । ( कुतः ? ) विधीयमाना हि क्रिया भाव्यमानत्वात् ( कर्तव्यत्वात् ) कारकैः संबध्यते। अविधीयमानायाः ( तु ) न कारकैर्भवति संबन्धः । ( कस्मात् इत्यत आह- ) अविधीयमाने ( वसने ) क्षौमं संबध्यमानं लौकिकेऽपि स्यात् । तत्र अदृष्टार्थता ( क्षौमस्य ) स्यात् । ( तस्मान्न विपरिवृत्त्यापि संबन्धः )। किञ्च ( अस्मिन् पक्षे ) क्षौमवसानयोः संबन्धं आदधीयातां इति ( विधिः ) कुर्यात् । इति अत्यन्तं वाक्यम् ( स्यात् इति श्रुतिबाधः। बाधमेवाह- ) प्रत्ययः उपश्लेषलक्षणया ( एकपदप्रत्यासत्तिलक्षणया ) श्रुत्या धात्वर्थं विधत्ते, तदङ्गं वा ( किञ्चित् )। इह द्वयमपि न विधत्ते धात्वर्थम्, धात्वर्थस्य वा अन्यत्, तत्परायाः श्रुतेः ( धात्वर्थतदङ्गपरायाः विधिश्रुतेः ) अभावात् । ( मत्पक्षे तु आधानाङ्गतया ) वसानौ इति ( पुंद्वये ) विधीयमाने धात्वर्थे किञ्चिद्विधानात् श्रुतिः अनुगृहीता ( भवति । किञ्च ) वसानशब्दस्यापि एकपदोपात्तत्वात् औकारेण श्रुत्या संबन्धः । क्षौमेण ( तु संबन्धे ) पदान्तरोपात्तत्वात् वाक्यम् । श्रुतिश्च वाक्यात् बलीयसी।

तस्मात् द्वौ पुमांसौ आधाने विधीयेते। (भाष्यकारेण वसानौ इत्यत्र पुंद्वयं प्रतिपादितम्, तत्र **चोदयति**– ) कस्मात् पुनः पूर्वपक्षवादिना अनुमानेन द्वितीयः पुमानिष्यते, न पुनः औकारेण द्वौ पुमांसौ अभिधीयेते इति ब्रवीति, येन सिद्धान्तवादिनः परिचोदनैव नोत्तिष्ठति। उच्यते। यदि (द्वौ) पुमांसौ वाच्यौ इति ब्रूयात्, ततः अनैकान्तिकत्वं भवति। यथा (हि) द्वयोः पुंसोर्दृष्टः, तथा स्त्रीपुंसयोरपि दृष्ट एव। तत्र इह क्षौमस्य विधानात् स्त्रीपुंसयोरर्थप्राप्तत्वात् पूर्वपक्षानुत्थानम् (स्यात्)। तन्मा भूत् इति न्यायात् पुंद्वयं प्रतिपाद्यते (न शब्दात्)। **'यत्र नार्थः प्रकरणं वा विशेषकम्, विधायकश्च शब्दो नानुवादः'** (इति न्यायप्रतिपादनार्थं भाष्यं **आक्षिपति**–) इति पूर्वपक्षविपरितोऽयं ग्रन्थः। कथम्? यत्र एतानि कारणानि (त्रयाणामन्यतममपि वा अस्ति–) तत्र स्त्रीसद्वितीयो गृह्यते (पुमान् इत्यर्थादुक्तं भवति) इह च प्रकरणात् स्त्रीसद्वितीयः पुमान् प्राप्तः। एवं चेत् स्त्री (एव प्रकरणवशेन द्वितीया) ग्रहीष्यते। किञ्च क्षौमपदानुग्रहात् (सैव ग्रहीष्यते, इति पूर्वपक्षविपरीतोऽयं ग्रन्थः। **समाधत्ते**–) उच्यते। (विधि–)प्रत्ययविप्रकर्षात् व्यवहितकल्पनात् सामानाधिकरण्याभावाच्च युक्तं (यत्) न विधीयते क्षौमम् (इति)। वसानौ इति चोच्चार्यमाणं स्वरसेन द्वौ पुमांसौ अवगमयति। अतः (न्यायात्) एतस्मिन् (वसानशब्दस्य विधायकत्वे) स्थिते इदमुक्तम् 'औकारस्य पुंस्त्वं द्वित्वं च वाच्यम्' इति। कथम्? ब्राह्मणौ इति द्वयोः पुंसोः औकारः प्रयुक्तः, कुक्कुटौ इति स्त्रीपुंसयोः। तत्र यदि द्वे (अपि) अभिधेये स्याताम् (ततः) द्विरदृष्टं भवेत् (तच्चान्याय्यम्)। उच्चरिते च संशयः स्यात् कतरदनेन अभिहितमिति। अतो यदनयोः सामान्यम्, तत् वाच्यम्। (किं पुनस्तत्? आह–) तत्र पुमान् उभयत्रापि विद्यते द्वित्वं च। तस्मादेतदेवास्य वाच्यम्। (एवमपि–) पुमान् एव कथं द्वितीय इति चेत्, उच्यते। यत्र द्वित्वं तत्र पुमान्, यत्र पुमान् तत्र द्वित्वम्, (इति) अनयोः परस्परं नियमः (एतदेव व्यनक्ति–) एकपदोपादानात् यस्यां क्रियायां द्वित्वं तस्य पुंस्त्वं अनयोः परस्परसंबन्धः अरुणाऽऽदिवत्। (सर्वथा तावत्) द्वित्वस्य (गुणस्य द्रव्येण) आश्रयेण भवितव्यम्। (तत्र) स्त्रिया अवबोधकं नास्ति। द्वित्वं तावत् नावबोधयति, विनाऽपि स्त्रिया उपपद्यमानत्वात्। पुमानपि न शक्नोति अवबोधयितुम्, असंबन्धात्। औकारो ब्रूते पुंलिङ्गं द्वित्वं च। (द्वित्वेन च) संख्यापूरकं बाह्यम् (अशब्दार्थभूतं किमपि आक्षेप्यम्) तत्र कतरः प्रकारः स्यात्? पुमान्। (कुतः?) पुमान् शक्नोति पुमांसमवबोधयितुम्। तस्मात् न्यायात् द्वौ पुमांसौ। ('युगपदधिकरणवचनतायाम्' इत्यादिभाष्यार्थमाह–) न च विग्रहकालेऽपि स्त्रियाः श्रवणम्, 'वसानश्च वसाना च' इति ईदृशस्य (विग्रहस्य) अभावात्। कथमभावः? युगपदधिकरणवचनतायां द्वंद्वस्मृतेः। (उक्तवचनतामेव दर्शयति–) यत्र द्वौ बहवो वा युगपदभिधातुमिष्यन्ते, तत्र द्वंद्वसमासो भवति। (तदेव उपपादयितुं अन्तरा किञ्चित् प्रस्तौति) **अयुक्तमिदमुच्यते** (द्वंद्वसमासो भवतीति। कथम्?) समासः प्रमाणान्तरेण (समस्यमानयोः) संबन्धे (ज्ञाते) भवति। धवखदिरयोश्च अङ्गाङ्गित्व–स्वस्वाम्य–आश्रयाश्रयिसंबन्धः (तावत) नास्ति। क्रियया च संबन्धः समासोत्तरकालभावी। सर्वे च समासाः संबन्धोत्तरकालम्। यथा 'राजपुरुषः' इति स्वस्वामिभावे अवगते, 'चित्रगुः' इति चित्राभिर्गोभिः संबन्धे अवगते, 'पञ्चपूली' इति समाहारसंबन्धोत्तरकालम्, 'उपकुम्भम्' इति समीपसंबन्धोत्तरकालम्। (द्वंद्वेऽपि संबन्धेन भवितव्यम्)। न चेह धवखदिरयोः संबन्धः अस्ति (प्रागवगतः। तस्मात् द्वंद्वः अनुपपन्नः)। **उच्यते**, एकशब्दाभिधेयत्वमनयोः (धवखदिरयोः) संबन्धः। तत्र (स च द्वंद्व–) समासे अभिप्रेते भवति। (तदा च युगपदधिकरणता सिद्धा इति।) विग्रहस्तु ईदृशः (कार्यः) धवो च खदिरो चेति। **'द्विवचनबहुवचनोपपत्तेश्च'** इति (भाष्यस्य अयमर्थः), यदि धवेन केवलेन धव एवाभिधीयते, खदिरेण खदिरः। एवम् (सति) खदिरात् परं द्विवचनं न प्राप्नोति। अतो द्वावपि

अभिधीयेते । लौकिकोऽयं न्यायः प्रदर्शितः । ( वैदिकमपि लिङ्गं प्रदर्श्यते– ) '**प्र मित्रयोर्वरुणयोः**' **इति दर्शनात्** ( इति भाष्यम् ) इह मित्रस्य एकत्वात् वरुणस्य च, द्विवचनं न प्राप्नोति ( तेन युगपदभिधानता गम्यते ) । '**इतरेतरयोगे चार्थे द्वंद्वविधानात्**' इति ( भाष्येण ) 'चार्थे द्वंद्वः' इति सूत्रस्यार्थः प्रदर्श्यते । चशब्दः समुच्चय–अन्वाचय–इतरेतरयोग–समाहारेषु । तत्र समुच्चये 'धवमानय, खदिरमानय' इति ( निरपेक्षयोः क्रियान्वयात् ) समासो नास्ति । अन्वाचये ( अरण्यं गत्वा ) काष्ठान्यानय, शाकमपि आहर्तव्यं इति । ( तत्रापि समासो नास्ति इत्यनुषङ्गः । समुच्चयान्वाचययोर्विशेषमाह– ) तत्र काष्ठानि अरण्यगमनप्रयोजकानि इतरदप्रयोजकम् । समुच्चये द्वयमपि प्रयोजकम् । द्वयोः सह आनीयमानयोः इतरेतरयोगः अनुनिष्पादी भवति । चकारस्य तत् फलम्, तत्कृते 'चार्थे द्वंद्वः' इति ( नेदं तन्त्ररत्ने ) । तत्र कदाचित् इतरेतरयोगो विवक्षितः, समाहारः प्रत्ययादवगम्यमानः अविवक्षितः । कदाचित् समाहारो विवक्षितः इतरेतरयोगो नान्तरीयकः । एतयोरर्थयोर्द्वंद्वः । ( तत्र ) समाहारविवक्षायाम् 'धवखदिरम्' इति प्रयोगः, इतरत्र 'धवखदिरौ' इति । ( प्रकृते यदायातम्, तदाह– ) '**द्वंद्वापवादत्वाच्च एकशेषस्य** ( इति भाष्यम् ) । यथा द्वंद्वे यौगपद्येन द्वौ अभिधीयेते, विग्रहश्च ( यथा ), तथा एकशेषेऽपि वसानौ इति च एकशेषः । ततो द्वौ पुमांसौ । ( वसानौ च वसानौ च इति विग्रहः । इति न स्त्रीसद्वितीयत्वम् । एवं भाष्यं व्याख्याय चोदयति– ) **ननु** यदि धवो द्वित्वाभिधायी खदिरश्च, ततो बहुवचनं स्यात् । **उच्यते** । द्वयोर्द्वित्वयोः बहुवचनम्, न द्वयोर्द्विवचनयोः । यदि हि द्वयोर्द्विवचनयोः बहुवचनं स्यात्, 'ब्राह्मणौ शोभनौ विज्ञातारौ' इत्यत्रापि बहुवचनं स्यात् । ( पुनश्चोदयति– ) सैषा युगपदधिकरणता दुःखा ( बुद्धौ अनारोहात् ) दुरुपपादा च ( युक्त्यभावात् ) । कथम्? ( तस्यामभ्युपगतायाम् ) एकैकशब्दस्य द्वंद्वे अभिधेये स्याताम् । यदि च स्याताम् 'उक्तार्थानामप्रयोगः' इति धवस्यैव ( धवशब्दस्यैव ) प्रयोगः स्यात् । ( परिहरति– ) तस्मादेवं वर्णयन्ति । धवः आत्मीयमभिधेयं इतरसहितं ब्रवीति एवं खदिरोऽपि । ( तत्र ) कतरो द्वितीयः इति तत्र खदिरशब्देन धवो विशेष्यते, धवेनापि इतरः ( अतो नान्यतरप्रयोगदोषः । वस्तुतस्तु युगपदधिकरणता न पारमार्थिकी । **तन्त्ररत्ने** अत्र विषये विस्तरेण प्रतिपादितम् । विस्तरभयात् नोद्ध्रियते ) ।

ननु तत्र ( औकारान्ते द्विवचने ) पाणिनिस्स्मरणम् 'पुमान् स्त्रिया' इति । उच्यते । न पाणिनिना अर्थानुशासनं कृतम् । किं तर्हि? यथा लोके अवस्थितोऽर्थः, तथाऽवस्थितस्य शब्दानुशासनं कृतम् । तत्र ( नियमः क्रियते इति परेणान्वयः । ) अकारात् परः औकारः श्रूयमाणः पुमांसं सद्वितीयं वदति । यदा स्त्री सद्वितीया, तदा औकारः एकारीभवति । यदा पुनः स्त्रीपुंसौ अभिधेयौ, तदा एकारौकारौ प्राप्नुतः, द्वयोरभिधेययोर्विद्यमानत्वात्, तत्र औकारः शिष्यते इत्ययं नियमः क्रियते । न तु पुंसा सद्वितीया स्त्री अभिधीयते ( तस्मात् द्वौ पुमांसौ अग्निमादधीयातां इति पूर्वः पक्षः ) ।

**गुणस्य तु विधानत्वात् पत्न्या द्वितीयशब्दः स्यात् । २३ ॥**

**भाष्यम्**— तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति, यदुक्तम् 'द्वौ पुरुषौ आदधीयाताम्' इति । एक एवादधीत 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इति एकवचनं हि विवक्षितम् । तस्मादेक एवादधीत । ननु इदं वचनं द्वौ पुमांसौ आदधीयातां इति । नेत्याह । गुणस्य तु विधानत्वात् । क्षौमविधानं अस्मिन् वाक्ये न्याय्यम् । तथाहि अपूर्वोऽर्थो विहितो भवति । गम्यते हि विशेषनियमः । इतरथा क्षौमवचनं अनुवादमात्रं स्यात् । वादमात्रं चानर्थकम् ( १।२।२।१९ ) । पक्षे चानुवादः । न च एकपक्षवचन एष शब्दः । गौणत्वे च साधारणं सादृश्यम् । तस्मात् प्रमादाध्ययनमवगम्येत विनैव हेतुना । आह ननु पुमांसौ विधेयौ । तद्विधाने च न क्षौमविधानम् । वाक्यभेदो हि तथा स्यात् । श्रुतिगम्यौ च पुमांसौ वाक्यगम्यं च क्षौमं बाधेयातामिति । **अत्रोच्यते** । न पुमांसौ विधेयौ, प्राप्त एवात्र सद्वितीयः पुमान्, सोऽनूद्यते । कथम्? एकोऽत्र पुमान् श्रूयते ।

तस्य पत्न्या द्वितीयशब्दः स्यात् । न च यत् प्राग्वचनाद्गम्यते तद् विधेयं भवति । तस्मात् क्षौमविधानम्, न वाक्यभेदो भवति । यदुच्यते न क्षौमस्य विधायकोऽस्तीति । तदुच्यते । आदधीयातां इति तद् विधास्यति । ननु एतत् आधानं श्रुत्या विधातुं समर्थम्, नान्यदिति । उच्यते । शब्दान्तरेण विहितत्वादाधानस्य न विधायकम्, विहितत्वाच्च पुंसः सद्वितीयस्य तस्यापि न विधायकम् । अतस्तदसंभवात् क्षौमस्य विधायिका लिङ् भविष्यति, वाक्यसामर्थ्यात् । यत्तु अस्मिन् पक्षे अत्यन्ताय स्वार्थं जहातीति, नात्यन्ताय हास्यति । आधाने वासः क्षौमं कुर्यात् इति । अस्मिन् पक्षे पुंशब्दः स्त्रीपुंसयोर्वृत्त इति गम्यते । अस्ति हि तत्र तस्य निमित्तं पुमान् सद्वितीयः । एवमादि च दृष्ट्वा भगवता पाणिनिना सूत्रं प्रणीतम् 'पुमान् स्त्रिया' इति । तस्य विषयः पुंशब्दः शिष्यमाणः साधुर्भवति, न स्त्रीशब्द इति । तस्मादेकः पुमानादधीत, न द्वाविति ।

टुप्— क्षौमशब्दस्य अनुवादो न घटते अप्राप्तत्वात् । न लक्षणया अनुवादः सादृश्येन वा ( गौण्या वृत्त्या वा इत्यर्थः ) । नहि क्षौमं मलिनत्वेन विना आत्मानं न लभते, येन तल्लक्षयेत् । यथा शुक्लादिर्गुणः द्रव्येण विना न भवति इति अविनाभावात् द्रव्यं लक्षयति, नैवमिह । विनाऽपि मलिनत्वेन क्षौमस्य सद्भावोऽस्त्येव । अतो नास्ति लक्षणया अवबोधः । अथ विद्यते क्षौमे मलिनतेति, सा हि कार्पासादावपि विद्यते । असाधारण्येन हि लक्षणा भवति । नहि सादृश्यं हेतुः उपपदाभावात् । सामानाधिकरण्येन हि भवति सादृश्यं यथा सिंहो देवदत्त इति । अवयवप्रसिद्धिरपि समुदायप्रसिद्ध्या बाध्यते । तस्मात् ( अनुवादाभावात् ) विधेयमेतत् । यः प्रकरणगतः पुरुषः, तस्य अर्थप्राप्ते वसने क्षौमं नियम्यते । स प्रकरणगतः शक्नोति अपूर्वं लक्षयितुम् । तत्र एतत् विधीयते, न पुरुषस्वरूपे । यथा व्रीहयः शक्नुवन्ति अपूर्वं लक्षयितुम्, एवमिहापि । वसानौ इति उत्पत्तिवाक्ये स्त्रीपुंसयोः प्राप्तत्वात् अनुवादः ।

( अस्यैव सूत्रस्य वार्तिककारीया द्वितीया व्याख्या इत उत्तरं निवेश्यते । सा च अस्मदीये टुप्टीकालिखिते नास्ति । तन्त्ररत्ने तु सा व्याख्यातेति अत्र उद्ध्रियते । के. । न पुंद्वयं आधाने विधातुं शक्यते, 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इति– ) उत्पत्तिवाक्यशिष्टेन एकत्वेनावरुद्धत्वात् द्वित्वस्यावकाशाभावात् ( वाजिनवत् ) कर्मान्तरं प्राप्नोति । न चेष्यते कर्मान्तरम्, ( प्रकृताधानप्रत्यभिज्ञानात् ) । न च क्षौमयोरनुवादो घटते । तत्र ( अनुवादपक्षे ) शब्दवती वा क्षौमे ( स्याताम् ) मलिने वा । ( द्वेधाऽपि अयुक्तमित्याह– ) 'टुक्षु शब्दे' इति ( अस्मात् धातोः ) अवयवव्युत्पत्त्या वर्तेत । (तदयुक्तम्) रूढ्या ( हि ) क्षौममेव ब्रवीति ( अतसी स्यादुमा क्षुमा इत्यमरः । अतसी = आळशी, जवस इति भाषा ) । रूढ्या च अवयवव्युत्पत्तिर्बाध्यते । व्युत्पत्तौ ( केवलायाम् ) आश्रीयमाणायां शङ्खादीनामपि क्षौमशब्दवाच्यता स्यात् ( शब्दवत्त्वात् ), न च तेषु वर्तते ( क्षौमशब्दः । नापि मलिनत्वप्रतिपादकत्वमित्याह– ) मलिनवचने ( सति ) कार्पासादीनामपि मलिनत्वस्य विद्यमानत्वात् क्षौमशब्दाभिधेयता स्यात्, न च तेषु क्षौमशब्दः । ( किञ्च एवम्– ) अमलिने क्षौमे ( क्षौमशब्दस्य ) प्रयोगो न स्यात्, अस्ति च प्रयोगः । अमलिनपक्षे च विधिं प्रयोजयेत् । न च उपपदेन सह अनुच्चरितत्वात् क्षौमसदृशं कार्पासादि शक्नोति अवबोधयितुम् । यथा 'सिंहो देवदत्तः' इति सिंहशब्दोच्चारणे सिंहसादृश्यं देवदत्ते ( अवगम्यते ), एवमिहापि । तस्मात् उपपदाभावात् सादृश्ये गृह्यमाणे साधारणशब्दता ( अनेकार्थता ) स्यात् । अविनाभावेन मलिनत्वं अवबोधयेताम् ( क्षौमद्वयाभिप्रायं द्विवचनम् ) । न च मलिनत्वेन विना क्षौमं नोपपद्यते । तस्मात् ( अनुवादकत्वानुपपत्तेः ) अप्राप्तत्वात् क्षौमं विधीयते । ( ननु पुंद्वयप्रतिपादकस्य शब्दस्य का गतिः ? अत आह– ) वसानौ इति पुंस्त्वं द्वित्वं च वदति, तच्च ( द्वयमपि ) प्रकरणेन प्राप्तत्वात् अनूद्यते । यदुक्तं आधानसंबन्धो न प्राप्नोतीति, तत्रोच्यते । आधाने क्षौमं कुर्यात् इति विधीयते ( न तु वसने, तस्माददोषः इति । चोदयति– ) तत् कथमाधाने भवति ? ( उत्तरम्– ) तत्साधकस्य ( पुरुषस्य ) भवत् तदर्थं भवति । अथवा अस्तु ( वाक्येन ) क्षौमवसनसंबन्धविधानम् । ननु

वसनमात्रे स्यात्, उच्यते। आधानप्रकरणे समाम्नानात् तदीयस्य पुरुषस्य यत् वसनम्, तत्र भविष्यति, यथा 'प्रकरणविशेषाद्वा तद्युक्तस्य संस्कारो द्रव्यवत्' (३।४।५।१५) एवमत्रापि। इति सिद्धम्। ( ततश्च क्षौमे वाससी दंपत्योः इति ज्ञेयम् )।

**शा**— किं आधानं द्वौ पुमांसौ सस्त्रीकौ सह कुर्यातां उत एकः। तत्र '**पूर्वत्राख्यातसंख्यायाः कर्तृरूपान्वयः स्थितः। तेनेह कर्तृरूपस्य भेदो द्विवचनाद्भवेत्॥ वसानाविति चौकारात् पुंद्वयं संप्रतीयते। द्वित्वपुंस्त्वे हि तद्वाच्ये नियम्येते च ते मिथः॥**' तस्मात् द्वौ पुमांसौ सस्त्रीकौ। एवं प्राप्ते, अभिधीयते। '**क्षौमशब्दो न मुख्यः सन् मुख्यमर्थं परित्यजेत्। नापि धात्वर्थयोगेन वर्तते रूढिसंभवात्॥ वसानक्षौमशब्दौ च तव स्यातामनर्थकौ। द्वित्वमात्रविधायित्वात् तस्मात् क्षौमं विधीयते॥ तद्विधाने च पुंद्वित्वं विधातुं नैव शक्यते। उत्पत्तिवाक्यादन्यत्र नानेकार्थविधिर्यतः॥ संनिकर्षश्च शब्दस्य धर्मो, न तदनुग्रहात्। प्रधानभूतशब्दार्थपरित्यागोऽवकल्पते॥ कर्तृरूपस्य चैक्येऽपि तदधिष्ठानभेदतः। युक्तं द्विवचनं यद्वदग्नीषोमौ हि देवते॥ अप्राप्तत्वात्तु वसने यदा क्षौमं विधीयते। वसानावादधीयातामित्येतावनुवादकौ॥ अनुवादो यथाप्राप्ति सा च स्त्रीपुंसयोर्द्वयोः। तेन प्राप्तिवशाच्छब्दाविमौ तावेव वक्ष्यतः॥ एक एव पुमांस्तस्मादादधीत सह स्त्रिया। उत्पत्तिवाक्ये ह्येकत्वमुपादेयं विवक्षितम्॥**'

**सोम**— 'एतेन राजपुरोहितौ यजेयाताम्' इति द्वियज्ञवत् आधानं पुंद्वयाधिकारं इति **पूर्वपक्षसूत्रार्थः**।

**वि**— 'पुंसोरेकस्य वाऽऽधानम्, वसानावित्यतो द्वयोः।, एष क्षौमविधिर्द्वित्वं दंपत्योरेकता ततः॥'

**भाट्ट**— आधानप्रकरणे 'क्षौमे वसानौ अग्निमादधीयाताम्' इति श्रुतम्। तेन च आधाने कर्तृद्वित्वविधानात् द्वौ पुमांसौ सस्त्रीकौ आधाने अधिकारिणौ 'एतेन राजपुरोहितौ साम्राज्यकामौ यजेयाताम्' इतिवत्। न चात्र 'कुक्कुटावानय मिथुनं करिष्यामि' इतिवत् 'पुमान् स्त्रिया' इत्याद्यनुशासनानुरोधेन स्त्रीसद्वितीयतया विरूपैकशेषस्यापि उपपत्तेः, वाक्यस्य क्षौमविधिमात्रपरत्वेनापि उपपत्तौ उत्पत्तिशिष्टकर्त्रैकत्वबाधानुपपत्तिः इति वाच्यम्। सरूपैकशेषसंभवे लक्षणाऽऽपादकविरूपैकशेषस्य अन्याय्यत्वात्। तथाहि, औकारस्तावत् द्वित्वं पुंस्त्वं चाभिधत्ते इति अरुणैकहायनीवत् द्वित्वावच्छिन्ने पुंस्त्वम्, पुंस्त्वावच्छिन्ने द्वित्वं इति परस्परनियमात् पुंद्वयप्रतीतिः सुलभा। विरूपैकशेषे तु पितरौ इत्यादौ मातृत्वादेः, कुक्कुटौ इत्यादौ स्त्रीत्वस्य च प्रत्यायकाभावात् लक्षणा आवश्यकी इति तस्य ततो दौर्बल्यम्। न च भवन्मतेऽपि उपक्रमस्थक्षौमपदे मलिनत्वसादृश्यात् गौणी, 'टुक्षु शब्दे' इत्यनुशासनाद्वा अवयवयोगः इति जघन्यवृत्त्याश्रयणम्, अनुवादवैयर्थ्यम्, उत्पत्तिवाक्यस्थैकवचनस्य साधुत्वमात्रार्थत्वं इति अनेकदोषतादवस्थ्यं इति वाच्यम्। क्षौमवाक्यस्यैव उभयविशिष्टाधानविधानाङ्गीकारात्। वसन्तादिवाक्ये तु ब्राह्मणादिकर्तृकत्वे निमित्ते वसन्तादिकालविधानम्। अत एव 'ब्राह्मणः' इति एकत्वं पुंस्त्वं चाविवक्षितम्। आदधीत इत्यपि च। ब्राह्मणो यदि शूद्रसहित आदधीत तदा वसन्ते इत्येवं कादाचित्कब्राह्मणैकत्वानुवादः। तस्मात् द्वौ पुमांसौ सस्त्रीकौ अधिकारिणौ। यत्तु **भाष्यादौ** सरूपैकशेषसाधकं प्रमाणान्तरमुपन्यस्तम्। "द्वंद्वापवादत्वादेकशेषस्य द्वंद्वार्थ एव अर्थः इत्यवगम्यते। द्वंद्वश्च 'युगपदधिकरणे द्वंद्वो भवति' इति कात्यायनस्मरणात् युगपदधिकरणतावाची ( अत्र 'सिद्धं तु युगपदधिकरणवचने द्वंद्ववचनात्' इति २।२।२९ पा० सूत्रे द्वितीयं वार्तिकम्। तत्र महाभाष्यपङ्क्तिः 'युगपदधिकरणवचने द्वंद्वो भवति इति वक्तव्यम्' इति )। अधिकरणं शब्दप्रतिपाद्योऽर्थः, स यत्र अनेको युगपदेकेन पदेन बोध्यते तत्र द्वंद्वः। तथा च धवखदिरौ इत्यत्र धवपदं लक्षणया खदिरसहितधवपरं इतरसहितधवपरं वा। इतरस्तु खदिरपदान्निर्णीयते। एवं खदिरपदमपि। सेयं युगपदधिकरणता। इतरेतरयोगोऽप्ययमेव अस्मिन्नेवार्थे द्वंद्वः। चकारस्य हि चत्वारोऽर्थाः समुच्चय— अन्वाचय— इतरेतरयोग— समाहाराः। तत्र विभक्त्यर्थान्वये परस्परनिरपेक्षत्वेऽपि, क्रियाऽन्वये

दण्डचक्रादिवत् परस्परसापेक्षत्वे सति समत्वं समुच्चयः। अतश्च न इतरेतरयोगे, न विकल्पे, न वा अन्वाचये अतिव्याप्तिः। यथा 'अहरहर्नयमानो गामश्वं पुरुषं च' [ अयुक्तः पाठोऽयं चशब्दस्य ] इत्यादौ। अन्वाचये तु एकस्य प्रयोजकत्वम्, अपरस्य न इति न साम्यम्, यथा 'काष्ठान्याहर शाकं चाहर' इति। इतरेतरयोगे तु व्यासज्यवृत्तिविभक्त्यर्थे परस्परसाहित्येनान्वयः, यथा 'अग्निश्च सोमश्च देवता' इत्यादौ। अत्र धवं च खदिरं च इत्यादौ इतरेतरयोगविवक्षायां युगपदधिकरणवचनता आवश्यकी। अन्यथा प्रत्येकं विभक्त्यर्थान्वयेन इतरेतरयोगस्य समुच्चयाद्भेदानापत्तेः। अत एव निरपेक्षयोः एकक्रियाऽन्वयित्वं समुच्चयः इति तन्त्ररत्नोक्तमपास्तम्। 'अमावास्याया पौर्णमास्यां वा' इत्येकवाक्योक्तविकल्पे अतिव्याप्तेः। इतरेतरयोगसमाहारयोस्तु साहित्यस्य पदार्थान् प्रति गुणत्वप्रधानत्वकृतो विशेषः, इतरेतरयोगत्वं तुल्यम्। एषु चार्थेषु इतरेतरयोगे एव द्वंद्वः। अत एव च अर्थानामनेकत्वेऽपि इतरेतरयोगरूपचार्थे एव द्वंद्वः इति 'चार्थे द्वंद्वः' इति सामान्यसूत्रं महाभाष्यकारादिभिः विशेषपरतया व्याख्यातम्। अतश्च युगपदधिकरणतावाचिद्वंद्वापवादत्वात् एकशेषस्यापि तद्वाचित्वप्रतीतेः 'वसानौ' इत्यत्र पुंद्वयप्रतीतिरिति"। **तन्न।** विरूपैकशेषाङ्गीकारेऽपि स्त्रीसहितपुंसः पुंसहितस्त्रियाश्च युगपदभिधानोपपत्तेः। न चैवं पुंद्वयं स्त्रीद्वयं च इति चतुष्टयापत्तिः, धवखदिरद्वयवत् स्त्रीपुंद्वयोपपत्तेः। वस्तुतस्तु कात्यायनोक्तं युगपदधिकरणतावाचित्वं पतञ्जलिभिरेव दूषितम्। तस्यायमाशयः। धवपदे खदिरपदे च लक्षणायां प्रमाणाभावात् इतरेतरयोगस्य चशब्देनैव तात्पर्ये सति बोधोपपत्तेः। अत एव धवं च खदिरं च इत्यादौ तात्पर्यानुरोधेन धवखदिरवृत्तिव्यासज्यकर्मत्वे लक्षणा इत्यपि ध्येयम्। द्वंद्वे तु विभक्तेरेकत्वादेव इतरेतरयोगो लक्षणां विनैव निरवबाधः। यत्तु 'प्र मित्रयोर्वरुणयोः' इति वेदे क्वाचित्कं विग्रहप्रदर्शनं तच्छान्दसम्। अत एव विभक्तेर्व्यासज्यवृत्तिधर्मपरत्वे द्वंद्वः एव तादृशस्थले तात्पर्यग्राहकः इत्यपि बोध्यम्। किञ्च द्वंद्वापवादत्वेऽपि एकशेषस्य न तदुत्तरविभक्तेर्व्यासज्यवृत्तिधर्मपरत्वम्, वचनान्वयस्य विभक्त्यर्थान्वयोत्तरकालीनत्वेन ततः पूर्वं एकशेषत्वग्राहकप्रमाणाभावात्। वस्तुतस्तु एकशेषानुशासनमपि परिभाषामात्रमेव, सरूपद्वंद्वनिराकरणार्थं एकप्रातिपदिकार्थस्यैव द्विवचनादिबलेन अनेकत्वप्रतीत्युपपत्तेः। विरूपैकशेषत्वे तु तात्पर्यग्राहकानुरोधेन आनुशासनिकी औकारे लक्षणा इति विशेषः। अतस्तद्भिया सरूपैकशेषस्यैव अङ्गीकारात् पुंद्वयाधिकारः। **इति प्राप्ते,** वसन्तादिवाक्ये 'आदधीत' इत्येकवचनस्य पाक्षिकानुवादत्वापत्तेः, ब्राह्मणद्वयकर्तृकाधाने वसन्तप्राप्त्यनापत्तेश्च वसन्तादिवाक्येष्वेव आधानविधानम्। वसानवाक्ये तु एककर्तृत्वविशिष्टाधाने कर्तृद्वित्वक्षौमोभयविध्ययोगात् आनुशासनिकीं लक्षणामङ्गीकृत्य परं विरूपैकशेषः अधिष्ठानलक्षणया। तस्मिन् द्वित्वान्वयोऽपि पार्ष्ठिको युक्तः समाश्रयितुम्। अत एव तत्र क्षौममात्रं वसनक्रियोद्देशेन विधीयते। युक्तश्च क्रतुपात्तभावनायामपि कारकसंबन्धः। विधायकस्तु आदधातिपर एव प्रत्ययः। उपक्रमस्थक्षौमपदे श्रुत्यर्थलाभाय च विप्रकृष्टार्थस्यापि विधायकः। अन्यत्तु सर्वं प्रकरणप्राप्तत्वादनूद्यते। यद्यपि च उत्पत्तौ पुंस्त्वश्रवणात् स्त्रियमादाय द्वित्वं न प्राप्यते, तथापि विशिष्टविधौ गौरवपरिहाराय वसानवाक्ये वाक्यभेदपरिहाराय च ब्राह्मणादेः अधिकारित्वेनैव अन्वयाङ्गीकारात्, तस्य चोद्देश्यत्वेन तद्विशेषेण पुंस्त्वस्याविवक्षोपपत्तेः स्त्रियमादाय द्वित्वप्राप्त्यविघातः। द्विवचनं चात्र अधिष्ठानानेकत्वमात्रपरम्। तेन पत्न्यनेकत्वेऽपि न कश्चिद्विरोधः। अतः एक एव पुमान् स्त्रीसद्वितीयः आधाने अधिकारी।

**मण्डन—** 'वसानौ दंपती प्रोक्तौ।'

**शंकर—** 'नाधाने पुंद्वयस्य सा।' सा अधिक्रिया।

* **द्व्याम्नातेषु** ( अध्वर्युकाण्डे यजमानकाण्डे च पठितेषु ) स्रुग्व्यूहनादिमन्त्रेषु उभौ कर्तारौ। अध्वर्युः एतेन प्रकाशितमनुष्ठास्यामीति, यजमानो न प्रमदिष्यामीति। **भा.** ३।८।७।१७.

**द्व्याम्नातेषूभौ, द्व्याम्नानस्यार्थवत्त्वात्। ३।८। ७।१७॥**

दर्शपूर्णमासयोः 'पञ्चानां त्वा वातानां यन्त्राय धर्त्राय गृह्णामि' इत्यादयः आज्यग्रहणमन्त्राः, 'वाजस्य मा

प्रसवेन' इत्याद्यौ स्रुग्व्यूहनमन्त्रौ च आध्वर्यवे याजमाने च काण्डे इति द्विराम्नातौ। इति द्व्याम्नातेषु मन्त्रेषु उभौ अध्वर्युश्च यजमानश्च द्वावपि अधिकारिणौ। ते मन्त्राः द्वाभ्यामपि पठनीयौ। तत्र अध्वर्युः, एतेन प्रकाशितमनुष्ठास्यामि इति संधाय, यजमानस्तु न प्रमदिष्यामि इति संधाय ब्रूयात्। कस्मात्? द्व्याम्नानस्य अर्थवत्त्वात् सफलत्वात् हेतोः द्वाभ्यां पठनीयौ। समाख्याद्वयस्य समानबलत्वात् इति भावः।

अत्र सुधा— द्विःपाठार्थवत्त्वान्यथाऽनुपपत्त्या द्विःप्रयोगावगमात् भिन्नविषयत्वेन सामान्यसमाख्याया अपि बाधायोगः इति। के.

**द्व्याम्नाताधिकरणम्।** दर्शपूर्णमासयोः आध्वर्यवयाजमानकाण्डयोर्द्विराम्नाता मन्त्राः उभाभ्यामपि प्रयोक्तव्याः॥

**द्व्याम्नातेषूभौ, द्व्याम्नानस्यार्थवत्त्वात्।३।८। ७।१७॥**

**भाष्यम्**— स्तो दर्शपूर्णमासौ, तत्र द्व्याम्नाता मन्त्रा आध्वर्यवे काण्डे याजमाने च। आज्यं यैर्गृह्यते 'पञ्चानां त्वा वातानां यन्त्राय धर्त्राय गृह्णामि' इत्येवमादयः। तथा स्रुग्व्यूहनमन्त्राः। 'स्रुचौ व्यूहति, वाजस्य मा प्रसवेन' इति। तत्र संदेहः किं ते उभाभ्यामपि कर्तव्याः, उताध्वर्युणैवेति। किं प्राप्तम्? समाख्यानादाध्वर्यवाः। इति प्राप्ते, उच्यते। उभावपि तान् प्रयुञ्जीयातामिति। कुतः? द्व्याम्नानस्यार्थवत्त्वात्। द्वाभ्यां समाख्यानात् द्वावपि कर्तारौ गम्येते। तस्मात् द्वौ ब्रूयाताम्। अध्वर्युः एतेन प्रकाशितमनुष्ठास्यामीति। यजमानो न प्रमदिष्यामीति।

वा— आज्यग्रहणादिमन्त्रेषु सामान्येन आध्वर्यवे पुनर्विशेषेण याजमाने काण्डे पठ्यमानेषु किमुभौ प्रयोक्तारौ विकल्पेन समुच्चयेन वा, अथान्यतरः इति। तत्र आध्वर्यवत्वे विकल्पे वा प्राप्ते, द्वावित्याह। ननु च विशेषसमाख्यानात् केवलयाजमानत्वमेव स्यात्। तत्र वयं विशेषसमाख्यां बलीयसीमिच्छामो यत्र सकृदाम्नानम्। ये तु सामान्ये विशेषे च भेदेन आम्नायन्ते, तेषु यदि विशेषसमाख्या अङ्गीक्रियते, ततः सामान्यपाठस्य आनर्थक्यमेव स्यात्। एकविषयत्वे च सामान्यं विशेषो बाधते। सत्यपि त्वत्र मन्त्राभेदे पाठभेदात् विषयान्यत्वम्। पाठस्य हि भेदेन प्रयोजनं कल्पयितव्यम्। न च तदुभयप्रयोज्यत्वात् अन्यत् संभवति। तस्मादुभावपीति। ननु द्वयोः पाठयोः एकः स्वरूपप्रज्ञापनार्थः, इतरो विनियोगार्थः स्यात्। तत्रापि मन्त्राणां कर्मप्रकाशनार्थत्वादङ्गप्रधानानां च समानकर्तृकत्वात् यत्रैव आज्यग्रहणादि कार्यमाम्नातम्, तत्रैव समाख्यातेनैव कर्त्रा विनियोगो युक्तः। तत्रैव च मन्त्रस्य प्रयोज्यत्वेन अवगतस्य कर्तृविशेषाकाङ्क्षा भवति, नेतरत्र। रूपमात्रप्रज्ञापनस्य अन्तरेणापि कर्मकालप्रयोगम्, अध्ययनमात्रेणैव सिद्धत्वात्। आज्यग्रहणादि च असंदिग्धमाध्वर्यवम्। तस्मात्र यजमानेन प्रयोक्तव्या इति। उच्यते। याजमानेऽपि रूपमात्रादेव अन्तरेणापि कार्यं प्रयोज्यत्वेनावधारणात् अस्त्येव कर्त्रपेक्षेति यजमानकर्तृत्वसिद्धिः। किं पुनस्तेषां प्रयुज्यमानानां प्रयोजनम्? उच्यते। यथैवाध्वर्युणा पदार्थाः कर्तव्याः, तथैव यजमानेन अप्रमादार्थं प्रत्यवेक्षितव्याः। तदत्र मन्त्रा नाम्नायन्ते तत्रोपायान्तरेण प्रत्यवेक्ष्यते, इह तु मन्त्रैरित्यर्थवत्ता।

सोम— समाख्याबाधापवादात् संगतिः।

वि— 'वाजस्य मेत्यमुं ब्रूयादेको द्वौ वा, कृतार्थतः। एकः, काण्डद्वये पाठादध्वर्युस्वामिनावुभौ॥' ८.

भाट्ट— ये मन्त्राः सामान्यतः आध्वर्यवसमाख्याते काण्डे समाम्नाताः, पुनश्च याजमानेऽपि विशेषतः समाख्यायन्ते, यथा आज्यग्रहणमन्त्राः स्रुग्व्यूहनमन्त्राश्च, ते तावत् सत्यपि अभ्यासे प्रत्यभिज्ञायमानत्वात् विध्यभावाच्च अभिन्नाः। अतः तत्र गुणभूतकर्तृद्वयस्य विकल्पः। विशेषसमाख्याबलाद्वा यजमान एव कर्ता। आज्यग्रहणस्रुग्व्यूहनादेर्वा निःसंदिग्धमाध्वर्यवत्वात् तदङ्गभूता मन्त्रा अपि तत्कर्तृका एव। न चैवं द्विःपाठवैयर्थ्यम्, एकत्र स्वरूपज्ञानं अन्यत्र विनियोगः इत्येवं सार्थक्यात्। इत्येवं प्राप्ते, एकपाठेनैवोभयसिद्धा द्वितीयस्य वैयर्थ्यापत्तेः तस्योच्चारणान्तरविधायित्वावगतेः, तस्य च समाख्याऽन्तरेण कर्त्रन्तरसिद्धिः। उच्चारणान्तरप्रयोजनं तत्क्रियाप्रत्यवेक्षणमिति नादृष्टकल्पनाऽपि। यद्यपि च तत्

नियमेन यजमानस्य न प्राप्तम्, तथापि द्विःपाठबलादेव तत्कल्पनमिति न दोषः। यत्र तु नैवंविधं प्रयोजनं कर्तृभेदो वा संभवी यथा 'अयं सहस्रमानवः' इत्यस्या-मौद्गात्रे एव प्रगीताप्रगीतभेदेन समाम्नातायाम्, तत्रा-गत्या अभ्युदयशिरस्कत्वं परिकल्प्य उत्पत्तिविनियोग-परत्वेन सार्थक्यमिति विशेषः। ('पञ्चानां त्वा वातानाम्' इत्यादय आज्यग्रहणे, 'वाजस्य मा प्रसवेन' इति स्रुग्व्यूहने)।

**मण्डन**— 'द्व्याम्नातमन्त्रा उभयप्रयोज्याः।' ८.

**शंकर**— 'द्व्याम्नातस्तूभयोर्मनुः।' १०.

* **द्व्यार्षेयस्य** कर्माधिकारो नास्तीति जैमिनिमतम्, अस्ति तस्यापि कर्माधिकार इति ऋष्यन्तरमतम्। **के.** ६।१।११.

* **द्व्येकबहुशब्दाः** संख्यावचनाः। तामनभिधाय संख्येये वृत्त्यसंभवात्। **वा.** ३।४।४।१३ पृ. ९२४.

* **द्विकपाले** आश्विने आग्नेयाष्टाकपालगतप्रथम-कपालद्वयविध्यन्तः। **भा.** १०।५।१।१–६.

* **द्विकर्मकत्वं** अविवक्षाविरहविशिष्टकर्मद्वयाकाङ्क्ष-धातुत्वं इति द्विकर्मकस्यापि एककर्मत्वे 'निनाय' इत्यादौ न क्षतिः। **मणि.** पृ. १०९.

**द्विगता अपि हेतवो भवन्तीति न्यायः।** द्वावर्थौ गताः प्रयोजनद्वयस्य संपादका इत्यर्थः। तद्यथा 'आम्राश्च सिक्ताः पितरश्च प्रीणिताः। एका क्रिया द्व्यर्थकरी प्रसिद्धा' इति महाभाष्यम्। **साहस्री.** ४२३.

**द्विगोत्राणां प्रवरवरणे एकतो द्वौ अन्यत एकः इति त्रयः॥**

द्व्यामुष्यायणानां शैशिरादीनामुभयकीर्तने त्रित्वसंख्या-धिक्यापत्तेरन्यतरत्रितयकीर्तनेनैव 'त्रीन् वृणीते' इति विध्यर्थानुष्ठानसिद्धिः। **इति प्राप्ते,** विकल्पस्य जघन्यतयैव 'एकतो द्वावन्यत एकम्' इत्यादिवचनसिद्धव्यवस्थयैव आर्षेयवरणम्। अत एवोभयतो द्वयोर्द्वयोर्ग्रहणे त्रित्रिग्रहणे वा चतुःषडार्षेयप्राप्तौ तन्निषेधः संगच्छते। अन्यथा चतुःषट्प्रवराणामभावादेव सिद्धेः निषेधवैयर्थ्यापत्तिः। **संकर्ष.** ३।४।८.

* **द्वित्वम्।** अवान्तरसामान्यावच्छेदं विना द्वित्वा-नवधारणात्। **सु.** पृ. ७२६.

* **द्वित्वादीनां** अपेक्षाबुद्धेरेव अनेकता। **मणि.** पृ. १७.

* **द्वित्वबहुत्वयोः** भाविभूतपदार्थनिष्ठत्वम्। **मणि.** पृ. १६.

**द्वित्वबहुत्वाधिकरणम्।** ज्योतिष्टोमे श्रुतयोः यजमानद्वित्वबहुत्वसंबन्धिन्योः प्रतिपदोः कुलायसत्रयोः उत्कर्षः।

**द्वित्वबहुत्वयुक्तं चाचोदनात्तस्य। ३।३।९।१७॥**

**भाष्यम्**— ज्योतिष्टोमे श्रूयते 'युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्, एते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्यः' इति। तत्र संदेहः ज्योतिष्टोमे एव निविशेते प्रतिपदौ, उत द्वियज्ञं कञ्चित् कुलायादिं बहुयज्ञं च द्विरात्रादिं उत्कृष्यते इति। किं प्राप्तम्? द्वित्वबहुत्वयुक्ते ज्योतिष्टोमेन असंयोगात् उत्कृष्येयातां प्रतिपदौ। नहि ज्योतिष्टोमस्य द्वौ यजमानौ श्रूयेते, यथा कुलायस्य 'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति।

**वा**— पूर्ववदेव विचारः। एतावत्तु भिद्यते। पूर्वत्र प्रधानान्तरेण प्रकृतासमर्थशब्दाभिधेयेन सह संबन्ध आसीत्, इह तु गुणेन यजमानद्वित्वादिना कथञ्चिदा-शङ्कितप्रकृतसंबन्धेन। तत्र पूर्वन्यायेनैव सिद्धान्तोपक्रमं सूत्रम्। न तावत् इह यजमानद्वित्वबहुत्वे विधीयेते, सिद्धानुवादेन निमित्तीकृत्य प्रवृत्तेः प्रतिपद्विधिपरत्वात्, अनेकविधौ च वाक्यभेदात्। अविहितत्वाच्च न ज्योति-ष्टोमे यजमानद्वित्वबहुत्वे विद्येते। कुलायादिषु तु एका-हेषु अहीनेषु च प्रत्यक्षविहिते विद्येते। 'राजपुरोहितौ यजेयाताम्' 'एतेनैव द्वौ याजयेत्' 'एतेनैव त्रीन् याजयेत्' 'एको द्वौ बहवो वाऽहीनैर्यजेरन्' इति। तस्मादुत्कर्षः।

**पक्षेणार्थकृतस्येति चेत्। १८॥**

**भाष्यम्**— इति चेत् पश्यसि प्रतिपदौ उत्कृष्येते इति। नैतदेवम्। प्रकरणं हि बाध्येत। बाध्यताम्, असं-योगात् द्वाभ्यां यजमानाभ्यां बहुभिश्च यजमानैर्ज्योति-

ष्टोमस्य, इति चेत्। असत्यपि वचने अर्थात् द्वौ यजमानौ भविष्यतः। य एको न शक्ष्यति, ससहायः स उपक्रंस्यते। अवश्ययष्टव्ये सति यथा शक्यते तथा यष्टव्यमिति बाधित्वाऽपि कांचित् प्राप्तिं यजमानः सहायमुपादास्यते। एवं प्रकरणे प्रतिपदौ भविष्यतः। तस्मान्नोत्कष्टव्ये इति।

वा— प्रकरणात् ज्योतिष्टोमे निवेशः। न च अहीनवत् अप्रकृतयज्ञसंबन्धोऽस्ति। यजमानद्वित्वादिसंबन्धस्तु निमित्तमात्रौपयिकत्वात् नाङ्गाङ्गिभावाय प्रभवति। न च तद्द्वारेण क्रतुसंबन्धो घटते, लक्षणाप्रसङ्गात्। नहि श्रुत्या उपयुक्तानां लक्षणया उपयोगान्तरं युज्यते। द्वित्वादिस्वरूपसंबन्धे तु विधिरेव अनर्थको भवेत्। फलकल्पनायाश्च प्रकरणसंबन्धकल्पना ज्यायसी। यत्तु निमित्तं प्रकरणे नास्तीति, तदुच्यते अर्थाद्भविष्यति। नहि विहितमेवैकं निमित्तं भवति, अर्थप्राप्तस्यापि उपपद्यमानत्वात्। अस्ति च एकाशक्तिपक्षे द्वित्रादियजमानप्राप्तिः। न चात्रापि यजमानैकत्वविवक्षां अवधारयामः। सत्यामपि च विवक्षायाम् 'अपि वाऽप्येकदेशे स्यात्' इत्यनेन यथैव अशक्तेः अन्यत् किञ्चिदङ्गं हाप्यते, तथैव यजमानैकत्वमपि कदाचित् परिहाप्य द्वौ बहवो वा यजेरन्, ततश्चास्ति निमित्तम्। अथवा एतदेव प्रतिपद्विधानं दृष्ट्वा अर्थात् द्विबहुयजमानकर्तृश्रुतिं कल्पयिष्यामः। सा चैतस्मिन्नेव पक्षे भवति, न प्रतिपदन्तरपक्षेषु इति नैकत्वचोदना विरोत्स्यते।

**न, प्रकृतेरेकसंयोगात्। १९॥**

**भाष्यम्**— प्रकृतिर्हि ज्योतिष्टोमः। प्रत्यक्षास्तत्र धर्मा आम्नाताः, न कुतश्चित् चोदकेन प्राप्यन्ते। किमतो यद्येवम्? प्रत्यक्षश्रुताः न शक्या बाधितुम्। विकृतौ तु चोदकप्राप्ताः सन्तः आनुमानिका बाध्येरन्निति। विवक्षितं हि ज्योतिष्टोमे कर्तुरेकत्वं प्रत्यक्षश्रुतं न सामर्थ्येन बाध्येत। यत्रापि हि अवश्यकर्तव्यता श्रूयते, तत्रापि एक एव यजमानः श्रूयते 'वसन्तेवसन्ते ज्योतिषा यजेत' इति। तस्मात् ज्योतिष्टोमात् उत्कष्टव्ये एते प्रतिपदाविति। अथ कस्मात् पत्न्यभिप्रायमेतन्न भवति। एकस्यां पत्न्यां यजमाने च 'युवं हि स्थः' इति, द्वयोर्बहुषु वा पत्नीषु 'एते असृग्रमिन्दवः' इति। यथा 'क्षौमे वसानौ अग्निमादधीयाताम्' इति क्षौमवसानपरं वचनम्, एवमिहापि प्रतिपद्विधानपरम्। उच्यते। असंभवात् तत्र मुख्यस्य, लक्षणाशब्दः पुंसो वाचकः स्त्रियाम्। इह तु द्वियज्ञे बहुयज्ञे च संभवति, न लक्षणाशब्दो भवितुमर्हति बहुभ्यो यजमानेभ्य इति। यदपि एतत् द्विवचनं द्वयोर्यजमानयोरिति, अत्रापि य एकशेषः, 'पुमान् स्त्रिया' (पा० १।२।६७) इति, असावपि लक्षणाशब्द एव। अपिच 'उपास्मै गायता नरः' इति प्रतिपदो निरवकाशत्वमेव स्यात्। तस्मादुत्कष्टव्ये एते प्रतिपदौ इति सिद्धम्।

**वा**— प्रकृतिग्रहणं प्रकृतप्रतिपत्त्यर्थम्। औपदेशिकत्वाद्वा अत्यन्तानतिक्रमार्थम्। आतिदेशिकं हि अर्थवशेन बाध्येतापि। प्रत्यक्षविहितं तु एतत् काम्ये नित्ये च, यजेत इत्येकवचनश्रवणात्। न च अस्य अविवक्षायां कारणमस्ति। यथा च विवक्षा, तथा षष्ठे प्रतिपादयिष्यते (६।३।१।२)। यदपि अशक्तिकृतं हापनम्, तदपि एको यथा शक्नुयात् इति उपबन्धात् अन्याङ्गविषयं विज्ञायते। शक्नोति हि दक्षिणापरिमाणं परित्यज्य एकोऽपि निर्वर्तयितुम्। उत्पत्तिप्रयोगचोदनास्थत्वाच्च संख्याऽनुग्रह एव युक्तः। तस्मात् एकयजमानकत्वात् प्रकृतौ निमित्तमस्ति इति उत्कृष्यते। यत्तु इदमेव वचनं सामर्थ्यादाक्षेप्स्यतीति, तन्न, अन्यथाऽपि उपपद्यमानत्वात्। यदि हि एतन्निमित्तं अनाक्षिपत् अनर्थकीभवेत्, तत आक्षिपेत्। कथं चैतदनर्थकं भवेत्, यदि प्रकृताविव अन्यत्रापि द्वित्वबहुत्वे न स्याताम्। न तु ते अन्यत्र न स्तः, कुलायादौ विद्यमानत्वात्। इह च सिद्धवन्निमित्तत्वेन उपादानात् वाक्यभेदप्रसङ्गाच्च नार्थात् आक्षेपमर्हतः। पत्न्यभिप्राये तु द्वित्वे नित्यत्वात् निमित्तोपादानानर्थक्यम्। बहुभ्य इति च विरूपैकशेषः (बहवश्च बह्व्यश्च इति) स्वरसतः पुंबहुत्वप्रतीतौ सत्यां विधिर्निष्प्रमाणकः कल्प्येत। 'क्षौमे वसानौ' (वसानश्च वसाना चेति) इत्यत्र तु अगत्या पत्न्यां द्वितीयशब्द इष्टः। नहि द्वियज्ञवत् द्विपुरुषकमाधानं क्वचित् विहितम्। एकद्विपत्नीकप्रयोगावरोधाच्च नित्यायाः प्रतिपदः आनर्थक्यं भवेत्। विषमशिष्टविकल्पो वा अभ्युपगम्येत। तस्मादपि उत्कृष्यते।

यत्तु क्रतुसंबन्धो नाभिहित इति, नैष दोषः, प्रतिपच्छब्दादेव क्रतुगामित्वप्रतिपत्तौ सत्यां द्वित्वादिना विशेषप्रतिपत्तिसिद्धेः। यजमानशब्दो वा अन्यथाऽनुपपत्त्या यज्ञमुपस्थापयिष्यति। तस्मात् व्यतिरिक्तसंयोगे सति अस्ति प्रकरणविरोधः। तत्र च श्रुतेर्बलीयस्त्वम्।

शा— '**हीनाङ्गस्यापि नित्यस्य प्रयोगो येन वक्ष्यते। तेनैकत्वं विहाय द्वौ बहवो वा प्रयुञ्जते॥ नैतदेवमशक्याङ्गमुपादेयं हि लुप्यते। अनुपादेयमेकत्वं यजमानस्य कालवत्॥**' तस्मादुत्कर्षः प्रतिपदोः।

**सोम**— पूर्ववैषम्येण प्रत्यवस्थानात् **संगतिः**। **सूत्रार्थस्तु**— द्वित्वबहुत्वयुक्तं च प्रतिपद्द्वयं विकृतौ उत्कृष्येत तस्य द्वित्वबहुत्वस्य प्रकृतौ अचोदनात् इति।

**वि**— 'युवं हीति द्वयोः कर्त्रोर्बहूनां चैत इत्यमूम् (एते इति)। कुर्यात् प्रतिपदं ज्योतिष्टोमे साहर्गणेऽथवा॥, एकस्य शक्तिराहित्ये द्वाभ्यां बहुभिरेव वा। ज्योतिष्टोमस्य कार्यत्वात् प्रकृतेऽत्रैव सा भवेत्॥, यजमानस्य नानात्वं साक्षात् विकृतिषु श्रुतम्। उत्कृष्य प्रतिपत् तेन कुलायादिषु नीयताम्॥' १४.

**भाट्ट**— ज्योतिष्टोमे एव 'उपास्मै गायता नरः' इति नित्यां प्रतिपदं विधाय 'युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्। एते असृग्रमिन्दवः इति बहुभ्यो यजमानेभ्यः' इति श्रुतम्। तत्र आद्यवाक्ये 'द्वयोर्यजमानयोः' इति यदि सप्तमी, तदा सा निमित्तत्वपरा। यद्यपि च पृथग् विभक्तिश्रवणम्, तथापि हविरार्त्यधिकरणन्यायेन (६।४।६।२२) पाक्षिकत्वाभावेन प्रत्येकं निमित्तत्वापर्यवसानात् प्रधानभूतनिमित्तत्वानुरोधेन मिलितयोरेव द्वित्वावच्छिन्नयजमानत्वावच्छिन्नयोः निमित्तत्वं प्रतिपाद्यते। यदि तु षष्ठी, तदा अधिकारित्वाख्यसंबन्धानुवादिका सती स्ववैयर्थ्यपरिहारार्थं पदद्वयेऽपि लक्षणामङ्गीकृत्य लाघवात् द्वित्वयजमानत्वयोरेकं व्यासज्यवृत्तिनिमित्तत्वं प्रतिपादयति, विशेषणविशेष्यभावेऽपि विनिगमनाविरहात्। एवं 'बहुभ्यो यजमानेभ्यः' इति तादर्थ्यचतुर्थ्याऽपि अधिकारित्वसंबन्धानुवादिकया उक्तविधनिमित्तत्वे लक्षणा। अतश्च न अन्यतराविवक्षाप्रसङ्गः। निमित्ते च प्रतिपदुद्देशेन मन्त्रविधानेऽपि विजातीयत्वान्न अनेकोद्देश्यता। प्रकरणाद्वा प्रतिपत्संबन्धलाभः इति पक्षद्वयेऽपि अविवादम्। तदिह इमौ मन्त्रौ ज्योतिष्टोमे एव निविशेते, उत द्विबहुयजमानके कुलायाऽहीनादौ इति चिन्तायाम्, प्रकरणाविरोधात् प्रकृते एव निवेशः। न च तत्र निमित्ताभावः, आख्यातेन 'वसन्तेवसन्ते ज्योतिषा यजेत' इत्यादिना उपादेयकर्तृविशेषणत्वेनोक्तस्य एकत्वस्य विवक्षायामपि नित्यत्वेन ज्योतिष्टोमे यथाशक्त्युपबन्धस्य वक्ष्यमाणत्वात्, यदि एको न शक्नुयात्, तदा द्विबहुयजमानकत्वप्राप्तेः प्रतिपद्विधानसंभवात्। अथवा यजमानशब्दस्य यागकर्तृमात्रवचनस्य पत्न्यामपि संभवात् आद्यवाक्ये तावत् स्त्रीलिङ्गत्वे बाधकाभावात् पत्नीद्वित्वे स मन्त्रः। द्वितीयवाक्येऽपि पाशाधिकरणन्यायेन लिङ्गानुरोधेन प्रकरणबाधानुपपत्तेः व्यत्ययानुशासनेन पुंलिङ्गस्य स्त्रीत्वपरत्वावगतेः पत्नीबहुत्वे द्वितीयो मन्त्रः। नित्या तु प्रतिपत् पत्न्येकत्वे। **इति प्राप्ते**, नित्यत्वेऽपि ज्योतिष्टोमस्य न एकत्वे यथाशक्तिन्यायविषयता, उत्पत्त्यादिवाक्येषु समानाभिधानश्रुत्या भावनायामन्वितस्य तस्य अन्तरङ्गत्वेन अशक्तौ दक्षिणापरिमाणाद्यङ्गान्तरबाधेन अस्यैव अनुग्राह्यत्वात्। किञ्च यत् कृतिसाध्यत्वेनानुष्ठेयतया प्रसक्तम्, तत्रैव यथाशक्त्युपबन्धः, न तु अननुष्ठेये कालादौ। अतश्च तद्वदेव अस्यापि न तन्न्यायविषयता, इति न प्रकृते यागे द्वित्वबहुत्वे। न च यजमानशब्दः पत्नीपरः, पुंस्येव प्रचुरप्रयोगेण शक्त्यवगमेन लक्षणायां प्रमाणाभावात्, यजमानेभ्य इति पुंलिङ्गस्य 'प्रास्मै' इत्यस्य मेष्यामिव निषिद्धत्वेन अगतिकव्यत्ययानुशासनाङ्गीकारानुपपत्तेश्च। अतश्च वाक्येन प्रकरणबाधात् यत्र 'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' 'एको द्वौ बहवो वा यजेरन्' इति आहत्यैव कुलायाहीनादिषु द्वित्वबहुत्वविधानम्, तत्रैव अस्योत्कर्षः। न चात्र तत्क्रतूपस्थापकाभावः, प्रतिपत्संबन्धेनैव सामान्यतः क्रतुसंबन्धेऽवगते निमित्तबलेन तद्विशेषोपस्थितौ बाधकाभावात्।

**मण्डन**---' द्वियज्ञे प्रतिपद्विधिः । ' १४.

**शंकर**--' द्विबहुप्रतिपत् तथा । ' प्रकृते बाध्या ।

**द्वित्वबहुत्वयुक्तं चाचोदनात् तस्य । ३।३।९। १७ ॥**

'युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्' 'एते असृग्रमिन्दवः इति बहुभ्यो यजमानेभ्यः' इति ज्योतिष्टोमे श्रूयते । एतत् द्वित्वबहुत्वयुक्तं मन्त्रजातं राजपुरोहितोभयकर्तृके कुलाययज्ञे बहुकर्तृके च अहीने अपकृष्यते । ज्योतिष्टोमे तस्य द्वित्वबहुत्वयुक्तकर्तृकत्वस्य अचोदनात् अविधानात् । तस्मात् ज्योतिष्टोमादपकर्षः । चशब्दो दृष्टान्तार्थः । यथा द्वादशोपसत्ता उत्कृष्यते तथा इदमपि उत्कृष्यते । इति सिद्धान्तः ।

**पक्षेणार्थकृतस्येति चेत् । १८ ॥**

पूर्वपक्षी आह । पक्षेण कदाचित् विकल्पेन अर्थकृतस्य अर्थात् प्राप्तस्य द्विबहुयजमानकत्वस्य ज्योतिष्टोमे संभवात् प्रतिपद्द्वयस्य नोत्कर्षः । एकस्य यजमानस्य कदाचित् दक्षिणादिसंपादनाशक्तौ एकत्वबाधेनापि द्विबहुयजमानकत्वं संभवेत् इति भावः । इति चेत् पूर्वपक्षी ब्रूयात् ।

**न, प्रकृतेरेकसंयोगात् । १९ ॥**

नेत्याह सिद्धान्ती । कुतः ? प्रकृतेः निखिलसोमप्रकृतेः ज्योतिष्टोमस्य एकसंयोगात् एकेनैव कर्त्रा संबन्धात् । 'सोमेन यजेत' इति उत्पत्तिविधिगतस्य कर्तुरेकत्वस्य बाधासंभवात् । तथा च ज्योतिष्टोमस्य एकमात्रकर्तृकत्वात् प्रतिपदोः उत्कर्ष एव इति । **के.**

* द्वित्वबहुत्वयुक्तं (३।३।९।१७–१९) **इत्यधिकरणे** तु यजमानस्य आत्मीयमेकत्वमपि अनुपादेयं इत्युक्तम् । **बाल.** पृ. ९७. * 'द्वित्वबहुत्वयुक्तं चाचोदनात्तस्य' इत्यधिकरणे य एकशेषः 'पुमान् स्त्रिया' इति, स लक्षणाशब्द एवेति भाष्यकारेणोक्तम् । **सोम.** ६।१।५.

* **द्विदेवत्याश्चमसाः** ऐन्द्रवायवादयः । **वि.** ३।२।१३. * **द्विदेवत्यानां** शेषाः आग्रयणस्थाल्यामुपनीताः, ततः पात्नीवतो गृह्यते । **भा.** ३।२।१३।३३ । द्विदेवत्यानां ऐन्द्रवायवादीनां शेषाः आदित्यस्थाल्यां निक्षिप्यन्ते । ततोऽपि पुनः आग्रयणस्थाल्यामागच्छन्ति । ततश्च पात्नीवतस्य ग्रहणम् । **वा.** * **द्विदेवत्ये** आग्नावैष्णवादौ अग्नीषोमीयपुरोडाशधर्माणामतिदेशः, द्विदेवतात्वसामान्यात् । **भा.** ८।३।११।१–२.

* **द्विदेवत्यत्वव्यवहारो** मीमांसायाम् । 'सर्वत्र शास्त्रे द्विदेवत्यत्वाभ्युपगमात् । तद्यथा चतुर्धाकरण–इन्द्रपीत–पूषप्रपिष्टभागविचारेषु सापेक्षाग्निदेवत्यादीनां ऐन्द्राग्न–अग्नीषोमीयादीनां आग्नेयादिशब्दैः केवलाग्न्यादिदेवताकैः असामर्थ्यादग्रहणं इति वक्ष्यति' इति **वार्तिकम्** ( पृ. ४२० ) । **अत्र सुधा**– न केवलं याज्ञिकानां द्विदेवत्यत्वव्यवहारः किन्तु मीमांसायामपि । 'आग्नेयं चतुर्धा करोति' इत्याग्नेयशब्देन सापेक्षाग्निदेवत्ययोः ऐन्द्राग्नाग्नीषोमीययोः पुरोडाशयोः अग्रहणं 'व्यवस्था वा' ( ३।१।२७ ) इति सूत्रे वक्ष्यते । इन्द्रपीतसमासस्थेन इन्द्रशब्देन सापेक्षेन्द्रदेवत्यस्य ऐन्द्राग्नादेः सोमस्य अग्रहणं 'एकस्मिन् वा देवतान्तरात्' ( ३।२।४१ ) इति इन्द्रपीतविचारसिद्धान्तसूत्रे वक्ष्यते । पूषशब्देन सापेक्षपूषदेवत्यस्य ऐन्द्रापौष्णादेरग्रहणं 'एकस्मिन्नेकसंयोगात्' ( ३।३।३९ ) इति पूषप्रपिष्टभागविचारे वक्ष्यति । द्विदेवत्यानां दार्शपौर्णमासिकद्विदेवत्ययागप्रकृतिकत्वम् 'ऐकार्थ्याद्वा०' ( ८।१।२८ ) इति सूत्रे वक्ष्यते । 'आशासाना मेधपतिभ्यां मेधम्' इति अध्रिगुप्रैषगतमेधपतिशब्देन द्विवचनान्तमेधपतिशब्दवाच्यं अग्नीषोमाख्यदेवतारूपं अर्थद्वयं आश्रयिष्यते । 'त्वं ह्यग्ने प्रथमो मनोता' इति मनोताख्यो मन्त्रः अन्यदेवत्यपशौ ऊहितव्यो न वा इति संदेहमुपन्यस्य 'ननु प्रकृतौ अन्यार्थोऽयं निगदः ( अन्यायनिगदोऽयम् ) अग्नीषोमौ हि प्रकृतौ देवता । अयमप्याग्नेयः । असमवेताभिधानात् अविकारेण प्रयोक्तव्यः' इत्याशङ्किते 'सत्यं अग्नीषोमौ देवता प्रकृतौ, तौ तु अग्निश्च सोमश्च' इति भाष्यकृत् वक्ष्यति ( भा. पृ. १९३८–३९ ) 'मनोतायां तु वचनादविकारः स्यात्' १०।४।४२ इत्यत्र ।

व्याकरणशास्त्रेऽपि द्विदेवत्यत्वव्यवहारोऽस्ति । 'देवताद्वंद्वे च' (पा० ६।३।२६) इत्यधिकृत्य 'ईदग्नेः सोमवरुणयोः' (२७) इति सोमशब्दे वरुणशब्दे च परभूते अग्निशब्दस्य देवताद्वंद्वनिमित्तं ईत्वं ( अग्नीषोमौ अग्नीवरुणौ इति ) स्मृतम् । मूर्धन्याधिकारे च 'अग्नेः

स्तुस्तोमसोमाः' (पा० ८।३।८२) इत्यत्र अग्निशब्दात् परस्य सोमशब्दस्य मूर्धन्यादेशेन षत्वस्मृतेः सोमशब्दस्य अग्निशब्दाद्भेदावगमात् अर्थात् द्वंद्वावगतिः। पूर्वपदप्रकृतिस्वराधिकारे 'उभे वनस्पत्यादिषु युगपत्' (पा० ६।२।१४०) इत्यनुवर्तमाने 'देवताद्वंद्वे च' (पा०६।२।१४१) इत्यनेन इन्द्रासोमौ इन्द्रावरुणौ इत्यादिषु उभयपदप्रकृतिस्वरत्वं उक्तम्। वृद्ध्यधिकारे च 'द्वन्द्वगसिन्ध्वन्ते पूर्वपदस्य च' (पा० ७।३।१९) इत्यनुवर्तमाने 'देवताद्वंद्वे च' (पा० ७।३।२१) इति आग्नावैष्णवादिशब्दे उभयपदवृत्तिरुक्ता। 'आनङ् ऋतो द्वंद्वे' (पा० ६।३।२५) इत्यनुवर्तमाने 'देवताद्वंद्वे च' (पा० ६।३।२६) इत्यानङादेशः मित्रावरुणौ इत्युक्तः। इति। पृ. ६४७–४८.

* **द्विपत्नीकः** बहुपत्नीकश्चास्ति यजमानः। **भा.** ९।३।६।२०.

* **द्विपश्वादिविकृतौ** देवताऽनुसारेण मेधपतिशब्दस्य वचने उहः कर्तव्यः (मेधपतये मेधपतिभ्यां मेधपतिभ्यः इति यथायथम्)। **भा.** ९।३।१२।३३–४१.

* **द्विपशुकयागे** अध्रिगुप्रैषे एकधाशब्दस्य अभ्यासः 'एकधैकधा अनयोस्त्वचौ' इति। **वि.** ९।३।११,

* द्विपशुकयागे पाशमन्त्रयोः एकवचनान्तबहुवचनान्तपाशशब्दस्य द्विवचनान्तेन ऊहः। ९।३।४.

**द्विपुरोडाशायां स्यादन्तरार्थत्वात्। १०।८। १८।६२॥**

सोमात् प्राक् पौर्णमासी एकपुरोडाशा, सोमादूर्ध्वं द्विपुरोडाशा, अग्नीषोमीयपुरोडाशस्यापि सत्त्वात्। उपांशुयाजः पौर्णमास्यां भवति इत्यवगतम्। स च द्विपुरोडाशायां आग्नेयैन्द्राग्नपुरोडाशद्वयवत्यां स्यात् अन्तरार्थत्वात् अन्तरापदेन उक्तस्य द्वयोर्मध्यदेशस्य अर्थस्य द्विपुरोडाशायामेव संभवात्। 'उपांशुयाजमन्तरा यजति' इति हि श्रुतम्। एकपुरोडाशायां अन्तरापदार्थ एव नास्ति। इति सोमात् प्राक् एकपुरोडाशायां उपांशुयाजो न स्यात् इति पूर्वः पक्षः।

**अजामिकरणार्थत्वाच्च। ६३॥**

जामि आलस्यम्, जामिकरणं आलस्योत्पादनम्, अजामिकरणं आलस्योत्पत्तिर्यथा न स्यात् तथा करणम्, अजामिकरणार्थं पुरोडाशयोर्मध्ये उपांशुयाजः इत्युक्तम् 'जामि वा एतद् यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ, उपांशुयाजमन्तरा यजति अजामित्वाय' इति वाक्ये। तदेतत् पुरोडाशद्वये संभवति। तस्मात् द्विपुरोडाशायां पौर्णमास्यां उपांशुयाजः न तु सोमात् प्राक् एकपुरोडाशायाम्। इति पूर्वपक्षे हेत्वन्तरम्।

**तदर्थमिति चेत्। ६४॥**

तदर्थम्, उपांशुयाजस्य तदर्थं पुरोडाशयोरन्तरालार्थत्वसिद्ध्यर्थं द्विपुरोडाशायामेव सोमोत्तरं पौर्णमास्यां उपांशुयाजः स्यात्। इति चेत्। सूत्रत्रयेणोक्तस्य पूर्वपक्षस्य अनुवादोऽयम्। विचित्रा हि सूत्रकारस्य कृतिर्भवति इति प्रवादः।

**न, तत्प्रधानत्वात्। ६५॥**

न द्विपुरोडाशायामेव पौर्णमास्यां उपांशुयाजः, किन्तु एकपुरोडाशायामपि। तत्प्रधानत्वात् पौर्णमासीप्रधानत्वात् उपांशुयाजस्य। अन्तरालं तु तस्य गुणः। तस्मात् असत्यपि अन्तराले एकपुरोडाशायामपि उपांशुयाजः कर्तव्यः इति सिद्धान्तः।

**अशिष्टेन च संबन्धात्। ६६॥**

अन्तरालस्य आवश्यकत्वे तु अशिष्टेन अविहितेन अन्तरालेन विहितस्य उपांशुयाजस्य संबन्धः कर्तव्यः स्यात्। न च विहितस्य अविहितेन संबन्धो युक्तः। तस्मात् एकपुरोडाशायामपि उपांशुयाजः कर्तव्यः। इति सिद्धान्ते युक्त्यन्तरम्।

**उत्पत्तेस्तु निवेशः स्याद्, गुणस्यानुपरोधेनार्थस्य विद्यमानत्वाद्, विधानादन्तराऽर्थस्य नैमित्तिकत्वात्, तदभावेऽश्रुतौ स्यात्। ६७॥**

अन्तरालस्य विधानं नास्तीति सिद्धान्तोक्तं तुशब्दो निरस्यति। अन्तराऽर्थस्य अन्तरालस्य 'अन्तरा यजति' इति वाक्येन नैमित्तिकत्वात् अपूर्वसाधनत्वेन विधानात् न अविधानम्। तस्य अन्तरालस्य गुणस्य अनुपरोधेन अविरोधेन अर्थस्य द्विपुरोडाशिकायाः पौर्णमास्या विद्य-

मानत्वात् उत्पत्तेः उत्पत्तिवाक्यादेव द्विपुरोडाशायां अन्तराले उपांशुयाजस्य निवेशः स्यात्। तदभावे अन्तरालस्य अभावे असंभवे तु अश्रुतौ अन्तरालवत्त्वेन अश्रुतायां एकपुरोडाशायामपि उपांशुः स्यात्। असंभवस्तु नास्ति द्विपुरोडाशायाः सत्त्वात्। तस्मात् नैकपुरोडाशायामुपांशुयाजः इति पुनः पूर्वपक्षी आह।

**उभयोस्तु विधानात्। ६८॥**

सिद्धान्ती आह 'आज्यस्यैव नौ उपांशु पौर्णमास्यां यजन्' इति पौर्णमासीशब्देन उभयोः पौर्णमास्योः एकपुरोडाशायां द्विपुरोडाशायां च उपांशुयाजस्य विधानात् एकपुरोडाशायामपि स्यात्। उभे अपि हि ते पौर्णमास्यावेव।

**गुणानां च परार्थत्वादुपवेषवद् यदेति स्यात्। ६९॥**

गुणानां च परार्थत्वात् प्रधानार्थत्वात् गुणः अन्तरालं उपांशुयाजार्थे सत् एकपुरोडाशायां उपांशुयाजं निवर्तयितुं नार्हति। तस्मात् अन्तरालस्य गुणस्य शास्त्रं 'यदा इति स्यात्' यदा पौर्णमासी द्विपुरोडाशा, तदा अन्तराले इति स्यात्। उपवेषवत् यथा 'उपवेषेण कपालान्युपदधाति' इति यदा अमावास्यायां उपवेषः, तदा तेन इति गम्यते। पौर्णमास्यां तु उपवेषाभावेऽपि कपालोपधानमस्त्येव। तद्वत् द्विपुरोडाशाभावेऽपि उपांशुयाजः स्यादेव। तस्मात् एकपुरोडाशायामपि सः। इति सिद्धान्ती आह।

**अनपायश्च, कालस्य लक्षणं हि पुरोडाशौ।७०॥**

एकपुरोडाशायामपि उपांशुयाजस्य अनपायः न अपायः अभावः। हि यस्मात् पुरोडाशौ कालस्य लक्षणम्। अन्तरालं उभाभ्यां लक्ष्यते ऐन्द्राग्नात् प्राक्, आग्नेयादुत्तरं चेति। तत्र ऐन्द्राग्नाभावेऽपि आग्नेयादुत्तरत्वेन लक्षितः उपांशुयाजकालः ज्ञायते एव। यथा शङ्खवेलायामागन्तव्यमित्युक्ते खेटखर्वरादौ शङ्खाभावेऽपि तदुपलक्षितायां वेलायामागम्यते। तस्मात् एकपुरोडाशायामपि आग्नेयोत्तरं उपांशुयाजः कर्तव्यः।

**प्रशंसार्थमजामित्वम्, यथाऽमृतार्थत्वम्। ७१॥**

यदुक्तं अजामिकरणार्थत्वात् इति, अत्रोच्यते। अजामित्वं उपांशुयाजस्य प्रशंसार्थं न विधानार्थम्। यथा 'अमृतं वा आज्यं मर्त्यं हविः यदुपस्तृणाति अभिघारयति अमृताहुतिमेवैनां करोति' इति अमृतार्थत्वं आज्यप्रशंसार्थं तद्वत्। तस्मात् सोमात् प्राक् एकपुरोडाशायामपि पौर्णमास्यां उपांशुयाजः कर्तव्यः इति सिद्धान्तः। **के.**

* **द्विबहुपत्नीकप्रयोगे** एकवचनान्तस्यैव मन्त्रस्य ('पत्नीं संनह्य' इति प्रैषमन्त्रस्य) प्रयोगोपपत्तेः न तत्रोहः। **भाट्ट.** ९।३।६.

**§ द्विभागः स्याद् द्विकर्मत्वात्। १०।७।७।२०॥**

अग्नीषोमीये पशौ मैत्रावरुणः द्विभागः स्यात्। शेषभक्षे द्वौ भागौ यस्य स द्विभागः स्यात्। अध्वर्युकर्म प्रैषः, होतृकर्म अनुवचनम्। ते द्वे कर्मणी यस्य स मैत्रावरुणः द्विकर्मा। द्विकर्मत्वात् स द्विभागः स्यात् इति पूर्वः पक्षः।

**एकत्वाद् वैकभागः स्याद्, भागस्याश्रुतिभूतत्वात्। २१॥**

वाशब्दः पूर्वपक्षं व्यावर्तयति। मैत्रावरुणः पशौ शेषभक्षे न द्विभागः स्यात्। किन्तु एकभागः एक एव भागो यस्य तादृशः स्यात्। मैत्रावरुणस्य एकत्वात् भागस्य च अध्वर्युभागस्य होतृभागस्य च मैत्रावरुणस्य अश्रुतिभूतत्वात् श्रुतिभूतत्वाभावात् अश्रुतत्वादित्यर्थः। केवलं चोदकेन प्राप्तिः, तत्रापि मैत्रावरुणस्य एकत्वात् द्वितीयं भागं चोदको न प्रापयति। तस्मात् पशुशेषभक्षे मैत्रावरुण एकभक्षः इति सिद्धान्तः। **के.**

* **द्विरात्राः**। व्युष्टिः, आङ्गिरसः, कापिवनः, चैत्ररथः इति द्विरात्रा अहीनाः द्विसुत्याकाः। तेषु सर्वेषु उत्तरमहः अतिरात्र इति स्थितम्। **कु.** १०।५।१०।४८ सूत्रम्. * **द्विरात्रस्य** द्वितीये अहनि षोडशी ग्रहो गृह्यते 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इति वाक्यात्। **वि.** १०।५।९, * **द्विरात्रे,** अङ्गिरसां द्विरात्राख्ये क्रतौ एव, नान्येषु द्विरात्रेषु इति परिसंख्यायते। इति वृत्तिकारमतम्। १०।५।१३, * द्विरात्रे चयनं कर्तुं शक्यते। १०।८।११.

* **द्विरात्रादयः** एकादशरात्रपर्यन्ताः अहीनाः। तत्र अहीनरूपद्वादशाहधर्मातिदेशः। **वि.** ८।२।५. * **द्विरात्रादीनां** चोदकेन वैकल्पिक एवाग्निः। पुनर्वचनं

तु यदा अग्निः तदा गुणकामानां प्रवृत्तिः इति । **टुप्.** १०।८।११।२७. * **द्विरात्रादौ** अहर्गणे चोदकप्राप्तं कृष्णविषाणाप्रासनं विहितं कण्डूयनमबाधितुं चरमे अहन्येव कर्तव्यम् । **वि.** ११।३।६. * **द्विरात्रादौ** द्वितीयादिरूपे एव अन्तिमे न पत्नीसंयाजान्तत्वम् । **भाट्ट.** ९।१।९ पृ. ६५.

* **द्विरात्राद्यहर्गणेषु** अहीनद्वादशाहगतमध्यदशाहस्य प्रथमद्व्यहादेर्विध्यन्तो ग्राह्यः । **भा.** १०।५।४।१२–१३.

* **द्विरात्रादिविकृतौ** अग्निचयनस्यातिदेशो भवति । अग्न्यतिग्राह्याधिकरणम् । **भा.** १०।८।११।२३–२८.

* **द्विरात्रादिविकृतिषु** द्वादशाहिकदशरात्रगतानां द्वितीयादीनामन्त्यत्वेऽपि यथाप्रकृति पत्नीसंयाजान्ततयैवानुष्ठानं इति पूर्वपक्षे नोहः, सिद्धान्ते तु द्वितीयतया पत्नीसंयाजान्तस्यापि इह अन्त्यतया सकलानुष्ठानं इति प्रयोगविकारात् ऊहः । **सोम.** ९।१।८.

* **द्विरात्रत्रिरात्रादयो** दीर्घसोमाः सोमावृत्त्या । दीर्घसोमे अधिषवणफलकयोः संतर्दनं कार्यम् । **वि.** ३।३।१६, * **द्विरात्रत्रिरात्रादीनां** द्वादशाहः अहीनरूपः प्रकृतिः । १०।५।४.

* **द्विरात्रत्रिरात्रादिविकृतिषु** द्वादशाहस्य आदितः क्रमेण ( द्वितीयमहरारभ्य ) अह्नः अह्नोः अह्नां प्रवृत्तिः । अवशिष्टानां तु लोपः । **वि.** १०।५।१.

**द्विरात्रन्यायः** । द्विरात्राद्यहर्गणेषु अहीनद्वादशाहगतमध्यमदशाहस्य प्रथमद्व्यहादेर्विध्यन्तो ग्राह्यः ॥

**चोदनासु त्वपूर्वत्वाल्लिङ्गेन धर्मनियमः स्यात् । १०।५।४।१२॥**

**भाष्यम्**— सन्ति द्विरात्रादयोऽहर्गणाः 'द्विरात्रेण यजेत' इत्येवमादयः । तेषु किं कृत्स्नस्य द्वादशाहस्य विध्यन्तः प्रवर्तते, उत प्रायणीयोदयनीयौ वर्जयित्वा दशरात्रस्येति । किं प्राप्तम् ? अविशेषात् कृत्स्नस्येति । **एवं प्राप्ते, ब्रूमः** । चोदनासु तासु प्रायणीयोदयनीययोः पूर्वत्वेन असंभवात् दशरात्रस्य विध्यन्तः प्रवर्तते । केन हेतुना ? लिङ्गेन विध्यन्तो नियम्येत । किं लिङ्गं भवति ? एवमाह 'यत्प्रथमं तद्द्वितीयं यद्द्वितीयं तत्तृतीयम्, जगतीमन्तर्गच्छति' इति । एवं ज्ञापयति, यत्प्रथमं द्विरात्रस्य, तद्द्वितीयं द्वादशाहस्य गायत्रम् । यद् द्वितीयं द्विरात्रस्य, तत्तृतीयं त्रैष्टुभम् । जगतीमन्तर्गच्छतीति षडहतृतीयं जागतमहः अन्तरीयमाणं दर्शयन् दशरात्रस्य प्रवृत्तिं दर्शयति । यत्प्रथममिति द्विरात्रस्य वादः, प्रकरणात् । तत्तृतीयमिति द्वादशाहस्य, द्विरात्रे तृतीयाभावात् । अपिच इदमपरं लिङ्गम्, गायत्रं प्रथममहस्त्रैष्टुभं द्वितीयं जगतीमन्तर्गच्छतीति, अन्तराये षडहतृतीयं जागतं दर्शयति । तस्मात् दशरात्रस्य प्रवृत्तिः ।

**प्राप्तिस्तु रात्रिशब्दसंबन्धात् । १३ ॥**

**भाष्यम्**— द्विरात्रेण यजेतेति रात्रशब्दः । इहापि दशरात्र इति स एव । तदेतस्मात् प्रकृतिलिङ्गात् दशरात्रस्य विध्यन्तः इति प्राप्ते लिङ्गदर्शनम् ।

**सोम**— आद्योपादानापवादात् **संगतिः** । **सूत्रार्थस्तु**— द्विरात्रादिचोदनासु प्रायणीयोदयनीययोः अपूर्वत्वात् प्रकृतित्वासंभवात् लिङ्गेन मध्यमदशरात्रधर्मनियमः स्यादिति ।

**वि**— 'द्विरात्रादौ द्वादशाहप्रायणीयादितः क्रमः । आद्यन्तौ वर्जयित्वा वा, विशेषाभावतोऽग्रिमः ॥, द्वादशाहे द्वितीयस्य द्विरात्रे प्रथमत्वतः । जागतस्यान्तरायाच्च विध्यन्तो दशरात्रगः ॥' ( जागतस्य उदयनीयस्येत्यर्थः ) ।

**भाट्ट**— द्विरात्रादिष्वहर्गणेषु सुत्यागणत्वसामान्यात् द्वादशाहस्य प्रवृत्तिरित्युक्तम् । अतश्च प्रायणीयोदयनीययोरपि द्वादशाहे फलवत्त्वेन धर्मग्राहकत्वात्तयोरपि गणनान्तर्गतत्वाविशेषात् द्विरात्रादिप्रकृतित्वम्, अतश्च 'प्रथमस्य प्रथमम्' इत्येवंक्रमेण स्थानसामान्यादपि प्रकृतिविकारभावनियमात् द्विरात्रादौ तृतीयादिप्रभृति द्वादशाहिकाहर्धर्माणां बाधः । **इति प्राप्ते,** प्रायणीयोदयनीयौ वर्जयित्वा मध्यमस्य दशरात्रस्य पृथक्संघातो दशरात्रसमाख्या च श्रूयते 'पृष्ठ्यषडहादारभ्यैव ऐन्द्रवायवाग्रं प्रथममहश्चतुर्थं छन्दोमं अविवाक्यं दशममहः' इत्यादिव्यवहारात् । तस्य च प्रयोजनान्तरासंभवात् द्विरात्राद्यहर्गणान्तराणां स्वमात्रप्रकृतित्वनियामकता । अत एव यत्र प्रयोजनान्तरसंभवः, यथा दशरात्रमध्येऽपि षडहस्य पृथक्संघातक्लृप्तौ । तस्या हि गवामयनादौ दूरस्थषडहस्य फलादिसंबन्धसिद्धिरेव प्रयोजनमिति न तया द्विरात्रादीनां स्वमात्रप्रकृतित्वनियमः ।

प्रकृते तु प्रयोजनान्तराभावात् वैयर्थ्यपरिहारार्थं सत्यपि धर्माणां प्रकृतौ अहर्मात्राङ्गत्वे विकृतौ गणत्वसामान्येन धर्मप्रदेशकता दशरात्रस्यैवेति विज्ञायते । अत एव प्राथम्ययोगाभावे प्रायणीयोदयनीययोर्नामातिदेशेन धर्मप्रेरकत्वेऽपि न क्षतिः । न चैवं दशरात्ररूपविकृतावेव दशरात्रस्य नामातिदेशविधया चोदनालिङ्गातिदेशविधयैव वा सार्थकत्वोपपत्तेः सर्वत्रातिदेशे प्रमाणाभावः । द्विरात्रे 'यत्प्रथमं तद् द्वितीयम्, यद्द्वितीयं तत्तृतीयम्, जगतीमन्तर्गच्छति' इति लिङ्गोपबृंहितात् रात्रान्तशब्दवत्त्वावान्तरसादृश्यविशेषादेव सार्वत्रिकत्वावगतेः । द्विरात्रे यत् प्रथममहः तत् द्वादशाहिकस्य द्वितीयस्याह्नो विकारः इति तदर्थात् । जगतीमन्तर्गच्छति त्यजतीत्यर्थः । प्रायणीयातिदेशे हि द्विरात्रे षडहद्वितीयस्य त्रिष्टुभस्यैव हानं स्यात्, न तु जागतस्य षडहतृतीयस्य । अत इदमप्यपरं लिङ्गम् । तथा द्विरात्रान्तरे 'गायत्रं प्रथमं त्रैष्टुभं द्वितीयम्' इत्यपि लिङ्गम् । प्रायणीयातिदेशे हि तस्य नानाच्छन्दस्कत्वात् नानाच्छन्दस्कं प्रथमं षडहप्रथमस्य च गायत्रत्वात् गायत्रं द्वितीयमिति वाच्यं स्यात् । अतो लिङ्गवशात् सार्वत्रिकत्वसिद्धिः । तेन द्विरात्रादौ चतुर्थप्रभृति द्वादशाहिकधर्माणां बाधः ।

मण्डन— 'अहर्गणे स्युर्दशरात्रधर्माः ।'

शंकर— 'दशाहो मध्यमो गणे ।'

* **द्विरात्रप्रकरणे** 'यत् प्रथममहः तद् द्वितीयम्, यद् द्वितीयं तत्तृतीयम्' इति श्रुतम् । द्विरात्रस्य यत् प्रथममहः, तत् द्वादशाहस्य द्वितीयम्, यच्च द्विरात्रस्य द्वितीयमहः, तत् द्वादशाहस्य तृतीयमहः इति तदर्थः । अनेन प्रकृतिविकारभाव उक्तः । **वि.** १०।५।४.

* **द्विवचनान्तेन** मेधपतिशब्देन बहुदेवत्ये पशौ एकवचनान्तस्य विकल्पः । **भा.** ९।३।१३।४१–४२.

* **द्विषाहस्रं** द्वितीयं चिन्वानश्चिन्वीतेति अग्नौ नैमित्तिकमेव, न नित्यम् । **भा.** ४।३।२।४.

* **द्विसामके** संसवगोसवादौ रथंतरबृहद्धर्माणां व्यवस्था । रथंतरे प्रयुज्यमाने तद्धर्माः प्रयोक्तव्याः, बृहति प्रयुज्यमाने बृहद्धर्माः इति । **भा.** ९।२।१७।४९–५०.

* 'पशुहिंसादिसंबन्धे यज्ञे तुष्यन्ति हि **द्विजाः** ।' 'शूद्रान्नभोजनेनापि तुष्यन्त्यन्ये द्विजातयः ।' **वा.** १।३।३।७ पृ. २०४. * **द्विजानां** ऋणत्रयापाकरणस्य नित्यता । **बिन्दु.** ६।२।११।३१.

* **द्विजत्वम्** । 'द्विर्ह वै यजमानो जायते, मिथुनादन्यत् जायते यज्ञादन्यत् । तद्यन्मिथुनाज्जायते, तदस्मै लोकाय जायते, अथ यद्यज्ञाज्जायते, तदमुष्मै लोकाय जायते' । **जैब्रा.** १।२५९.

* **द्वितीयमध्यायं** 'नानाकर्मलक्षणम्' इत्याचक्षते । **भा.** २।१।१।१ पृ. ३७२.

* **द्वितीयाध्यायस्य द्वितीये पादे** निश्चितविधेयत्वस्य गुणस्य क्व पूर्वत्रासंभवात् भेदकत्वम्, क्व वा फले विधानेन व्यवस्थाऽर्थत्वेन वा पूर्वत्र संभवात् अभेदकता, इति निर्णीतम् । **सु.** पृ. ८८५, * द्वितीयाध्यायस्य **तृतीये पादे** संदिग्धविधेयत्वस्य क्व विधेयत्वात् भेदकत्वम्, क्व वा तदभावात् अभेदकता इति वक्ष्यते । पृ. ८८५, * **द्वितीयाध्याये** अङ्गाङ्गित्वाद्यवधारणार्थत्वेन अनुष्ठानोपयोगित्वात् शास्त्रार्थरूपकर्मभेद एव विचार्यः, नानुपयोगी शास्त्रभेदः, अनुष्ठानपर्यवसायित्वात् मीमांसाशास्त्रस्य । प्राभाकरास्तु शास्त्रभेदमध्यायार्थमाचक्षते । पृ. ५४०. * द्वितीयाध्याये उत्पत्तिरूपा विधेरवस्था निरूपिता । **कणिका.** पृ. ४१२.

* **द्वितीयाध्यायार्थः** 'अनन्तरं प्रधानाप्रधानानि परीक्षिष्यन्ते भिन्नान्यभिन्नानि चेति' । **भा.** २।१।१।१ पृ. ३७१. * द्वितीयाध्यायार्थः । 'उपोद्घातः कर्मभेदमानं तस्यापवादगीः । प्रयोगभेद इत्येते द्वितीयाध्यायपादगाः ॥' द्वितीयाध्यायस्य प्रथमे पादे आख्यातमेव अपूर्वबोधकम्, अपूर्वसद्भावश्च इत्यादिकः कर्मभेदचिन्तोपयुक्तः उपोद्घातो वर्णितः । द्वितीये धातुभेदपुनरुक्त्यादिभिः कर्मभेदः । तृतीये रथंतरादीनां कर्मभेदप्रामाण्यापवादः । चतुर्थे नित्यकाम्ययोः प्रयोगयोर्भेदः । **वि.** प्रस्तावनायां श्लो. १४ । 'मानाधीनस्य धर्मस्य द्वितीये भेद उच्यते ।' द्वितीयाध्यायारम्भे । * द्वितीयाध्यायार्थः । कर्मभेदाभेदवत् फलापूर्वभेदाभेदावपि लक्षणार्थौ इति । **वा.** २।२।१३।२८ पृ. ५६४. * द्वितीयाध्यायार्थः । तदिह षड्विधः

कर्मभेदो वक्ष्यते शब्दान्तरम्, अभ्यासः, संख्या, गुणः, प्रक्रिया (प्रकरणं), नामधेयं इति। तदेतत् नानाकर्मलक्षणं इत्यध्यायं आचक्षते। एतत्तात्पर्येण। अतोऽन्यत् उपोद्घात-प्रसक्तानुप्रसक्तं चेति। **भा.** २।१।१।१ पृ. ३७२. * द्वितीयाध्यायार्थः। 'शब्दान्तरादिभिर्भेदो लक्षणार्थोऽभिधीयते।' **वा.** २।२।१।१ पृ. ४६१.

* **द्वितीयाध्यायोत्तरं** तृतीयः। कुतः? 'भेदो यावन्नावधृतः तावच्छेषशेषिभावो नास्ति' इति। **वा.** ७।१।१।१ पृ. १५२४.

* **द्वितीयादिपञ्च**मान्तेन अध्यायव्यूहेन उत्पत्तिविनियोगप्रयोगरूपविध्यंशनिरूपणपरेण कर्तव्यताविषयः कर्म साङ्गमनुष्ठेयं समधिगतम्। **कणिका.** पृ. ४२९.

* **द्वितीयतृतीयाध्याययोः** संबन्धः 'यस्माद्भेदमविज्ञाय न शक्यं शेषलक्षणम्। विज्ञातुमत एतस्य तदानन्तर्यमुच्यते॥ भिन्नानां हि पदार्थानां शेषशेषित्वसंभवः। एकत्वे नापदिश्येत कः शेषः कस्य शेषिणः॥ भेदानन्तरवक्तव्यं शेषलक्षणमेव च। प्रयोजकक्रमादीनां शेषत्वाधीनचिन्तनात्। अयमेव च संबन्धः संमतोऽध्याययोर्द्वयोः॥' **वा.** ३।१।१।१ पृ. ६४८—४९.

* **द्वितीया** गुणभूतेऽपि भवति यथा 'सक्तून् जुहोति' 'मारुतं जुहोति' 'एककपालं जुहोति' इति। **भा.** २।१।४।११. * द्वितीया चतुर्थ्या बाध्यते। मृग्यमुदाहरणम्। **बाल.** पृ. १४४, * द्वितीया तद्धितेन बाध्यते। मृग्यमुदाहरणम्। पृ. १४४. * द्वितीया तावत् गुणभावं नैव ब्रवीति इति व्याख्यातं सक्त्वधिकरणे (२।१।४।१२)। **वा.** ३।१।७।१४ पृ. ७२१. * द्वितीया मन्त्रवर्णेन बाध्यते यथा उपांशुयाजे अग्नीषोमीययाज्यामन्त्रवर्णेन 'तावब्रूतां आज्यस्यैव नौ' इति। **बाल.** पृ. १४४. * द्वितीया विभक्तिः ईप्सिततमे भवति। **भा.** १०।१।७।१४.

* द्वितीया विभक्तिः। किं गुणकर्मणि द्रव्ये द्वितीया दृष्टेति यतो द्वितीयादर्शनात् (अग्निं संमार्ष्टि) इहापि सामान्यतोदृष्टेन गुणकर्मता? नेति ब्रूमः। द्वितीया विभक्तिः कर्तुरीप्सिततमे स्मर्यते। **भा.** २।१।४।१०। इति चेत् पश्यसि द्वितीयादर्शनात् प्रधानभूतमत्र द्रव्यमिति। नैतदेवम्। गुणभूतेऽपि द्वितीया भवति। तथाहि दृश्यते 'सक्तून् जुहोति, मारुतं जुहोति' इति। ११. **वा**—परस्तु आह, '**अन्वयव्यतिरेकाभ्यामुपकारानुसारिता। शेषत्वस्य, द्वितीया तु प्राधान्यव्यभिचारिणी॥**' तन्नाम प्रमाणं युक्तम्, यदैकान्तिकम्। अनैकान्तिकी च प्राधान्ये द्वितीया, गुणभूतद्रव्योपदेशेऽपि दृष्टत्वात् 'सक्तून् जुहोति' इति। तथा 'प्रयाजशेषेण हवींष्यभिघारयति' इति अन्तरेणापि द्वितीयां आज्यप्राधान्यं दृष्टम्। अतो 'व्रीहीनवहन्ति' इत्यत्र उभयसंभवेऽपि उपकारदर्शनकृतमेव द्रव्यप्राधान्यम्, न द्वितीयाकृतम्। न च तत् संमार्गप्रोक्षणादिषु अस्ति, इति इहापि द्वितीयया द्रव्यमेव उपदिश्यतामिति।

**भा**— न गुणभूतेऽपि द्वितीया। एवं हि अभियुक्ता उपदिशन्ति 'कर्मणि द्वितीया' 'कर्तुरीप्सिततमं कर्म' इति। न च लोके गुणभूते क्वचित् द्वितीयां पश्यामः। यदपि च 'तण्डुलानोदनं पच' इति, ओदनार्थं तण्डुलान् संस्कुरु इति ईप्सिता एव तण्डुलाः। 'बल्वजान् शिखण्डकान् कुरु' इति बल्वजा एव तेनाकारेण संबद्धा ईप्सिता इति तत्राभिप्रायः। लौकिकश्च प्रयोगः शब्दार्थपरिच्छेदे हेतुः, न वैदिकः। या लौकिके जुहोति इति प्रयोगे द्वितीया, शक्यते तत्र वक्तुं ईप्सिततमे एव स प्रयोग इति, 'तण्डुलानद्य जुहुधि' तण्डुलानद्य होमेन संबन्धय इति। लोके भवति हि बहुप्रकारा विवक्षा। अन्यायश्चानेकार्थत्वम्। तेन प्रधानभावेन सिद्धा सती द्वितीया गुणभावेन कल्प्येत। वेदे तु कथं द्वितीयानिर्दिष्टे गुणभावः इति? द्वितीयानिर्देशात् प्राधान्यमेवावगच्छामः। १२। **वा**—तिष्ठतु तावत् प्रयोगः। किं कारणम्? '**आचारत्वात् प्रयोगो हि स्मृत्या सर्वत्र बाध्यते। विवक्षाऽनेकधा चात्र स्मरणे त्वेकरूपता॥**' यदि हि आचारस्य ऐकरूप्यं भवेत्, नैव स्मृतयः प्रयत्नेन धार्येरन्। स एव तु संकीर्णत्वात् अस्फुटः स्मरणेन प्रतिपाद्यते। स्मर्यते च द्वितीयायाः प्राधान्यमर्थः। 'कर्मणि द्वितीया', 'कर्तुरीप्सिततमं कर्म' इति। तथा लोकवेदयोः प्रयुज्यते 'घटं करोति', 'व्रीहीनवहन्ति' इति। यानि च लोके व्यभिचाराशङ्कास्थानानि तान्युदाहरति (भाष्ये) '**तण्डुलानोदनं पच**', '**बल्वजान् शिख-**

ण्डकान् कुरु', 'तण्डुलानद्य जुहुधि' इति। तण्डुलैः बल्वजैः इति च प्रयोक्तव्ये या द्वितीया प्रयुज्यते, तन्नूनं तृतीयासमानार्था सा इति गम्यते। तत्रोच्यते। 'सर्वे पाकादिसंबन्धे द्व्याकारास्तण्डुलादयः। प्राधान्यांशमुपादाय द्वितीया तत्र वत्स्र्यति ॥' यदा पदार्थान्तरभूतौदनशिखण्डकसाधनत्वेन तण्डुलबल्वजाः विवक्ष्यन्ते, तदा तृतीयाऽन्तपदभाजो भवन्ति। यदा तु भोजनयोग्यौदनावस्थापरिणतिरूपेण तण्डुलाः, मार्दवोत्पत्त्यर्थं च शिखण्डकाकारेण बल्वजा दृश्यन्ते। तथा वेदवाक्यावगतगुणभावाश्च ते द्रव्यसाधनके अग्निहोत्रे सुखण्डितास्तिष्ठन्तः रमणीयत्वात् कस्याश्चित् ब्राह्मण्याः स्वकर्मशोभादर्शनार्थं तण्डुलाः होमसंबन्धित्वेन अभिप्रेताः। सा एवं प्रेष्यति गुणकामा वा 'यजमान तण्डुलानद्य जुहुधि' इति, तदा द्वितीयाऽर्थभाक्त्वं भवति। भवति हि लोके बहुप्रकारा विवक्षेति। गुणभूतेऽप्यर्थे केनचित् कारणेन कश्चित् प्राधान्यांशो विवक्ष्यते, तथा प्रधानभूतेषु गुणांशः। कदाचिदुभौ, कदाचिन्नोभौ। न च यत् विवक्ष्यते, तत् शब्देनाभिधातव्यं इत्यस्ति प्रमाणम्। विवक्षासंपत्त्यर्थं तु लक्षणाद्युपायान्तराश्रयणम्, न स्वार्थत्यागः। तस्मात् प्राधान्यमेव द्वितीयाऽर्थः।

* द्वितीया विभक्तिः क्रियासंबन्धे भवति। कारकविभक्तिर्हि सा। कारकं क्रियाया एव भवति, न द्रव्यस्य। भा. १०।२।२८।६५, * द्वितीया विभक्तिः प्रधानविधिलक्षणम्। यथा 'रथंतरं गायति' 'बृहत् गायति' इति। ९।२।२।३. * 'प्रातिपदिकादुच्चरन्ती द्वितीया विभक्तिः प्रातिपदिकार्थो विशेषकः इत्याह' इत्युक्तं भाष्ये। न्यामा. एकादशाध्यायार्थविचारे. * द्वितीयया कर्मकारकविभक्त्या प्राधान्यमवगम्यते कर्मणः। वि २।१।३, * द्वितीयया (ग्रहं संमार्ष्टि) ग्रहस्य उद्देश्यतया प्रयोजनवत्तया च प्राधान्यं गम्यते। ३।१।७. * द्वितीयया देवताविधिः। 'देवताविधिरपि तद्धित–चतुर्थी–मन्त्रवर्ण–द्वितीया–अर्थवादभेदात् पञ्चविधः।' बाल. पृ.२२, * द्वितीयायाः ईप्सितानीप्सितकर्मणोः अनुगतं साध्यत्वं शक्यताऽवच्छेदकम्। पृ. ७५. * द्वितीयायाः उत्पाद्य–आप्य–विकार्य–संस्कार्यात्मकचतुर्विधकर्मसाधारण्यम्। सु. पृ. ९१३.

* द्वितीयायाः कर्मत्वमर्थः। तच्च क्रियाजन्यफलशालित्वम्। 'घटं पश्यति' इत्यत्र दर्शनजन्यज्ञाततायाः घटनिष्ठत्वात् लक्षणसमन्वयः। ननु एवं 'चैत्रो ग्रामं गच्छति' इत्यादौ चैत्रस्य कर्मत्वापत्तिः, क्रियाजन्यसंयोगशालित्वात्। किञ्च त्यजतिगच्छत्योः पर्यायत्वापत्तिः। इति चेत्। अत्र नैयायिकाः। परसमवेतत्वं क्रियाविशेषणम्, धात्वर्थताऽवच्छेदकत्वं फलविशेषणम्। परत्वं च द्वितीयाप्रकृत्यर्थापेक्षया। एवं 'चैत्रो ग्रामं गच्छति' इत्यादौ चैत्रसमवेतव्यापारजन्यधात्वर्थताऽवच्छेदकसंयोगशालितया ग्रामस्य कर्मता। शाब्दबोधोऽपि ग्रामसमवेतधात्वर्थताऽवच्छेदकसंयोगानुकूलग्रामान्यसमवेतव्यापारजनककृतिमान् चैत्रः इति। त्यजतेः विभागफलकव्यापारे शक्तिः इति नोक्तदोषः इत्याहुः।

तच्च कर्म द्विविधम्। 'कर्तुरीप्सिततमं कर्म' (पा. १।४।४९) 'तथायुक्तं चानीप्सितम्' (५०) इति व्याकरणात्। तत्र आद्यं चतुर्धा। उत्पाद्य–प्राप्य–विकार्य–संस्कार्यभेदात्। उत्पत्तिर्नाम येनाकारेण कारकं अभिधानोपात्तम्, तस्य असत एवोत्पादनम्। तस्यैव सतः अप्राप्तस्य प्रापणं प्राप्तिः। तद्गतदृष्टातिशयोत्पादनं विकृतिः। तस्यैव अदृष्टातिशयोत्पादनं संस्कारः इति। यथा यूपं छिनत्ति, घटं कुरुते, पयो दोग्धि, व्रीहीनवहन्ति, व्रीहीन् प्रोक्षति इति। एतदुक्तं वाक्यपदीये 'यदसज्जायते सद्वा जन्मना यत् प्रकाशते। तन्निर्वर्त्यं विकार्यं तु द्वेधा कर्म व्यवस्थितम् ॥ प्रकृत्युच्छेदसंभूतं किञ्चित् काष्ठादि भस्मवत्। किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥ क्रियाकृतविशेषाणां सिद्धिर्यत्र न लभ्यते। दर्शनादनुमानाद्वा तात्त्विकं तत्तु कथ्यते ॥' इति। (चौखम्बामुद्रिते नोपलब्धमिदमस्माभिः। के.)

अनीप्सितमपि चतुर्विधम्। उदासीनम्, द्वेष्यम्, संज्ञान्तरैरनाख्यातम्, अन्यपूर्वकं च। यथा तृणं स्पृशति, विषं भुङ्क्ते, गां दोग्धि, विषमनुक्रुध्यति, अग्निमनुयजति इति च। अत्र ईप्सितत्वानीप्सितत्वयोः शक्तिद्वयं इति सोमेश्वरः। ईप्सितानीप्सितानुवृत्तिसाध्यत्वं न द्वितीयार्थो गौरवात्। न च सूत्रद्वयानर्थक्यम्। 'वारणार्थानामीप्सितः' (पा० १।४।२७) इति 'यवेभ्यो गां वारयति' इत्यत्र

यवानामीप्सितत्वेन अपादानतया ईप्सिततमे गवि द्वितीयाप्राप्त्यर्थत्वात् आद्यस्य, 'विषं भक्षयति' इत्यादौ द्वितीयस्यापि सार्थक्यात्।

'अकथितं च' (पा० १।४।५१)। दुह्याच्यादिद्विकर्मकधातूनां अपादानत्वादिकारकैः असंभवदन्वयं धात्वर्थताऽवच्छेदकफलशालि व्याप्यमानं द्वितीयं कर्म। गां पयो दोग्धि, राजानं याचते वसुधाम्, अजां ग्रामं नयति। गोकर्मकदोहेन पयो भावयति इति बोधः। (पयःकर्मकदोहेन गां भावयति इति—) विपरीतं वा। अत्र धात्वर्थव्याप्यमानमेकं कर्म, व्याप्यव्याप्यमानं द्वितीयम्। अत एव 'तप्ते पयसि दध्यानयति' इत्यत्र द्वितीयकर्मापेक्षया पयसः कर्मत्वेनैव अन्वयः।

'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' (पा० १।४।५२) गत्यर्थकबुद्ध्यर्थकप्रत्यवसानार्थकानां शब्दकर्मकाणां अकर्मणां च शयनाद्यर्थकधातूनां अण्यतानां समभिव्याहारे यः कर्ता, स तेषां ण्यन्तानां समभिव्याहारे कर्म। गुरुं ग्रामं गमयति, शिष्यं शास्त्रं बोधयति, मन्त्रं यजमानं वाचयति, विष्णुं शाययति। अत्रापि व्याप्यमानत्वम्।

'हृक्रोरन्यतरस्याम्' (पा० १।४।५३) हरणार्थकानां करणार्थकानां च समभिव्याहारे द्वितीया तृतीया च। शिष्येण शिष्यं वा भारं हारयति कारयति च। तस्मात् साध्यत्वं द्वितीयार्थः इति **पार्थसारथिः**।

यत्र च द्वितीयाऽर्थस्य न साक्षात् क्रियाऽन्वयः तत्र उपपदविभक्तित्वम्। यथा 'अन्तराऽन्तरेणयुक्ते' (पा० २।३।४) त्वां मां च अन्तरा अन्तरेण वा हरिरस्ति। अत्र संबन्धे द्वितीयाया लक्षणा। उभयसंबन्ध्यन्तरालवर्ती हरिः इति बोधः।

'कालाध्वनोरत्यन्तसंयोगे' (पा० २।३।५) कालाध्ववाचिपदसमभिव्याहृतद्वितीयायाः अत्यन्तसंयोगो व्याप्तिरर्थः। 'मासमधीते, क्रोशं पर्वतस्तिष्ठति'। मासाभिव्याप्तिविशिष्टमध्ययनम्, क्रोशाभिव्याप्तिविशिष्टपर्वतस्थितिः इति बोधः। अभिव्याप्तेः पर्वतसंबन्धित्वात् उपपदविभक्तित्वम्।

'कर्मप्रवचनीययुक्ते द्वितीया' (पा० २।३।८) उपलक्षणाद्यर्थक— अनु—प्रति— पर्यादिसमभिव्याहृतकर्मप्रवचनीयसंज्ञकानां योगे द्वितीया। जपमनु प्रावर्षत्, नदीमन्ववसिता सेना, अनु हरिं सुराः, उप हरिं सुराः, वृक्षं प्रति परि अनु वा विद्योतते विद्युत्, भक्तो विष्णुं प्रति परि अनु वा, लक्ष्मीर्हरिं प्रति परि अनु वा, वृक्षंवृक्षं प्रति परि अनु वा सिञ्चति, हरिमभि वर्तते।

'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि' (पा० २।३।१२) अध्वभिन्ने गत्यर्थानां कर्मणि एते स्तः चेष्टायां गम्यमानायाम्। ग्रामं ग्रामाय वा गच्छति। **मणि.** पृ. १२९–१३२.

* द्वितीयायाः त्यागप्रक्षेपांशविषयौपचारिकव्याप्यत्वाभिधानाख्यकर्मैवाचित्वम्। सु. पृ. ६३२.

* **द्वितीयाऽन्तेन** ईप्सिततमं यत् साधनम्, तत् उच्यते। **भा.** २।२।५।१४. * द्वितीयान्तेन शब्देन नहि देवता उद्दिश्यते प्रमाणाभावात्। **टुप्.** १०।१।७।१४ पृ. १८११.

* **द्वितीयाऽन्तादिपदानां** तावत् क्रियापदं विना निराकाङ्क्षत्वाभावस्य उभयवादिसिद्धतया क्रियाप्रतिपादकपदस्य विशेष्यप्रतिपादकत्वस्य अवश्यम्भावात्। **रहस्य.** पृ. ४१.

* **द्वितीयाऽर्थस्तु** 'कर्मणि द्वितीया' (पा० २।३।२) इति सूत्रात् कर्मत्वम्। तदपि भावनायामेव अन्वेति। **अत्र विवदन्ते**। तत्र **नवीनतार्किकास्तावत्** (**इत्याहुः** इति परस्तात् दूरान्वयः) धात्वर्थानधिकरणत्वे सति धात्वर्थताऽवच्छेदकफलशालित्वं कर्मत्वम्। पच्यादिधात्वर्थो हि फलावच्छिन्नो व्यापारः, तदवच्छेदकीभूतफलस्य विक्लृत्यादेः देवदत्तवृत्तिव्यापारानधिकरणीभूतौदनवृत्तित्वात् ओदनादेः कर्मत्वं इति लक्षणसमन्वयः। गमनफलस्य संयोगस्य ग्रामे इव चैत्रेऽपि सत्त्वात् धात्वर्थानधिकरणत्वे सति इति, चैत्रस्य गमनरूपधात्वर्थाधिकरणत्वात्। गमनजन्यपूर्वदेशविभागशालिनि पूर्वदेशे गमनानधिकरणत्वविशिष्टधात्वर्थजन्यफलशालित्वस्य सत्त्वात् अतिव्याप्तिः। एवम् 'वृक्षात् भूमौ पर्णं पतति' इत्यत्र पतनक्रियाजन्यसंयोगविभागरूपफलाश्रययोः भूमिवृक्षयोः अतिव्याप्तिः। अतो धात्वर्थताऽवच्छेदकेति फलविशेषणम्। एवं च गमेः संयोगः एव, त्यजेर्विभागः एव (फलम्)। पतति-

स्पन्दत्यादेः नैव किञ्चित् फलं धात्वर्थताऽवच्छेदकं इति नोक्तातिव्याप्तिः। फलपदं च क्रियाजन्यफलपरम्। तेन धात्वर्थताऽवच्छेदकव्यापारत्वमादाय व्यापारे, अधोदेशमादाय अधोदेशावयवे च नातिव्याप्तिः। "पततेः अधोदेशसंयोगः फलम्। अत एव 'नरकं पतति' इत्यपि प्रयोगः" इति **केचित्**।

**ननु** 'ग्रामं गमयति चैत्रो मैत्रम्' इत्यत्र मैत्रे कर्मत्वलक्षणस्य अव्याप्तिः, मैत्रस्य गमनरूपधात्वर्थाधिकरणत्वात्। **न च** 'सनाद्यन्ता धातवः' (पा० ३।१।३२) इति वचनात् णिजन्तस्य धातुसंज्ञात्वावगतेः णिजन्तगमिधात्वर्थस्य गमनानुकूलव्यापारस्य मैत्रे अभावात् नाव्याप्तिः, तदर्थताऽवच्छेदकस्य गमनाख्यफलस्य मैत्रे सत्त्वेन विशेष्यदलस्यापि सत्त्वात् इति **वाच्यम्**। तथात्वे ग्रामस्य कर्मत्वानुपपत्तेः। न च 'णिजन्तस्य धातुत्वेऽपि गमेरपि धातुत्वानपायात् ग्रामस्य तत्कर्मत्वोपपत्तिः' तथात्वे 'पाचयति चैत्रो मैत्रेण' इत्यत्रापि मैत्रस्य कर्मत्वापत्तेः। न चेष्टापत्तिः, द्वितीयाऽन्तत्वापत्तेः। 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' (पा० २।४।५२) इत्यनेन सूत्रेण गत्यादीनां धातूनां अण्यन्तानां यः कर्ता, स ण्यन्तानां कर्म इत्यर्थकेन गत्यादिभिन्नधातुयोगे कर्मसंज्ञानिषेधेन तत्रापि इष्टापत्तेः कर्तुं अशक्यत्वात्। 'हृक्रोरन्यतरस्याम्' (पा०२।४।५३) इति सूत्रेण हारयतिकारयतिधातुयोगे विकल्पेन कर्मसंज्ञाविधानात् 'हारयति कारयति कटं भृत्येन, हारयति कारयति कटं भृत्यम्' इति प्रयोगद्वयावगतेः। तत्र भृत्ये धात्वर्थताऽवच्छेदकीभूतप्रयोज्यव्यापाररूपफलाश्रयत्वस्य सर्वदा सत्त्वेन कर्मत्वतदभावयोः वक्तुमशक्यत्वात्। **एतेन** स्वप्रकृत्यर्थभिन्नसमवेतक्रियाजन्यधात्वर्थताऽवच्छेदकफलशालित्वं कर्मत्वं **इत्यपास्तम्**। 'पाचयति चैत्रो मैत्रेण' इत्यादौ अतिव्याप्तेः। **इति चेत्, न**। तत्तत्क्रियाव्यक्तिभेदेन कर्मत्वानां भेदात्। इतरथा उभयकर्मजसंयोगस्थले चैत्रस्य स्वभिन्नमैत्रसमवेतकर्मजन्यसंयोगाश्रयत्वात् 'चैत्रो मैत्रं गच्छति' इत्यत्र चैत्रस्य कर्मत्वापत्तेः। अन्यथा मैत्रस्यापि क्रियासमानाधिकरणफलाश्रयत्वात् कर्मत्वापत्तिः। अतः तत्तत्क्रियान्तर्भाविनैव (णैव) लक्षणं निर्वाच्यम्। तथात्वे चैत्रनिष्ठक्रियायाः परसमवेतत्वाभावादेव तत्र नातिव्याप्तिः। ततश्च यत्क्रियाजन्यधात्वर्थताऽवच्छेदकफलशालि सत् यत् यत्क्रियानधिकरणम्, तत् तत्क्रियाकर्म इति विशिष्यैव कर्मत्वनिरुक्तिः। परसमवेतयत्क्रियाजन्यधात्वर्थताऽवच्छेदकफलशालि यत्, तत् तत्क्रियाकर्म इति वा निरुक्तिः। पच्यादिक्रियामादायैव लक्षणसमन्वयः स्पष्ट एव। 'चैत्रो मैत्रं गच्छति, मैत्रश्चैत्रम्' इत्यत्र तत्तत्कर्तृनिष्ठक्रियामादाय गमयति इत्यादौ च गमिक्रियामादाय ग्रामस्य तदनुकूलव्यापाररूपणिजर्थमादाय मैत्रस्य कर्मत्वं निर्वाच्यम्। 'घटं भावयति' इत्यादौ तु णिजर्थमादायैव, भूधातोरकर्मकत्वात्। पाचयति इत्यादौ च पच्यर्थमादायैव ओदनस्य, न तु अनुकूलव्यापारमादाय मैत्रस्य, उक्तसूत्रानुरोधात्। अत एव तत्र णिजर्थः अकर्मक एव। अथवा तस्यापि ओदन एव कर्म, विक्लृत्यनुकूलत्वाविशेषात्। एवं च हारयतिकारयतिनिरूपितकर्मत्वनिरुक्तौ तृतीयाऽन्तपदानभिधेयत्वमपि देयम्। तेन हरणादिकर्तुः पाक्षिककर्मत्वाविघातः। एवं गमिपतत्यादौ विवक्षा सप्तम्यन्तपदानभिधेयत्वं वा देयम् (परसमवेतगमिक्रियाजन्यफलशालित्वेन विवक्षितं यत्, तत् गमिक्रियाकर्म इति विवक्षा लक्षणे देया, परसमवेतगमिक्रियाजन्यफलशालित्वे सति सप्तम्यन्तपदानभिधेयत्वं गमिकर्म इति सप्तम्यन्तपदानभिधेयत्वं वा देयं इत्यर्थः)। तेन 'ग्रामे गच्छति, नरके पतति' इत्यादिप्रयोगस्यापि उपपत्तिः। न चैवं तत्तत्कर्मत्वानां भेदात् द्वितीयायाः शक्तिग्रहानुपपत्तिः, लाघवेन वृत्तित्वे अभावे च द्वितीयायाः शक्तेः। पदार्थान्तराणां अन्यलभ्यत्वेन तत्र शक्तिकल्पनायां गौरवात्। तथाहि। 'ग्रामं गच्छति' इत्यत्र द्वितीयार्थो वृत्तित्वं धात्वर्थताऽवच्छेदके संयोगे अन्वेति। तज्जनकं गमनं धात्वर्थ एव। (एवं द्वितीयार्थो भावोऽपि प्रतियोगितासंबन्धेन धात्वर्थ एव।) ग्रामादिश्च प्रकृत्यर्थो द्विविधेऽपि द्वितीयार्थे। एवं च ग्रामनिष्ठाभावप्रतियोगिग्रामवृत्तिसंयोगजनकगमनानुकूलकृतिमान् इत्यादिः शाब्दबोधः। यदि तु गमनात्यन्ताभावोऽपि चैत्रे कालिकाव्याप्यवृत्तित्वात् आशङ्क्येत, तदा परसमवेतेत्यादि— अन्योन्याभावघटितलक्षणमादाय भेदो द्वितीयाऽर्थः। स च प्रतियोगितासमवायोभयघटितसामानाधिकरण्यसंबन्धेन

गमनान्वयी। ततश्च ग्रामनिष्ठभेदप्रतियोगिसमवेतग्रामवृत्तिसंयोगजनकगमनवान् इत्यादिः शाब्दबोधः। वस्तुतस्तु भेदाव्याप्यवृत्तित्वमते चैत्रे गमनवद्भेदस्य तुल्यत्वात् तद्वारणाय प्रकृत्यर्थो ग्रामो भेदे प्रतियोगितासंबन्धेन अन्वेति। भेदश्च अभावीयविशेषणतासमवायोभयघटितसामानाधिकरण्यसंबन्धेन गमने अन्वेति। ततश्च ग्रामप्रतियोगिकभेदवत्समवेतग्रामवृत्ति इत्यादिः शाब्दबोधः। अत एव आधेयत्वापरपर्यायवृत्तित्वार्थकस्तमीतः वृत्तित्वार्थकद्वितीयायाः भेदः, भेदाद्यर्थस्य अधिकत्वात्। अयं चापरो विशेषः। यत् द्वितीयाऽर्थो वृत्तित्वं धात्वर्थतावच्छेदके फले एवान्वेति, सप्तम्यर्थस्तु वृत्तित्वं धात्वर्थे नामार्थे वा इति। एवं 'ग्रामस्य गन्ता' इत्यादौ कर्मणिषष्ठीस्थलेऽपि बोध्यम्। एवं 'चैत्रेण ग्रामो गम्यते' इत्यात्मनेपदेन फलं भेदश्च अभिधीयते। तत्र प्रथमाऽन्तपदोपस्थाप्यो ग्रामः प्रतियोगिताकत्वसंसर्गेण भेदान्वयी। स च धात्वर्थगमने सामानाधिकरण्यसंबन्धेन, स च धात्वर्थो गमनं पुनः आत्मनेपदार्थे फले जन्यत्वसंबन्धेन, तच्च आश्रयत्वेन नामार्थे ग्रामे। ततश्च चैत्रकर्तृक–ग्रामभिन्नसमवेतसंयोगजनकगमनजन्यसंयोगाश्रयो ग्रामः इत्येवं शाब्दबोधः। एवम् 'पक्व ओदनः' इत्यत्र कर्मकृत्प्रत्ययस्थलेऽपि। तत्र तु अयं विशेषः, कृदर्थः प्रतियोगी भेदः वृत्तित्वं आश्रयश्च। ओदनः अभेदेन प्रतियोगिनि, स च स्वनिष्ठप्रतियोगितानिरूपकत्वसंबन्धेन भेदे, स च सामानाधिकरण्येन क्रियायाम्, सा च स्वजन्यफलद्वारा (फलवृत्तित्वसंबन्धेन) वृत्तित्वे, तच्च निरूपकत्वसंबन्धेन आश्रये, स च अभेदेन ओदने इति ओदनाभिन्नप्रतियोगिकभेदवृत्तिक्रियाजन्यफलनिष्ठाधेयतानिरूपकाश्रयाभिन्नः ओदनः इति विशिष्टबोधः। अनुभवानुसारेण व्युत्पत्तिवैचित्र्यस्य अदोषत्वात्।

ननु एवं भेदे प्रतियोगिनः प्रतियोगितामात्रेण वा अन्वयः, अन्वयिताऽवच्छेदकावच्छिन्नप्रतियोगिताकत्वेन वा? नाद्यः वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्य चैत्रेऽपि सत्त्वेन 'स्वं गच्छति चैत्रः' इति प्रयोगापत्तेः, अन्वयिताऽवच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्तिभङ्गापत्तेश्च। नान्त्यः। 'जलं गच्छति' जलं इत्यत्र जलत्वावच्छिन्नप्रतियोगिताकभेदस्य जले अभावात्। इति चेत्–(न) धात्वर्थताऽवच्छेदकफलाश्रयत्वं यद्व्यक्तेः तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वेन प्रतियोग्यन्वयस्य वाच्यत्वात्। एवं च व्युत्पत्तिभङ्गभिया जलपदं जलविशेषे लाक्षणिकम्। तत् सिद्धं वृत्तित्वं भेदश्च द्वितीयार्थ इति। न चैवं तृतीयाऽन्तपदानभिधेयत्वादेरपि वाच्यत्वापत्तिः, तस्य अन्यलभ्यत्वेन वाच्यत्वे गौरवात्। 'कारयति कटं मैत्रम्' इत्यादिप्रयोगस्य इष्टत्वेन वाच्यतया प्रवेशे प्रयोजनविरहात्। भेदस्य अवाच्यत्वे 'स्वं गच्छति' इति प्रयोगापत्तिर्बाधिका। न तु अत्र तथा किञ्चित् बाधकम्। अतो न तस्य वाच्यत्वं इति दिक्।

एवं च यत्र एतादृशकर्मत्वबाधः तत्र 'घटं जानाति मैत्रः, इच्छति, कुरुते' 'घटस्य ज्ञाता' इत्यादौ सविषयपदार्थाभिधायिधातुयोगे द्वितीयाषष्ठ्योः विषयत्वे लक्षणा। घटविषयकज्ञानाश्रयो मैत्रः इति शाब्दबोधः। 'मैत्रेण ज्ञायते' इत्यादौ तु कर्मप्रत्ययेन विषयत्वं लक्ष्यते। मैत्राश्रितज्ञानविषयो घटः इति च बोधः। 'ज्ञातो घटः' इत्यादिकर्मकृत्सु तु विषये लक्षणा, तस्य च घटे अभेदान्वय इति द्रष्टव्यम्। नष्टः इत्यादौ प्रतियोगिनि। न तु अत्र परसमवेतत्वप्रवेशो वैयर्थ्यात्, 'स्वात्मानं जानामि' 'आत्मानमात्मना वेत्सि' इत्यादिप्रयोगाच्च। एवं अकथितकर्मादौ कर्मप्रवचनीययोगनिमित्तकद्वितीयायां च लक्षणैव। इत्याहुः (नवीनतार्किकाः इत्यस्य अत्रान्वयः)।

अत्रेदमवधेयम्। यदि फलावच्छिन्नो व्यापारो धात्वर्थः, तदा द्वितीयाऽऽद्यर्थवृत्तित्वस्य पदार्थैकदेशे संयोगादौ फले अन्वयात् एकदेशान्वयनिबन्धनो व्युत्पत्तिभङ्गः। न च चैत्रस्य नप्ता, चैत्रादन्यः इत्यादावपि तदाश्रयणम्, षष्ठ्याद्यर्थस्य परंपरासंबन्धस्य विशेष्ये एव अन्वयोपपत्तेः, पञ्चम्यर्थस्यापि प्रतियोगित्वादेः परंपरासंबन्धेन अन्वयाङ्गीकाराच्च। किञ्च। किमिदं फलस्य अवच्छेदकत्वम्? न तावत् तत्तद्धातुशक्यताऽवच्छेदकत्वम्, विशिष्टशक्तौ प्रमाणाभावात्। 'चैत्रो ग्रामं गमयति मैत्रम्' इत्यादिणिजर्थरूपधात्वर्थस्य अवच्छेदकीभूते गमनरूपे फले अव्याप्तेः। अथ फले पृथगेव धातोः शक्तिः, तस्य च व्यापारे प्रकारत्वमेव अवच्छेदकत्वं इति चेत्, न,

तृतीयाऽऽद्यर्थकरणत्वादौ, पाचयति इत्यत्र णिजर्थविशेषणीभूते पाके च अतिव्याप्तेः। अतः स्वरूपसंबन्धात्मकं अवच्छेदकत्वं पदार्थान्तरमेव वा कल्प्यम्। तच्च धर्मिग्राहकप्रमाणेन यदाश्रये द्वितीया प्रामाणिकी, तत्रैव कल्प्यते नान्यत्र इति वाच्यम्। न च तत्र शाब्दव्यवहारातिरिक्तं किञ्चित् प्रमाणमस्ति। तद्वदेव वक्ष्यमाणविधया कर्मत्वादिकारकाणां अखण्डोपाधिरूपाणां द्वितीयादिवाच्यत्वकल्पनोपपत्तेः न आधेयत्वादेः अनेकव्युत्पत्तिकल्पनाऽऽपादिका वाच्यत्वकल्पना युक्ता समाश्रयितुम्। तथाहि। द्वितीयायास्तावत् वृत्तित्वे भेदे च शक्तिः इत्यनेकशक्तिकल्पना। धातोश्च फलावच्छिन्नव्यापारे एका, फले व्यापारे च नाना शक्तिः इति कल्पना। अस्मन्मते तु पूर्वोक्तविधया तत्तत्फलावच्छिन्नव्यापारवृत्तिपाकत्वगमनत्वादिकमेव तत्तद्धातुशक्यताऽवच्छेदकं इति न अनेकशक्तिकल्पना। पुनश्च भवन्मते फलस्य तत्त्वेन बोधे पूर्वदेशविभागस्यापि क्रियाजन्यत्वाविशेषात् 'पूर्वदेशं गच्छति' इति प्रयोगापत्तिः। संयोगत्वादिना बोधे वृक्षस्थितस्यैव सर्वस्य मूलदेशात् अग्रदेशं गच्छतः 'वृक्षं गच्छति' इति प्रयोगापत्तिः तत्तदवयवसंयोगनाशेन अवयविसंयोगानां नाशात् तया क्रियया जनिताग्रसंयोगेन अभिनवस्यैव अवयविसंयोगस्य उत्पत्तेः। नहि अवयविसंयोगः न धात्वर्थताऽवच्छेदकः, 'ग्रामं गच्छति' इति प्रयोगानापत्तेः। अतः तदुत्तरदेशसंयोगस्यैव फलत्वं वाच्यम्। उत्तरत्वं च तत्तत्क्रियापूर्वदेशघटितं इति अनन्तशक्तिकल्पना लक्षणा वा। न च तत्तत्फलानुभवबलादेव सा न दोषः, अनुभवस्य अनुमानादिनाऽपि संभवेन शाब्दत्वे एव विप्रतिपत्तौ धातुजन्यत्वे सुतरां प्रमाणाभावात्। इतरथा फलस्य धातुवाच्यत्वं द्वितीयावाच्यत्वं वा इति भवद्ग्रन्थे नानापक्षप्रतिपादनानुपपत्तेः। नहि 'घटमानय' इत्यत्र घटो धातुवाच्यः नामपदवाच्यो वा इति पक्षान् कश्चित् प्रतिपादयति। अत एव गमनत्वादिनैव क्रियायाः धातुतः अनुभवात् वस्तुतः तत्तत्फलावच्छिन्नक्रियावृत्तिगमनत्वादिकमेव तत्तद्धातुशक्यताऽवच्छेदकं इत्युक्तं प्राक्। तदेवं भवन्मते शक्त्यानन्त्यं तावत् स्फुटमेव। व्युत्पत्त्यानन्त्यमपि। 'ग्रामं गच्छति' इत्यत्र तावत् प्रातिपदिकार्थस्य ग्रामस्य तत्तत्संसर्गभेदेन वृत्तित्वे भेदे च अन्वयात् व्युत्पत्तिद्वयम्। पुनश्च अन्वयिताऽवच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्तिभङ्गः, तदभङ्गाय वा ग्रामप्रातिपदिकेन ग्रामविशेषलक्षणा इति दोषः। द्वितीयाऽर्थस्य च भेदस्य निरुक्तसामानाधिकरण्यसंबन्धेन क्रियायाम्, वृत्तित्वस्य च साक्षात्संबन्धेन फले इति व्युत्पत्तिद्वयम्। 'स्वं गच्छति' इति प्रयोगवारणार्थं भेदो वा द्वितीयाऽर्थः समवायो वा, ग्रामस्य च तस्मिन् समवाये स्वप्रतियोगिकभेदवद्वृत्तित्वं संसर्गः, समवायस्य च साक्षात्संबन्धेन क्रियायामन्वयः इत्यस्यापि सुवचत्वेन विनिगमनाविरहश्च।

**एतेन**— फलं भेदश्च द्वितीयाऽर्थः, आधेयत्वं फले प्रकृत्यर्थसंसर्गः, फलस्य च जनकत्वेन अवच्छेदकत्वेन वा व्यापारे अन्वयः, व्यापारमात्रं धात्वर्थः, तत्तद्धातुसमभिव्याहाराच्च द्वितीयायाः फलविशेषबोधकत्वं इत्यपास्तम्। अनेकशक्तिकल्पनादेः तदवस्थत्वात्। एवं 'ग्रामस्य गन्ता' इत्यादिकर्मणिषष्ठीस्थले शक्त्यनेकत्वं व्युत्पत्त्यनेकत्वं विनिगमनाविरहश्च इति बोध्यम्। 'ग्रामो गम्यते' इति कर्माख्याते च आत्मनेपदस्य फले भेदे च शक्त्यन्तरकल्पनम्, ग्रामस्य प्रथमाऽन्तपदोपस्थाप्यस्यापि आख्यातार्थे भेदे अन्वयकल्पनम्, तस्य भेदस्य प्रत्ययार्थस्यापि धात्वर्थव्यापारे अन्वयकल्पनम्, तस्य च व्यापारस्य धातूपस्थापितफलं प्रति विशेष्यभूतस्यापि पुनः जन्यत्वसंबन्धेन आत्मनेपदार्थे फले अन्वयकल्पनम्, तस्य फलस्य च आश्रयतासंबन्धेन प्रथमाऽन्तपदोपस्थाप्ये ग्रामे अन्वयकल्पनं इति दोषाः।

किञ्च ग्रामपदस्य आत्मनेपदस्य च न तावत् युगपदेव प्रकारतया विशेष्यतया च बोधजनकत्वं विरोधात्। विशेषणताऽवच्छेदकप्रकारकविशेषणनिश्चयस्य अनुदयेन विशिष्टवैशिष्ट्यबोधात्मकस्य अनुभूयमानस्य अपलापापत्तेश्च। नापि क्रमिकबोधद्वयजनकत्वम्, जनितान्वयबोधे नैराकाङ्क्ष्यात्। एकतरशाब्दबोधवेलायां इतरशाब्दबोधानुत्पत्तौ प्रतिबन्धकान्तरकल्पनाऽऽपत्तेश्च। एवं 'पक्व ओदनः' इत्यत्र कर्मकृत्स्थलेऽपि द्रष्टव्यम्।

यत्तु— भेदो न द्वितीयाऽर्थः अपितु आधेयत्वादिकमेव । न चैवं 'चैत्रश्चैत्रं गच्छति' इति प्रयोगापत्तिः 'आ कडारादेका संज्ञा' ( पा० १।४।१ ) इति सूत्रेण एकसंज्ञाप्रयुक्तकार्यसत्त्वे संज्ञाऽन्तरप्रयुक्तकार्यनिषेधात् । प्रकृते च परत्वात् कर्तृसंज्ञाप्रयुक्तकार्यस्य आवश्यकत्वेन कर्मसंज्ञाप्रयुक्तद्वितीयाऽऽयनापत्तेः । अतो न तत्प्रयुक्तशक्त्यन्तरकल्पनाद्यापत्तिः इति— **तन्न** । 'स्वं जानामि' 'चैत्रोऽहं स्वात्मानं जानामि' 'आत्मानमात्मना वेत्सि' इत्यादौ एकसंज्ञाऽवरोधेऽपि संज्ञान्तरप्रयुक्तकार्यदर्शनात् । न च शरीरमनोरूपावच्छेदकभेदमादाय तत्र असांकर्योपपादनम्, तथात्वे स्वपदप्रयोगानुपपत्तेः । 'चैत्रश्चैत्रं गच्छति' इति प्रयोगेऽपि शरीरप्रदेशान्तरावच्छिन्नात्मादिभेदकल्पनोपपत्तेश्च । इतरथा 'चैत्रो मैत्रं गच्छति' इति प्रयोगस्यापि अनापत्तेः ( अनवच्छिन्नस्यात्मनो गमनासंभवात् ) । वस्तुतः फलाश्रयत्वसत्त्वे चैत्रेऽपि द्वितीयाप्रसक्तौ सूत्रवशेनापि संज्ञान्तरप्रयुक्तकार्योपस्थितेः तत्प्रतिबन्धकत्वकल्पने तवापि गौरवस्य सत्त्वाच्च । मम तु अखण्डोपाधिरूपस्य कर्मत्वस्य परसमवेतक्रियाजन्यफलशालित्वसमनियतस्यैव कल्पनात्, चैत्रे तस्य अप्रसक्तत्वादेव न प्रतिबध्यप्रतिबन्धकभावकल्पना इति विशेषः । अतः उक्तयुक्त्या लाघवात् कर्मत्वं अखण्डोपाधिरूपमेव द्वितीयाऽर्थः । तच्च उक्तकर्मत्वलक्षणसमनियतमेव । तत्रैव गौःकर्मकमानयनम्, ओदनकर्मकः पाकः, ग्रामकर्मकं गमनं इतिव्यवहारात् । तच्च धर्मिग्राहकप्रमाणेन ससंबन्धिकमेव कल्प्यते इति तस्य तत्तद्धात्वर्थनिरूपितत्वसिद्धिः । तत्तद्धात्वर्थस्तु तत्तत्फलावच्छिन्नव्यापारविशेषत्वसमनियताखण्डोपाधिरूपपाकत्वगमनत्वरूपशक्यताऽवच्छेदकधर्मावच्छिन्नो व्यापारविशेषः इत्युक्तमेव । तत्तद्धात्वर्थनिरूपिततत्तत्कर्मत्वानां भेदेऽपि भवन्मते आधेयत्वस्येव कर्मत्वस्यापि अखण्डस्य स्वीकारात् तस्य एकस्यैव शक्यताऽवच्छेदकत्वेन न अनेकशक्तिकल्पना । निरूपकीभूतधात्वर्थताऽवच्छेदकावच्छिन्नगमनाद्यन्वयवशाच्च 'चैत्रस्य घटः' इतिवत् कर्मत्वविशेषलाभः । अतश्च 'चैत्रश्चैत्रं गच्छति' 'चैत्रः पाचयति मैत्रम्' इत्यादिप्रयोगापत्तिशङ्कैव दुर्लभा । 'ग्रामे गच्छति कारयति चैत्रो मैत्रेण' इत्यादौ तु कर्मत्वाविवक्षायां अधिकरणत्वादिविवक्षया सप्तम्यादिप्रयोगोऽपि अविरुद्धः । एवं च द्वितीयायां एकैव शक्तिः । प्रातिपदिकार्थस्य च तृतीयादिसाधारण्येन सुबर्थे कर्मत्वादौ अन्वयात् एकैव व्युत्पत्तिः । तस्य च उद्देश्यत्वेन वा स्वनिरूपकधात्वर्थजनकत्वेनैव वा आख्यातार्थकृतौ अन्वयात् अपरा इति लाघवम् । एवं कर्मणिषष्ठीस्थलेऽपि । कर्माख्यातस्थले तु पूर्वोक्तनीत्या आख्यातेन कर्मत्वलक्षणायामपि प्रथमाऽर्थस्य पूर्वोक्तविधया ( पाणिनिमतेन ) प्रातिपदिकार्थस्य स्ववृत्तिकर्मत्वनिरूपकधात्वर्थजनकत्वसंसर्गेण कृतौ अन्वयः । ( कात्यायनमतेन— ) कर्मत्वस्य प्रथमाऽर्थत्वे तु स्वनिरूपकधात्वर्थजनकत्वसंसर्गेणैव । कर्मकृत्स्थले तु 'पक्व ओदनः' इत्यादौ पाकस्य कृत्प्रत्ययलक्ष्यायां कृतौ, तस्याश्च निरूप्यत्वसंसर्गेण तल्लक्ष्ये एव कर्मत्वे, तस्य च आधारत्वसंबन्धेन कृत्प्रत्ययार्थे कर्मणि, तस्य च अस्तीत्याख्यातार्थे इति वक्ष्यते । कर्मकृत्स्वपि 'पाककर्मीकृतः' इति विवरणानुरोधेन कारकान्वयानुरोधेन च कृतिलक्षणायाः वक्ष्यमाणत्वाच्च । अतश्च लाघवात् द्वितीयाऽर्थकर्मत्वस्य उक्तसंबन्धेन कृतौ एवान्वयः इति सिद्धम् ।

**न च** द्वितीयाऽर्थकर्मत्वस्य निरूपकतासंबन्धेन धात्वर्थे एव अन्वयोऽस्तु इति **वाच्यम्** । धात्वर्थस्यापि कारकत्वेन भावनाऽन्वयस्य उपपादितत्वात् तत्साधारण्येन कारकत्वप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति भावनाविशेष्यतासंबन्धेन लिङ्गानन्वयिपदजन्योपस्थितिः कारणं इति एकेनैव कार्यकारणभावेन कर्मत्वादीनामपि अन्वयोपपत्तौ तदनेकत्वे गौरवात् । धात्वर्थान्वयार्थे उपस्थितस्य भावनाविशेष्यत्वस्यैव कर्मत्ववृत्तिप्रकारतानिरूपकत्वकल्पनोपपत्तौ अनुपस्थितस्य धात्वर्थविशेष्यत्वस्य तत्कल्पनाऽनुपपत्तेश्च । 'काष्ठैरोदनं पचति' इत्यस्य 'काष्ठैः पाकैः ओदनं करोति' इति विवरणात्, विवरणवाक्ये च काष्ठादीनां कृञर्थे अन्वयावश्यकत्वेन पचति इत्यत्रापि तत्रैव अन्वयप्रतीतेश्च । तत् सिद्धं कर्मत्वादि अखण्डमेव द्वितीयार्थो भावनाऽन्वयी इति ।

यत्तु— न कर्मत्वं आश्रयत्वं वा द्वितीयाऽर्थः, तथात्वे आश्रयत्वत्वादेः गुरुभूतस्य शक्यताऽवच्छेदक-

त्वापत्तेः कर्मत्वादिरूपाखण्डोपाधिसत्त्वे प्रमाणाभावाच्च। अपि तु आश्रयस्यैव द्वितीयाऽर्थत्वम्। तस्य च धातूपात्ते फले अन्वयः। एवं करणादिरेव तृतीयाऽऽद्यर्थः। एवं च 'कर्तृकरणयोस्तृतीया' (पा० २।३।१८) 'कर्मणि द्वितीया' (पा० २।३।२) इत्याद्यनुशासनमपि संगच्छते इति कैश्चिदुक्तम्– तन्न। संबन्धवाचिषष्ठीस्थले प्रातिपदिकार्थस्य प्रत्ययार्थे संबन्धे भेदेन अन्वयाङ्गीकारात् इहापि व्युत्पत्त्यन्तरकल्पनागौरवपरिहारार्थं भेदसंबन्धबोधाय कर्मत्वादावेव द्वितीयादेः शक्तिकल्पनात्। न चैवम् 'ऐन्द्रं दधि' इत्यादौ तद्धितस्य देवताविशिष्टद्रव्यवाचिनोऽर्थे देवतायां इन्द्रप्रातिपदिकार्थस्य इन्द्रस्य अभेदेनापि अन्वयदर्शनात् व्युत्पत्त्यन्तरस्यापि आवश्यकत्वम्, तद्धितस्यापि देवतात्वविशिष्टद्रव्ये एव शक्त्यङ्गीकारेण तत्रापि इन्द्रस्य आधेयतासंबन्धेनैव अन्वयाङ्गीकारात्। न च एवं षष्ठ्यादौ सर्वत्र लाघवात् धर्मिण्येव शक्तिकल्पनात् अभेदान्वयेनैव सर्वत्र प्रकृत्यर्थप्रकारता अस्तु इति वाच्यम्। तथात्वे ग्रामाभिन्नो य आश्रयत्ववान् तदाधेयसंयोगजनकं गमनं इत्यादिशाब्दबोधापत्तेः (बोधोपपत्तेः इति तु मुद्रितम्) आश्रयत्वादिकं किंनिरूपितं इति जिज्ञासाया: अपरिहार्यत्वात्। अतो न धर्मी द्वितीयाऽर्थः, अपि तु आधेयत्वं कर्मत्वमेव वा अखण्डम्। उभयथाऽपि फलस्य व्यापारस्यैव वा निरूपकस्य शाब्दबोधे एव लब्धत्वात् न निरूपकजिज्ञासाऽऽपत्तिः। कर्मत्वत्वस्यापि च अखण्डस्य एकस्यैव शक्यताऽवच्छेदकत्वाङ्गीकारात् न गौरवम्। आश्रयत्वमेव च तत्तन्निरूपकभेदेन भिन्नं इति तवैव (आश्रयो द्वितीयाऽर्थः इति आश्रयत्वस्य शक्यताऽवच्छेदकत्वं वदतः) गौरवं इति दिक्।

अत एव 'समर्थः पदविधिः' (पा० २।१।१) इति सूत्रे 'क्रियाकारकयोः संबन्धस्य द्वितीया वाचिका भवति' इति महाभाष्यं संगच्छते। एवंविधकर्मत्वबाधे तु सविषयकधातुसमभिव्याहारे तार्किकरीत्यैव विषयत्वादिकं द्वितीयाऽऽदिना लक्षयित्वा आख्यातेन च आश्रयत्वं लक्षयित्वा 'घटविषयकज्ञानाश्रयत्वं चैत्रीयम्' इति 'चैत्रो जानाति घटम्' इत्यत्र शाब्दबोधः। एवं कर्मषष्ठीकर्माख्यातकर्मकृत्स्वपि बोध्यम्। न तु इह परसमवेतत्वस्य आवश्यकता। अत एव 'स्वात्मानं जानामि' इत्यादि प्रयोगः। नहि अत्र मुख्यं कर्मत्वमस्ति क्रियाजन्यफलाभावात्, अपि तु विषयित्वे लक्षणा। साऽपि नानुशासनिकी, येन तदर्थमपि कर्मसंज्ञा प्रसज्येत। अपि तु 'गङ्गायां घोषः' इतिवत् सांप्रतिकी। अतश्च कर्मत्वाभावेन कर्मसंज्ञाया अभावात् न 'आ कडारादेका संज्ञा' (पा० १।४।१) इत्यस्य बाधः।

ननु विभक्तौ लोके न लक्षणा 'सुपां कर्मादयोऽप्यर्थाः संख्याश्चैव तथा तिङाम्। प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा॥' इति कात्यायनवार्तिकविरोधात्। अत्र हि सुपां तिङां च कर्मत्वादि संख्याश्च एकत्वादिकाः येन शास्त्रेण अर्थ इति प्रतिपाद्यते, तत्र अर्थनियमः प्रसिद्धः इति तृतीयचरणस्यार्थः। स च एकत्वे एकवचनमेव, कर्मणि द्वितीयैव इत्याकारकः। चतुर्थचरणे तु प्रकृत्यर्थापेक्षया प्रत्ययनियमः। स च 'कर्मण्येव द्वितीया, एकत्वे एव एकवचनम्' इत्याकारकः। उभयथाऽपि विभक्तेः अर्थान्तरे वारणात् न विभक्तौ लक्षणा। अत एव 'छन्दसि सुपां सुपो भवन्ति' इति लक्षणाप्रतिप्रसवरूपं व्यत्ययानुशासनं छन्दसि उपपद्यते। इतरथा लोकवदेव वेदेऽपि तदुपपत्तेः व्यत्ययानुशासनवैयर्थ्यापत्तिः। एवम् 'कर्मणि षष्ठी' इत्यादिलक्षणानुशासनस्यापि वैयर्थ्यं शक्यसंबन्धावगमस्य प्रमाणान्तरेणैव सिद्धेः। अतो न लोके विभक्तौ अनुशासनं विना क्वापि लक्षणा इति चेत्। न। प्रातिपदिकादिष्विव विभक्तावपि लक्षणायां बाधकाभावात् उक्तवार्तिकस्य लक्षणायामपि अविरोधात्। तथाहि। अर्थनियमपक्षे तावत् कर्मणि द्वितीयैव न तु तृतीयाऽऽदिविभक्त्यन्तरं इति सजातीयशब्दान्तरव्यावृत्तावपि द्वितीयायाः अर्थान्तरे निवारणाभावस्य महाभाष्ये स्पष्टत्वात्। इतरथा निःसंख्येभ्यः अव्ययेभ्योऽपि सुपामनापत्तेः। एवं च करणत्वादौ तृतीयैव इत्यस्यापि नियमात् विभक्त्यन्तरार्थे विभक्त्यन्तरस्य परं न लोके लक्षणा, न तु विषयत्वादावपि। प्रत्ययनियमपक्षेऽपि प्रकृतकर्मत्वैकत्वादिरूपसुप्तिङर्थापेक्षयैव तन्नियमकरणात् अप्रकृतविषयत्वादिलक्षणायां न कोऽपि दोषः। स्पष्टं च इदमपि तत्रैव। अत एव 'जानाति' इत्यादितिङोऽपि

आश्रयत्वादौ लक्षणा इत्युक्तं प्राक् । एवं च छन्दसि व्यत्ययानुशासनमपि प्रकृतविभक्त्यन्तरार्थविषये प्रतिप्रसवरूपतया नासंगतम् । कर्मणि षष्ठी इत्यादिकं च लोकवेदसाधारण्येन । न चैवं लोके 'अक्षीणि मे प्रदर्शनीयानि, पादा मे सुकुमाराः' इत्यादिमहाभाष्योदाहृतप्रयोगेषु प्रतिप्रसवाभावात् प्रकृतद्वित्वे बहुवचनस्य प्रयोगानुपपत्तिः, तत्र अक्षित्वादिजातिविवक्षायां 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' (पा० १।२।५८) इति वचनेन प्रतिप्रसवात् । अतः सिद्धं विभक्त्यन्तरार्थभिन्ने विषयत्वादौ युक्तैव लक्षणेति । यदा तु 'सामान्यापेक्ष एव प्रत्ययनियमः' इति महाभाष्यकारीयं व्याख्यानान्तरं अभ्युपगम्यते, तदा कात्यायनीयं नियमद्वयमपि इदं शक्तिनियामकं निरूढलक्षणानियामकं च तस्याः शक्तितुल्यत्वात् । तथा च प्रकृते अप्रकृते वा अर्थे अनुशासनं विना न शक्तिः निरूढलक्षणा वा । सांप्रतिकलक्षणायास्तु न क्वापि प्रकृते अप्रकृते वा निषेधः ।

**नचैवं** अव्ययेभ्योऽपि संख्याभिन्नेऽर्थे सांप्रतिकलक्षणया सुबुत्पत्तेः 'अव्ययादाप्सुपः' (पा० २।४।८२) इति ज्ञापकबलादव्ययेषु सुबुत्पत्तिपक्षो महाभाष्यकारीयो न संगच्छते इति **वाच्यम्** । तस्य लाक्षणिकार्थाविवक्षायामपि शब्दसाधुत्वार्थमपि सुबुत्पत्तिः इत्येवं ज्ञापनार्थत्वात् । न चैवं छन्दसि व्यत्ययानुशासनवैयर्थ्यम्, तस्य निरूढलक्षणात्वज्ञापनार्थत्वात् निषिद्धत्वप्रतिप्रसवार्थत्वाच्च । तथाहि । सांप्रतिकी लक्षणा क्वचिन्नैव भवति । अत एव भट्टवार्तिके 'यत्र आर्षे लाक्षणिके अर्थे प्रयोगानुपपत्तिस्फुरणं विनाऽपि अर्थस्मरणम्, तत्र निरूढलक्षणा, यत्र तत्स्फुरणपूर्वकं काव्याद्याधुनिकप्रयोगः, तत्र सांप्रतिकी लक्षणा' इति लक्षणाभेदमुपपाद्य 'काश्चिन्नैवाप्रयोगतः' इत्यनेन प्रयोगाभावे न लक्षणा इत्युक्तम् । उदाहृतं च रूपं वस्त्रं इति । इतरथा मत्वर्थलक्षणया प्रयोगः केन वार्येत । अत एव एनां निषिद्धलक्षणा इत्याचक्षते । तस्याश्च वेदेऽपि प्रसक्तौ प्रतिप्रसवार्थं व्यत्ययानुशासनमिति । सर्वथा सिद्धम् 'घटं जानामि' इत्यादौ विषमत्वे लक्षणा इति । वस्तुतस्तु नात्र लक्षणा, मुख्यकर्मत्वस्यैव उपपत्तेः । तथाहि, ज्ञातो घट इत्यादिप्रतीत्या ज्ञानजन्या ज्ञेयनिष्ठा ज्ञाततापरनामविषयता फलम्, तच्छालित्वं च घट इति मुख्यकर्मत्वोपपत्तिः । न च भावकार्यस्य समवायिकारणजन्यत्वनियमात् भूतभाविस्थले च तदभावात् फलाभावः । ध्वंसस्य प्रामाणिकत्वे भावत्वस्य व्याप्यताऽवच्छेदककोटिप्रवेशवत् विषयताया अपि प्रामाणिकत्वे लघुना समवेतत्वेनैव कार्यत्वस्य विशेषणात् । अतश्च ध्वंसवदेव विषयताया अपि निमित्तकारणमात्रजन्यत्वमेव इत्यन्यत्र विस्तरः ।

एवं च परसमवेतत्वसिद्ध्यर्थम् 'स्वं जानाति' इत्यादौ शरीरमनोभेदकल्पनात् 'आ कडारादेका संज्ञा' इत्यस्याप्युपपत्तिः । अथवा परसमवेतत्वादिघटितलक्षणसमनियताखण्डोपाधिरूपकर्मत्वे शक्तिः, तद्बाधात्तु 'स्वं जानाति' इत्यादौ धात्वर्थताऽवच्छेदकफलशालित्वमात्रे विषयित्वमात्रे वा लक्षणा इति न विरोधः । 'चैत्रः स्वं गच्छति' इत्यादौ तु न लक्षणयाऽपि प्रयोगः, अप्रयोगेण निषिद्धलक्षणात्वात् इति ध्येयम् ।

तत् सिद्धं 'कर्मणि द्वितीया' इति सूत्रात् कर्मत्वं अखण्डोपाधिरूपं द्वितीयाऽर्थः आख्यातार्थान्वयी इति । उक्तं च तन्त्रवार्तिके 'विभक्तयो हि कारकशक्तिं निष्कृष्य अभिधाय क्रियां विशिंषन्ति' इति ।

**न्यायसुधाकारस्तु** 'कर्तुरीप्सिततमं कर्म' इति सूत्रात् ईप्सितकर्मत्वमेव द्वितीयार्थः । 'तथायुक्तं चानीप्सितम्' इतिसूत्रात् अनीप्सितत्वे निरूढलक्षणा इत्याह । तन्न । ईप्सितानीप्सितत्वरूपविशेषस्य प्रमाणान्तरलभ्यत्वेन लाघवात् कर्मत्वे एव शक्तेः । यथा चैवं सति न सूत्रद्वयवैयर्थ्यम्, तथा कौस्तुभे विचारः ।

तच्च कर्म चतुर्विधम्, उत्पाद्यं आप्यं विकार्यं संस्कार्यं चेति । घटं करोति, घटं जानाति, व्रीहीनवहन्ति, व्रीहीन् प्रोक्षति इत्युदाहरणानि । **पार्थसारथिस्तु**, साध्यत्वमेव द्वितीयाऽर्थः । आप्यकर्मादावपि तत्फलोपहितत्वेन साध्यता इत्याह । तदपि जन्यत्वत्वस्य शक्यताऽवच्छेदकत्वे गौरवात् उपेक्षितम् । शक्तताऽवच्छेदकं तु द्वितीयात्वं अमादिनिष्ठो व्यापको धर्मः । एवमग्रेऽपि ।

यानि तु अन्यानि द्वितीयाऽर्थानुशासनानि, तानि प्रचुरप्रयोगाभावात् लाक्षणिकानुशासनानि । तथाहि । दुह्

परीक्ष्यताम् ॥, चोदनामानतैवात्र प्रथमं साध्यतां गता। अनपेक्षतया तस्य यतो मुख्यत्वमाश्रितम् ॥ '

**भाट्टे**— इदं सूत्रं उत्तरसूत्रेण सह एकाधिकरणत्वेन स्वीकृतम्।

**मण्डन**— 'निष्कृष्याध्यायतात्पर्यं ब्रवीति सुखसिद्धये।'

**शंकर**— 'न तन्मानापरीक्ष्यता।' अपरीक्ष्यता न किन्तु परीक्ष्यमेव तन्मानम्। ४.

* **धर्मवोचनं** नाम साम अनूक्रम्। **बाल.** पृ. ७२.

* **धर्मशब्दः** अपूर्ववाची इति गौतमीयाः। अपूर्वसाधनयागादिवाची इति मीमांसकाः। **बाल.** पृ. १.

* **धर्मशब्देन** यः पुरुषं निःश्रेयसेन संयुनक्ति स उच्यते। **भा.** १।१।२।२, * य एव श्रेयस्करः स एव **धर्मशब्देनोच्यते**। यो हि यागमनुतिष्ठति तं धार्मिक इति समाचक्षते। तेन यः पुरुषं निःश्रेयसेन संयुनक्ति स धर्मशब्देनोच्यते। १।१।२।२ पृ. १७–१८.

* **धर्मशास्त्रातिक्रमेण** यत् क्रियते न तस्य (शब्दप्रवृत्तेः) निमित्तत्वं स्यात् यथा शूद्रकृतस्याधानस्य न आहवनीयादिप्रयोगनिमित्तत्वम्। **वा.** २।३।२।३ पृ. ५८२.

* **धर्मसंहिताः** प्रायेण मनुगौतमवसिष्ठादिप्रणीताः समानेष्वर्थेषु वर्तन्ते। **वा.** १।३।८।२४ पृ. २५६.

* **धर्मसाधारण्यस्य** सप्तमाद्ये निषेत्स्यमानत्वेन...। **सु.** पृ. ६३४.

* **धर्मसूत्रं** गौतमीयं छन्दोगैरेव परिगृहीतम्, वासिष्ठं बह्वृचैरेव, शङ्खलिखितोक्तं वाजसनेयिभिरेव, आपस्तम्बीयबौधयनीये तैत्तिरीयैरेव प्रतिपन्ने। **वा.** १।३।७।१५ पृ. २४४, * **धर्मसूत्राणां** सर्वेषां वर्णाश्रमधर्मोपदेशित्वात् धर्माणां चैकरूपप्रायत्वात् परस्परसंवादित्वं युक्तम्। १।३।८।२७ पृ. २८५.

* **धर्मिकल्पनातो धर्मकल्पनैव वरं** इति न्यायः। **संग्रहः.**

⌛ **धर्मिकल्पनातो धर्मकल्पना वरीयसीति न्यायः।** धर्मकल्पनायाः श्रेष्ठत्वं च लाघवप्रयुक्तमिति। स्पष्टोऽयम्। **साहस्री.** ४२.

⌛ **धर्मिकल्पनातो धर्ममात्रकल्पना लघीयसी इति न्यायश्चेह बोध्यः।** ङकारादयो हि धर्मिण एव त्वया पाठ्याः, मया तु उभयपठनीयस्य ईकारस्य कलत्वमात्रं कल्प्यमिति। **शब्दकौस्तुभः** १ अन्ते. * ननु वह्निनिष्ठा जातिः प्रमाणसिद्धा। तथा च '**धर्मिकल्पनातः**' इति **न्यायात्** तस्या एव अवच्छेदकत्वं कल्प्यते न शक्तिः। **शक्तिवादे रुचिदत्तः** न्यायचिन्तामणिटीकाकारः.

⌛ **धर्मिभेदाद्धर्मभेदो लघीयान्।** भेदश्रुत्यवष्टम्भेऽपि 'धर्मि॰ यान्' इति **न्यायेन** वागादीनां संभूय देहचालनादिहेतुसामान्यव्यापारसंभवात् न प्राणाख्यं पदार्थान्तरं कल्प्यम् (पूर्वपक्षे)। **न्यायनि.** २।४।५।९ ब्रसू.

* '**धवं च खदिरं च** द्वावानय' इत्यादौ वाक्ये यथा क्रमाभिहितयोरपि धवखदिरयोर्द्वित्वान्वयः तथा समासेऽपि धवखदिराभ्यां स्मृत्यारूढाभ्यां द्वित्वान्वयसंभवः। **रत्न.** ६।१।५।२२ वर्णकं २, * '**धवखदिरावानय**' इति वाक्ये यथा युगपद्वचनताभावेऽपि चकारवशादेव इतरेतरयोगो गम्यते तथा 'धवखदिरौ' इति चार्थे विधीयमानेन द्वंद्वेनैव तत्सिद्धेर्न युगपदभिधानं कल्प्यम्। ६।१।५।२२ वर्णकं २.

* **धातुः** (अभिधात्री श्रुतिः) द्विविधः भूवादिकः सनाद्यन्तश्च। **बाल.** पृ. ४१. * **धातुः** इति स्तरणचयः अभिधीयते। (स्तरणार्था बर्हिर्मुष्टयः स्तरणचयः) यथा— लूनस्य बर्हिषः त्रिधातु पञ्चधातु वा इति सकलस्य स्तरणविधानात्। **वा.** ३।८।१७।३२, * धातुः यस्य कारकस्य अवान्तरव्यापारं प्राधान्येनाह, स कर्ता। ३।४।४।१३ पृ. ९१७. * **धातवः** अनेकार्थाः। 'क्रियावाचित्वमाख्यातुमेकैकोऽर्थो निदर्शितः। प्रयोगतोऽनुमातव्या अनेकार्था हि धातवः ॥' इति स्मृतिः। **सु.** पृ. ११३५. * धातवोऽपि भावनां न मुञ्चन्ति तथा चाहुः 'करोतिरर्थेष्विव सर्वधातून्' इति। (विभज्य सेनां परमार्थकर्मा सेनापतींश्चापि पुरंदरोत्थः। नियोजयामास स शत्रुसैन्ये करोतिरर्थेष्विव सर्वधातून् ॥) **वा.** २।१।१।१ पृ. ३८०, * धातवो नामशब्दाश्च बहव एव प्रतिदेशं अर्थभेदेषु व्यवस्थिता दृश्यन्ते। तथा चोक्तम् 'शवतिर्गतिकर्मा कम्बोजेष्वेव दृष्टो विकारापन्नं आर्याः प्रयुञ्जते 'शवम्' इति

मृतशरीराभिधानात्' इत्यादि । १।३।४।८. * धातवः । प्रकृतयः एव एकेषु जनपदेषु प्रयुज्यन्ते, विकृतय एव एकेषु इत्युपक्रम्य निरुक्तकृता (प्रकृतय एवैकेषु भाष्यन्ते विकृतय एवैकेषु इति निरुक्तम् २।१।२ पृ. १२७) शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते, विकारमस्य आर्याः (आर्येषु इति मूले) भाषन्ते 'शवः' इति इत्युक्तम् । कम्बोजेष्वेव जनपदविशेषेषु शवतिर्धातुः गतिवाची दृष्टः । आर्यास्तु जनपदविशेषाः 'ऋदोरप्' इति अप्–प्रत्ययान्तत्वेन विकारापन्नं शवतिधातुं न गतौ प्रयुञ्जते, शवशब्देन मृतस्याभिधानात् । महाभाष्यकृता तु 'विकारापन्नमार्या भाषन्ते' इति पाठान्तरमुदाहृतम् । (पृ. २९) मुद्रितमहाभाष्ये सकैयटे तु 'विकारमेनमार्या भाषन्ते' इति पाठः । न केवलं शवतिरेव देशविशेषे व्यवस्थितः, किन्तु अन्येऽपि बहवो धातवो नामशब्दाश्च व्यवस्थिता एव दृश्यन्ते । प्राच्येषु हि जनपदेषु दातिर्धातुः लवनार्थो दृश्यते, लुनाति इत्यस्मिन्नर्थे द्यति इति प्रयोगात् । तमेव दात्रं इति ष्ट्रन्–प्रत्ययान्तत्वेन विकारापन्नं उदीच्याः प्रयुञ्जते । 'प्राच्येषु गच्छतीत्यर्थे मध्यमेषु च रंहतिः ('मध्यमेषु वरं हति' इति सुधापाठस्तु अशुद्धः) । हन्ततिश्च (हम्मतिश्च इति महाभाष्यपाठ एव अत्र ग्राह्यः) सुराष्ट्रेषु गमिस्त्वार्येषु भाष्यते ॥' सु. पृ. २०८, * धातवः यथा धात्वर्थं न व्यभिचरन्ति तथा भावनामपि । पृ. ५६५. * धातवः विचित्रशक्तयः प्रयोज्यप्रयोजकोभयव्यापारवचनत्वेन भावार्थाधिकरणे दर्शिताः। तेषां सहकारिकारणसंनिधानात् कदाचित् काचित् प्रसिद्धिव्यतिरेकेणापि शक्तिरभिव्यज्यते। वा. ३।४।११।३१ पृ. ९६८, * धातुं इकूश्तिबन्तं अर्थेऽपि क्वचित् प्रयुञ्जते यजिः यजतिः इति च । तत् शब्दे अभिहिते लक्षणया अर्थप्रतीतिः इत्यवगन्तव्यम् । २।१।१।१पृ. ३७९, * धातोः अनुवादता—'सर्वत्राख्यातसंबद्धे श्रूयमाणे पदान्तरे । विधिशक्त्युपसंक्रान्ते स्याद्धातोरनुवादता ॥' १।४।२।३ पृ. ३२८. * धातोः उद्देश्यपरत्वे संभवति उपपदस्य अन्याय्यत्वात् । भाट्ट. ७।१।१. * धातोः एकस्य अर्थभेदेन सकर्मकत्वाकर्मकत्ववत् तत्पर्यायाणामपि तदभ्याहृतम् । मणि. पृ. १०९.

* धातोः द्व्यर्थस्य भेदेनार्थे कथ्यमाने यागेन इति विशेषरूपं करणात्मना निष्कृष्टम्, इतरत्तु भावनात्मकं सामान्यरूपं शब्दान्तरे भावयेत् इति अनेन कथ्यते । वा. २।१।१।१ पृ. ३८०. * धातोः फलभावनाकरणवाचित्वे श्येनादिशब्दानां तत्सामानाधिकरण्यात् नामधेयता सिध्यति । सु. पृ. ६२१, * धातूनां अनेकार्थत्वात् । स्त्रीसंयुक्तस्य गमेः मैथुनवाचित्ववत् स्पर्शवाचिनोऽपि आलभतेः प्राणिसंयुक्तस्य यागवाचित्वकल्पना न विरुद्धा । पृ. ९३३. * धातूनां अस्ति अनेकार्थत्वम् । वा. ३।२।९।२५ पृ. ७८३. * धातूनां उत्पत्त्यादिरूपं फलं तदनुकूलो व्यापारश्च वाच्यः इति वैयाकरणाः । मणि. पृ. १०० । फलमेव धात्वर्थः । अनुकूलव्यापारः प्रत्ययार्थः इति मण्डनः । पृ. १०१ । व्यापार एव धात्वर्थः इत्यन्ये । १०२ । व्यापारो धात्वर्थः इति रत्नकोशकारः । १०७. * धातूनां विचित्रशक्तित्वम् 'कदाचिदभिधीयमानकर्मशक्त्याक्षिप्तप्रयोज्यव्यापारः स्वयमाक्षिप्तप्रयोज्यव्यापारो वा' इत्यादि भावार्थाधिकरणवार्तिके दर्शितम् । (वा. पृ. ३७७–७८) । सु. पृ. १५०५.

* 'धात्वर्थोऽपि यथाऽऽख्याते सत्त्वभूतः प्रतीयते। सत्त्वाभिधायिना नाम्ना तादृङ्नैवोपनीयते ॥' वा. २।३।११।२४ पृ. ६१६, * धात्वर्थोऽपि स्वयमितिकर्तव्यताकाङ्क्षः सन् गुणार्थमपि प्रस्थितामेतां (इतिकर्तव्यतां) ग्रहणसमर्थः सन् किमिति परित्यजेत् । ६।३।१६।४३ पृ. १०६९, * धात्वर्थः असत्त्वभूतः अत्र (मासं जुहोति) जुहोतिना विधेरुपनीयते । न च तादृशस्यैव द्रव्यभूतलिङ्गसंख्यायोग्यार्थाभिधायिभिः अग्निहोत्रादिपदैः अभिधीयमानत्वं इत्यप्रत्यभिज्ञानात् सोऽपि भिद्यते । २।३।११।२४ पृ. ६१६, * धात्वर्थ एव न भाव इत्युक्तम् । ३।४।४।१२ पृ. ९०३, * धात्वर्थः तदनुरक्ता च भावना सर्वत्र आख्याते विज्ञायते । २।१।१।१ पृ. ३७५, * धात्वर्थः तावत् प्रकृत्यैव साध्यात्मकः, विशेषतस्तु आख्यातगतेन धातुना उच्यमानः । स यदि फलसाधनत्वेन चोद्यते, ततः असिद्धरूपत्वात् तस्य साधनाकाङ्क्षायां सत्यां नामपदं गुणविधित्वेन नामधेयत्वेन वा उभयथाऽपि दृष्टेनैव तादर्थ्यं लभते । ...'साध्या-

त्मकोऽपि धात्वर्थो यदा नाम्नाऽभिधीयते । तदा द्रव्यवदेवासौ निष्पन्नात्मा प्रतीयते ॥' यद्यपि वस्तुस्वरूपेण धात्वर्थः साध्यः, तथापि नामपदेनोच्यमानो लिङ्गसंख्यायोगित्वात् सिद्धरूपोऽभिधीयते । अभिधानकृता च आकाङ्क्षोत्पत्तिः, न वस्तुकृता । तस्मात् युक्ता धातोरेव आकाङ्क्षा, न नाम्न इति । २।१।१।१ पृ. ३८८–८९. * धात्वर्थः न क्रिया मीमांसकमते । **सोम.** ३।४।८ पृ. २६७. * धात्वर्थः न फलमात्रम्, नापि व्यापारमात्रम्, त्यजिगम्योः पर्यायतापत्तेः । अतः फलव्यापारौ धात्वर्थः । **मणि.** पृ. १०४. * धात्वर्थः पाकः–पक्तिः–पचनं इत्यादिशब्दैर्व्यवह्रियमाणो लिङ्गसंख्याकारकयोग्यः सिद्धस्वभावः । 'करोति' इति शब्देन व्यवह्रियमाणो लिङ्गसंख्याऽऽद्यपेतः साध्यस्वभावः । तत्र सिद्धस्वभावद्योतनाय यथा घञ्प्रत्ययादयो विहिताः, तथा साध्यस्वभावद्योतनाय आख्यातप्रत्ययविधिः । **वि.** २।१।१ वर्णकं २. * **धात्वर्थाः** यस्यां भावनायां करणं भवन्ति, तस्यां ते वस्त्वन्तरनिरपेक्षाः पश्चात्तनं अरुणैकहायनीन्यायलभ्यं इतिकर्तव्यतासंबन्धं लभन्ते । यस्यां पुनः गुणानां करणत्वम्, तस्यां धात्वर्थविशेषाद्विना करणत्वानुपपत्तेः साध्यभूतो धात्वर्थः अपरः अपेक्षितव्यः । नहि व्यापारसामान्यस्य गुणैरुत्पत्तिः शक्या । **वा.** ३।६। १६।४३ पृ. १०६९, * **धात्वर्थमनुपनीय** गुणः स्वतन्त्रः इतिकर्तव्यतां ग्रहीतुं न शक्नोति, इति धात्वर्थमाश्रयति । ३।६।१६।४३ पृ. १०६९, * धात्वर्थमुल्लङ्घ्य गुणाभिमुखं गच्छन्ती इतिकर्तव्यता न शक्नोति गन्तुं इति धात्वर्थमुखे तावत् पतति । ३।६।१६।४३ पृ. १०६९. * धात्वर्थं प्रति भावनायाः विशेष्यत्वम् 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः, तयोः प्रत्ययः प्राधान्येन' इति स्मृतिवशादेव अविवादम् । अत एव न तस्य प्रत्ययार्थं प्रति प्रकारता । विशेष्यगामित्वे संभवति प्रकारगामित्वस्य अन्याय्यत्वात् । **रहस्य.** पृ. ४६–४७. * 'अनूद्य चापि धात्वर्थं गुणः सर्वो विधीयते' । **वा.** १।४।३।४ पृ. ३३४, * **धात्वर्थेनैव** भावनोपसर्जनधात्वर्थनिष्पत्त्यर्थत्वात् कारकाणां संबन्धसिद्धिः । २।१।१।१ पृ. ३८२, * धात्वर्थेन फलकरणभूतेन अन्यथाऽनुपपत्त्या अपूर्वं भाव्यते । २।१।१।१ पृ. ३७६. * धात्वर्थेन हि सा (करणापेक्षा) शीघ्रं निवर्त्यते । **वा.** २।२।११। २६ पृ. ५४९ । धात्वर्थस्य व्यापाररूपत्वात् साक्षात् कारकत्वोपपत्तेः भावनाऽवच्छेदकत्वोपपत्तेश्च शीघ्रं करणाकाङ्क्षानिवर्तकत्वम् । **सु.** पृ. ८४७, * **धात्वर्थस्य** अनिष्पन्नस्य करणत्वायोगः । पृ. ७६७, * धात्वर्थस्यैव करणत्वम् । **ननु** आख्यातस्य भावनावाचिनः फलपदान्वयेऽपि करणाकाङ्क्षायां नामार्थस्यापि करणत्वोपपत्तेः कथं धात्वर्थस्य करणत्वसिद्धिः ? **उच्यते** । धात्वर्थानुरक्तभावनावाचितया धात्वर्थसंबद्धानां स्वर्गोत्पादनाभिधायित्वात् प्रत्यासत्तेः धात्वर्थस्यैव करणत्वावगतिः इति । **ननु** एकप्रत्ययोपादानश्रुत्या धात्वर्थनिरपेक्षायाः भावनायाः विध्यन्वयात् स्वर्गादिपुरुषार्थफलत्वेऽवगते करणाकाङ्क्षायामपि निष्पन्नत्वेन अयोग्यत्वात् प्रत्यासन्नमपि धात्वर्थं भाव्यांशवत् करणांशादपि प्रच्याव्य नामार्थेनैव अन्वयावगमात् कुतो धात्वर्थस्य करणत्वम् ? **उच्यते** । प्रकृतिप्रत्ययपौर्वापर्यनियमात् शुद्धभावनाऽनवगतेः अनुष्ठानाशक्तेश्च धात्वर्थानुरक्ताया एव फलोद्देशेन विधीयमानत्वात् विधिगम्यत्वाच्च करणत्वस्य 'केन भावयेत् स्वर्गम्' इत्यपेक्षायां यागादिना इत्येवान्वयो युक्त इति । पृ. ५५१. * धात्वर्थस्यैव करणत्वादिसंसर्गेण भावनायां प्रकारता इति मतम् । धातुलक्षितकरणत्वादेः भावनायां प्रकारता इति मतान्तरम् । **मुरारि.** (भा.) पृ. १४५०. * धात्वर्थस्यैव भावनाकरणत्वं न द्रव्यगुणयोः । **मीन्या.** * धात्वर्थस्य करणत्वेनैवान्वयः इति न नियमः 'दध्ना जुहोति' इत्यादौ साध्यत्वेनान्वयात् । 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यादौ चाश्रयत्वेनान्वयात् । **मीन्या.** * धात्वर्थस्य करणत्वप्रतिपत्तिः अपूर्वभावनायां प्रत्यासत्तेः । अतस्तेनैव फलकरणभूतेन अन्यथाऽनुपपत्त्या अपूर्वं भाव्यते । **वा.** २।१।१।१ पृ. ३७६. * धात्वर्थस्य कर्तुः अवाच्यत्वे अशाब्दत्वापत्त्या वाक्यार्थानन्वयप्रसङ्गात् प्राधान्यासिद्धेः न धात्वर्थस्य साक्षात् पुरुषार्थत्वापत्तिः । **सु.** पृ. १३८४. * धात्वर्थस्य कर्मत्वकरणत्वान्यतरसंसर्गेणैव सर्वत्र भावनायामन्वयः । **रहस्य.** पृ. ५३. * धात्वर्थस्य कारकत्वेऽपि

तदवच्छिन्नाया भावनायाः निरूपणाशक्तेः विध्ययोगात् पदश्रुत्यैव धात्वर्थविधिः । सु. पृ. १००६. ॥ धात्वर्थस्य च धर्माणां च नहि परस्परेण आकाङ्क्षा विद्यते । प्रत्ययार्थेन हि इतिकर्तव्यता आकाङ्क्ष्यते कर्तव्यं कथं इति । न यजिः कीदृशः इति । भा. ९।१।१।१ पृ. १६३९. ॥ धात्वर्थस्य नित्यं करणभूतस्य न कदाचित् प्राधान्यं आख्यातेषु भावप्रधानत्वात् इति स्थितं भावार्थाधिकरणे । वा. ३।४।४।१२ पृ. ९०३, ॥ 'धात्वर्थस्य प्रधानत्वं न तावदिह जन्मनि'। ३।४।४।१२ पृ. ९०२.

॥ धात्वर्थस्य भावनायां प्रकारत्वेन अन्वयः । प्रत्ययार्थप्राधान्यस्मृतेः संकोचे प्रमाणाभावात् । भावप्रधानमित्यस्य आख्यातार्थेषु अनेकेषु कस्य प्राधान्यं इत्यपेक्षिते भावपदवाच्यभावनाप्राधान्यं इत्यपेक्षितार्थविधायकत्वोपपत्तौ प्रत्ययार्थप्राधान्यस्मृतिसंकोचानुपपत्तेः । अतो निरुक्तस्मृतौ भावपदेन वैयाकरणपरिभाषितधात्वर्थस्य न ग्रहणं इत्युक्तमेव । न च प्रत्ययार्थप्राधान्यस्मृतेः सुबाद्यर्थलिङ्गसंख्यादेः प्रकृत्यर्थं प्रति प्रकारतया संकोचावश्यकत्वे यत्र करणत्वादौ प्रमाणान्तरेण प्रकृत्यर्थं प्रति प्राधान्यं प्रमितम्, तदनुवादमात्रतया भावनाविषयेऽपि बाधकाभावः (इति वाच्यम्)। 'प्रत्ययार्थं सह ब्रूतः तयोस्तु प्रत्ययः प्राधान्येन' इत्येकवचनश्रवणेन प्रत्ययार्थत्वसामानाधिकरण्येन प्रकृत्यर्थं प्रति प्राधान्यनियमात् सुबाद्यर्थलिङ्गसंख्यादीनां अप्राधान्येऽपि क्षतिविरहात् । वस्तुतस्तु लिङ्गसंख्यादीनामपि प्रत्ययार्थान्तराणां न प्रकृत्यर्थप्रकारता, अपितु समानाभिधानश्रुत्या करणत्वादिरूपप्रत्ययार्थान्तरं प्रत्येव इति वक्ष्यते । अतः सिद्धं धात्वर्थस्य भावनायां प्रकारतेति ।

धात्वर्थश्च क्वचित् शक्यार्थे एव प्रकारः, यथा 'सोमेन यजेत' इत्यादौ । क्वचित् लक्ष्यार्थे एव यथा 'अग्नीषोमीयं पशुमालभेत' इत्यादौ यागः । लक्ष्यार्थोऽपि क्वचित् शक्यार्थयुक्तः यथा 'पृष्ठैरुपतिष्ठते' इत्यादौ । आत्मनेपदानुरोधेन समीपस्थितिरूपशक्यार्थविशिष्टमभिधानम् । वस्तुतस्तु 'सोमेन यजेत' इत्यादौ तत्तद्विधिषु अपि विजातीययागत्वादिनैव लक्षणा इति शक्यार्थान्वयः अन्यत्रानुसंधेयः । तस्य च कृतौ संसर्गः नानुकूलत्वम्, 'पचति, पाकं करोति' इति पाककर्मत्वस्यैव विवरणबलेन संसर्गत्वप्रतीतेः । अत एव 'ओदनं पचति' इत्यादौ 'पाकेन ओदनं करोति' इति विवरणात् पाककरणत्वस्यापि प्रतीतेः तस्यापि संसर्गत्वम् । अतश्च कर्मत्वकरणत्वान्यतरसंसर्गेणैव सर्वत्र भावनायां धात्वर्थस्य अन्वयः । यद्यपि कृतिं प्रति पाकस्य करणत्वं बाधितं कृतिसाध्यत्वात् पाकादेः, तथापि स्वनिष्ठकरणत्वनिरूपकौदनोद्देश्यकत्वसंबन्धेन पाकस्य कृतावन्वयात् करणत्वस्यापि संसर्गघटकतया संसर्गत्वोपपत्तिः । अस्ति च ओदनस्यापि कृतौ उद्देश्यताऽऽख्या विषयता इति नैतादृशसंसर्गबाधः । तत्र च यत्र विध्यश्रवणम्, तत्र द्वितीयान्तपदाद्यश्रवणे 'पचति चैत्रः' इत्यादौ धात्वर्थस्य इष्टसाधनत्वाज्ञानेऽपि तस्य कर्मत्वमेव । आख्यातोपात्तभावनायाः करोत्यर्थतया तद्वदेव सकर्मकत्वनियमात् । अत एव अकर्मकधातुस्थलेऽपि आख्यातोपात्ताया भावनायाः सकर्मकत्वमेव। अत एव तस्याः तदाकाङ्क्षायाम् 'स्वास्थ्यकामः शयीत' इत्यादौ कामपदोपात्तस्वास्थ्यादेरेव कर्मत्वेन अन्वयः, स्वर्गकामपदेनेव लक्षणया स्वर्गादेः । धातुस्तु अकर्मक एव । अत एवात्र न भावनाकर्मणि द्वितीया । सा तु धात्वर्थकर्मण्येव । सकर्मकधातुस्थले यथा 'व्रीहीनवहन्ति' इत्यादौ । तत्र तेषां प्रथमतो भावनायां कर्मत्वेन अन्वयेऽपि पार्ष्ठिकं धात्वर्थेऽपि कर्मत्वम्, इति तेषां धातूनां सकर्मकत्वोपपत्तिः । अतो भावनायाः नित्यसकर्मकत्वात् 'पचति चैत्रः' इत्यादिनिरुक्तस्थले भावनायाः कर्माकाङ्क्षायां समानपदश्रुत्या धात्वर्थस्यैव कर्मत्वम् । लौकिकवाक्यत्वाच्च तस्य वैयर्थ्येऽपि न दोषः । वेदे तु विध्यन्तरैकवाक्यत्वादिना स्तावकत्वाद्यसंभवेन स्वाध्यायविध्यवगतप्रयोजनवत्त्वानुरोधेन लडादेरेव लेट्त्वं लेडर्थकत्वं वा लक्षणया परिकल्प्य भावनायाः स्वर्गादिभाव्यान्तरपरिकल्पनया धात्वर्थस्य तत्र करणत्वेन अन्वयः । विधेः प्रवर्तकत्वान्यथाऽनुपपत्त्या तत्समभिव्याहृतायां भावनायां इष्टभाव्यकत्वावश्यम्भावात् । 'घटं पटं चानय' इत्यादौ चकारं विना कर्मद्वयान्वयादर्शनात् करोतेरिव आख्यातोपात्तभावनाया अपि एककर्मकत्वनियमेन यागादेरपि तस्यां कर्मत्वानुपपत्तेश्च । अत एव यत्र विधिसमभिव्याहारस्य सत्त्वे असत्त्वे वा द्वितीया-

ऽऽदिना भाव्यान्तरं निर्दिष्टं यथा 'व्रीहीनवहन्यात्' 'ओदनं पचति' इत्यादौ, तत्र धात्वर्थस्य करणत्वमेव। यत्र तु तादृशस्थले अप्राप्तकरणान्तरसत्त्वम्, धात्वर्थस्य च प्रकरणादिना प्राप्तिः यथा 'गोदोहनेन पशुकामस्य प्रणयेत्' 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यादौ तत्र आश्रयतया प्रकरणप्राप्तधात्वर्थानुवादमात्रम्। साधुत्वसिद्ध्यर्थं धातुः। न तु तदर्थस्य करणत्वेन अन्वयः, न वा आश्रयत्वेन, कर्मत्वातिरिक्तस्य आश्रयत्वस्य निर्वक्तुमशक्यत्वेन भावनायां इन्द्रियरूपकर्मावरुद्धायां होमस्यापि कर्मत्वेन अन्वये एककर्मकत्वभङ्गापत्तेः। अत एव अनेकोद्देश्य-निमित्तवाक्यभेदेऽपि एककर्मकत्वभङ्ग एव दूषकताबीज-मुक्तं कौस्तुभादौ।

एककर्मकत्वं च न एककर्मत्वकत्वं एककर्मत्वाश्रय-कर्मकत्वं वा 'सर्वेभ्यो दर्शपूर्णमासौ' 'घटान् आनय' इत्यादौ तदनापत्तेः। तत्र पुत्रादिवृत्तिकर्मत्वानां कर्मत्वा-श्रयपुत्रादीनां वा अनेकत्वात्। नापि एककर्मत्वावच्छेद-कत्वं 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादौ 'व्रीहीन् प्रोक्षति' इत्यादौ च तदनापत्तेः। तत्र पुत्रत्वपशुत्वादीनां तदपूर्व-साधनत्वानां च कर्मताऽवच्छेदकानां भेदात्। किन्तु एकबोधविषयकर्मत्वपर्याप्त्यधिकरणताऽवच्छेदकधर्मवत्त्वं इत्युक्तं कौस्तुभे। निरुक्तस्थलेषु च सर्वत्र कर्मत्वपर्याप्त्यधि-करणताऽवच्छेदकधर्माणां एकेन पदेन एकस्यैव समूहा-लम्बनात्मकस्य बोधस्य जननात् एककर्मकत्वोपपत्तिः। 'अध्वर्युयजमानौ वाचं यच्छतः' इत्यत्र च अध्वर्युत्व-यजमानत्वयोः कर्मत्वादिकरणताऽवच्छेदकयोः एकबोध-विषयत्वाभावात् द्विकर्मकत्वापत्तिः, अतः पर्यातीति। तत्र द्वंद्वोत्तरविभक्त्या देवतात्वादेरिव कर्मत्वादेरपि व्यासज्य-वृत्तित्वावसायात् तत्पर्याप्त्यधिकरणताऽवच्छेदकधर्मस्य अध्वर्युयजमानोभयत्वस्य द्वंद्वजन्यैकबोधविषयत्वेन एक-कर्मत्वोपपत्तेः। उपपादितं चैतत् कौस्तुभादौ। एवं 'शुक्लं घटमानय' इत्यादौ शुक्लस्य घटे अभेदान्वयात् पदद्वयेन घटपदेनैव वा शुक्लगुणविशिष्टघटलक्षणात् एक-कर्मत्वोपपत्तिः। एवं 'घटं पटं चानय' इत्यादौ इतरे-तरयोगार्थकचकाररूपतात्पर्यग्राहकानुरोधेन द्वितीयाऽन्त-पदद्वये लक्षणया तदुपपत्तिः। यथा च एवं सति निमित्त-द्वयस्थले उद्देश्यानेकत्वनिमित्तकवाक्यभेदस्य दूषकताबीजं एककर्मकत्वभङ्गापत्तिः, तथा कौस्तुभे व्यक्तम्। तत् सिद्धं यत्र द्वितीयाऽऽदिना भाव्यान्तरं भावनायां अन्वय-योग्यमुपात्तम्, तत्र न धात्वर्थस्य कर्मत्वम्। यत्र तु तन्नोपात्तम्, धात्वर्थस्य च इष्टसाधनत्वं प्रमाणान्तरेण प्रमितम्, तत्र स्ववाक्यविधेयगुणान्तरसत्त्वे धात्वर्थस्य कर्मत्वमेव यथा 'दध्ना जुहोति' इत्यादौ। न चैवम् 'जुह्वा जुहोति' इत्यादौ जुहोतेः सकर्मकत्वात् कर्मान्तरावश्य-म्भावेन भावनायाः द्विकर्मकत्वापत्तिः, सकर्मकस्यापि भावाख्याते इव कर्माविवक्षोपपत्तेः। एतादृशेऽपि विषये यदि तृतीयाऽन्तनामधेयश्रवणं तदा करणत्वमेव, यथा 'समे दर्शपूर्णमासाभ्यां यजेत' 'उच्चैः प्रवर्ग्येण' इत्यादौ। यत्र तु तादृशगुणश्रवणाभावः, तत्र धात्वर्थस्यैव कर्मत्वेन प्रयोजनान्तरार्थे अनुवादः यथा विद्वद्वाक्ययोः। तदभावे (प्रयोजनान्तराभावे) तु 'तनूनपातं यजति' इत्यादौ कर्मान्तरमेव करणत्वेन इत्यादि आकरे व्यक्तम्। यत्र तु नेष्टसाधनत्वं प्रमितम्, न वा स्ववाक्ये च उद्भिदादिवत् तृतीयाऽन्तनामधेयश्रवणं यथा 'सोमेन यजेत' 'अग्नि-होत्रं जुहोति' इत्यादौ, तत्र स्ववाक्ये इष्टविशेषानवगमे-ऽपि विधिबलेन भावनायाः इष्टभाव्यकत्वावगमात् इष्ट-सामान्यस्यैव तत्र भाव्यत्वमङ्गीकृत्य धात्वर्थस्य करणत्व-मेव। 'अग्निहोत्रम्' इत्यत्र द्वितीयाऽपि तत्र करणत्व-लक्षणार्थैव इति सांप्रदायिकाः। एतादृशे विषये समान-पदश्रुत्या भावनापेक्षितं कर्म धात्वर्थ एव सुतरां अग्निहोत्रं इति द्वितीयाऽन्तश्रवणे। न च इष्टसाधनत्वेन अज्ञातस्य कर्मत्वानुपपत्तिः, अनीप्सितकर्मत्वेन अन्वयोपपत्तेः। न च विधेः प्रवर्तकत्वव्याघातः, विध्यवगतेष्टभाव्यकत्वज्ञानस्य प्रवृत्तिं प्रति कारणत्वेऽपि शाब्दबोधं प्रति अकारणत्वात् तदभावेऽपि होमकर्मकभावनाशाब्दज्ञानोपपत्तेः। न च भाव्यत्वेन अन्वितस्य तस्य भाव्यान्तरानाकाङ्क्षत्वात् फलवाक्येऽपि स्वर्गसाधनत्वबोधानापत्तिः, साधनत्वेन अन्वितस्य अर्थात् विध्यनुरोधेन कृतिसाध्यत्वज्ञानवत् कृतिसाध्यत्वेन बुद्धस्यापि विध्यपेक्षाऽनुरोधेनैव इष्टविशेष-साधनतया वाक्यान्तरेण विश्वजिन्न्यायेन वा बोधोपपत्तेः। अतः 'उत्पत्तिवाक्ये धात्वर्थस्य कर्मत्वेनैव अन्वयः' इति

प्राभाकरोक्तमपि युक्तं इति **तर्करसिकाः** । सर्वथा सिद्धं धात्वर्थस्य कर्मत्वकरणत्वान्यतरसंसर्गेण भावनायां प्रकारता इति । **सांप्रदायिकास्तु** धातुना स्वार्थवृत्तिकर्मत्वकरणत्वान्यतरत् लक्षणया प्रतिपाद्यते । तस्यैव स्वनिरूपकत्व–स्वनिरूपकोद्देश्यकत्वान्यतरसंसर्गेण भावनायामन्वयः । न तु कर्मत्वादेरपि संसर्गत्वम् । तथात्वे 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इति साहित्यरूपान्वयानुशासनवैयर्थ्यापत्तेः । नहि पदार्थानुशासनप्रवृत्तानां तेषां अन्वयानुशासकत्वं युज्यते । अतः कर्मत्वकरणत्वादिरूपान्वयोऽपि वृत्त्यैव पदार्थविषया भासते । अत एव ज्योतिष्टोमेन इति तृतीयाऽपि पदार्थविषया भासमानकरणत्वानुवादिका इति संगच्छते । विशेषणविशेष्ययोः प्रकारतया भासमानकारकवत्त्वस्य औत्सर्गिकत्वात् इत्याहुः । तत् सिद्धं धात्वर्थस्य सर्वत्र भावनायां प्रकारता इति । सा परं आख्यातोपात्ता कृदाद्युपात्ता च लिङ्गानन्वयिनी इति वक्ष्यते । तेन वस्तुपदोपात्तायां भावनायां नान्वयः । **रहस्य. पृ. ५२–५७.**

* धात्वर्थस्य यथा करणत्वसाध्यत्वलक्षणरूपद्वयेन अन्वयो न संभवति, एवं विषयत्वकरणत्वरूपद्वयेनापि अन्वयो न संभवति न्यायसाम्यात् । **सोम. १।४।४ पृ. ६७.** * धात्वर्थस्य विषयत्वेन करणत्वेन च अन्वयमिच्छन्ति **प्राभाकराः** । तथाहि, प्रवृत्तिहेतुभूतकार्याभिधानं लिङादीनां व्युत्पन्नम् । प्रवृत्तिहेतुत्वं च विलक्षणकार्यस्यैव, कार्यसामान्यज्ञाने प्रवृत्त्यदर्शनात् । एवं च विशेषतः कार्यप्रतिपत्त्यर्थं अवच्छेदकापेक्षायां धात्वर्थः अवच्छेदकतया संबध्यते । यद्यपि धात्वर्थः साक्षात् कार्यमवच्छेत्तुं न क्षमते, तथापि यागकृतिसाध्यं अपूर्वं इत्येवं कृत्यवच्छेदद्वारा कार्यं अपूर्वं अवच्छेत्तुं शक्नोति इति धात्वर्थः अवच्छेदकत्वेन संबध्यते । अवच्छेदकत्वमेव विषयत्वम् । इति धात्वर्थस्य यागादेः लिङाद्यर्थे कार्ये प्रतिपत्त्यनुबन्धितया विषयत्वेन अन्वयः । तथा कार्यम्, कृतिसाध्यम्, भाव्यं इति पर्यायाः । ततश्च भाव्यरूपापूर्वोद्देशप्रवृत्ता या कृतिः सा भावना इत्युच्यते । सा च क्रियात्वात् करणमन्तरेण अनुपपन्ना इति कृतिसाध्यलक्षणकार्यस्य स्वनिष्पत्त्यर्थं स्वसाधनार्थप्रवृत्तकृतिरूपभावनामुखेन करणापेक्षायां धात्वर्थ एव उत्पत्त्यनुबन्धित्वेन करणतयाऽपि संबध्यते । परोद्देशप्रवृत्तकृतिसाध्यत्वं हि करणत्वम् । संभवति च धात्वर्थस्य अपूर्वोद्देशप्रवृत्तकृतिव्याप्यस्य करणत्वम् । तस्मात् धात्वर्थः विषयतया करणतया च अन्वीयते । इति । अत्र **पार्थसारथिमिश्राः** ( शा. ६७–६८ ) । विषयभूतेन हि कथं करणवाचिनां नामधेयानां सामानाधिकरण्यम् । आर्थिकेन करणत्वेन सामानाधिकरण्यमिति चेत्, साध्यत्वमपि तर्हि आर्थिकमस्ति इति गुणविधिरपि विनैव मत्वर्थलक्षणया, विना च वैरूप्येण स्यात् इति समस्तमेव नामधेयप्रतिपादनं अनुपपन्नं स्यात् । अथ विषयत्वद्वारेण करणत्वपर एव शब्दः, ततः अन्यपरेण शास्त्रेण उपायमात्रत्वेनोपात्तं विषयत्वं न शास्त्रार्थः स्यात्, अतत्परत्वात् । अथ शब्द एव प्रथमं विषयतया अभिधाय पुनः करणतयाऽपि अभिधत्ते, कथं सकृदुच्चरितो द्विरभिदध्यात्, अभिधाने वा साध्यत्वमपि पुनरभिदधीत । नहि नियामकमस्ति द्विरेवाभिधत्ते न त्रिरिति । 'सकृत् प्रवृत्तायाः किमवगुण्ठनेन' इति न्यायात् । अतः करणत्वेनैवान्वयो वाच्यः, न विषयत्वेन इत्यास्तां तावत् । तस्मात् विषयत्वस्य शाब्दत्वे करणार्थकतृतीयान्तनामधेयसामानाधिकरण्यासंभवात् तन्निर्वाहाय करणत्वमेव शाब्दम् । **सोम. १।४।४ पृ. ६७–६८.** * धात्वर्थस्य सर्वस्य क्रियात्वम् । **मणि. पृ. १६७.** * धात्वर्थस्य सर्वत्र भावनायां प्रकारता । अस्य सिद्धिः 'आख्यातार्थः' इति बिन्दौ भाट्टरहस्यविभागे द्रष्टव्या । **के.** * **धात्वर्थानां** नामधेयत्वेन अवस्थितानि सामानाधिकरण्येन सर्वनामधेयानि, न भावनायाः । **वा. २।३।११।२४ पृ. ६१६.**

⌛ **धात्वर्थे पुनः स विधातव्यः संबन्धी इत्यनेन न्यायेन** क्रियाङ्गत्वसिद्ध्यर्थं विशेषणस्यापि विध्यापत्तेर्वाक्यभेदः । ( संबन्धो हि विधीयमानः संबन्धिनं तावदाक्षिपेत् धात्वर्थे पुनः स विधातव्य एव संबन्धी, अन्यथा संबन्धस्यैव संबन्धी शेषः स्यात् न क्रियायाः' वा. २।२।५।१६ पृ. ५०२ ) । **सु. पृ. ७४३.**

* **धात्वर्थानवच्छिन्नभावनायाः** धर्मान्वयः संस्थाऽधिकरणे निराकरिष्यते । **सु. पृ. १२१६.**

* **धात्वर्थावच्छेदं** विना अनु-( अननु ? ) ष्ठेयत्वात् ( भावनायाः ) फलान्वयो न संभवति । सु. पृ. ७०८.

* **धात्वर्थकरणिका** भावना यत्र चोद्यते, तत्र अंशत्रयेणैव समाप्यते । वा. २।२।१।२६ पृ. ५४९.

* **धात्वर्थकर्म**, भावनाकर्म । यद्धि यथाकथञ्चित् अपि धात्वर्थसिद्धौ सत्यां अनन्तरं नियमेनोत्पद्यते, तत् धात्वर्थस्वरूपप्रयुक्तत्वात् धात्वर्थकर्म । यत्तु अन्यप्रेरितेन पुंसा अनुष्ठितकर्मणि कदाचिदुत्पद्यते कुतश्चित् वा कारणान्न कदाचिदुत्पद्यते, तत् नियोगप्रयुक्तत्वात् नियोगस्य च भावनाविषयत्वात् भावनाकर्म । कर्मद्वयस्य अधिष्ठानान्यत्वनियमाभावेऽपि यदेव धात्वर्थं प्रति कर्मत्वम्, तदेव भावनां प्रति न भवति इति तयोर्भेदः । धात्वर्थसमाप्त्यनन्तरं नियमेन उत्पद्यमानत्वात् ओदनस्य धात्वर्थकर्मत्वेऽपि उद्देश्यत्वलक्षणेप्सिततमत्वस्य प्रयत्नाख्यभावनैकगोचरत्वात् ओदनमात्रोद्देशेन यदा प्रवर्तते, तदा एकस्यैव उभे प्रति कर्मता । सु. पृ. ५८५.

* **धात्वर्थविचारः** । अत्र वैयाकरणाः । भूवादिधातूनां उत्पत्त्यादिरूपं फलं तदनुकूलो व्यापारश्च वाच्यः । उत्पत्तिः प्राकट्यम् । फले शक्तिग्राहकश्च 'भू सत्तायाम्' इत्यादिः सर्वोऽपि धातुपाठः । व्यापारे शक्तिग्राहकं च 'भूवादयो धातवः' ( पा० १।३।१ ) इति सूत्रम् । तच्च वाप्रकारेषु भ्वादिषु धातुसंज्ञां विधत्ते इति वाधातुवाच्यार्थवाचितां सर्वधातूनां सूचयति । वाधातोश्च गतिरूपव्यापार एव वाच्यः इति सर्वधातूनां व्यापारवाचित्वम् । न चैवम् 'बीजमङ्कुरीकरोति' इति प्रयोगापत्तिः, इष्टापत्तेः । अत्र फलानुकूले व्यापारे व्यापारजन्ये वा फले अनुकूलत्वजन्यत्वयोः संसर्गमर्यादया लभ्यत्वेन फले व्यापारे च शक्तिः । प्रत्ययार्थस्तु व्यापाराश्रयः फलाश्रयश्च इत्याहुः ।

कश्चित्तु 'भूवादयः' इति सूत्रं कृतैकशेषादिशब्दत्रयकं सत्ताऽऽदिरूपफलवाचकभूप्रकाराः गतिवाचकवाप्रकाराः भ्वादिगणपठिताश्च धातवः इत्येतदर्थकं सत् फलवाचितां सर्वधातूनामाह इत्याह ।

अत्र मण्डनः । फलमेव धात्वर्थः । पचिगमित्यजिपतत्यादीनां विक्लित्ति-उत्तरदेशसंयोगपूर्वदेशविभाग-अधोदेशसंयोगादय एवार्थाः । अनुकूलव्यापारस्तु प्रत्ययार्थः । लडाद्यर्थवर्तमानत्वादिकं व्यापारे अन्वेति, समानपदोपात्तत्वात् । तेन व्यापारविरमे न पचतीति प्रयोगः फलानुत्पाददशायां व्यापारमात्रकाले पचतीति प्रयोगश्च । व्यापारविरमे 'पाको विद्यते, पच्यर्थो विद्यते' इति प्रयोगस्तु 'विक्लित्तिर्वर्तते' इतिवत् इष्ट एव । अत एव 'पाकं करोति' 'पाके व्याप्रियते' इति पाकात् पृथक्करणेन व्यापारविवरणम् । न च 'ग्रामो गमनवान्' इति प्रयोगापत्तिः, उत्तरदेशसंयोगरूपफलस्य उभयनिष्ठत्वात् इति वाच्यम् । तथात्वेऽपि निरूपकत्वादिसंबन्धविशेषेण वर्तमानस्यैव फलस्य वाच्यत्वाङ्गीकारात् । अन्यथा आभिमुख्यसंबन्धेन संयोगानुकूलक्रियायाः ग्रामेऽपि सत्त्वात् व्यापारवाचित्वेऽपि तुल्यो दोषः । एवं विध्यर्थकृतिसाध्यत्वेष्टसाधनत्वादीनामपि व्यापारे एवान्वयः । तेन 'ओदनकामः पचेत्' इत्यादौ ओदनसाधनत्वस्य कृतिसाध्यत्वस्य च व्यापारे एवान्वयः । एतेन फलस्य उपायगोचरकृतिसाध्यतया उपायस्य स्वगोचरकृत्यसाध्यत्वेन विधिवाच्येष्टसाधनत्वकृतिसाध्यत्वयोः पाके अन्वयात् तत्र प्रवृत्त्यनुपपत्तिः इति मणिकृदुक्तम् ( गङ्गेशोपाध्यायोक्तम् ) अपास्तम् । तदनुकूलव्यापारे प्रवृत्तेरिष्टत्वात् । न चैवं यजेत् दद्यात् जुहुयात् इत्यादिषु पर्यायत्वप्रसङ्गः । स्वत्वध्वंसरूपफलस्य एकत्वात् इति वाच्यम् । यजतेः स्वत्वध्वंसरूपफलवाचित्वात्, ददातेः परस्वत्वमात्ररूपफलवाचित्वात्, जुहोतेः प्रक्षेपरूपफलवाचित्वात् । तेन स्वत्वध्वंसरूपफलोपलक्षितदेवतोद्देश्यकद्रव्यत्यागः यजिवाच्यः, संकल्पितस्वीकरणपूर्वकपरस्वत्वापत्तिस्वस्वत्वध्वंसफलकद्रव्यत्यागः ददातिपदवाच्यः, देवतोद्देश्यकप्रक्षेपफलको द्रव्यत्यागः जुहोतिपदवाच्यः इति भेदः । न च देवतायै दानस्थले यजति इति प्रयोगापत्तिरिति वाच्यम् । देवतायाः असंप्रदानत्वेन तत्र ददातेर्लाक्षणिकत्वात् । एवं च अस्ति भवति विद्यते इत्यादेः फलमात्रप्रतीतिरुपपद्यते । करोतेश्च उत्पत्तिरूपफलवाचित्वम्, तदनुकूलव्यापारो यत्नरूपः प्रत्ययवाच्यः । एवं च न-

करोतियतत्योः समानार्थकत्वम्, न वा यततेः सकर्मकत्वापत्तिः अनुप्रयोगश्च। एवं जानाति इत्यत्र विजातीयविषयता, इच्छति इत्यादावपि विजातीयविषयता, नश्यति इत्यत्र दर्शनाभावरूपफलमेव वाच्यम्। अतः सर्वधातूनां फले एव शक्तिः इत्याह।

अन्ये तु व्यापार एव धात्वर्थः। न च उक्तदोषः, तत्तद्धातुसमभिव्याहृतद्वितीयाया एव संयोगादिरूपफलविशेषबोधकत्वाङ्गीकारादित्याहुः। केचित्तु पचतीत्यादौ फलजनकताऽवच्छेदकतया व्यापारसमुदायनिष्ठः अन्तिमव्यापारनिष्ठो वा वैजात्यं अखण्डोपाधिर्वा सिद्धः पच्याद्यर्थः। एवं च धातूपात्तव्यापाराश्रयस्य कर्तृतया तादृशव्यापारविवक्षायाम् 'चैत्रः पचति' 'काष्ठं पचति' इत्यादिः प्रयोगः। एवं करोतेर्व्यापारवाचित्वम्। न च यत्नजन्यत्वाजन्यत्वप्रतिसंधानात् पटाद्यङ्कुरयोः कृताकृतव्यवहारेण रोगेण स्पन्दमानेऽपि चैत्रे 'स्पन्दं करोति' इति अप्रयोगेण च करोतेः यत्नवाचित्वं इति वाच्यम्। करोतेर्यत्नार्थकत्वे, तस्य अकर्मकत्वेन करोतेरकर्मकत्वापत्तेः फलसमानाधिकरणव्यापारवाचित्वात्। उत्पत्तिरूपफलव्यधिकरणव्यापारवाचित्वेन ज्ञानादाविव अन्यकर्मत्वे तु यततेरपि सकर्मकत्वापत्तिः। एधांचक्रे इत्यादिवत् यततेः अनुप्रयोगापत्तिश्च। अतः करोतेः व्यापारसामान्यवाचित्वं इति वदन्ति। अन्ये तु करोतेर्यत्नवाचित्वम्। न चोक्तदोषः, विवक्षाऽविवक्षाभ्यां सकर्मकाकर्मकधात्वोः पच्यास्योरपि 'पचति' 'मासं आस्यते' इत्यादौ अतिप्रसङ्गेन नोक्तं सकर्मकत्वम्, किन्तु अविवक्षाविरहविशिष्टकर्माकाङ्क्षधातुत्वम्। तेन सकर्मके विशेषणाभावेन अकर्मकत्वस्य अकर्मकत्वविवक्षाऽसत्त्वेन च सकर्मकत्वस्य च अक्षतिः। आकाङ्क्षायाः शब्दवैचित्र्यकृतत्वात् एकस्य धातोः अर्थभेदेन सकर्मकत्वाकर्मकत्वे। एवं पर्यायाणामपि तत् अव्याहतम्। एवं अविवक्षाविरहविशिष्टकर्मद्वयाकाङ्क्षधातुत्वं द्विकर्मकत्वम्। तस्यापि एककर्मविवक्षणेन 'निशां निनाय' इत्यादिप्रयोगे न क्षतिः। अतः प्रयत्न एव करोत्यर्थः इत्याहुः।

यत्तु जानाति नश्यति इत्यादौ व्यापार एव प्रत्ययार्थः। तस्य च धात्वर्थे अभेदेन अन्वयः। तेन ज्ञानाभिन्नो व्यापारः, नाशाभिन्नो व्यापार इत्यर्थः। इत्याह। तत् प्रकृतिप्रत्ययार्थयोः अभेदान्वयस्य अव्युत्पन्नत्वेन मूर्खदाम्भिकलिखितत्वेन उपेक्षणीयम्। मणि. पृ. १००–१०३.

अत्र भाट्टरहस्यम्। अथ कोऽयं धात्वर्थो नाम? अत्र विवदन्ते बहवः। तत्र मण्डनमिश्रास्तावत् विक्लृत्यादिरूपं फलमेव धात्वर्थः। तदनुकूलफूत्कारादिरूपो व्यापारसङ्घस्तु सर्वोऽपि व्यापारत्वेन प्रत्ययार्थः। फलस्य च तं प्रति प्रकारत्वं इत्याहुः। तन्न। गमनजन्यसंयोगाश्रयो ग्रामः इति प्रयोगानापत्तेः, संयोगाख्यस्य फलस्य गमनरूपत्वेन तज्जन्यत्वाभावात्, 'गमनाश्रयो ग्रामः' इति प्रयोगापत्तेश्च। न च ल्युटो भावनावाचकत्वेन व्यापाराभिधानात् नैतादृशप्रयोगाद्यापत्तिः, 'गम्यर्थवान् ग्रामः' इति प्रयोगस्य एवमपि आपत्तेः। 'गम्यर्थजन्यसंयोगाश्रयो ग्रामः' इति प्रयोगानापत्तेश्च। स्वत्वध्वंसाख्यस्य फलस्य यजिपदार्थत्वे तस्यैव फलभावनाकरणत्वेन स्वर्गसाधनतापत्तेः, स्थायिनस्तस्मादेव स्वर्गोत्पत्त्युपपत्तौ अपूर्वकल्पनाऽनापत्तेश्च। अतो व्यापारमात्रं धात्वर्थः फलं च द्वितीयाऽर्थः इत्यन्ये। तदपि न। व्यापारत्वेन वाच्यत्वे सर्वधातूनां पर्यायत्वापत्तेः। क्रियात्वादिना विशेषरूपेण वाच्यत्वे त्यजिगम्योः पर्यायताऽऽपत्तेश्च। पूर्वदेशविभागानुकूला क्रिया त्यजेरर्थः। उत्तरदेशसंयोगानुकूला सैव गमेः। तद्यदि क्रियामात्रं धात्वर्थः फलसामान्यं च द्वितीयाऽर्थः, तदा तयोः पर्यायत्वापत्तिः। अतः उभयं फलं व्यापारश्च धात्वर्थः। उभयत्र च प्रत्येकं शक्तिः। नातः ओदनादिपदार्थस्य एकदेशान्वयशङ्का। तयोश्च जन्यजनकभावः संसर्गः। व्यापारविशेष्यकश्च बोधः। तत्रैव कर्मकारकातिरिक्तसर्वकारकाणामन्वयः, कर्मकारकस्य च फले। व्यापारश्च शरीरनिष्ठः फूत्कारादिः, आत्मनिष्ठः प्रयत्नादिश्च तत्त्वेन वाच्यः। अनुगतैकधर्मान्तरस्य निर्वक्तुमशक्तेः। न चैवं सर्वकारकव्यापाराणां तत्त्वेन वाच्यत्वे नानाऽर्थकत्वापत्तिः, इष्टापत्तौ वा सर्वकारकाणां प्रथमान्ततापत्तिः। नानाऽर्थकत्वेऽपि यत्कारकव्यापाराणां यदा विवक्षा, तदा तेषामेव बोधः तदादौ इव बुद्धिस्थस्य, तत्कारकस्यैव च तदा प्रथमाऽन्तत्वम्। अत एव 'स्थाली पचति'

इत्यादिप्रयोगोऽपि विवक्षायां संगच्छते । अतः सर्वोऽपि व्यापारो धात्वर्थः । आख्यातार्थस्तु यगादिविकरणस्थले कर्म शबादिविकरणस्थले च कर्ता । अकर्मकधातूत्तरयगादिविकरणस्थले च भावरूपो धात्वर्थ एव, 'लः कर्मणि' (पा० ३।४।६९) इत्याद्यनुशासनात् । सर्वेषां च धात्वर्थं प्रति योग्यसंबन्धेन गुणत्वम् । 'भावप्रधानमाख्यातम्' इति स्मृत्या (निरुक्तम्) भावपदवाच्यधात्वर्थस्य आख्यातार्थं प्रति प्राधान्योक्तेः । प्रत्ययार्थप्राधान्यस्मृतिस्तु सुबादिविषया इति **वैयाकरणाः । तदपि न ।** फूत्कारत्वादेः 'पचति' इत्यतः अप्रतीतेः, अभासमानस्य शक्यताऽवच्छेदकत्वायोगात् । फूत्कारादिकं विनाऽपि चैत्रनिष्ठक्रियान्तरमादाय स्वतःसिद्धज्वालया जायमाने ओदने 'चैत्रः पचति' इति प्रयोगाच्च । तत्तद्व्यापारस्य तत्त्वेनतत्त्वेन अनुभवे 'यागः इच्छा ज्ञानं वा' इति वादिविप्रतिपत्त्यनुपपत्तेश्च । अतः अनुभूयमानं पाकत्वयागत्वादिकमेव तत्तत्फलोपधायकतावत् व्यापारवृत्त्यखण्डोपाधिरूपसामान्यं पच्यादिपदशक्यताऽवच्छेदकम् । तत्सत्त्वे 'पाकः पाकः' इत्याद्यनुगतप्रतीतिः प्रमाणम् । फलोपधायकताऽवच्छेदकतया शक्यताऽवच्छेदकतयैव वा तत्सिद्धिः । फलोपधायकव्यापारत्वादेः प्रमाणान्तरतो बोधः, न तु शाब्दबोधः । अत एव फलस्यापि न द्वितीयया बोधः । अखण्डोपाधिरूपकर्मत्वस्यैव तदर्थतायाः स्थापयिष्यमाणत्वात् । शक्तताऽवच्छेदकं च तत्तद्धातुत्वम् । पाकत्वादिकं च विक्लृत्तिजनकव्यापारवृत्त्येव, न तु तत्प्रयत्नादिवृत्त्यपि । 'पाकं करोति' इत्यादिना यत्नादेः पाकात् पृथक् विवियमाणत्वात् । न च घञादिसमभिव्याहृतधातोः फले एव शक्तिकल्पनात् पृथक् विवरणोपपत्तिः, अनेकशक्तिकल्पने व्यापारविषयकशक्तिप्रतिबन्धककल्पने वा गौरवात् । 'ग्रामो गमनवान्' इति प्रतीत्यापत्तिभयेन व्यापारप्रतीतेरपि आवश्यकत्वाच्च । अत एव विक्लृत्तिजनकव्यापारसमूह एव पाकपदार्थः, न तु तज्जनकयत्नादिरपि, तस्य पृथक् विवियमाणत्वेन पच्यर्थत्वाभावात् । अत एव 'तेजःसंयोगमात्रं पच्यर्थः, न तु विक्लृत्त्यनुकूलव्यापारसामान्यम्' इत्यपि प्रत्युक्तम् । अग्निसंयोगानुकूलकृत्यभाववत्यपि भक्तविक्लृत्त्यनुकूलाबस्त्रावणकर्तरि 'पचति' इति प्रयोगात् । अत एव पाकात् पृथक् विवियमाणयत्नादेः भासमानस्य भानकारणजिज्ञासायां पारिशेष्यात् आख्यातार्थत्वमेव । तस्मिंश्च पाकादेः प्रकारत्वं प्रकृत्यर्थत्वादेव । एवं च प्रत्ययार्थप्राधान्यस्मृतिरपि न संकोचिता भवति । **रहस्य. पृ. ४७-४९.**

* **धात्वर्थविधानं** लिङा तावत् स्वपदेनोपात्तत्वात् श्रौतम् । **वा. २।३।३।४ पृ. ५९३.**

* **धात्वर्थविशेषाद्विना** भावना इतिकर्तव्यतां न शक्नोति ग्रहीतुम् । **वा. ३।६।१६।४३ पृ. १०६९.**

* **'धात्वर्थव्यतिरेकेण** यद्यप्येषा (भावना) न लक्ष्यते । तथापि सर्वसामान्यरूपेणैवावगम्यते ॥' सर्वत्र हि अधिश्रयणादौ 'करोति' इत्यपि सामान्यव्यापारांशः प्रतीयते । **वा. २।१।१।१ पृ. ३८२.**

* **धात्वर्थसत्ताविधानेन** उपसर्गार्थसत्ताविधानं बाध्यते । प्रत्ययेन हि श्रुत्या धात्वर्थस्य सत्ता उच्यते, विप्रकृष्टा उपसर्गार्थस्य सत्ता अर्थविप्रकर्षात् दुर्बला भवति । **भा. १०।४।६।९.**

* **धात्वर्थसामान्यं** भावना इत्येतदापन्नम्, सत्यं साध्यतया सामान्यम्, न तु गोत्वादिरूपेण । **वा. २।१।१।१ पृ. ३८३.**

* **धात्वादीनां** प्रत्ययभिन्नानां स्वरूपमात्राभिधायित्वं इत्यभिहितान्वयवादः । प्रत्यये अन्विताभिधानम् । वस्तुतस्तु अन्विताभिधानं क्वापि नास्ति । **बाल.**

* **धात्वावृत्तिलक्षणः** वाक्यभेदः । **बाल. पृ. १८१.**

* **धातूपसर्गयोरर्थः** अभिधानसामर्थ्यलभ्यत्वान्न विरुध्यते । **टुप्. ७।३।१४।३६.**

* **धातुप्रत्यययोः** सहप्रयोगनियमेऽपि अर्थभेदात् विध्यनुवादविभागोपपत्तिः । **सु. पृ. ७७६.**

* **'धातुलक्षितकरणत्वादेः** भावनायां प्रकारता' **इति मतम्** । करणत्वादिसंसर्गेण धात्वर्थस्यैव भावनायां प्रकारता **इति च मतान्तरम् । मुरारि. (भा.) पृ. १४५०.**

* **धातुवाच्यत्वमात्रात्** क्रियात्वासिद्धिः । 'गडि वदनैकदेशे', 'शकि शक्तौ', 'विशि अवयवे' इत्यादौ अक्रियायामपि धातुस्मृतेः गण्डादिशब्दाच्च क्रियाऽनव-

गतेः । तथापि प्रायेण धातूनां क्रियावाचित्वम् । सु. पृ. ८६२.

* धातुसामानाधिकरण्यं विना नामधेयत्वायोगः । सु. पृ. ३९६.

* धातुसाम्यार्थं ( सप्तरात्रेषु दशरात्रेषु च ) लौकिकं सोमपानम् । भा. ३।४।१२।३२ । वमनायैव हि तं पिबन्ति ( तेन धातुवैषम्यनिवृत्तिः ) । ३३.

* धानाभिर्हारियोजनं श्रीणाति ज्योतिष्टोमे । आसु धानासु प्रदेयधर्मा न कार्याः । भा. ९।४।१२।४५-५०. * धानानां सवनीयपुरोडाशेषु विद्यमानानामेव आश्विनपात्रे निधानं ज्योतिष्टोमे, न तु निधानार्थमपूर्वधानासंपादनम्। के. ३।८।१८।३३, वि. ३।८।१९. * धानासु अवघातस्य न बाधः इति भाष्यमतेन, मन्थे पेषणस्य न बाधः इति वार्तिकमतेन । के. १०।२।३४।७५. * धानासु पूर्वं हन्तिं कृत्वा पाकः कार्यः महापितृयज्ञे । तत्र हि हन्तिः पाकार्थो भविष्यति, न धानात्वं विहनिष्यते । भा. १०।२।३३।७४.

* धानाऽऽदिषु सवनीयेषु पुरोडाशशब्दो भाक्तः संनिहितेषु प्रयुक्तः ज्योतिष्टोमे । भा. ३।८।२२।४४.

**धान्याधिकरणम् ।** शाक्यानामयने प्राकृतधान्यमसीतिमन्त्रगतधान्यपदस्य मांसशब्देन ऊहः ॥

**गुणशब्दस्तथेति चेत् । ९।१।१३।३८ वर्णकं १ ॥**

**भाष्यम्**—एवं वा । दर्शपूर्णमासयोरामनन्ति 'धान्यमसि धिनुहि देवान् इति दृषदि तण्डुलानावपति' इति । तत्र धान्यशब्दं प्रति संशयः किं समवेतवचनो न वेति । किं प्राप्तम् ? योऽयं गुणशब्द इव लक्ष्यते धान्यशब्दः, नासौ समवेतवचनः स्यात् । धान्यशब्दो हि धान्यमभिवदति, न तु धान्यमेवोप्यते । सतुषे हि धान्यशब्दो वर्तते । तण्डुलेष्वेव उप्यमानेषु धान्यप्रकाशनं क्रियते । तदसमवेतस्य प्रकाशने अदृष्टं यथा स्यादिति । तस्मात् विकृतिषु नोहितव्यमिति ।

**न, समवायात् । ३९ ॥**

**भाष्यम्**— नैतदेवम् । समवेतो हि धान्यशब्दार्थः । स हि तण्डुलेषु वर्तते तद्विकारत्वात् लक्षणया । यथा 'काशिकेषु शालयो भुज्यन्ते' 'गावः पीयन्ते' इति । श्रुत्युपादाने अदृष्टं कल्पयितव्यम्, इति लक्षणाशब्दः परिकल्प्यते । तस्मात् समवेतवचनः, विकारे चोहितव्य इति ।

**प्रयोजनं** अस्ति शाक्यानामयनं षट्त्रिंशत्संवत्सरम् । तत्रेदं समाम्नायते 'संस्थितेसंस्थितेऽहनि गृहपतिर्मृगयां याति, स तत्र यान् मृगान् हन्ति तेषां तरसाः सवनीयाः पुरोडाशा भवन्ति' इति । तत्र अविकारेण 'धान्यमसि धिनुहि देवान्' इति प्रयोगः कर्तव्यः यथा पूर्वः पक्षः । यथा सिद्धान्तः, ऊहः कर्तव्यः, 'मांसमसि धिनुहि देवान्' इति ।

**टुप्**— अत्र प्रयोजने चोद्यते । प्रकृतिशब्देन ( धान्यशब्देन ) विकाराः ( तण्डुलाः ) प्रकाशिताः प्रकृतौ लक्षणया, इहापि ( शाक्यानामयने ) चोदकः तथैव ( लक्षणया प्रकृतिशब्देन मांसं ) प्रापयति । तस्मात् मृगशब्देन मांसं प्रकाश्यं लक्षणया । नैतदेवम् । विकृतौ अर्थः चोदकेनातिदिश्यते । न शब्दो वाचकः इति अत्रैव ( तृतीये पादे ) वक्ष्यामः । स च अस्मदायत्ते प्रयोगे किमिति अवाचकेन प्रकाश्यते । प्रकृतौ ( धान्यपदस्य ) आम्नानसामर्थ्येन अवाचकेनापि शब्देन विकारप्रकाशनं कृतम् । तच्च ( धान्यपदं इह ) अर्थात् निवृत्तम्, न चोदकः प्रापयति । न च वचनमस्ति प्रकृत्या विकारः प्रत्याय्य इति । तस्मात् मांसशब्दस्यैव प्रयोगः । ( परमार्थतस्तु मांसस्य अधिवापो नास्त्येव ) ।

**सोम**— इदं च मांसस्याप्यधिवापोऽस्ति इति कृत्वाचिन्तया उक्तम् । वस्तुतस्तु पेषणार्थत्वादधिवापस्य मांसे च पेषणाभावात् तदर्थाधिवापः तन्मन्त्रश्च निवर्तते इति द्रष्टव्यम् ।

**वि**— 'नोह्य ऊह्योऽथवा धान्यशब्दो, नासंगतोक्तितः ।, ऊह्यो लक्षणयाऽर्थस्य गोपानस्येव संगतेः ॥' 'गावः पीयन्ते' इत्यत्र मुख्यवृत्त्यभावेऽपि नासमवेतार्थत्वं लोका वर्णयन्ति, किन्तु ( गोशब्देन ) दुग्धं लक्षयित्वा अर्थं समवेतमेव प्रतियन्ति, तद्वत् ।

**भाट्ट**— एवं वा । दर्शपूर्णमासयोः 'धान्यमसि धिनुहि देवान्' इति मन्त्रः श्रुतः । स च 'धान्यमसीति

दृषदि तण्डुलानधिवपति ' इति वचनेन तण्डुलाधिवापे विनियुक्तः । तत्र धान्यशब्दः सतुषद्रव्यवचनः तण्डुलावस्थायां प्रयुज्यमानः धान्यत्वारोपेण स्तुत्यर्थः सवित्रादिपदवदेव असमवेतार्थः इति मांसेऽपि तदारोपेण प्रयोक्तव्यः। **इति प्राप्ते**, ' शालयो भुज्यन्ते ' इति कार्ये प्रकृतिवाचकपदप्रयोगात् प्रयुक्तलक्षणोपपत्तेः असिपदाक्षिप्ततण्डुलरूपकर्तृसामानाधिकरण्याच्च लक्षणया धान्यशब्दः तण्डुलपरः सन् समवेतार्थक एव । ननु एवं समवेतार्थकत्वेऽपि मांसेऽपि लक्षणयैव धान्यशब्दप्रयोगोपपत्तेः नोहप्रसक्तिः । धान्यपदस्यैव प्रकृतौ तण्डुलस्मारकत्वात्, विकृतौ मांसस्मारकस्य प्रोक्षणादिवत् कथञ्चित् ऊहलक्षणाक्रान्तत्वेऽपि वा धान्यपदबाधेन मांसपदप्रक्षेपरूपसिद्धान्तानापत्तिः । यथैव हि प्रकृतौ अग्निपदेन शक्त्या अपूर्वसाधनीभूतां देवतां प्रकाशयेत् इति लिङ्गकल्पितश्रुत्या मन्त्रविनियोगात्, विकृतौ अग्निदेवत्यायां शक्त्या अग्निपदेनैव उक्तदेवताप्रकाशनोपपत्तेः न पदान्तरप्रक्षेपः । सत्यां गतौ प्राकृतवृत्तितद्वत्पदयोः बाधे प्रमाणाभावात् । अपि तु अन्यदेवत्यायामेव सः । तत्र शक्त्या अग्निपदेन तत्प्रकाशनानुपपत्तेः प्रकृतौ वृत्तिविवक्षासत्त्वात् । विकृतौ च वृत्तेर्व्यापारत्वेन तन्मुखेनैव अग्निपदरूपपदार्थप्राप्तेः न लक्षणया विना अग्निपदेन तत्प्रकाशनम् । अतस्तत्र प्राकृतशक्तिनिर्वाहार्थं सूर्यादिपदान्तरप्रक्षेप एव शरणम् । न तु अग्निदेवत्यायां विकृतौ । तथैव धान्यपदेन लक्षणया प्रदेयप्रकृतिभूतं प्रकाशयेत् इति गौणसामर्थ्यकल्पितश्रुत्या मन्त्रविनियोगात् विकृतावपि मांसे उपकारपृष्ठभावेन वृत्तेः तत्पृष्ठभावेन च धान्यपदस्य अतिदेशात् तदबाधाय धान्यपदेनैव मांसप्रकाशनोपपत्तेः न पदान्तरप्रक्षेपः । **इति चेत्** । सत्यं प्राकृतप्रकाशनरूपोपकारपृष्ठभावेन प्राकृतवृत्तिरूपव्यापारातिदेशः तत्पृष्ठभावेन च अग्न्यादिपदरूपपदार्थातिदेशः, इतरथा वृत्त्यनतिदेशे प्रकाशनपृष्ठभावेन अतिदिष्टस्य पदस्य विकृतौ लक्षणयाऽपि प्रकाशकत्वोपपत्तेः पदान्तरप्रक्षेपानापत्तिप्रसङ्गात् । तथापि प्राकृतपदनिष्ठप्राकृतवृत्तिरेव विकृतौ अतिदिश्यते, न तु वृत्तिमात्रम्, प्रमाणाभावात् । अत एव सौर्ये प्राकृतपदस्येव प्राकृतवृत्तेरपि बाधसत्त्वेऽपि सूर्यप्रकाशनकार्यानुरोधेनैव मन्त्रपदान्तरानुरोधात् सूर्यपदप्रक्षेपः । अतश्च धान्यप्रकृतित्वरूपशक्यसंबन्धरूपायाः प्राकृतलक्षणावृत्तेः मांसे बाधे संबन्धान्तररूपलक्षणावृत्तिकल्पने प्रमाणाभावात् धान्यपदस्य बाधावश्यम्भावे मांसप्रकाशनरूपकार्यानुरोधेन मन्त्रपदान्तरानुरोधादेव मांसपदप्रक्षेपः । अत एव न प्रकृतिवाचकमृगपदप्रक्षेपोऽपि । शक्तपदप्रक्षेपसंभवे अप्राकृतलक्षणया पदान्तरप्रक्षेपस्य अन्याय्यत्वात् । अतः शाक्यानामयने ' तरसमयाः सवनीयाः पुरोडाशा भवन्ति ' इत्यत्र मासे अधिवापे क्रियमाणे ' मांसमसि ' इत्यूहितव्यम् ।

इदं च कृत्वाचिन्तया । तृतीये ( ३।८।२३ भाट्ट. ) सवनीयोद्देशेन हविष्ट्वेनैव तरसविधानस्य स्थापितत्वात् । सत्यपि वा प्रदेयप्रकृतित्वे अर्थलोपेन तत्र अधिवापस्य चराविव बाधितत्वाच्च । विस्तरेण चैतत् **न्यायसुधाकारमत**निरासपूर्वकं उपपादितं द्वितीये ' धर्ममात्रे तु कर्म स्यात् ' ( २।१।९ सू. ) इत्यत्र कौस्तुभे ।

**मण्डन**—' ऊहं व्रजेद्धान्यमसीति वाक्यम् ।' १४.

**शंकर**-- ' तरसे धान्यशब्दगः । ' ऊहः । २१.

* **धान्याधिकरणप्रयोजन**भाष्ये तु सवनीयशब्दवद्वाक्योदाहरणमनादृत्यं इति परिहारसूचनार्थम् ' यथा ' इत्याद्युक्तम् । सु. पृ. ६३९.

**धान्यपलालन्यायः** । यथैतत् स्वरूपम् ' शास्त्राण्यधीत्य मेधावी ह्यभ्यस्य च पुनःपुनः । परमं ब्रह्म विज्ञाय ह्युल्कावत् तान्यथोत्सृजेत् ॥ ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः । पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः ॥ ' इति पञ्चदश्यामुक्तम् । अयं न्यायः ' तस्यापत्यम् ' ( पा० ४।१।९२ ) इत्यादिसूत्रमहाभाष्येऽप्यभिहितः । **साहस्री**. २४०, * धान्यपलालन्यायः । यथा कश्चिद्धान्यार्थी शालिकलापं सतुषं सपलालमाहरति नान्तरीयकत्वात्, स यावदादेयं तावदादाय तुषपलालान्युत्सृजति । महाभाष्ये ' तस्यापत्यम् ' इत्यत्र । **भूतिः**. पृ. २६८ परि. ७४.

* **धान्यशब्दः** सतुषे वर्तते । स हि तण्डुलेषु वर्तते तद्विकारत्वात् लक्षणया । यथा ' काशिकेषु शालयो भुज्यन्ते ' ' गावः पीयन्ते ' इति । **भा. ९।१।१३।**

३८-३९, * धान्यशब्दस्य दर्शपूर्णमासस्थपेषणमन्त्रगतस्य विकृतौ शाक्त्यानामयने 'मांसमसि' इति ऊहः। ९।१।१३।३८-३९ वर्णकं १.

* 'धा'प्रत्ययः प्रकारवाची सन् एकवारं इत्यर्थम्, बहूनां सहभावं वा ब्रूते। कृष्णलेषु 'एकधा ब्रह्मण उपहरति' इत्यत्र तु सहभावमेव ब्रूते। वि. १०।२।४.

* धाय्या आग्निवारुण्याः इष्टेः क्रमे अतीते सौमारौद्रीणां अनागते मनोर्ऋचः सामिधेनीषु धाय्या इत्युच्यन्ते। तथा 'पृथुपाजाः, तं सबाधः' इति द्वे धाय्ये सामिधेनीषु कल्प्येते। भा. ३।२।७।२० पृ. ७७३, * काः पुनरेता धाय्याः नाम? नास्य शब्दस्य प्रसिद्धिमुपलभामहे। उच्यते, सामिधेन्यो धाय्याः। कुतः? एवं हि भगवतः पाणिनेर्वचनम् 'पाय्यसांनाय्यनिकाय्यधाय्यामानहविर्निवाससामिधेनीषु' इति। अस्माद्वचनात् श्रुतिमनुमिमीमहे। विशिष्टासु अपि (सामिधेनीषु) वचनमुपपद्यते एव। ५।३।३।५. * धाय्यानां समिद्ध्यमानवतीसमिद्धवत्यन्तरालनिवेशः 'इयं वै समिध्यमानवती, असौ समिद्धवती, यदन्तरा तद्धाय्या' इत्यर्थवादप्रामाण्याधीनः। तत्र 'समिध्यमानो अध्वरे' इति समिध्यमानवती, 'समिद्धो अग्ने' इति समिद्धवती। अधिकरणं दर्शपूर्णप्रघट्टके। के.

* धाय्याशब्दः सामिधेनीषु निपात्यमानः तास्वेवेत्यवधारणात् नान्यासु धीयमानास्वपि धाय्याशब्दवाच्यत्वं भवति। वा. ३।७।१७।३७.

* धाय्याशब्दिता एव ऋचः मध्ये स्युः, अन्यास्तु आगन्तवः अन्ते स्युः, बादरायणमतात्। दर्शपूर्णमासयोः सामिधेनीविवृद्धौ षण्णामागमयितव्यानामृचामन्ते निवेशः। रत्न. ५।३।३।४-६. * धाय्याशब्दितानां ऋचां समिद्ध्यमानवतीसमिद्धवत्यन्तरालनिधानस्य अपेक्षितविधित्वसिद्ध्यै धाय्याशब्दस्य धीयमानवाचित्वनिपातनात् 'यत्रयत्र वै देवा यज्ञस्य छिद्रं निरजानंस्तद् धाय्याभिरपिदधुः तद्धाय्यानां धाय्यात्वम्' इत्यर्थवादात् छिद्रापिधाननिमित्तधाय्याशब्दकत्वावगतेः पृथुपाजवत्यादीनां सामिधेनीनामेव आवपनाख्यनिमित्तधाय्यात्वावधारणाविरोधः। सु. ३।७ पृ. ३८.

* धाय्यासमाख्यत्वं मनोर्ऋचाम् 'अग्निरुक्थे पुरोहितः' इत्याद्यानाम् (ऋसं. ८।२७।१) 'पृथुपाजा' इति द्वयोश्च (पृथुपाजाः, तं सबाधो) सामिधेनीषु प्रक्षेप्यानाम्। सु. पृ. ११११.

* धारणं प्रयाजशेषस्य तत्पात्रे च न कर्तव्ये वाजपेयप्राजापत्यपशुषु अभिघारणार्थम्। वि. ४।१।१४.

धारणे च परार्थत्वात्। ९।४।७।२९॥

'धार्यो गतश्रिय आहवनीयः' इति पठ्यते। अयं धार्योऽग्निः यदा अनुगच्छति, तदा ज्योतिष्मतीष्टिः अनुगमनप्रायश्चित्तं कर्तव्यं न वा इति विचारे यथा पर्युक्षणं परिसमूहनं तृणावचयः इत्येवमादयः पदार्था धार्येऽग्नौ अहन्यहनि क्रियन्ते, तथा अनुगमने प्रायश्चित्तमपि क्रियेत इति प्राप्ते, उच्यते। धारणे अग्नेः कृते सति प्रायश्चित्तं न कर्तव्यम्। चकारेण 'प्रायश्चित्तं न विद्यते' इत्यनुकृष्यते। कुतो न कर्तव्यम्? परार्थत्वात्। नहि तदा अग्निहोत्रार्थमुद्धरणं यस्मिन् काले भवत्यसौ गतश्रीः। तत्र अन्यार्थमुद्धृतोऽग्निः सर्वार्थे धार्यते। न च धारणे अग्निहोत्रार्थे अनुगमने प्रायश्चित्तं विहितम्। तस्मान्न तत्रेदं प्रायश्चित्तम्। 'त्रयो वै गतश्रियः शुश्रुवान् ग्रामणी राजन्यः' इति गतश्रीपदस्यार्थः उक्तः। प्राप्तश्रीर्वा गतश्रीः।

क्रियार्थत्वादितरेषु कर्म स्यात्। ३०॥

'आहितमाहवनीयमुत्सृजति अर्थायार्थाय अग्निं प्रणयति, नित्यो गतश्रियो धार्य आहवनीयः' इत्याम्नातम्। अत्र पूर्वपक्षिणा यदुक्तम् 'पर्युक्षणपरिसमूहनादिवत् होमात् प्रागग्नेर्धार्यस्य अनुगमने प्रायश्चित्तं कर्तव्यमिति' तत्राह सिद्धान्ती। इतरेषु प्रायश्चित्तादितरेषु पर्युक्षणादिषु क्रियार्थत्वात् संस्कारार्थत्वात् कर्म अनुष्ठानं स्यात्। इति प्रायश्चित्तस्य पर्युक्षणादिभ्यो वैलक्षण्यम्। तस्मात् धार्येऽग्नौ अनुगते ज्योतिष्मतीष्टिर्न कर्तव्या इति सिद्धान्तः। के.

* धारणार्थमग्न्यन्वाधानं दार्शपौर्णमासिकं सौमिकेषु ऐष्टिकेषु न कर्तव्यम्। सोमिकेन प्रसङ्गसिद्धत्वात्। के. १२।१।१२।२४-२८.

**धारणार्थत्वात् सोमेऽग्न्यन्वाधानं न विद्यते। १२।१।१०।१९ ॥**

सोमे दीक्षणीयाऽऽदिषु ऐष्टिकेषु कर्मसु चोदकप्राप्तं अग्न्यन्वाधानं न विद्यते, न कर्तव्यम्। धारणार्थत्वात्, विहृतस्य अग्नेः धारणार्थं तत्। सोमार्थेन च विहृतस्य तत् कृतम्। न च धृतस्य धारणम्। तस्मात् दीक्षणीयाऽऽदिषु अग्न्यन्वाधानं नास्ति इति सिद्धान्तः। के.

* '**धारयेद्वैणवं** दण्डं शुभे रौक्मे च कुण्डले। न जीर्णमलवद्वासा भवेच्च विभवे सति ॥' इति स्नातकव्रतम्। सु. पृ. १४७७.

* **धाराग्रहाः** ऐन्द्रवायवमैत्रावरुणादयो ज्योतिष्टोमे। 'धारया गृह्णाति'। वि. १०।५।१७. * **धाराग्रहेभ्यः** पूर्वं अंशुग्रहः। (एकधनानामपां सादनं कृत्वा ततः दधि- अंशु- अदाभ्य- उपांशु- अन्तर्यामाः नाम ग्रहा गृह्यन्ते। तदनन्तरं धाराग्रहाः ऐन्द्रवायवादयो गृह्यन्ते)। भा. ५।३।६।१५-१६. * **धाराग्रहाणामेव** कामसंयोगः। इदंकामः एतं ग्रहं गृह्णीयात् इति। वि. १०।५।१८.

* **धारावाहिकेषु** ये कालातिरेकेण प्रामाण्यमाहुः ते निराकृताः। क्षणभेदस्य अवेद्यत्वात्। येऽपि तत्र तदाद्यदर्शनमेव प्रमाणमिति बौद्धा आहुः, तेऽपि सर्वेषां तुल्यत्वेन निराकृताः। ऋजु. पृ. ८०.

* **धारावाहिकज्ञानस्य** गृहीतविषयकस्य कथं प्रामाण्यम्, कालस्य षडिन्द्रियवेद्यत्वेन पूर्वक्षणविशिष्टघटस्य विषयीकरणेन तादृशस्य उत्तरज्ञानाविषयतया अनधिगतार्थविषयकत्वात्। मणि. पृ. १३.

* **धार्मिकः**। यो यागमनुतिष्ठति तं धार्मिक इति समाचक्षते। भा. १।१।२।२ पृ. १७-१८.

* **धार्यो** गतश्रियः (ग्रामणीः शुश्रुवान् राजन्यश्च) आहवनीयः। अत्र गतश्रीकत्रितयस्यैव अजस्रमाहवनीयधारणविधानम्। संकर्ष. ३।२।५. * **धार्येऽग्नौ** परिसमूहनं पर्युक्षणं तृणापचयः इत्येवमादयः पदार्थाः अहन्यहनि क्रियन्ते। चोदितानि हि तानि संस्कारार्थत्वेन, शक्यानि च, अकृतप्रयोजनानि च। अनुगमने तु ज्योतिष्मतीष्टिः प्रायश्चित्तं न कर्तव्यम्। (अधिकरणं अग्निचयनप्रघट्टके द्रष्टव्यम्।) भा. ९।४।७।२९-३०.

* **धावनं** दन्तानां ज्योतिष्टोमे संस्कारः न फलप्रयुक्तः। तत्र फलश्रुतिरर्थवादः। तच्च क्रत्वर्थं याजमानम्। के. ४।३।१।१-३.

* **धिष्ण्यानां** अग्नीनां विहरणं आग्नीध्रीयादेव, न औत्तरवेदिकात्। संकर्ष. ३।२।१५, * **धिष्ण्यानां** षण्णामग्नीनां सवनत्रये अग्निष्टोमसामकाले चेति चतुर्वारं विहरणात् चतुर्विंशतिर्धिष्ण्याश्रयः। ३।२।१६.

* **धिष्ण्यव्याघारण**संपातेन आज्येन पात्नीवतं श्रीणाति। संकर्ष. ३।२।२०.

* **धिष्ण्याग्निव्याघारणं** परिप्लुपात्रेण। संकर्ष. ३।२।१९.

* **धुरिसामानि** नाम 'गीतिविकारो गायत्रस्य धुरः' इति वचनात् गायत्रविकारात्मकानि धूर्गानशब्देनोच्यन्ते। सोम. १०।५।३.

* **धूर्गानं** एकत्रिके नाम यागे 'आवृत्तं धूर्षु स्तुवते' इत्यावृत्त्या विहितम्। तच्चैकस्यामृचि, न तृचे। वि. १०।५।३.

* **धूर्नामकानि** गायत्रगानविशेषात्मकानि सामानि। कु. १०।५।३।१०.

* **धूमो** बुद्धिविषयतामापन्नः अग्नेर्लिङ्गम्, न विद्यमानः। भा. ८।१।१७।३३. * 'यादृशस्य हि धूमस्य गमकत्वावधारणा। स तादृक् बहुरल्पो वा वह्निं गमयति ध्रुवम् ॥' वा. ३।३।४।११ पृ. ८१६.

* **धूमादिव्यक्त्यो** हि सामान्येन उपाधिना अग्निसंबन्धव्याप्ता अग्निव्यक्तिमेव गमयति। ऋजु. पृ. २३५.

**धूल्यन्धकारधूमाभ्रविमुक्तगगनमिति न्यायः।** अयं वस्तुनः अतिशुद्धत्वविवक्षायामवतरति। यथा चोक्तम् 'निर्विकल्पं परं ब्रह्म निर्धूताखिलकल्पनम्। धूल्यन्धकारधूमाभ्रविमुक्तगगनोपमम् ॥' इति। साहस्री. ९११.

* **धृतराष्ट्रस्य** अन्धस्य इज्या पाण्डवर्जितैर्धनैः इति अनधिकृतक्रिया (धर्मव्यतिक्रमः)। वा. १।३।३।७

पृ. २०४ । अत्र सुधा पृ. १८५–८६ । धृतराष्ट्रस्य अन्धत्वेन अनधिकृतस्य यागकरणात् धर्मव्यतिक्रमः । अन्धस्य निरंशत्वेन धनाभावात् यागासंभवमाशङ्क्य 'तस्य वीरस्य विक्रान्तैः सहस्रशतदक्षिणैः । अश्वमेधशतैरीजे धृतराष्ट्रो महामखैः ॥' इति दर्शनात् पाण्डववर्जितैः धनैः इत्युक्तम् । 'सुहृदश्चापि धर्मात्मा धनेन समतर्पयत्' इति च पाण्डुना धृतराष्ट्रादिभ्यः स्वार्जितधनसमर्पणात् नापहारः शङ्कनीयः । पाण्डववर्जितधनोपजीवनं ज्येष्ठस्य धृतराष्ट्रस्य अनुचितं इति व्यतिक्रमान्तरं चानेनोक्तम् ।

**वार्तिकम्**— धृतराष्ट्रोऽपि व्यासानुग्रहात् आश्चर्यपर्वणि पुत्रदर्शनवत् क्रतुकालेऽपि दृष्टवानेव । शापानुग्रहसमर्था महर्षयः श्रूयन्ते । तत् यथैव तद्वचनात् असौ अन्धो जातो विज्ञायते, तथा यज्ञानुष्ठानवचनात् तावति काले दृष्टवान् इत्यर्थापत्त्या सुज्ञानम् । यद्वा 'यज देवपूजासंगतिकरणदानेषु' इति दानार्थ एवायं यजिर्भविष्यति, क्रतुफलसमानि च दानतपश्चरणादीन्यपि श्रूयन्ते, तत्कारणात् क्रतुक्रियोपचारः । पृ. २०८–०९.

* **धृतिः** । पादेषु अक्षराणि १२।१२।८।८।८।१६।८ उदा० 'अवर्मह इन्द्र०' ( ऋसं. १।१३३।६ ) । **के.**

* **धृतिमन्त्रेषु** 'इह धृतिः स्वाहा, इह विधृतिः स्वाहा' इत्यादिषु धृत्यादिशब्दानां चतुर्थ्यन्तपाठो न कर्तव्यः किन्तु यथासमाम्नानं प्रयोगः । **संकर्ष.** २।४।२१.

* **धेनुः** एका कृत्स्नस्य क्रतुदाक्षिण्यस्य कार्ये भवति भूर्नामके यागे । स च यागः 'अथैष भूर्वैश्वदेवः, त्रिवृदेव सर्वः, तस्य विश्ववत्यः ( विश्वशब्दघटिताः ) स्तोत्रीयाः, धेनुर्दक्षिणा' इति विहितः । **के.** १०।६।१४।५६–५८.

* **धेनुर्दक्षिणा** । 'गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य ( अग्निष्टोमस्य ) द्वादशशतं दक्षिणा' इति वाक्ये चशब्देन इतरेतरसहितस्य गवादिशब्दस्य दक्षिणाशब्दान्वयावगमात् समुदितानां गवादीनां एकदक्षिणात्वावगतेः 'धेनुर्दक्षिणा' इति विकृतौ ( भूनामके एकाहे ) विहिताया धेनोः समस्तदक्षिणाविकारत्वं दशमे ( १०।३।१४।५६–५८ ) वक्ष्यते । **सु. पृ.** ७८६.

* **धेन्वादयः शब्दाः** उभयोः ( गौः धयन्ती चेति ) असाधारणवचना एव । शोणादय इव अनपेक्ष्य च पदान्तरं एते पदावस्थायामेव असाधारणमर्थं प्रतिपादयन्ति । केचित् पदान्तरमपेक्ष्य साधारणं प्रतिपादयन्ति । यथा शुक्लः पट इति । **टुप्.** १०।२।२९।६८.

**धेनुकिशोरन्यायः** । 'यथा धेनुः किशोरेण' । तद्यथा, कृष्णकिशोरा धेनुः इति । यद्यपि धेनुशब्दो गोधेन्वां दृष्टप्रवृत्तिः, तथापि अभिधानसामान्यात् अश्वधेन्वामपि भागी इति किशोरेण लिङ्गेन अश्वधेन्वां विज्ञायते । भागित्वात्तु नियम्येत 'गुणानामभिधानत्वात् संबन्धादभिधानवद् यथा धेनुः किशोरेण' । **भा.** ७।४।२।७.

**धेनुन्यायः** । भूसंज्ञकैकाहे औपदेशिकधेनुदक्षिणया आतिदेशिककृत्स्नक्रतुदक्षिणायाः बाधः ॥

**तस्य धेनुरिति गवाम्, प्रकृतौ विभक्तं चोदितत्वात्, तत्सामान्यात् तद्विकारः स्याद्, यथेष्टिर्गुणशब्देन ।१०।३।१४।५६॥**

**भाष्यम्**— इदमामनन्ति 'अथैष भूर्वैश्वदेवः, त्रिवृदेव सर्वः, तस्य विश्ववत्यः स्तोत्रीयाः, धेनुर्दक्षिणा' इति । ( अत्र सत्याषाढः– 'भूः उक्थ्यः रथंतरसामा, भूतिकामो यजेत, धेनुर्दक्षिणा' इति । १७।३।२४ । बृहस्पतिसववत् शस्यमित्युक्तं आश्वलायनेन ९।५।१५ ) । अत्र संदेहः किं धेनुः गवां निवर्तिका, उत कृत्स्नाया दक्षिणायाः इति । तत्र इदं तावत् परीक्ष्यं किं प्रकृतौ विभक्तं दाक्षिण्यम्, उत समस्तमिति । ततः इदं तच्च संहृत्य अधिकरणं क्रियते । किं प्रकृतौ विभक्तं दाक्षिण्यम्, धेनुर्गवां निवर्तिका, उत अविभक्तं कृत्स्नाया दक्षिणाया निवर्तिकेति । किं प्राप्तम् ? 'तस्य धेनुः' इति श्रूयमाणे ब्रूमः । धेनुर्गवां निवर्तिकेति । ततः एतत् तावत् विचार्यते प्रकृतौ विभक्तं दाक्षिण्यमिति । किमिदं विभक्तमिति ? गवादीनामेकैकं द्रव्यं दक्षिणेति । कथम् ? गौश्चाश्वश्चाश्वतरश्च दक्षिणा, इति प्रकृतौ गवादिभिर्दक्षिणाशब्दः प्रत्येकं परिसमाप्यते । निर्दिष्टा हि गवादयो न तेषां समुदायः । चशब्दः समुच्चयार्थो भवति, न तु समुच्चयस्य निर्देशकः । परपदविशेषणार्थं तु समुच्चयमुपादत्ते । यदि हि निर्दिशेत्, क्रियागुणैः समुच्चयः

संबध्येत। 'समुच्चयः शोभनः, समुच्चयो द्रष्टव्यः' इति यथा भवति एवम्, 'च शोभनः' 'च द्रष्टव्यः' इति वा भविष्यति।

तथा, यथेह समुच्चेययोः षष्ठी भवति 'धवखदिरयोः समुच्चयः' इति, एवं धवः खदिरश्चेत्यत्राप्यभविष्यत्। न तु भवति। तस्मान्न चशब्दः समुच्चयं निर्दिशति। श्रुत्या निर्दिष्टेन चैकवाक्यता न्याय्या, न गवादिलक्षितेन समुदायेन। तस्मात् 'गौर्दक्षिणा, अश्वो दक्षिणा' इत्येवं संबन्धः। लक्षयित्वा हि गवादीन् तेषां दक्षिणात्वं विधीयते। तच्च गुणभूतं प्रतिप्रधानं भिद्येत। चशब्दश्चैवं समर्थितो भविष्यति, 'गौर्दक्षिणा, अश्वश्च दक्षिणा' इति। न गौरश्वादिसहितो गवादीनां वा समाहारः इति।

यदा विभक्तं दाक्षिण्यम्, तदा प्राप्ता गौर्दाक्षिण्ये। पुनर्विशेषार्थमुच्चार्यते 'धेनुर्दक्षिणा' इति। याऽसौ गौर्दक्षिणा सा धेनुरिति। अन्यासां दक्षिणानामविकारेण यथाप्रकृतिभावेन चोदकानुग्रहो भविष्यति। शब्देनैव गव्येष गुण उच्यते, धेनुत्वं नाम। गौरेव हि धेनुर्नान्या। यथेष्टिर्गुणशब्देन। सौर्यं निर्वपेदिति सूर्यसंबन्धं कुर्यात् द्रव्यस्येति विवक्षिते निर्वपणाश्रयः एव प्रयोगः शब्देन निर्दिश्यते इति, सनिर्वपणकात् प्रयोगादनेन निर्वपणशब्देन ऐष्टिको विध्यन्तो नियम्यते। एवमिहापि गोर्गुणवचनेन धेनुशब्देन गोदक्षिणाविकारः क्रियते, नान्या दक्षिणा विक्रियते इति।

**टुप्––तस्य धेनुरिति** (सर्वं सूत्रम्)। (शाखान्तरवाक्यमङ्गीकृत्य चिन्त्यते यत्र गवादीनि द्रव्याणि [इति], 'तस्य द्वादशशतम्' इति च एकवाक्यभूतं श्रूयते। भाष्योक्तं संदेहं दर्शयति–) विकृतिसिद्ध्यर्थं प्रकृतिं तावन्निरूपयामः। यदि (प्रकृतौ) गवादयः प्रधानभूताः (दक्षिणां प्रति) ततः एकद्रव्यनिवर्तिका धेनुः (एकद्रव्यस्यैव निवर्तिका इति विग्रहः)। अथ दक्षिणा (प्रधानभूता ततः) कृत्स्नस्य दाक्षिण्यस्य निवर्तिका (धेनुः। **पूर्वपक्षमाह–**) गवादयोऽत्र प्रधानभूताः। (कुतः?) ते अत्र निर्दिश्यन्ते। दक्षिणा तान् प्रति (एकैकमुद्दिश्य) विधीयते। '**चशब्दः समुच्चयार्थो भवति, न तु समुच्चयस्य निर्देशकः**' (इति भाष्यस्य) कोऽभिप्रायः? (केचिदाहुः प्रमाणान्तरसिद्धस्यार्थस्य अनुवादकोऽयं चशब्दः, न तु विधायक इति। अपरे पुनः द्योतकाः चादयः, न तु वाचकाः इति व्याचक्षते। तद्भ्रमापनोदनाय अर्थतत्त्वं वक्तुमाह–) शब्दास्तावत् द्विप्रकाराः, केचित् वाच्यम् (अर्थम्) स्वप्रधानमाहुः, नोपसर्जनत्वेन यथा 'वृक्षौ' इति वृक्षशब्दः स्वार्थवान् उच्चार्यते (स्वप्रधानभूतार्थवानित्यर्थः) केचित् (तु वाच्यमर्थम्) अन्योपसर्जनीभूतं ब्रुवते (न प्रधानभूतम्) यथा अत्रैव 'वृक्षौ' इति द्विवचनं प्रातिपदिकोपसर्जनं आत्मार्थं ब्रवीति द्विवचनार्थं द्वित्वमेव अजहत् (अजहदेव इत्यन्वयः)। एवं चशब्दः समुच्चयं ब्रुवन् (नियमेन शब्दान्तरात् पर उच्चार्यमाणः) परोपसर्जनत्वेन ब्रवीति, न स्वप्राधान्येन। तस्मात् यस्योपसर्जनं चशब्दः, सोऽत्र क्रियागुणाभ्यां संबध्यते। प्रधाने कार्यसंप्रत्ययात् सिद्धं इति। ('इति अभिप्रायः भाष्यस्य' इति अनुकृष्टेन अभिप्रायपदेन इतिशब्दस्यान्वयः। किं तत् प्रधानमित्यत आह– ) ते च गवादयः। न चशब्दः समुच्चयस्य पर्यायवचनः। समुच्चयशब्दः (हि) समुच्चयं प्राधान्येन निर्दिशति, नान्यत्र गुणभावेन। (तच्च दर्शितं भाष्ये। एवं स्वमतेन व्याख्याय परमतं दूषयति। तत्रापि अनुवादपक्षं उपेक्ष्य द्योतकत्वपक्षं दूषयति– ) चादयः स्वार्थस्य वक्तारः, न द्योतकाः। कथम्? शब्दस्तावत् अदृष्टया शक्त्या अर्थमभिधत्ते। (तेन) स एव (चशब्दः समुच्चयाभिधायी कल्पयितुम्) न्याय्यः, एकशक्तिकल्पनात्। (अन्यथा शब्दान्तरस्य तदभिधायिता, चशब्दस्य च द्योतकत्वं इति शक्तिद्वयं स्यात्)। अपिच वृक्षशब्दे उच्चरिते वृक्षार्थः एव मनसि विपरिवर्तते, नान्यसहितः प्राक् (च–) शब्दोच्चारणात्। उच्चरिते तु चशब्दे इतरेतरयोगः प्रतीयते। यस्य चोच्चारणात् योऽर्थः प्रतीयते, स तस्यार्थः। गवादीनामुद्दिश्यमानानां विशेषणमविवक्षितम्। तस्मात् (गवाश्वाश्वतरादीनाम्) एकैकस्य दक्षिणया संबन्धः।

**सर्वस्य वा, क्रतुसंयोगादेकत्वाद् दक्षिणाऽर्थस्य, गुणानां कार्यैकत्वादर्थे, विकृतौ श्रुतिभूता स्यात्, तया समवायाद्धि कर्मभिः। ५७॥**

**भाष्यम्—** वाशब्दः पक्षं व्यावर्तयति । सर्वस्य क्रतुदाक्षिण्यस्य निवर्तिका धेनुरिति प्रतिज्ञायते । तत्रै-तद्वर्ण्यते समस्तं दाक्षिण्यमिति । किमिदं समस्तं दाक्षिण्य-मिति ? न प्रतिद्रव्यं दक्षिणाशब्दः संबध्यते, गौर्दक्षिणा, अश्वो दक्षिणा, अश्वतरो दक्षिणा इति । कथं तर्हि ? गवादयो दक्षिणेति । नहि गवादीनुद्दिश्य दक्षिणासंबन्धो विधीयते, ये गवादयस्ते दक्षिणेति । तथाहि दक्षिणा-शब्दो गवादीनां दक्षिणासंबन्धविधानार्थं यौगपद्येन अन्तर्णीतसंबन्धमभिवदन् बहुवचनान्तः स्यात्, गवादयो दक्षिणाः इति । यथा 'अग्नीषोमौ देवते' 'प्राणा-पानावभिसमभवताम्' इति । गुणवचनानां शब्दाना-माश्रयतो लिङ्गवचनानि भवन्ति । कथं तर्हि ? दक्षिणा-मुद्दिश्य गवादयो विधीयन्ते । का दक्षिणा ? गवादय इति । दक्षिणा नाम दक्षतेरुत्साहकर्मणः । दक्षिणा उत्साहिका, इति । एकः स गुणः । स च प्राधान्येन विवक्षितः । तद्विशेषणत्वेन गवादयः । गुणवचनानां च शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति, न द्रव्यवचना-नामाश्रितगुणवशेन । यथा, 'विश्वे देवा देवता' इति । का पुनर्दक्षिणा ? गौश्चाश्वश्चाश्वतरश्चेति । दक्षिणाशब्दो दाने संबध्यते, ऋत्विग्भ्यो दक्षिणां ददातीति, न गवा-दयः । एको हि दक्षिणानामर्थः, ऋत्विजामानमनम् । सकृच्च आनतास्ते भवन्ति, भूय आनमनेन अर्थो नास्ति, गवादीनामपि गुणानामेकं कार्यं दक्षिणात्वम् । यदा समस्तं दाक्षिण्यम्, तदा विकृतौ भुवि तस्मिन् प्राकृतेऽर्थे धेनुः श्रुतिभूता । सा च प्राकृतं कार्यमभिनिर्वर्तयति । क्रतुसंयोगेन हि श्रूयते तस्य क्रतोर्धेनुर्दक्षिणा, इति । तस्मिन्निर्वृत्ते सर्वं चोदकप्राप्तमानुमानिकं निवर्तते । तया समवायाद्धि कर्मभिर्ऋत्विजः संबध्यन्ते श्रुतिभूतया । अपिच चशब्दश्रुत्या ससहायं गोद्रव्यमिति प्रतीयते । दक्षिणासंबन्धोऽस्य वाक्येन । श्रुतिश्च वाक्याद्बलीयसी । तस्मात् पूर्वं चयोगः, पश्चाद्दक्षिणासंबन्धः । इतरेतरयुक्ता दक्षिणात्वेन संबध्यन्ते गवादयोऽर्थाः । तस्मात् कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तिका धेनुरिति ।

**टुप्—** **सर्वस्य वा क्रतुसंयोगादेकत्वं दक्षिणा-र्थगुणानां कार्यैकत्वादर्थे विकृतौ श्रुतिभूतं स्यात् तस्मात् समवायो हि कर्मभिः ॥** ( लिखितटुप्टीका पुस्तके एतादृशः सूत्रपाठः । किञ्चिदक्षरभेदेन एतादृश एव पाठः अनेकत्र दृश्यते । तथापि नासौ भाष्यानुसारी । टुप्टीकामूले तु नैव सूत्रं प्रायो व्याख्यायते । भाष्या-नुसारी य–क्ष–पुस्तकानुसारी च पाठः प्रायोऽस्माभिः स्वीकृतः इति ज्ञेयम्– के. ) इतरेतरयुक्ताः ( गवादयः ) दक्षिणां प्रति विधीयन्ते ।, कुतः ? संख्यासामर्थ्यात् ( द्वादशशतसंख्योपादानसामर्थ्यादित्यर्थः ) । यदि गवा-दीनुद्दिश्य दक्षिणा विधीयते ( तथा सति ) न संख्या दक्षिणां प्रति विधीयेत, वाक्यभेदप्रसङ्गात् ( दक्षिणा-शब्दस्य विरुद्धत्रिकद्वयापत्तेश्च ) । यदि च गवादयः ( संख्यां प्रति ) प्रधानभूताः ( तथा सति 'तस्य' इत्यत्र ) तेषामिति बहुवचनं प्राप्नोति । किञ्च गवादीनां प्राधान्ये ( सति विधेः ) अदृष्टकल्पना प्राप्नोति अन्यत्रा-शेषभावात् ( शेषभावात् इति मुद्रिते ) गवादीनाम् । दक्षिणाप्राधान्ये ( तु ) नादृष्टम् ( कल्प्यम् ), 'ऋत्विग्भ्यो दक्षिणां ददाति' इति विहितत्वात् । अपिच गुणवचनोऽयम् ( दक्षिणाशब्दः ), स यदा द्रव्ये उप-सर्जनीभूतः, तदा द्रव्यस्यैव यत् लिङ्गसंख्यम्, तत् लभते । इह च बहूनि द्रव्याणि ( गवादीनि ) तस्मात् बहुवचनेन भवितव्यम् ( दक्षिणाः इति ) । यदा तु स्वप्राधान्येन विवक्षितो गुणः, तदा द्रव्यस्य यत् लिङ्ग-संख्यम्, तन्न लभते । भवितव्यं च गुणस्यापि ( केनचित् ) वचनेन, तस्मात् ( प्राथम्यात् ) 'दक्षिणा' इति एकवचनं युक्तम् । ( तस्मात् कृत्स्ननिवर्तिका धेनुरिति ) ।

**चोदनानामनाश्रयाल्लिङ्गेन नियमः स्यात् । ५८ ॥**

**भाष्यम्—** यदुक्तं यथेष्टिर्गुणशब्देनेति, अत्रोच्यते । आग्नेयोपांशुयाजाग्नीषोमीयानां प्राकृतानां सौर्यार्यमण-प्राजापत्यनैर्ऋतीनां चोदनानां न किञ्चिदेकं कार्यम्, यद्वैकृती चोदना आश्रयेत् । तत्र वक्ष्यते 'एकस्य कर्मणो वैकृतं कर्म विध्यन्तं गृह्णाति' इति । तत्र कस्य ग्रही-ष्यतीति संदेहे युक्तो लिङ्गेन नियमः । इह तु अपदिष्टो हेतुः । गवादीनामेकं कार्यं दक्षिणात्वम् । तस्मिंश्च धेनुः श्रुतिभूता चोदकप्राप्तान् निवर्तयितुमर्हतीति ।

**शा—** गवामेव निवर्तिका धेनुर्नाश्वादीनाम् । इति प्राप्ते, अभिधीयते । 'गवादीनां प्रधानत्वे दृष्टं

नास्ति प्रयोजनम् । ऋत्विगानमनार्था तु दक्षिणा सप्रयोजना ॥' तस्मात् समस्तगवादिनिवृत्तिः ।

**सोम**— वृत्ताधिकरणत्रयस्य करिष्यमाणबाधोपोद्घातत्वात् अध्यायसंगतिः, करिष्यमाणविचारस्य अवसरलक्षणा संगतिः । **सूत्रार्थस्तु**— तस्य धेनुरिति श्रुतधेनुः गवां निवर्तिका स्यात्, प्रकृतौ गवाश्वादीनां प्रत्येकमेव दक्षिणात्वस्य चोदितत्वात् । तत्रापि गोभिरेव सामान्यात्, यथा गुणशब्देन निर्वपत्यादिना सामान्यात् इष्टिः सौर्यादिः आग्नेयविकारः, तद्वदिति ।

**वि**— 'भूनाम्नि ( यागे ) धेनुर्बाधेत गाः किंवा कृत्स्नदक्षिणाम् ।, धेन्वा विशेषितत्वाद् गाः, दक्षिणैकत्वतोऽखिलाम् ॥'

**भाट्ट**—'अथैष भूर्वैश्वदेवः' इत्यनेन विहिते भूसंज्ञके एकाहे 'धेनुर्दक्षिणा' इत्याम्नातम् । सा किं अश्वादीनां निवर्तिका न वेति चिन्तायाम्, यद्यपि न मूलोक्तरीत्या गवाद्युद्देशेन प्रकृतौ दक्षिणात्वस्य 'गौश्चाश्वश्च' इत्यनेन विहितत्वात् उद्देश्यविशेषणस्य साहित्यस्य अविवक्षितत्वेन प्रत्येकं गवादीनां दक्षिणात्वावगतेः धेनुर्गवामेव स्थानापत्त्या निवर्तिकेति शङ्कितुं शक्यम्, गवादीनामप्राप्तत्वेन उद्देश्यत्वायोगात्, अनेकोद्देशे वाक्यभेदाच्च, दक्षिणात्वस्य आनतिकरत्वातिरिक्तस्य दुर्वचनत्वेन आनतेः फलरूपतया विधेयत्वायोगाच्च । अत एव गवादिद्रव्यविशिष्टं गोवृत्तिसंख्याविशिष्टं च दानमेव दक्षिणापदवाच्यानतिजनकत्वेन विधीयते । निरुक्तदानस्य च 'ऋत्विग्भ्यो दक्षिणां ददाति' इत्यनेन ऋत्विगुद्देशेन विनियोगः । ऋत्विग्विशिष्टस्य वा तस्यानत्यर्थत्वेन विनियोगेनैव वा आनत्यर्थत्वस्य प्राप्ततया दानानुवादेन ऋत्विङ्मात्रविधिरित्यादि पूर्वमुक्तम् । **तथापि** 'गौश्चाश्वश्च' इत्यत्र गवादीनामानतिजनकत्वं प्रत्येकमेव, न तु व्यासज्यवृत्ति आग्नेयादिवत्, तथाकल्पने प्रमाणाभावात् । न च चशब्देन इतरेतरयोगप्रतीतेः परस्परसहितानां करणत्वावगतिः, तस्य समुच्चयप्रतिपादकत्वेनापि उपपत्तौ इतरेतरयोगाप्रतिपादकत्वात् । अतश्च योग्यताबलेन प्रत्येकमेव गवादीनां प्रकृतौ दक्षिणात्वम्, तेन दक्षिणोद्देशेन विधीयमानं विकृतौ धेनुत्वं विधेयसामर्थ्यानुसारात् गोद्वारेणैव निविशते इति नात्र कस्यापि बाधः । धेनुशब्दस्य गोमात्रवृत्तिगुणविशेषे गुणविशिष्टगव्येव वा शक्तित्वस्य स्थापितत्वात् । **इति प्राप्ते**, न तावत् गोरनुवादेन धेनुत्वविधिः, एकप्रसरताभङ्गापत्तेः । नापि दक्षिणानुवादेन धेनुत्वविधिः, तथात्वे एकत्वस्यापि अप्राप्ततया विधेयत्वे वाक्यभेदापत्तेः । अतोऽवश्यं दक्षिणादानोद्देशेन धेनुत्वैकत्वविशिष्टं गोद्रव्यमेव विधेयम् । तच्च यद्यपि प्रकृतौ गवादीनां प्रत्येकं दक्षिणादानसाधनता, तथापि त्रिवत्सवत् धेनुसाधनतया प्राकृतसर्वसाधनतानां बाधात् सर्वद्रव्यबाधकं भवेदेव । वस्तुतस्तु गवादिद्रव्याणां न प्रकृतौ प्रत्येकसाधनता, समुच्चयस्य 'अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालम्, त्वाष्ट्रं पात्नीवतम्' इत्यादिवदेकवाक्योपादानादेव सिद्धेः चशब्दवैयर्थ्यापातात् । अतश्च गवादीनां चशब्दबलेन इतरेतरयोगप्रतीतेर्व्यासज्यवृत्त्या एकसाधनताकत्वात् धेनुसाधनतया प्राकृतदक्षिणादानसाधनताबाधात् सर्वद्रव्यनिवृत्तिः । एतेन साधनताभेदपक्षे गोवृत्तिसाधनतैव अतिदेशतः पूर्वप्रवृत्त्यङ्गीकारेण धेनुत्वादिविशिष्टा विधीयते इति नान्यासां बाध इत्यपास्तम्, साधनताया अप्येकत्वेन गोद्रव्येण द्रव्यान्तरनिवृत्तेरावश्यकत्वात् ।

**मण्डन**—'धेनुः समस्तस्य निवर्तिका स्यात् ।'

**शंकर**—'धेनुर्गवां बाधिका स्यात् ।' गवां गवाश्वादीनामित्यर्थः ।

* उपहव्ये एकाहे 'अश्वः श्यामो ( वो—भाष्ये ) रुक्मललाटो दक्षिणा' इत्युक्तम् । तत्र दक्षिणाशब्दसंयोगात् **धेनुन्यायेन** कृत्स्नस्य ऋतुदाक्षिणस्य अश्वेन बाधः । वि. १०।३।१८.

**धेनुवच्चाश्वदक्षिणा, सब्रह्मण इति पुरुषापनयो यथा हिरण्यस्य । १०।३।१८।६५ ॥**

उपहव्ये ऋतौ 'उक्थ्यो यज्ञः सप्तदशस्तोमो बृहत्पृष्ठः अश्वः श्यावो रुक्मललाटो दक्षिणा' 'स ब्रह्मणे देयः' इति श्रूयते । किमयमश्वः ब्रह्मभागमात्रस्य निवर्तकः, उत कृत्स्नस्य ऋतुदाक्षिण्यस्य इति विचारे कृत्स्नस्य निवर्तकः इति पूर्वाधिकरणसिद्धान्तन्यायेन उत्सूत्रे पूर्वपक्षे सिद्धान्तमाह । अश्वदक्षिणा अश्वरूपा दक्षिणा कृत्स्नायाः प्राकृत्याः ऋतुदक्षिणाया निवर्तिका । धेनुवत् ( १०।३।१४।

५६–५७ )। 'स ब्रह्मणे देयः' इत्यनेन च पुरुषापनयः ब्रह्मभिन्नानां पञ्चदशानां ऋत्विक्पुरुषाणां अपनयः क्रियते। यथा हिरण्यस्य यथा शतकृष्णलचरौ शेषभक्षाणां हिरण्यात्मकानाम् 'सर्वं ब्रह्मणे परिहरति' इत्युक्तम् ( १०।२।५।१९–२० ) तद्वत्।

**एके तु कर्तृसंयोगात् स्रग्वत्, तस्य लिङ्गविशेषेण। ६६॥**

अनया अश्वदक्षिणया कृत्स्नक्रतुदक्षिणागता एके केचित् पदार्थाः ब्रह्मभागरूपा एव निवर्तेरन् न कृत्स्नक्रतुदक्षिणाया निवृत्तिः। कर्तृसंयोगात् कर्मकर्तुः ब्रह्मणः संबन्धात्। 'स ब्रह्मणे देयः' इति वाक्येन ब्रह्मसंबन्धज्ञानात्। एवं तस्य अश्वस्य कर्तृसंयोगात् लिङ्गविशेषेण कर्मकर्तृब्रह्मसंबन्धरूपविशेषलिङ्गेन एके केचित् पदार्था ब्रह्मभागरूपा एव निवर्तन्ते। स्रग्वत्। यथा दशपेये 'स्रजमुद्गात्रे' इत्युद्गातृभागस्यैव निवर्तिका स्रक्, न कृत्स्नायाः क्रतुदक्षिणायाः तद्वत्। इति पूर्वः पक्षः। तुशब्दः सिद्धान्तपक्षव्यावर्तकः।

**अपिवा तदधिकाराद्धिरण्यवद्विकारः स्यात्। ६७॥**

पूर्वपक्षस्य सूत्रप्राप्तस्य व्यावृत्त्यर्थः अपिवाशब्दः। अयं श्यावोऽश्वः हिरण्यवत् शतकृष्णलचरुशेषभक्षविषयहिरण्यशकलैर्यथा इतरेषां त्रयाणामपि ऋत्विजां व्यावृत्तिः तथा विकारः स्यात् कृत्स्नक्रतुदक्षिणाया बाधकः स्यात्। तदधिकारात् दक्षिणाऽधिकारात्। दक्षिणाशब्देन दक्षिणामधिकृत्य अश्वसंबन्धः कृतः। तस्मात् कृत्स्नक्रतुदक्षिणाविकारः अश्वः इति सिद्धान्तः। **के.**

**धेनुवत्सर्षभाधिकरणम्।** द्यावापृथिव्यादौ धेन्वादिशब्दोपदिष्टगोद्रव्येण प्राकृताजद्रव्यस्य बाधः॥

**औत्पत्तिके तु द्रव्यतो विकारः स्यादकार्यत्वात्। १०।२।२९।६९॥**

**भाष्यम्**— क्वचित् श्रूयते ( पशुविकृतौ ) 'द्यावापृथिव्यां धेनुमालभेत, मारुतं वत्सम्, ऐन्द्रमृषभम्' इति। तदत्र संशयः किमजाः धेनुवत्सर्षभाः, उत गाव इति। किं प्राप्तम्? चोदकानुग्रहाय अजा इति। गुणनिमित्तास्ते शब्दाः। स गुणः चोदकेन प्राप्ते प्राकृते द्रव्ये आवेशयितव्यः। ननु गवि गुणमाहुः एते शब्दाः। सत्यं गवि आहुः, न तु गौरत्र प्रत्यक्षेण वचनेन चोदकेन वा। स एष गुणवचनो यद्यपि श्रुत्या गोऽधिष्ठानं गुणं वदति, वाक्येन आलम्भद्रव्यं आस्कन्दति, तथापि गोद्रव्यस्य अभावात् आलभतिवाक्यमेव गृह्यते न श्रुतिः। अपिच धानवयोवचना एते शब्दाः। गुणाश्च अमूर्तत्वात् न क्रियया संबध्यन्ते। द्रव्येण एषां संबन्धो भवति। चोदकप्राप्तं च द्रव्यम्। तेनैषां सामानाधिकरण्यम्। यथा 'अवी द्वे धेनू ददाति' 'तस्य पुरुषी धेनुर्दक्षिणा'। तथा 'अजर्षभस्याजिनमवस्तृणाति' इति। धानवयोवचनः शब्दः तदेकवाक्यगतेनैव द्रव्येण संबध्यते। एवमिहापि चोदकप्राप्तेन द्रव्येण संभन्त्स्यते इति। तस्मात् अजाः धेनुवत्सऋषभाः इति। **एवं प्राप्ते, ब्रूमः।** औत्पत्तिके एतस्मिन् उत्पत्त्यैव जातिविशिष्टे गुणशब्दे द्रव्यतो विकारः स्यात्। द्रव्यमपि विकुर्यात्, न गुणमात्रम्। यदेतत् जातिविशिष्टं धानं वयश्च, न तत् अजपशुषु शक्यं कर्तुम्, गोपशुष्वेव तत् भवति। **ननु** अत्र यदपि स्यात् शक्यमावेशयितुम्, तदावेशयिष्यते, यन्न शक्यम्, तत् प्रमादिष्यते यथा अजा धेनुवत्सर्षभा इति। **उच्यते।** विस्पष्टस्तत्र अजशब्देन धेन्वादीनामेकवाक्यभावः। इह चोदकेन अजद्रव्यम्। चोदकश्च विरोधे सति नाजद्रव्यं प्रापयति। न च धेन्वादीनां द्रव्येण संबन्धः। कारकविभक्तिरेषा आलम्भेन संबन्धं करोति, गवि सा च श्रुतिः। द्रव्यसंबन्धो वाक्येन स्यात्, तच्च दुर्बलं श्रुतेः। तस्मिंश्च जातिविशिष्टे गुणे आलम्भसंयुक्ते सति न शक्यं अजाद्रव्येण भवितुम्। न च चोदकापेक्षया प्रत्यक्षा जातिः उत्स्रष्टुं शक्यते। तस्मात् गावो धेन्वादयो भविष्यन्तीति।

**टुप्— औत्पत्तिके तु०॥** धेन्वादयः शब्दाः उभयोः ( अपि वादिनोः गवादीनाम् ) असाधारणवचनाः एव, शोणादय इव ( नात्र विवादः ) अनपेक्ष्यैव पदान्तरं एते ( धेन्वादिशब्दाः ) पदावस्थायामेव असाधारणमर्थं प्रतिपादयन्ति। ( तेनामी गुणविशेषवचनाः ) केचित् पदान्तरमपेक्ष्यैव ( अर्थं प्रतिपादयन्ति ) यथा शुक्लः पट इति। ( तेन ते सामान्यगुणवचनाः )

यदि असाधारणगुणवाचित्वमविवादम्– ) कथं तर्हि पूर्वः पक्षः ? ( उत्तरम् ) श्रुत्या धेनुशब्दो धाने ( दुग्धदाने ) एव वर्तते, गोद्रव्यं तु अस्य ( आधारभूतम् ) न शब्देनोक्तम्, नापि चोदकेन (केवलं लक्षणया गम्यते) अजद्रव्यं तु चोदकेन प्राप्नोति, तत्र आनुमानिकः शब्दो विद्यते । एवं पूर्वः पक्षः । सिद्धान्तस्तु, असाधारणगुणवचनोऽयं गोऽधिष्ठानमन्तरेण नैव गुणः संपादितो भवति । तस्मात् ( उक्तगुणविरोधात् ) चोदकस्य बाधः । उत्तराधिकरणं अस्यैव प्रत्युदाहरणम् ।

**सोम**— पूर्वत्र चोदकप्राप्तसंख्याद्रव्यपरिग्रहे सप्तदशशरावपरिमितचरुसंपादनाशक्त्या अवश्यम्भाविनि बाधे जघन्यत्वात् मुष्टेर्लोपः । इह तु चोदकप्राप्ताजद्रव्यपरिग्रहेऽपि धानादिगुणोपपत्तेः नावश्यम्भाविबाधः इत्युत्थितेः **संगतिः । सूत्रार्थस्तु**— औत्पत्तिके स्वभावत एव द्रव्यविशेषगतगुणविधायके धेन्वादौ द्रव्यस्य विकारः स्यात् गवादिद्रव्यविशेषगतस्य धानादिगुणस्य अजादिद्रव्ये कर्तुमशक्यत्वादिति ।

**वि**— 'धेनुवत्सर्षभाश्छागे गवि वा, गुणकीर्तनात् । अजेऽतिदिष्टे स्यु, र्मैवं गोजात्येकगुणोक्तितः ॥'

**भाट्ट**—'द्यावापृथिव्यां धेनुमालभेत, वायव्यं वत्सम्, ऐन्द्रमृषभम्' इत्यादौ आतिदेशिकस्य अजत्वस्य न बाधः, धेन्वादिशब्दानां धानादिगुणमात्रशक्तत्वेन अजत्वे सत्यपि उपपत्तेः । न च गव्येव धेन्वादिशब्दानां प्रयोगात् गोवृत्तिगुणेष्वेव शक्तिः, तन्मात्रवृत्तिगुणेषु वैजात्ये प्रमाणाभावेन गोरपि शक्यताऽवच्छेदककोटिप्रवेशे गौरवात्, 'अवी द्वे धेनू ददाति, अजमृषभम्' इत्यादौ अन्यत्रापि धेन्वादिशब्दप्रयोगाच्च । गव्येव प्रचुरप्रयोगात्तु गुणविशिष्टायां तस्यां निरूढलक्षणा पार्थादिशब्दवत् ( त्रयाणां पृथापुत्रत्वेऽपि अर्जुने एव पार्थशब्दस्य निरूढा लक्षणा ) पङ्कजशब्दस्य तु पद्मभिन्ने प्रयोगाभावात् पद्मे योगरूढिस्वीकारेऽपि अदोषः । अतश्च लक्षणायां प्रमाणाभावात् अतिदेशानुरोधेन निरुक्तगुणविशिष्टं अजद्रव्यमेव ग्राह्यम् । **एवं प्राप्ते**, पदान्तरसमभिव्याहाराभावे धेनुपदमात्रश्रवणे सर्वत्र गोवृत्तिधानादिगुणस्यैव प्रतीतेः धेन्वादिशब्दानां शोणादिशब्दवत् गोमात्रवृत्तिविजातीयधानादिगुणे एव शक्तिः । वैजात्यं च अश्वरूपमात्रवृत्तिरक्तत्वव्याप्यजातिशोणत्ववत् गोमात्रवृत्तिधानादिनिष्ठं अनुभवसिद्धम् । अस्तु वा उक्तयुक्त्या गुणविशिष्टगव्येव शक्तिः । अजादिपदसमभिव्याहारे तु धेन्वादिपदस्य लक्षणा । अतश्च गोरुपदिष्टगुणाक्षिप्तत्वात् उपदिष्टत्वादेव वा अजस्य बाधः ।

**मण्डन**— 'नाजो धेन्वादिषु ग्राह्यः ।'

**शंकर**— 'धेन्वादावजबाधनम् ।' ३०.

* **धेनुवत्सर्षभाधिकरणन्यायः** 'असाधारणगुणवचनोऽयम् ( धेन्वादिशब्दः ) अधिष्ठानमन्तरेणैव गुणः संपादितो भवति' इति । **टुप्**. १०।२।२९।६९.

* **धेनुवत्सर्षभ**शब्दोपदिष्टगोद्रव्येण द्यावापृथिव्यादौ प्राकृतस्याजद्रव्यस्य बाधः । **भा.** १०।२।२९।६८.

* **धेनुशब्देन** छागबाधः । धेनुशब्दो गोद्रव्यमन्तरेण नैव दृष्टः प्रयुज्यमानः । **टुप्**. १०।४।२२।४४.

* **धैष्ण्या** अपि व्याघारणार्थमुत्पन्नाः, न ते आज्यदोहसामगानकाले उपनिधेयाः गर्गत्रिरात्रे । **टुप्**. ७।३।१२।३०.

* **ध्रुवः ग्रहः** अनुपोते साद्यते, अन्ये ग्रहाश्च उपोते ( उपोतं भूमेरुपरि मृन्मयं स्थण्डिलम् । अनुपोतं केवला भूमिः ) । **भा.** ३।६।९।३०. * ध्रुवः ग्रहः ज्योतिष्टोमे प्रातःसवने गृह्यते । **वि.** २।३।१.

* **ध्रुवगोपः** ध्रुवं नाम सोमग्रहं गोपायति रक्षति स राजपुत्रः । **के.**

* **ध्रुवचमसाः** प्रकृतिभूताः । के पुनर्ध्रुवचमसाः ? ये शुक्रामन्थिप्रचारे सवनमुखीयाः । ऐन्द्रास्ते भवन्ति । तेषां प्रकृतिभूतं प्रदानम्, विकृतिभूतान्यन्यानि । **भा.** ३।२।११।२९.

* **ध्रुवा** ( नाम स्रुक् ) आज्यधारणे गुणभूता । **भा.** ४।३।१।१. * ध्रुवा वैकङ्कती । अत्र फलश्रुतिरर्थवादः, न फलप्रयुक्तता । सा च क्रत्वर्था आज्यधारणार्था । **के.** ४।३।१।१. * ध्रुवा हि देवतार्थद्रव्यान्तरावदानेऽपि उपस्तरणाभिघारणोपयोगित्वात् प्रत्यभिघारणमपेक्षते एव । तेन प्राक् स्विष्टकृतः परस्तादपि ध्रौवोपयोगः अस्ति इत्यवत्तेऽवत्ते प्रतिपूरयितव्या । ततः परं तु न किञ्चित्

कार्ये इति नार्थः प्रतिपूरणेन। **वा.** ३।५।११२. * **ध्रुवायाः** उपांशुयाजार्थाज्याधारत्वेऽपि असाधारण्याभावात् प्रधान-कालविप्रकर्षाच्च प्रधानविप्रकर्षः। **सु. पृ.** ६२६. * ध्रुवाया एव ( सकाशात् ) स्विष्टकृते अवदीयते। **वा.** ३।५।१४.

* **ध्रुवाऽऽज्यादिभिः** स्विष्टकृदादिशेषस्य नानुष्ठानम्। **वि.** ३।५।१.

* **ध्रुवाऽऽप्यायनं** वचनमन्तरा नोपपद्यते। **संकर्ष.** २।४।७.

* **ध्रौवमाज्यं** साधारणम्, दर्शयति च 'सर्वस्मै वा एतद् यज्ञाय गृह्यते यद् ध्रुवायामाज्यम्' इति। साधारणं हि तत्, उपांशुयाजाय अन्येभ्यश्च प्रयोजनेभ्यः। यावदाज्येन यष्टव्यं तत्तदाज्यं प्रयोजयति। यस्ययस्य आज्यम्, तस्यतस्य एवं ग्रहीतव्यं संस्कर्तव्यं च ( प्रत्यभिघारयितव्यम् )। **भा.** ३।५।१६, * ध्रौवमेव आज्यं दर्शपूर्णमासयोः उपांशुयाजे द्रव्यम्। १०।८।१५।४७-४८, * **ध्रौवाज्यात्** सर्वसाधारणात् उपांशुयाजार्थे अपयातिते परिशिष्टं अन्यदेवतार्थं भवति। १२।१।१५, * 'सर्वस्मै वा एतद् यज्ञाय गृह्यते यद् ध्रुवायामाज्यम्'। तेन उपांशुयाजः **ध्रौवाज्यात्**। १०।८।१५।४७-४८.

* **ध्वंसः** नाभावरूपः, किन्तु चरमक्षणसंबन्ध एव नाशः। तस्योत्तरकालमेव नाशादनित्यत्वम्। अत एव 'नष्टो घटः' इति प्रतीतिः। नहि 'नाशोऽस्ति' इति कश्चित् प्रत्येति। अतो ध्वंसो नास्तीति केचित्। **मणि.** पृ. २९. * ध्वंसः। 'नास्तिता पयसो दध्नि प्रध्वंसाभाव इष्यते।' **श्लोवा.** अभावप्रामाण्यवादे २.

⌛ **ध्वजनिखननन्यायेन** तत्त्वबुद्धेर्दृढतामुत्पादयितुमपि शास्त्रे नास्तिक्यतन्निरसनाद्यवतारः। स्थूणानिखननन्यायसमानार्थक एवायम्। **सिद्धान्तदर्शने** निरञ्जनभाष्ये ३।४।२२.

* '**ध्वजिनो** गच्छन्ति' 'छत्रिणो गच्छन्ति' इति लिङ्गसमवायात् शब्दप्रवृत्तिः। **भा.** ३।८।२२।४५.

* **ध्वनिः** नादः। न वाय्वात्मा तत्संयोगविभागात्मा वा नादः, किन्तु वायुगुणः शब्दविशेषो नादो ध्वनिरिति चोच्यते। **रत्नाकरः** स्फोटवादे श्लो. ३८. * ध्वनयः अर्थान्तरभूताः शब्दस्य द्रुतादिबुद्धिमपारमार्थिकीं कुर्वन्ति। **वा.** २।२।१।१ पृ. ४६५. * ध्वनयः नानादेशस्थाः युगपदागच्छन्तः इतरेतरनिरपेक्षा एव युगपत् संस्कारानारभन्ते श्रोत्रस्य। तत्संस्कारानुरोधाच्च एकमपि शब्दं अनेकमिव गृह्णाति। एकैकसंस्कारोपजननाच्छक्तेः। **बृहती.** पृ. २२८. * **ध्वनीनां** भेदः उभयवादिसिद्धः। **मणि.** पृ. १६८, * ध्वनीनां वर्णाभिव्यञ्जकानामेव अनित्यत्वाङ्गीकारात्। रथंतरादिगीतिरूपाणां तु ध्वनीनां नित्यताऽङ्गीकारः। पृ. १७०.

* **ध्वनिधर्माणां** असदृशेष्वपि वर्णेषु अभिव्यङ्ग्याभिव्यञ्जकत्वसंबन्धनिमित्तारोपदर्शनात् सादृश्यादिना केनचित् संबन्धेन आरोपो भवति इति ज्ञायते। **सु. पृ.** ५०८.

---

# न.

[ अत्र प्रथमं न–शब्देन स्वतन्त्रेण आरब्धा लघुसिद्धान्तादयो निवेशिताः। ततः परं नञ्–शब्दारब्धाः। ततः परं न्यायसुधाकारेण नहि इति निषेधार्थकमखण्डं पदमिति स्पष्टमेवोक्तत्वात् नहिशब्दारब्धाः निवेशिताः। तदनन्तरं नशब्दारब्धसामासिकपदघटिताः नकारारब्धाश्च निवेशिताः। **के.** ]

* '**नाग्निं मन्थेत्** अग्नीषोमीये पशौ' इति शतपथे। अयं विकृतिगतदृष्टार्थप्रतिपत्तिव्यतिरिक्तसंनिपातिक्रियानिषेधः। **बाल.** पृ. ३७.

⌛ **नाज्ञातविशेषणविशिष्टबुद्धिर्विशेष्यमुपसंक्रामति इति न्यायः।** यथा विशेषणज्ञानस्य विशिष्टज्ञानहेतुत्वान्न तदन्तरेण तत्सिद्धिः। नहि दण्डज्ञानं विना दण्डीति ज्ञानं संभवति, न चाज्ञातविशेषणं तद्विशेष्यं वशीकरोतीति तदर्थः। **साहस्री.** १८७.

⌛ **नातिरात्रे इत्यत्र नशब्दः प्रतिषेधार्थक एव, न पर्युदासार्थकः, न वा अर्थवादः ॥**

**शिष्ट्वा तु प्रतिषेधः स्यात्। १०।८।३।६॥**

**भाष्यम्**— आह। प्रथमेऽधिकरणे नशब्दः पर्युदासार्थः, द्वितीये तु अर्थवादार्थः। अथ किंलक्षणकः प्रतिषेध इति। लक्षणमुच्यते। शिष्ट्वा तु प्रतिषेधः स्यात्। यथा 'नातिरात्रे गृह्णाति षोडशिनम्' इति।

न तत्र शक्यं वक्तुं पर्युदास इति । संबन्ध एव हि न स्यात्, अतिरात्रवर्जितातिरात्रे गृह्णाति षोडशिनमिति । नापि कस्यचिदर्थवादत्वेन संभवति। तस्मात् नञो गृह्णातीत्यत्र संबन्धः ।

**ननु** परस्परं विरुद्धौ विधिप्रतिषेधौ न संभवतः । उच्यते । वचनप्रामाण्यात् प्रतिषेधो विधिं बाधित्वा भविष्यति, विधिरपि प्रतिषेधम् । नान्या गतिरस्तीति पक्षे मिथ्याप्रत्ययः कल्पयिष्यते । तदा विधिर्यदा न प्रतिषेधः । तदा प्रतिषेधो यदा न विधिरिति । ननु सर्वदा विधिः प्रतिषेधश्च प्राप्नोति । उच्यते । उक्तमेतत् वचनप्रामाण्याद्विरोधाच्च मिथ्याप्रत्ययः प्रयोगवचन एकं कल्पं गृहीत्वा न द्वितीयमपि गृह्णातीति । तस्मादन्यतरेण कल्पेन सिध्यतीति । ननु कल्पान्तरभावे वैगुण्यम् । अत्रोच्यते । सत्यं वैगुण्यम् । वैगुण्येऽपि तत्सिद्धिरेव वाक्यात् प्रमाणादवगम्यते । तस्माददोषः । यत्र पुनरन्या वचनव्यक्तिरस्ति वाक्यस्य, तत्र न विकल्पो भवति । यथा नानुयाजेषु येयजामहं करोतीति ।

**टुप्**— ( प्रथमेऽधिकरणे पर्युदासः, द्वितीये अर्थवादः ) तृतीये प्रतिषेधः । नहि तत्र पर्युदासो भवति । ( तथाहि, ) यदि 'अनतिरात्रे गृह्णाति' इति पर्युदासः स्यात्, तत्र विधानानर्थक्यम् ( षोडशिनः ) । अथ अषोडशिनम् ( अतिरात्रे गृह्णाति ) इति तथापि अयमेव ( विधानानर्थक्यम् ) दोषः । ( तस्मात् प्रतिषेधः नञर्थः ) ।

**शा**— सामान्यविषये विधौ विशेषविषयो नञ् पर्युदासरूपेण विधेरेव वाक्यशेषः इत्युक्तम् ( प्रथमे ), अप्राप्तविषयस्तु नञ् अर्थवादः इति ( उक्तं द्वितीये ) । अथ कोऽयं प्रतिषेधो भवति इति तत उच्यते ( इति संगतिः ) ।

**वि**—'नातिरात्रे पर्युदासो वादो वाऽथ निषेधनम् ।, आद्योऽनुयाजव, न्मैवं विध्येकविषयत्वतः ॥ अत एवार्थवादोऽपि न युक्तः पशुसोमवत् ( न तौ पशौ करोति, न सोमे इतिवत् ) । निषेधः स्याद् विकल्पोऽत्र व्रीह्यादाविव युज्यते ॥'

**भाट्ट**— यत्र तु तस्मिन्नेवार्थे प्रत्यक्षो विधिः तस्मिन् एव च निषेधः, यथा 'अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति' इति, तत्र विकल्पस्यावश्यकत्वात् प्रतिषेध एव । न तु पर्युदासः, लक्षणायां प्रमाणाभावात् । नाप्यर्थवादः प्राप्त्यभावात् । **न च** तत्र 'समिधो यजति' इतिवत् विधिना क्रतुसाद्गुण्यजनकत्वाक्षेपात्, निषेधेन च 'नानृतं वदेत्' इतिवत् क्रतुवैगुण्यजनकत्वाक्षेपात् एकस्यैव षोडशिग्रहणस्य क्रतुसाद्गुण्यवैगुण्यजनकत्वं विरुद्धमिति **वाच्यम्** । एतादृशविषये निषेधेन षोडशिग्रहणाभावेऽपि इतराङ्गैः क्रतुसाद्गुण्योत्पत्तिः इत्यस्यैवाक्षेपात् । विधिना च षोडशिग्रहणस्यापि क्रतुसाद्गुण्ये सहकारित्वमित्याक्षेपात् । अतश्च षोडशिग्रहणे प्रवृत्तिसिद्ध्यर्थं करणपक्षे फलभूमाऽपि कल्प्यते इति ध्येयम् । अत एव प्रथमतो विधिप्रवृत्त्या प्रतियोगिप्रसिद्धौ जातायाम्, निषेधेन निषेधे कृते पश्चात् विधेयस्य फलभूमकल्पनमिति विशेषः ।

**मडण्न**— 'शिष्टे नञ् प्रतिषेधार्थः ।'

**शंकर**— 'विकल्पः षोडशिन्युक्त ।' ४.

* **नातिरात्रे षोडशिन**मित्यादौ विकल्पः । **भाट्ट.** १०।८।३. * नातिरात्रे षोडशिनं गृह्णाति अयं क्रत्वर्थमात्रविषयकः प्रतिषेधः श्रौतः । **बाल.** पृ. २२, * नातिरात्रे षोडशिनं गृह्णाति अयं क्रियाप्रतिषेधः प्रत्यक्षः । पृ. २२, * नातिरात्रे षोडशिनं गृह्णाति अयं षोडशिग्रहनिषेधः विकृतिगत–उपदिष्ट–अदृष्टार्थसंनिपातिक्रियानिषेधः । पृ. ३७.

* **न अनङ्गं** प्रधानमुच्यमानं कस्मैचित् प्रयोजनाय कल्पते । **भा.** ७।४।२।९.

**नानुपहत्य भूतानि भोगः संभवति इति न्यायः** । यथा 'अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः । या वृत्तिः स परो धर्मस्तेन जीवामि जाजले ॥' इति महाभारतशान्तिपर्वीयवचनं संगच्छते । **साहस्री.**५०.

**'नानुमिते ह्यसौ' इति न्यायः** । अनुमितप्रतिपत्तेरेव धारणप्रयोजकत्वादिकल्पनादोषः 'नानुमिते ह्यसौ' इति न्यायात् अनुमानस्य फलमुखत्वाच्च । **भाट्ट.** ४।१।१३ । 'श्रूयमाणस्य वाक्यस्य न्यूनाधिक-

विकल्पने । लक्षणावाक्यभेदादिदोषो नानुमिते ह्यसौ ।।' वा. १।४।२।३ पृ. ३२९.

* **नानुयाजेषु । ननु** अनुयाजभिन्नेषु इति पर्युदासाश्रयणे अनूयाजशब्देन नञः समासः स्यात् । 'नञ्' इति सूत्रेण नञ् सुबन्तेन समस्यते इत्यर्थकेन तस्य समासविधानात् । ततश्च 'न लोपो नञः' इति नशब्दे आद्यवर्णस्य नकारस्य लोपे परिशिष्टात् अकारात् 'तस्मान्नुडचि' इति नुडागमे सति अनश्वः इत्यादिवत् अननूयाजेषु इति स्यात् । **न च** पाणिनिना सूत्रकृता 'विभाषा' इत्यधिकृत्य तद्विधानात् समासाभावपक्षे नानूयाजेषु इति न दुष्यति इति **वाच्यम् ।** कात्यायनेन वार्तिककृता 'वावचनानर्थक्यं स्वभावसिद्धत्वात्' (समर्थसूत्रे वार्तिकम्) इति विभाषाऽधिकारस्य प्रत्याख्यातत्वात् । विग्रहवाक्यसमासयोः भिन्नार्थकतया तदर्थप्रतिपादनाय तदुभयोः स्वभावसिद्धत्वात् विभाषाऽधिकारो व्यर्थः इति तदर्थः । वावचनपर्यायात्मकं विभाषावचनं हि समासेन विग्रहवाक्यस्य निवृत्तिर्मा भूत् इत्येवार्थं पाणिनिना कृतम् । विग्रहवाक्यस्य समासेन निवृत्तिश्च तयोरेकार्थत्वे प्रसज्येत । व्याससमासयोर्भिन्नार्थत्वे तु स्वार्थप्रतिपादनाय व्यासवाक्यप्रयोगावश्यम्भावात् तन्निवृत्तिः समासे न संभाव्यते । ततश्च व्याससमासयोरेकार्थत्वे सति समासेन व्यासवाक्यस्य निवृत्तौ प्रसक्तायां वावचनं कर्तव्यं स्यात् । तदानर्थक्यवचनात्तु कात्यायनस्य एकार्थत्वं व्याससमासयोः अनिष्टमवगम्यते । सति च तयोः भिन्नार्थत्वे तत्तदर्थप्रतिपादनाय व्याससमासयोः स्वभावसिद्धत्वात् विभाषावचनं (न) कर्तव्यं इत्युपपन्नम् । अत एव 'ऋद्धस्य राज्ञः पुरुषः' इत्यत्र समासो न प्रयुज्यते, भिन्नार्थत्वात् । विग्रहवाक्ये हि राजपदं ऋद्धपदान्वयसहिष्णु, समासवाक्ये तु न । ततश्च पदान्तरसहिष्णुत्वासहिष्णुत्वप्रयोजकं वैजात्यं तत्रानुभवसिद्धं इत्यस्ति व्याससमासयोर्भिन्नार्थत्वम् । अत एव च राजपुरुष इत्यत्र राज्ञोः पुरुष इति वा राज्ञां पुरुष इति वा द्वित्वबहुत्वयोरप्रतीतेः वृत्तौ एकत्वमौत्सर्गिकं इत्युपपन्नम् । **न च** नानूयाजेषु इत्यत्र समासाभावेऽपि पर्युदासः कुतो न प्रतीयते इति **वाच्यम् ।** अब्राह्मणः इत्यादौ हि समासे पर्युदासो गम्यते इत्यत्र न विवादः । यच्च समासगम्यम्, तत् तदेकलभ्यं इत्यभ्युपेयम्, अन्यथा वाक्येनापि समासगम्यार्थप्रतीतौ तयोर्भिन्नार्थत्वानुपपत्तेः । अतः पर्युदासपक्षे समासप्रसङ्गात् अननूयाजेषु इति स्यात् । अतोऽत्र नञः प्रतिषेधार्थकत्वमेव युक्तम् । **इति चेत्, नैष दोषः ।** नञः पर्युदासार्थकत्वेऽपि बाधकाभावात् । न च नञ्समासापत्तिः, तस्य विकल्पितत्वात् । पाणिनिना 'विभाषा' इत्यधिकृत्य तद्विधानात् । 'वावचनानर्थक्यम्' इति कात्यायनवचनं तु न्यायविरोधादुपेक्ष्यम् । अस्त्येव हि व्याससमासयोरैकार्थ्यम् । **न च** एवं सति 'ऋद्धस्य राज्ञः पुरुषः' इति विग्रहवाक्य इव समासेऽपि राज्ञः ऋद्धत्वविशेषणसहिष्णुत्वं स्यात् । तथा च 'ऋद्धस्य राजपुरुषः' इत्यपि स्यादिति **वाच्यम् ।** न ह्येतावता व्याससमासयोर्भिन्नार्थत्वमायाति, प्रतिपाद्यभेदाभावात् । उभयत्रापि राजसंबन्धिपुरुषस्य प्रतिपाद्यस्य अनपायात् । नहि वाक्यत्वसमासत्वाभ्यां प्रतिपाद्यभेदोऽस्ति । यथा 'ब्राह्मणाः शतम्' 'ब्राह्मणानां शतम्' इत्यभिधानप्रकारभेदेऽपि शतसंख्याकब्राह्मणभोजनलक्षणप्रतिपाद्यभेदादर्शनात् । यदि च 'राज्ञः पुरुषः' इत्यादौ व्याससमासयोः प्रतिपाद्यभेदाभावेऽपि राजादिपदस्य ऋद्धपदादिविशेषणसहिष्णुत्वतदसहिष्णुत्वकृतवैजात्यकल्पनामात्रेण वैलक्षण्यमाश्रित्य तादृशवैलक्षण्यावच्छिन्नस्वस्वार्थप्रतिपादनाय वाक्यसमासयोः स्वभावसिद्धत्वात् समासेन वाक्यनिवृत्तेरप्रसक्तत्वात् तन्निवृत्त्यर्थो विभाषाधिकारः प्रत्याख्यायेत, तर्हि विभाषाऽधिकारात् प्राग्विहितेनापि समासेन वाक्यनिवृत्तिर्न स्यात् । 'अव्ययं विभक्ति' इत्यादिसूत्रपञ्चकानन्तरं हि विभाषाऽधिकारः क्रियते । ततश्च 'अव्ययं विभक्ति' इत्यादिभिर्विधीयमानेषु अधिहरि, उपकुम्भम्, यावच्छ्लोकं इत्यादिसमासैः वाक्यनिवृत्तिर्न स्यात् । इष्यते तत्र वाक्यनिवृत्तिः कात्यायनपतञ्जलिभ्याम् । तथा विभाषाऽधिकारस्य पश्चात् 'नित्यं क्रीडाजीविकयोः' इत्यतः नित्यग्रहणानुवृत्तौ 'उपपदमतिङ्' इति विहितेन 'घटकारः' इत्यादिसमासेनापि वाक्यनिवृत्तिर्न स्यात् । कात्यायनमते विभाषाऽधिकारापन्ननित्यग्रहणस्यापि प्रत्याख्याने तु तेन

वाक्यव्यावृत्तेरसंभवात् । अतो विभाषाधिकारप्रत्याख्यानमन्याय्यम् । इत्यसमासपक्षमाश्रित्य नानूयाजेषु इति पर्युदासाश्रयणं युज्यते । अस्तु वा विभाषाऽधिकारप्रत्याख्यानम्; तथापि न दोषः । कात्यायनेन हि समासे विशेषणान्तरासहिष्णुविशिष्टशक्त्यात्मकं एकार्थीभावलक्षणं सामर्थ्यम्, असमस्तत्वे च तत्सहिष्णुपरस्परान्वितावयवपदशक्त्यात्मकं व्यपेक्षालक्षणं सामर्थ्यमाश्रित्य विशिष्टार्थविवक्षायां समासः, अन्यथा तु वाक्यं इत्यास्थितम्, पतञ्जलिना एवमेव व्याख्यातत्वात् । अत एव 'ऋद्धस्य राज्ञः पुरुषः' इत्यर्थे 'ऋद्धस्य राजपुरुषः' न भवति । समासस्य विशिष्टैकार्थप्रतिपादकतया तदेकदेशेन राजपदेन ऋद्धपदस्य अन्वयासंभवात् । 'पदार्थः पदार्थेन अन्वेति, न तु तदेकदेशेन' इति न्यायात् । अत एव 'राज्ञः पुरुषो देवदत्तस्य च' इत्यर्थेऽपि न राजपुरुष इति समासः । अत एव 'राज्ञो विराजते पुरुषः' इत्यादौ समस्यमानपदयोः पदान्तरव्यवधानेऽपि न समासः । एवंजातीयकस्थले विशिष्टैकार्थप्रतिपादनाशक्तेः स्वभावसिद्धत्वात् । 'उपकुम्भम्' इत्यादौ तु नित्य एव समासः । तत्र वाक्यतो विशिष्टैकार्थप्रतीत्यभावस्य स्वभावसिद्धत्वात् । अतः क्वचित् समासविधौ नित्यग्रहणमपि न कर्तव्यं इत्यादि महाभाष्यकैयटादौ स्पष्टम् । एवं च एकार्थीभावलक्षणसामर्थ्ये सति 'राजपुरुषः' इति समासः । व्यपेक्षालक्षणसामर्थ्ये तु 'राज्ञः पुरुषः' इति वाक्यमेव । तथा नानूयाजेषु इत्यत्रापि व्यपेक्षायां वाक्यमेवास्तु । न चैवं सति पर्युदासो न गम्येतेति वाच्यम् । नहि वाक्ये नञः पर्युदासार्थत्वं नास्ति 'नित्यः पटो न' इत्यत्र व्यभिचारात् । भूतले पटो नास्तीतिवत् प्रतिषेधार्थकत्वाश्रयणे तु उक्तरीत्या अष्टदोषदुष्टविकल्पापत्तिः । तस्मादिह पर्युदास एव आश्रयणीयः । अनूयाजानां तु भेदप्रतियोगित्वेन तेषां भेदप्रतियोगिताऽऽधारत्वविवक्षया सप्तमी । तथा च 'अनूयाजनिष्ठप्रतियोगिताकभेदवत्सु यजतिषु येयजामहं कुर्यात्' इति वचनव्यक्तिः । 'नार्षेयं वृणीते' इत्यत्रापि नञ् भेदवति वर्तते, आर्षेयवरणभिन्नं अङ्गजातं प्रकृतिवत् महापितृयज्ञे भवति इति फलति । वृणीते इत्याख्यातप्रत्ययस्तु साधुत्वार्थः, धातोः केवलस्य प्रयोगानर्हत्वात् । नानूयाजेषु इत्यत्रापि 'येयजामहं करोति' इत्यनुवादमात्रम् । कु. १०।८।१।४.

* 'नानुयाजेषु येयजामहं करोति' इत्यत्र पर्युदासः । पर्युदासन्यायः । भा. १०।८।१।१–४.

* 'नानृतं वदेत्' अयं क्रत्वर्थपुरुषार्थोभयविषयकः प्रतिषेधः दर्शपूर्णमासयोः । बाल. पृ. ३३.

* 'नानृतं वदेत्' इति उपनयनकाले एव चास्य उपदेष्टारो भवन्ति । भा. ३।४।४।१२ पृ. ९०९.

* 'नान्यामाहुतिं पुरस्ताज्जुहुयात् । यदन्यामाहुतिं पुरस्तात् जुहुयात् अन्यन्मुखं कुर्यात्, स्रुवेणाघारमाघारयति' इति । नान्यामाहुतिं पुरस्तात् जुहुयात् प्राकृतिकीभ्यः, एता हि आघारादिका आहुतयः सर्वेष्टीनां मुखम् । यदन्यामाहुतिं औपसदीं अग्न्यादिकां पुरस्तात् जुहुयात् अन्यन्मुखं कुर्यात् । तस्मात् स्रुवेणाघारमाघारयति । भा. १०।७।१४।४५ । 'नान्यामाहुतिं पुरस्ताज्जुहुयात्' आग्नेय्याः 'अग्निर्हि मुखम्' इत्यभिधाय 'यदन्यामाहुतिं पुरस्ताज्जुहुयात्' वैकृतीं 'अन्यन्मुखं कुर्यात्' आग्नेय्याः अग्निर्हि मुखम् 'स्रुवेणाघारमाघारयति' नान्यं यजते 'अग्निमनीकं सोमं शल्यं विष्णुं तेजनम्' इति । ४६.

कु— प्राकृतीभ्य आहुतिभ्यः अन्यां प्रधानभूताग्नेयाद्यौपसदाहुतिं प्राकृतीराहुतीरहुत्वा पुरस्तात् न जुहुयात्, किन्तु प्राकृतीः आघाराद्याहुतीः पुरस्तात् हुत्वैव औपसदाहुतीर्जुहुयात् । यदि प्राकृतीभ्य आहुतिभ्यः अन्यां औपसदाग्नेयाद्याहुतिं प्राकृतीराहुतीरहुत्वा पुरस्तात् जुहुयात् तदा अन्यत् यज्ञस्य मुखं कुर्यात् । तच्चानुचितम् । आघाराद्याहुतयो हि सर्वेष्टीनां मुखम् । तस्मात् स्रुवेण आघारमाघारयति । ( इति श्रुत्यर्थः ) । १०।७।१४।४५.

* नान्यार्थत्वात् । १२।१।१५।३२ ॥ शेषभक्षस्य द्रव्यप्रतिपत्त्यर्थत्वात् क्रतुयुक्तपुरुषसंस्कारार्थात् पयआदिव्रतात् अन्यार्थत्वात् न इडादिशेषभक्षः पयआदिव्रतेन निवर्त्यते इति सिद्धान्तः । सु. पृ. १५४५.

**नान्यदृष्टं स्मरत्यन्यः इति न्यायः।** यथा कस्यचिदुत्तरवृन्दस्य पूर्वस्माद्भिन्नतया पूर्वेणानुभूतस्योत्तरेणाऽस्मरणापत्तिस्तथा प्रकृतेऽयं न्यायः। साहस्री. १६.

* '**नावान्तरक्रियायोगादृते** वाक्योपकल्पितात्। गुणद्रव्ये कथम्भावैर्गृह्णन्ति प्रकृताः क्रियाः ॥' (वा. पृ. ३३१)। बाल. पृ. १०.

**नाश्मनि स्यात्क्षुरक्रिया इति न्यायः।** अक्षरार्थः स्पष्टः। साहस्री. ८०४.

**नासाधितं करणं इति न्यायेन** 'अग्निहोत्रं जुहोति' इति द्वितीया फलभावनाकरणस्यापि यागस्य अर्थाक्षिप्तसाध्यत्वाभिप्राया इति प्राञ्चः। कु. १।४।४ पृ. ९५, * 'यदेता इष्टका उपदधाति' इत्यादौ द्वितीया तु 'अग्निहोत्रं जुहोति' इत्यादिवत् '**नासाधितं करणम्**' **इति न्यायेन** अर्थाक्षिप्तसाध्यत्वाभिप्राया।१।४।१७।१९.

* '**नासोमयाजी** संनयेत्' अयं कर्तृतो व्यवस्थारूपः प्रतिषेधः। बाल. पृ. ३४, * 'नासोमयाजी संनयेत्' अयं विधिप्राप्तः पुरुषार्थमात्रविषयकः पुरुषार्थश्रौतनिषेधः। पृ. ३३, * 'नासोमयाजी संनयेत्' अयं व्यक्तिनिषेधः प्रत्यक्षः क्रत्वर्थः। पृ. ३२. * 'नासोमयाजी संनयेत्' इति सांनाय्यं सोमादूर्ध्वमुत्कृष्यते। सांनाय्यविकारः आमिक्षाऽपि सोमादूर्ध्वमेव। वि.५।४।८.

**नास्ति नष्टे विचार इति न्यायः।** यत्र प्राक्तनदुष्कृतजन्यपरिपाकप्राप्तानर्थपरंपरावशतः कुसङ्गनिलीनता प्रतीयते तत्रायमवतरतीति। तद्यथा 'भिक्षो कन्था श्लथा ते नहि शफरिवधे जालमश्नासि मत्स्यांस्तेऽमी मद्योपदंशा मधु पिबसि समं वेश्यया यासि वेश्याम्। दत्त्वाङ्घ्रिं मूर्ध्न्यरीणां तव किमु रिपवो भित्तिभेत्ताऽसि येषां चौरोऽसि द्यूतहेतोस्त्वयि सकलमिदं नास्ति नष्टे विचारः ॥' इति। साहस्री. ५५५.

* **नाश्रावयति** (अनुवषट्कारे) शाखाऽन्तरे इदम्। संकर्ष. २।३।१५.

* '**नेक्षेतोद्यन्तमादित्यम्**' अयं पर्युदासविधिः पुरुषार्थः। बाल. पृ. २०. * 'नेक्षेतोद्यन्तमादित्यम्' इति प्रजापतिव्रते नञ्–ईक्षतिभ्यां ईक्षणाभावसंकल्परूपक्रियैव लक्षणया विधीयते। उद्यदादित्येक्षणाभावसंकल्पभावनैव उदये निमित्ते विधीयते। पर्युदासोऽयम्, न निषेधः। भाट्ट. ४।१।३. * 'नेक्षेतोद्यन्तमादित्यम्' इत्यादौ नञ्धात्वोरन्वये सति ईक्षणविरुद्धानीक्षणसंकल्पो विधेयः पर्युदासेन। वि. ६।२।५.

**नेष्टं परनिष्पत्तये इति न्यायः।** 'मैत्रावरुणाय दण्डं प्रयच्छति' इति द्वितीया तु 'तथायुक्तं चानीप्सितम्' इति भविष्यति। शा. ४।२।६। (नेष्टं० इति न्यायेन ईप्सिततमेन अन्यस्य अभिप्रेयमाणत्वायोगात् 'कर्मणा यमभिप्रैति' इति सूत्रे कर्मशब्देन अनीप्सितकर्मण एव विवक्षणीयत्वात् इति भावः। सोम.)

**नोदाहरणमादरणीयं इति न्यायं** अनुसृत्य दर्शपूर्णमासपदस्थाने ज्योतिष्टोमपदं निवेशितम् (कल्पतरौ)। परिमल. ३।३।९।१८ ब्रसू.

* **नोपदेशानर्थक्यस्य** एतत् सामर्थ्यम्, यत् अन्तरेण फलवचनं यागस्य प्रीतिः फलमवगम्येत। कामस्य आनर्थक्यं भवेत्, न जातुचित् सामर्थ्यमस्य जायते। भा. ६।१।१।३ पृ. १३५३.

**'नोपादेयत्वमेवैकं कारणत्वेन संमतम्। विशेषणविवक्षायां कारणं हि महद् विधिः ॥' इति न्यायात्** (वा. १।३।३।७ पृ. २१२) विवक्षितविशेषणतया बहुत्वनियमस्य सिद्धता। सु. ३।७ पृ. २६.

* '**न ऋतुं** पृच्छेत् न नक्षत्रम्' इत्यनेन सोमस्यैव कालानादरः। भाट्ट. ५।४।५.

**न ऋषीणामार्षेयाभावात्।** इत्यपि अधिकं सूत्रं यपुस्तके। परंतु तत् कुतूहले व्याख्यातं न दृश्यते। तदर्थस्तु ऋषीणामपि कर्मशास्त्राधिकारो नास्ति। आर्षेयाभावात्। आर्षेयाणि प्रवराः। गोत्रप्रवर्तकऋषीणां प्रवरा एव न सन्ति इति तेषां साङ्गकर्माधिकारो न संभवति। इति। के. ६।१।२।७.

**'नैकदा त्रयाणां विवादः' इति न्यायात्** एकैकं प्रत्येव अनुमानं वाच्यम्। चन्द्रिका. पृ. ६२८.

**नैवाश्रितेषु गुणदोषविचारणा स्यात् इति न्यायः।** अयं पद्येनोपनिबद्धः, तथाहि 'दोषाकरोऽपि कुटिलोऽपि कलङ्कितोऽपि मित्रावसानसमये विहितोदयो-

ऽपि । चन्द्रस्तथापि हरवल्लभतामुपैति नैवाश्रितेषु गुणदोषविचारणा स्यात् ॥' इति । साहस्री. ८९९.

'नैव हि द्रव्यमात्रस्य तद्धितैर्देवतोच्यते । अस्य शब्दाभिधेयस्य विशेषस्यैव देवता ॥' इत्यनेन न्यायेन अष्टाकपालपदार्थोऽपि तद्धितान्त एव शब्दान्तर्गतः । सु. पृ. ४६२ । 'नैव हि' इति श्लोकस्तु ( वा. पृ. ५३३ ) वार्तिकस्थः । तदर्थस्तु तत्रैव 'विश्वे देवा देवता अस्याः इति हि न सर्वनाम्ना द्रव्यसामान्यमभिधीयते । किं तर्हि ? संनिहितो विशेषः । स एव व्यवहारक्षमो नानिरूपितं द्रव्यमात्रम् । अतः प्रातिपदिकेन योऽर्थ उपात्तः, स प्रमाणान्तरगम्यस्य द्रव्यविशेषस्य देवता इत्येतत् तद्धितेन श्रुत्यैवोच्यते' इत्युक्तः । के.

नैष स्थाणोरपराधो यदेनमन्धो न पश्यति इति न्यायात् । ( निरुक्त. १।१६ ) सनातनध. प्र. प्रमाणप्र. ३६५. * 'सृण्येव जर्भरी' इत्यादिमन्त्रेषु, सतः विद्यमानस्यैवार्थस्य तज्ज्ञानोपायभूतनिगमनिरुक्तव्याकरणाद्यध्ययनाभावे सति युक्तमविज्ञानम्, नैतावता तदर्थस्य असत्यत्वं वक्तुं शक्यम्, नैष० इति न्यायात् । कु. १।२।४।३९.

न कदाचित् पवित्रं स्यात् गोक्षीरं श्वदृतौ धृतं इति न्यायः । असत्पात्रे सदुपदेशोऽपि व्यर्थतां यातीति भावः । साहस्री. ३३५.

'न कर्मधारयान्मत्वर्थीयः बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः' इति न्यायस्य 'प्रत्ययस्थात्' इति सूत्रे असुव्रतः इति प्रयोगमुदाहरता भाष्यकृता अनादृतत्वात् । वै. भू. सारदर्पणे प्रथमश्लोके.

* 'न कलञ्जं भक्षयितव्यम्' एवमुक्ते द्वयमापतति । यदि वा अभक्षणं कर्तव्यमिति, यदि वा भक्षणं न कर्तव्यमिति । यदि नञ्विशिष्टं भक्षणं कर्तव्यं इत्यभ्युपगम्यते ततः अभक्षं श्रुत्या तव्यो विदधाति, नञ् भक्षयतिविशेषणम् । तद्व्यापाराच्च कर्तव्यतया नञ् न संबध्यते । अथ नञर्थः कर्तव्यः, ततो वाक्येन विधानम् । भक्षयतिश्च नञ्विशेषणम् । तत्र कलञ्जादि न भक्षयितव्यं इति नियमः । भा. ६।२।५।१९. * 'न कलञ्जं भक्षयेत्' अयं रागप्राप्तपुरुषार्थमात्रविषयकः पुरुषार्थः श्रौतनिषेधः । बाल. पृ. ३३. * 'न कलञ्जं भक्षयेत्' इत्यादौ नञर्थः प्रसज्यप्रतिषेध एव, न पर्युदासः । के. ६।२।५, * 'न कलञ्जं भक्षयेत्' इत्यादौ रागप्राप्तां प्रवृत्तिमनूद्य निषेधो विधीयते । ६।२।५. * 'न कलञ्जं भक्षयेत् न लशुनं न गृञ्जनम्' अयं पुरुषार्थो जातिनिषेधः । बाल. पृ. ३२.

'न कार्यमन्यार्थं भवति' इति न्यायात् प्रयाजापूर्वं स्वप्रधानभूतं न प्रयोजनान्तरमपेक्षते । रत्नमाला. पृ. १३८.

शैवदीक्षाऽनन्तरं जीवत्वप्रेतत्वाभावेन स्वजात्याश्रमधर्माणां प्रयोजनाभावात् 'न कुर्यान्निष्फलं कर्म' इति न्यायेन विधिनिषेधनिरवकाशत्वेन... । श्रीकर. १।१।१ ब्रसू., * सगुणेश्वरस्य उपासनेन परब्रह्मसाक्षात्कारायोगात् 'न कुर्यान्निष्फलं कर्म' इति न्यायात् वेदान्तश्रवणमननादिकमेव कर्तुं युक्तं इत्याशङ्कायाम् । ३।३।१ ब्रसू.

'न कृतस्य गुणानुग्रहार्थं आवृत्तिरस्ति' । कथं पाशुकाः प्रयाजाः तिष्ठति पशौ क्रियमाणाः सन्तः तस्य पुरोडाशस्योपकुर्वन्ति ? उक्तस्तत्र न्यायः 'न कृतस्य०' इति । भा. १२।२।५।१५. ( १२।१।१।१–६ इति पशुपुरोडाशाधिकरणन्यायोऽयम् ) ।

न केवला ( प्रकृतिः प्रयोक्तव्या ) इत्यादिन्यायेन साधुत्वार्थमेकवचनमेव । भूषणसार–दर्पणे धात्वर्थनिर्णये कारिका २.

न क्रियाकर्तृसंबन्धादृते संबन्धनं क्वचित् इत्यनेन न्यायेन क्रियागर्भत्वात् सर्वसंबन्धानाम् । सु. पृ. ४६३. * ऐन्द्रवायवमिति देवतासंबन्धि द्रव्यं प्रतीयते । स च संबन्धः 'न क्रिया० क्वचित्' इत्यनेन न्यायेन क्रियया घटयितव्यः । सा च यागः, नान्या । सोम. २।२।६ पृ. १३७.

न खलु धीमतां कश्चिदविषयो नाम इति न्यायः । अयमभिज्ञानशाकुन्तले चतुर्थेऽङ्के उक्तः । साहस्री. ७८०.

न खलु प्रेम चलं सुहृज्जने इति न्यायः । साहस्री. ९५२.

✠ **न चान्यार्थं प्रकृतमन्यार्थं भवति इति न्यायः ।** यथा नहि गोधा सर्पन्ती सर्पणादहिर्भवतीत्येवं प्रकृतेऽपि । **साहस्री.** ४२६.

* **न चार्थात्** कृतं चोदकेन प्राप्यते । **भा.** १२।१।१।३.

✠ **'न चाविज्ञातलिङ्गानां** [न वाऽविज्ञात इति वार्तिके पाठः पृ. ८२० ] **प्रक्रिया विनियोजिका'** **इति न्यायः** । ( असीत्यस्य च सामर्थ्ये संनिधावुपसंहृतम् ।। 'दब्धिर्नामाऽसि' इति अस्पष्टलिङ्गोऽयम् । न च ईदृशं सन्तं प्रकरणं विनियोक्तुं समर्थम् । अयं तु असिशब्दः युष्मदर्थविषयत्वात् संनिहितमभिमुखं वा अभिधत्ते नान्यम् ) । सु. पृ. १२३०.

✠ **न चाविहितमङ्गं भवति इति न्यायेन** नियतस्य ( ह्रीष् ऊर्क ऊ इति– ) निधनस्य अङ्गत्वात् समाम्नायात् साधारण्यतः प्राप्तस्यापि विध्यर्थवत्त्वोपपत्तिः । सु. पृ. ८७४. * निषेधवाक्यपर्यालोचनया भर्त्रनुज्ञानस्य प्रतिग्रहाङ्गत्वं वदद्भिः तदङ्गत्वेन तद्विधिपरत्वं वाक्यस्याश्रयणीयम् 'न चाविहितमङ्गं भवति' **इति न्यायात्** । **संस्कारकौस्तुभ.** दत्तक.

* **न चाश्रितगुणे** शक्यं तद्विरोधि गुणान्तरम्' । यत्र अनूद्यमान एव अवश्यं गुणोऽपि अनुवदितव्यः, तत्र नैरपेक्ष्यदर्शनात् आकाङ्क्षाऽधीनसंबन्धगुणान्तरविधानानुपपत्तिः । **वा.** १।४।२।३ पृ. ३३०.

* **न चैकः** शब्दः अनेकार्थो युक्तः । **भा.** १२।१।१।४.

* **न चैकं** प्रति विशिष्यते इति सर्वशाखोपसंहाराभिधानात् जैमिनेरपि पौर्वापर्यस्य बलाबलकारणत्वमनभिमतम् । **सु. पृ.** १४४. * न चैकं प्रति शिष्यते इति हि सर्वश्रुतीनां सर्वपुरुषान् प्रति प्रामाण्यात् अध्ययनवच्च स्मृतेरपि श्रुतिधारणसामर्थ्यात् । **वा.** १।३।२।३ पृ. १७०. * अध्ययनस्य उपनयनादीनां च शाखाऽन्तरन्यायेनैव अभेदावगमात् तदङ्गानामपि **'न चैकम्' इति न्यायेनैव** दर्शपूर्णमासाद्यङ्गवत् सर्वपुरुषसाधारण्योपपत्तेः व्यवस्थायां प्रमाणाभावात् । **कौ.** १।३।७।१५ पृ. ९८–९९, * अन्यगृह्यविहितानां पार्वणस्थालीपाकादीनां शाखाऽन्तरन्यायेन अभेदावगमात् सर्वविषयत्वप्रतीतेः तदङ्गानामपि च दर्शपूर्णमासाद्यङ्गवदेव 'न चैकं०' इति न्यायेनैव सर्वविषयत्वप्रतीतेः न व्यवस्थाशङ्कोपपत्तिः । इति न्यायसुधाकारः । तत्र । १।३।७।१५ पृ. ९८. * पौर्वापर्यश्रवणमनाश्रित्य 'न चैकं प्रति शिष्यते' इत्यनेन न्यायेन सर्वपुरुषान् प्रति नित्यावस्थितसमस्तपाठ्यमानस्मर्यमाणवेदशाखायत्तज्ञानैः जिज्ञासुभिः आत्मीयशक्तिमात्रकारितपूर्वापरग्रहणविभागैः एकवाक्यगतपूर्वोत्तरवर्णपदवद्बलाबलमनपेक्ष्य मातापितृप्रणीतोपदेशवत् निर्विचिकित्समेव प्रामाण्यमभ्युपगन्तव्यम् ( स्मृतीनाम् ) । **वा.** १।३।२।३ पृ. १७८ । मातापितृप्रणीतोपदेशवत् पौर्वापर्यश्रवणमनाश्रित्य सर्वान् पूर्वश्राविणः पश्चाच्छ्राविणश्च पुरुषान् प्रति निर्विचिकित्समेव प्रामाण्यम् 'न चैकं प्रति शिष्यते' इति न्यायेन जिज्ञासुभिः अभ्युपगन्तव्यं इत्यन्वयः । **सु. पृ.** १४४. * सर्वशाखागतानां सौभरविशेषाणाम् 'न चैकं प्रति शिष्यते' इत्यनेन (न्यायेन) व्यवस्थया प्राप्तेः एकस्माच्च फलसिद्धेः समुच्चयायोगेऽपि विकल्पेन प्रयोगोपपत्तिः । ( पूर्वपक्षे स्थित्वा ) । **सु. पृ.** ८८२.

* **न च गुणानुग्रहार्थं** प्रधानावृत्तिर्युक्ता । **भा.** १२।१।१।४.

* **न च गुणवशवर्ति** प्रधानम् । **भा.** १२।१।१।४.

* **न च दृष्टे** सति अदृष्टकल्पना संभवति । **भा.** ११।२।१६।६६.

✠ **'न च निमित्तं विधिरपबाधते' इति न्यायात्** न नियोगविशेषणस्य साध्यता नियोगस्य साध्यत्वमुपहन्ति, नियोगसाध्यत्वनिमित्तत्वात् नियोज्यविशेषणसाध्यस्य । ( इति प्राभाकरो ब्रूते ) । **कणिका.** पृ. ३२७.

✠ **'न च भिक्षुको भिक्षुकात् याचते'** इति **न्यायात्** न विकृतेर्विकृतिरस्ति, विना वचनम् । **वैजयन्ती.** ३।८।८०.

* **न च भिक्षुका भिक्षुकादाकाङ्क्षन्ति** सत्यन्यस्मिन् प्रसवसमर्थे अभिक्षुके । **भा.** ८।३।५।११.

𝕏 'न च यत् समित्संबन्धेन क्रियते तत् तनूनपात्संबन्धेन' इत्यनेन न्यायेन भेदेन श्रुता देवता ग्रहणसंबद्धा नोपपद्यते यदि ग्रहणं नाऽऽवर्तेत इति प्रतिदेवतं सोमो ग्रहीतव्यः । ( न्याय: भाष्यपङ्क्तिरियम् ३।२।२।२ पृ. ४७२ ) । वा. ३।२।६।१९ पृ. ९१९.

* न च सकृदुच्चरितः( शब्दः )शक्नोति अर्थद्वयं विधातुम् । भा. १२।१।१।४.

* न च सुबन्तसंबन्धे नञ्समासापत्तिः ( नेक्षेतोद्यन्तं इत्यत्र ), 'नानुयाजेषु' इतिवदुपपत्तेः । भाट्ट. ४।१।३.

* 'न चतुस्त्रिंशदिति ब्रूयात्' अयं लिङ् श्रौते प्रतिषेधे । बाल. पृ. ४०.

𝕏 अत्र च विश्वसत्यत्वस्य पारमार्थिकस्य देवताऽधिकरणन्यायेन कल्पनीयतया तन्न्यायस्य च श्रुतिविरोधे अप्रवृत्तेः न प्रतिप्रसवार्थत्वं इति 'न चतुस्त्रिंशत् इति ब्रूयात्' इति न्यायोऽपि न प्रसरति । चतुर्ग्रन्थी. चन्द्रिका पृ. ४३९.

𝕏 न चेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादः स्यादानर्थक्यात् परसामर्थ्याच्च । १०।८।४।७॥

अग्निहोत्रे श्रूयते 'जर्तिलयवाग्वा वा जुहुयात्, गवीधुकयवाग्वा वा जुहुयात्, न ग्राम्यान् पशून् हिनस्ति नारण्यान् । अथो खल्वाहुः अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च, पयसाऽग्निहोत्रं जुहोति' इति । अत्र जर्तिलादियवागूद्वयस्य विधानात् अनाहुतिर्वै इति प्रतिषेधाच्च विकल्पः इति पूर्वपक्षः । 'पयसाऽग्निहोत्रं जुहोति' इत्येव विधिः इतरत् सर्वमर्थवादः इति सिद्धान्तः । 'अनाहुतिर्वै' इति भवेत् प्रतिषेधः न चेत् अन्यं विधिं पयोविधिं इदं वाक्यं प्रकल्पयेत् । प्रक्लृप्तौ पयोविधेः सिद्धौ तु अनाहुतिवचनं यवागूवचनं च अर्थवादः स्यात् आनर्थक्यात् स्वार्थे तात्पर्यशून्यत्वनिश्चयात् । जर्तिलगवीधुकयोः अनाहुतित्वं च परसामर्थ्यात् । परेण 'पयसाऽग्निहोत्रं जुहोति' इत्यनेन विधिना सह सामर्थ्यात् व्यपेक्षारूपसामर्थ्यात् एकवाक्यादित्यर्थः । ग्राम्यारण्यपशुयागापेक्षया जर्तिलगवीधुकयवाग्वोः प्रशस्तता, पयसस्तु सर्वापेक्षया प्राशस्त्यम् । तस्मात् पयसैव होतव्यं न यवाग्वा, नापि पशुना इति सर्वस्य एकवाक्यता । जर्तिलाः आरण्यमुद्गाः । गवीधुकाः तृणविशेषबीजानि ( कसाड—कशाड इति कोङ्कणे भाषा ) । के.

* 'न चेदन्यं प्रकल्पयेत्०' इत्यधिकरणे 'अनाहुतिर्वै जर्तिलाश्च गवेधुकाश्च' इति निन्दया निषेधकल्पनां पूर्वपक्षयित्वा नहिनिन्दान्यायेन 'यत् पयसाऽग्निहोत्रं जुहोति' इति पयोविधिशेषत्वात् न निषेधकल्पना इति सिद्धान्तितम् । जर्तिलयवागून्यायः । बाल. पृ. ५७.
* या निन्दा तन्मात्रपर्यवसायिनी, सा निषेधफला भवति । विधिपरा तु स्तुत्यर्था जायते तदुपपादनस्य दृष्टार्थत्वात् । यथा वक्ष्यति 'न चेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादः स्यात्' इति । वा. १।२।१।११.

* न चेदन्येन शिष्टाः ( १।४।६।९ ) इति कथञ्चिदनुवादत्वे संभवति विशिष्टविधानानुपपत्तेः । वा. ३।५।१०।३१ पृ. १०६.

𝕏 न चेदन्येन शिष्टाः इति न्यायेन अप्राप्तविशेषणस्यैव कल्प्यविशेषणविधिविधेयत्वेन... । भाट्ट. ६।५।६.
* न चेदन्येन शिष्टाः इत्यनेन न्यायेन ( १।४।६।९ जै. ) येऽन्येन न विहिताः तान् विदधाति । टुप्. १२।१।१।३ पृ. २२१९. * न चेदन्येन शिष्टाः । यदि अन्येन वचनेन शिष्टा विहिता न भवन्ति गुणाः, तदा गुणविधिः न नामधेयम् । यथा 'आग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इत्यादौ । यत्र पुनः अन्येन वचनेन शिष्टा गुणा भवन्ति, भवति तत्र नामधेयम् । यथा अग्निहोत्रं जुहोति इति । के. * ( 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन [ त्रिवृदग्निष्टुता ] यजेत' इत्यत्र— ) अपूर्वकर्मविधित्वात् वाक्यभेदं विनैव यद्यपि सर्वमेव विधातुं शक्यम्, तथापि 'न चेदन्येन शिष्टाः' इति न्यायेन यदप्राप्तं तदेव विधीयते, इतरत्तु प्राप्तमनूद्यते इति नातीवगौरवम् । कौ. २।२।१२।२६ पृ. २८९. * अस्ति चेह भावनयैव प्रत्यायितस्य कर्तुः विशेषणत्वशक्तिः इति नाभिधानमपेक्षते । सर्वत्र विशिष्टप्रत्ययेषु चैतदवस्थितम् 'न चेदन्येन शिष्टाः' इति । वा. १।४।४।१३ पृ. ९१६. * ( एतस्यैव रेवतीषु वारवन्तीयं अग्निष्टोमसाम कृत्वा इत्यत्र— ) कृत्वा-

शब्देनैव तदर्थविधौ 'न चेदन्येन शिष्टाः' इत्यनेन न्यायेन विशिष्टयागभावनाविध्ययोगापत्तेः ...। सु. पृ. ८६६.

* एतेनैव उत्कालबाधनं प्रत्युक्तम् । ब्राह्मणप्रकृतिवच्छब्दयोः तुल्यहेतुत्वेन किञ्चिद्वर्जनासंभवात् ( व्यक्तिषु सामान्यशास्त्रप्रवृत्तिहेतोः ब्राह्मणशब्दस्य पदार्थेषु च अतिदेशशास्त्रप्रवृत्तिहेतोः प्रकृतिवच्छब्दस्य )। तथा च 'तद्वर्जं तु वचनप्राप्ते' इति ( पूर्वपक्षम् ) उक्त्वा '**न चोदनार्थकार्त्स्न्यात्**' इत्युत्तरं दास्यति । वा. ३।३।७। १४ पृ. ८६०.

* '**न तौ ( आज्यभागौ ) पशौ** करोति' अयं विकृतिगतः अतिदिष्टः आरादुपकारकक्रियानिषेधः। बाल. पृ. ३५–३६. * 'न तौ पशौ करोति, न सोमे' इति आज्यभागौ प्रकृत्य आम्नाते वाक्ये 'न सोमे' इति 'न तौ पशौ करोति' इत्यस्यार्थवादः । ( सोमे तावत् नैवाज्यभागौ स्तः, पशौ अपि नैव तौ स्तः इति )। के. १०।८।२।५.

* **न तैरेव** दर्भैः प्रयोगान्तरमपि क्रियते । भा. ११।३।४।६.

* 'स्वेच्छया मरणं विप्रात्' इत्यादिना भविष्योत्तरे आत्मघात्यादीनुक्त्वा '**न तेषां** स्नानसंस्कारौ' इति संस्कारशब्देन दाहो निषिद्धः । अयं अपूर्वकर्मगतप्रतिपत्तिनिषेधः। बाल. पृ. ३७.

* एतौ च परिचोदनापरिहारौ सूत्रकार एव वक्ष्यति 'आरादपीति चेत्' ( ३।७।१।३ ) '**न तद्वाक्यं हि तदर्थत्वात्**' । ४ इति । वा. ३।४।५।१५ पृ. ९४७, * ननु 'न तद्वाक्यं हि तदर्थत्वात्' ( ३।७।१।४ ) इत्युत्तरं वक्ष्यति, तेन अग्नीषोमीयापूर्वप्रयुक्तत्वात् व्यवस्था स्यादिति । ३।६।१०।३१.

**न तूत्पन्ने यस्य चोदनाऽप्राप्तकालत्वात् । ९।४।८।३१ ॥**

अग्निहोत्रार्थे अग्नेरुद्धरणे 'वाचा त्वा होत्रा, प्राणेनोद्गात्रा, चक्षुषाऽध्वर्युणा, मनसा ब्रह्मणा, श्रोत्रेणाग्नीधा, एतैस्त्वा पञ्चभिर्दैव्यैर्ऋत्विग्भिरुद्धरामि' इति मन्त्रः । सोऽयं मन्त्रः दर्शपूर्णमासार्थे अग्नेरुद्धरणे पठितव्यो न वेति विचारे, उद्धृते हि तस्मिन्नग्नौ पर्वणि सायं प्रतिपदि च प्रातः अग्निहोत्रमनुष्ठीयते एव । यदि तु मन्त्रो न पठ्येत अग्निहोत्राङ्गमुद्धरणं विगुणं स्यात् । तस्मात् दर्शपूर्णमासार्थेऽपि अग्नेरुद्धरणे स मन्त्रः पठनीयः इति पूर्वपक्षे सिद्धान्त उच्यते । दर्शपूर्णमासार्थमुत्पन्ने अग्नौ यस्य अग्निहोत्रं प्रवर्तते, तस्य परार्थे उद्धरणे मन्त्रस्य न चोदना न कर्म । मन्त्रो न कर्तव्यः । नहि तदग्निहोत्रार्थमुद्धरणम् । अप्राप्तकालत्वात् अग्निहोत्रार्थोद्धरणस्य यः कालः, तस्य दर्शाद्यर्थे उद्धरणे अभावात् । अधिवृक्षसूर्ये सायं उषसि च प्रातः अग्निहोत्रार्थमग्नेरुद्धरणं विहितम् । दर्शपूर्णमासार्थे तु पर्वणि प्रातरग्निहोत्रहोमे हुते पश्चात् अग्निमुद्धृत्य अन्वाधानं क्रियते । तथा च दर्शाद्यर्थे उद्धरणकाले अग्निहोत्रार्थोद्धरणकालस्याभावः । तस्मात् अग्निहोत्राग्न्युद्धरणमन्त्रः दर्शाद्यर्थोद्धरणे न पठनीयः इति सिद्धान्तः । तुशब्दः उत्सूत्रपूर्वपक्षव्यावृत्त्यर्थः । के.

* '**न दीक्षितस्यान्नमश्नीयात्**' अयं पर्युदासः इति पक्षः । बाल. पृ. १७, * 'न दीक्षितस्यान्नमश्नीयात्' इति निषेधे 'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । आकाश इव पङ्केन न स पापेन लिप्यते ॥' इति मनूक्तः अयं सामान्यरूप: निषिद्धविषयकः व्यावृत्तविषयः अभ्यनुज्ञाविधिः । पृ. १६.

**न देवानां देवतान्तराभावात् ।** इति सूत्रं यपुस्तके वर्तते । कुतूहले च व्याख्यातम् । ( ६।१।२।६ )। ननु अस्तु तर्हि स्वयंप्रभातविद्यानां अधिकारः । तत्राह । देवतानामपि नाधिकारः । देवताऽन्तराभावात् । नहि इन्द्रादिभ्योऽन्ये इन्द्रादयः सन्ति येभ्यो हविर्दीयेत । न च प्राक्कल्पवर्तिनां देवानां यजनं संभवति, अतीतत्वात् । तस्मात् देवतानामपि न कर्माधिकारः । के.

**न देवताऽग्निशब्दक्रियमन्यार्थसंयोगात् । ६।३।५।१८ ॥**

मुख्यद्रव्यापचारे प्रतिनिधिर्ग्राह्य इत्युक्तम् । तत्र अग्न्यादयो देवताश्च, आहवनीयादयः अग्नयश्च, मन्त्ररूपाः शब्दाश्च, प्रयाजादिरूपाः क्रियाश्च तेषां समाहारः देवताऽग्निशब्दक्रियम्, तत् प्रतिनिधिं नार्हति । देवतादीनां प्रतिनिधिर्न भवतीत्यर्थः । कुतः ? अन्यार्थसंयोगात् । अर्थः प्रयोजनम् । अन्यस्य देवतादेः अन्येन

तद्घटकत्वे मानाभावात् इष्टिपरिमितनवान्नलाभेऽपि अप्रतिहतोऽधिकारः। **संकर्ष.** ३।१।१४.

**नववैधव्यमसह्यवेदनमिति न्यायः।** असह्या दुःसहा वेदना यस्मिन् तत्तथोक्तम्। विधवाया मृतभर्तृकाया भावो वैधव्यम्। नवं च तद्वैधव्यं चेति नववैधव्यम्। नवग्रहणं दुःसहत्वद्योतनार्थम्। अन्यत् स्पष्टमिति। **साहस्री.** ९५१.

* '**नवनीतमाज्यं** भवति' इति प्राकृतं कार्यं लक्ष्यते प्रकृतिलिङ्गेन द्रव्यशब्देन। **भा.** १२।३।२।८. * नवनीतं ज्योतिष्टोमे दीक्षार्थाभ्यङ्गे। तत्स्तुतये च 'घृतं देवानाम्, मस्तु पितॄणाम्, निष्पक्वं मनुष्याणाम्' इत्यनुवादः। **वि.** ३।४।७. * **नवनीतेन** अभ्यञ्जनं दीक्षाकालं सुखप्रचाराय स्नेहनार्थम्। **भा.** १०।४।६।१२, * नवनीतेन। यथा 'नावनीतेन भङ्क्ते' इति अचिरनिर्दग्धेनेति गम्यते। ( सर्वघृतानां च नवनीतविकारत्वात् पुनःश्रुतेः अचिरनिर्दग्धनवनीतार्थता स्यात्। **वा.** )। १।४।९।१२ पृ. ३४५.

* **नवनीताभ्यञ्जनस्य** प्राकृतस्य अञ्जनाभ्यञ्जनाख्यसत्रोपदिष्टगौग्गुलवाभ्यञ्जनादिना समुच्चयः। **भा.** १०।४।६।१०—१२.

* **नवमे अध्याये** ऊहलक्षणं वर्तयिष्यामः। त्रिविधश्चोहः मन्त्रसामसंस्कारविषयः, स इह प्राधान्येन वक्ष्यते। अन्यदपि किञ्चित् उपोद्घातेन प्रसङ्गेन च। ( उपकारातिदेशे सति ऊहोऽवकल्पते। शास्त्रातिदेशे सति ऊहाभावः )। **भा.** ९।१।१।१ पृ. १६३५। 'ऊहारम्भोऽथ सामोहो मन्त्रोहस्तत्प्रसङ्गतः। नवमाध्यायपादेषु चतुर्ष्वेते प्रकीर्तिताः॥' नवमाध्यायस्य **प्रथमे पादे** उपोद्घातपूर्वकमूहविचारारम्भः। तत्र प्रयाजादयो धर्मा अपूर्वप्रयुक्ताः। अवघातमन्त्रादिषु अविवक्षितं व्रीह्यग्न्यादिस्वरूपं साधनविशेषत्वमात्रं विवक्षितमित्यादिरुपोद्घातः। सवित्रश्विपूषशब्दानां विकृतिषु नास्त्यूहः। अग्निशब्दस्य अस्त्यूहः, इत्यादिकः ऊहविचारारम्भः। **द्वितीये** सपरिकरः सामोहः। **तृतीये** मन्त्रोहः। **चतुर्थे** मन्त्रोहप्रसङ्गापतितो विचारः। **वि.** प्रस्तावना श्लो. २१. * नवमे अध्याये प्रथमेऽधिकरणे 'संनिपत्योपकारका ये धर्मास्तेऽपि अपूर्वार्था इति प्रतिपाद्यते ऊहसिद्धये'। **वा.** ९।१।१।१ पृ. १६३८. * नवमे ( ९।४।११ ) अभ्युदयेष्टौ ( पशुकामेष्टौ ) इज्यार्थत्वेन श्रपणानङ्गभूतयोरपि दधिपयसोः प्रणीतास्थानापत्त्या प्रणीताधर्मप्राप्तिः स्थापिता। **बाल.** पृ. १६९.

* **नवमाधिकरणपूर्वपक्षन्यायेन** मन्द्रादेः यज्ञभागधर्मता अवसीयते। **सु.** पृ. ११८२.

* **नवमाद्यन्यायेन** धर्मस्य कार्यप्रयुक्तत्वात्। **सु.** पृ. १३७९, * नवमाद्यन्यायेन मन्त्राणामपि अपूर्वगुणत्वावगतेः। पृ. १२५६. * नवमाद्यन्यायेन ( व्रीहीन् प्रोक्षति इति ) व्रीहिस्वरूपे आनर्थक्यापत्तेः अपूर्वसाधनत्वलक्षणाया आवश्यकत्वात्। **कौ.** ३।१।४।८ पृ. १४४. * पात्रप्रोक्षणविधिनैव उलूखलमुसलयोरपि प्रोक्षणं प्राप्तम्, तत्तु पूर्वाधिकरणन्यायेनैव **नवमाद्येन** उलूखलमुसलनिष्ठापूर्वसाधनत्वप्रयुक्तम्। **भाट्ट.** ९।१।२.

* **नवरात्रे** चयनाग्निः कर्तुं शक्यते। **भा.** १०।८।११।२३.

* **नशब्दः** प्रथमेऽधिकरणे ( १०।८।१ ) पर्युदासार्थः ( महापितृयज्ञे 'न होतारं वृणीते नार्षेयम्' 'नानुयाजेषु' इत्यत्र )। द्वितीये तु अर्थवादार्थः ( 'न तौ–आज्यभागौ–पशौ करोति न सोमे' इत्यत्र )। अथ किंलक्षणः प्रतिषेधः इति। ( तृतीये अधिकरणे नशब्दः 'नातिरात्रे षोडशिनं गृह्णाति' इत्यत्र प्रतिषेधार्थः )। **भा.** १०।८।३।६, * नित्यो हि अस्य '**नशब्दस्य**' सुबन्तसंबन्धेन समासः इति वार्तिककारो भगवान् कात्यायनो मन्यते स्म। 'वावचनानर्थक्यं च स्वभावसिद्धत्वात्' इति। नेति भगवान् पाणिनिः। स हि 'विभाषा' इति प्रकृत्य ईदृशं समासमुक्तवान्। सद्वादित्वाच्च पाणिनेर्वचनं प्रमाणम्, असद्वादित्वान्न कात्यायनस्य। १०।८।१।४ पृ. २०६१.

* '**नश्यति**' इत्यत्र दर्शनाभावरूपफलमेव वाच्यम्। **मणि.** पृ. १०२.

**नष्टाश्वदग्धरथन्यायः।** यथा द्वौ रथिनौ कश्चित् ग्रामं प्रविश्य रथाभ्यामवतीर्य अश्वांश्च ताभ्यां मोचयित्वा स्वाभीष्टखट्वादौ निविष्टौ। ततो दैवेन अग्निना

दंदह्यमाने ग्रामे तयोरेकः पश्चादश्वान् निःसारयिष्यामीति धिया रथमादौ निःसारितवान् । परस्तु अश्वान् । तावता तस्मिन् स्थले दग्धे एकस्य अश्वा नष्टाः द्वितीयस्य रथो दग्धः । तौ च यथा अन्योन्याकाङ्क्षया हि एकं रथं कृत्वा स्वेष्टदेशं प्रापतुः, तथा अर्थवादविधिवाक्ये च इतरेतराकाङ्क्षया एकवाक्यतां प्राप्य प्रवृत्त्यादि जनयतः इति संक्षेपः । 'स्थानेऽन्तरतमः' (पा० १।१।५०) इति-सूत्रमहाभाष्येऽप्युक्तोऽयं न्यायः । तद्यथा— 'संप्रयोगो वा नष्टाश्वदग्धरथवत् । अथवा नष्टाश्वदग्धरथवत् सह संप्रयोगो भवति । तद्यथा— तव अश्वो नष्टो ममापि रथो दग्धः उभौ संप्रयुज्यावहै' इति । **साहस्री.** १५५.

* **नष्टाश्वदग्धरथवत्** ( दर्शपूर्णमासयोः प्रयाजादीनां च ) परस्परनियमः सिद्धः । **वा.** ३।३।४।११. * 'नष्टाश्वदग्धरथवत् संबन्धः' इति **शा.** । यस्य रथिनो रथोऽस्ति अश्वा नष्टाः, यस्य चाश्वाः सन्ति रथो दग्धः, तयोरुभयोरपि यथा परस्परापेक्षया संबन्धः, एवं इरापदस्य गिरापदगीतेश्च संबन्धः सिद्धः इति । **सोम.** ९।१।१७. * उत्तसयोः 'सोऽरोदीत्' इति च 'बर्हिषि रजतं न देयम्' इति च पदसंदर्भयोः लक्ष्यमाणनिन्दाद्वारेण **नष्टाश्वदग्धरथवत्** परस्परं समन्वयः । **भामती.** १।१।८ पृ. १०८. * गिरापदे पदान्तरोपदेशान्निवृत्ते यस्तद्गतो गीत्यंशः स गेयमपेक्षते, इरापदमपि सामसाध्ये स्तवे सामसंस्कार्यतामन्तरेण साधनीभवितुमशक्तं संस्कारकं सामांशमपेक्षते तयोः नष्टाश्वदग्धरथवत् संबन्धः । **शा.** ९।१।१७. * तस्मात्तदाकाङ्क्षायामुपनिपतितान्येतानि वाक्यानि स्वकार्यापेक्षाणि तदपेक्षितकरणोपकारलक्षणं कार्यमासाद्य निवृण्वन्ति च निर्वारयन्ति च प्रधानम्, सोऽयमनयोः नष्टाश्वदग्धरथवत्संयोगः । **भामती.** ३।३।१४।२५. * ननु ग्रहणार्थाया अपि देवताया यागापेक्षा वर्तते, यागादन्यत्र देवताया असंभवात् । 'सोमेन यजेत' इति यागस्यापि देवतापेक्षा विद्यते । तयोश्च नष्टाश्वदग्धरथवत् परस्परसंबन्धावश्यम्भावात् । इत्यत आह । **सोम.** ८।१।९. * सोयं नष्टाश्वदग्धरथवत् संप्रयोगः ( विध्युद्देशार्थपादयोः ) । **वा.** १।२।१।७ पृ. ११५.

* **नष्टरूपी** अनुष्टुप् । पादेषु अक्षराणि ९।१०।१३ उदा० 'वि पृच्छामि पाक्या' ( ऋसं. १।१२०।४ ) । **के.**

**नसिप्रोतबलीवर्दन्यायः** । यथा बलीवर्दा वृषभा नसि नासिकायां त्रिवृत्कृततन्तुदामभिः प्रोताः स्यूता नासिकाछिद्रस्यूतह्रस्वदामभिराधारभूतायां दीर्घायां तन्त्यां बद्धा इति यावत्, स्वस्वामिनो व्रीह्यादिगोणीर्वहन्ति, तथा ब्राह्मणक्षत्रियवैश्यशूद्रब्रह्मचारिगृहस्थवानप्रस्थयतय इतिनामात्मकदामभिर्वाक्तन्त्या विधिनिषेधात्मकवेदलक्षणायां बद्धा वेदलक्षणा दीर्घरज्जुः ब्राह्मणक्षत्रियादिरूपो योनिसंबन्धः, इन्द्रियाणि बलीवर्दाः, भगवदिच्छा स्तम्भः । एवं सति स्ववर्णाश्रमविहितकर्मभिरीश्वरस्य बलिं यज्ञादिलक्षणपूजां कुर्वन्तीति भावः । उक्तं च श्रीमद्भागवतप्रथमस्कन्धत्रयोदशाध्यायैकचत्वारिंशपद्ये 'यथा गावो नसि प्रोतास्तन्त्यां बद्धाश्च दामभिः । वाक्तन्त्यां नामभिर्बद्धा वहन्ति बलिमीशितुः ॥' इति । **साहस्री.** ५९२.

'**नसोमन्यायः**' ( १०।८।२।५ ) । आज्यभागौ 'न तौ पशौ करोति, न सोमे' । 'इह तु आधारत्वेन सोमः श्रूयते न संबन्धिमात्रतया ( वाजपेयस्य इतिवत् ) । न च परंपरासंबन्धे अस्त्याधारत्वं इति साक्षादेवायं सोमसंबन्धः प्रतीयते, स चाप्राप्त इति । तस्मात् अर्थवादार्थं सोमग्रहणम्' । **टुप्.** १०।८।२।५ पृ. २०६२.

* **नहुषस्य** परदाराभियोगात् धर्मव्यतिक्रमः । **वा.** १।३।३।७ पृ. २०३ । इन्द्रे ब्रह्महत्याभयादपक्रान्ते नहुषः स्ववीर्येण इन्द्रपदमधिष्ठाय तद्भार्यां शचीं अभिगन्तुं यत्नं चकार । **सु.** पृ. १८५ । अत्रोच्यते । नहुषेण परस्त्रीप्रार्थनानिमित्तानन्तरकालाजगरत्वप्राप्त्यैव आत्मनो दुराचारत्वं प्रख्यापितम् । **वा.** पृ. २०८ । व्यतिक्रमेऽपि धर्मबुद्ध्या क्रियमाणस्याचारस्य व्यतिक्रमाभावात् न दोषः । **सु.** पृ. १९१.

[ **नागृहीतविशेषणान्यायस्य** अक्षरभेदेन नानारूपत्वेऽपि अर्थानुसारेण एकत्रैव सर्वेषां निवेशः कृतोऽस्माभिः । तेन वर्णानुक्रमे क्वचित् अन्यथात्वं जातम् । **के.** ]

**नागृहीतविशेषणा बुद्धिर्विशेष्यमुपसंक्रामति इति न्यायः।** जातिरेव शब्दार्थ इति मीमांसकमतम्। तथाहि, व्यक्तीनामानन्त्यादेकव्यक्तौ शक्तिग्रहे व्यक्त्यन्तराबोधाच्च न व्यक्तौ शक्तिसंभवः। जातिविशिष्टायां व्यक्तौ शक्तिरित्युक्तौ तु नागृहीतविशेषणा बुद्धिर्विशेष्यमुपसंक्रामतीति न्यायात् आवश्यकत्वाच्च जातावेव शक्तिरस्तु व्यक्तिबोधस्तु आक्षेपादित्यन्यत्र विस्तरः। **साहस्री.** ४६१.

* नागृहीतविशेषणा बुद्धिर्विशेष्ये उपजायते। **मञ्जूषा.** प्रातिपदिकार्थ. पृ. ११०. * सर्वत्र हि अगृहीतविशेषणा विशिष्टबुद्धिर्न दृष्टा, न तु अनभिहितविशेषणा। **वा.** १।४।१।२ पृ. ३२६. * नागृहीते विशेषणे विशिष्टबुद्धिरुदेति। **न्यायकुसुमाञ्जलिः.** स्तबकः ३ पृ. १०५. * नहि अगृहीतविशेषणा विशिष्टे बुद्धिः। नहि अप्रतीते विशेषणे विशिष्टं केचन प्रत्येतुमर्हन्ति। **भा.** १।३।९।३३ पृ. ३०४। प्रतीते विशेषणे विशिष्टः प्रतीयते। पृ. ३१८ पं. ४। नागृहीतविशेषणा इति न्यायात्। **वा.** पृ. ३०४. * विभक्तिर्हि लिङ्गसंख्याप्रातिपदिकार्थानां श्रुत्यैव क्रियार्थतामाह। क्रिया साध्या साधनं तत्परिच्छेदकानि च लिङ्गसंख्यादीनपेक्षते। अतः सर्वविशेषणविशिष्टा क्रियैव विधीयते। तत्र प्रत्ययः पूर्वं विशेषणे व्याप्रीयतेऽन्यथानुपपत्त्या, नहि अगृहीतविशेषणा विशिष्टे बुद्धिः इति। **वा.** ४।१।५।१५. * अरुणाशब्दोऽरुणिमानं गुणमाचष्टे गुणिविषयतया प्रयुज्यमानस्यापि ' नागृहीतविशेषणा विशिष्टे बुद्धिः ' इति न्यायेन गुणबोधकत्वात्। **वि.** ३।१।६. * नागृहीतविशेषणा विशेष्ये बुद्धिः। अथ प्रतीतिरप्रतीताऽपि प्रतीत्यन्तरव्यवस्थापिका, तर्हि प्रथमप्रतीतिरपि अव्यवस्थिताऽपि अर्थव्यवस्थापिका भविष्यतीति ' नागृहीत०...बुद्धिः ' इति वचः कथं न परिह्रियेत। ' प्रतीतोऽर्थ ' इति विशेष्यप्रतिपत्तौ प्रतीतिविशेषणानवगमेऽपि विशेष्यप्रतिपत्त्यभ्युपगमात्। **संमतितर्क.** भागः १ पृ. ८४. * आकृत्यधिकरणव्युत्पाद्येन ' नागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यते ' इति न्यायेन केवलगुणवाचको लक्षणया द्रव्येऽपि प्रयुज्यते। **कु.** ३।१।६।१२ पृ. २५४. * गीतिविशिष्टायामृचि एषः ( रथंतरादिः ) शब्दो दृष्टः। न चागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यते। तस्मात् विशेषणं तावदभिधीयते। विशेषणप्रत्ययाच्च सहचरिते विशिष्टे प्रत्ययः। **भा.** ७।२।१।१३. * नागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यते **इति न्यायेन** जात्यभिधानावश्यम्भावे तत एव व्यक्तेः प्रतीतिसिद्धेः अभिधेयत्वासंभवात्। **कु.** १।३।११।३१. * यदि तस्यामेव ऋचि सत्यां गीतौ सामप्रयोगः असत्यां चाप्रयोगः तदा **नागृहीतविशेषणान्यायः**। इह तु गीतिवियोगे ऋगेव सा नास्ति। तस्मादृगन्यत्वात् नात्र नागृहीतविशेषणान्यायः। इति शङ्का। **सोम.** ७।२।१. * यत्र न किञ्चित् प्राधान्यनियामकम्, तत्रैव घटत्वादौ नागृहीतविशेषणान्यायः इत्यादि कौस्तुभे ( ३।१।६।१२ ) स्पष्टम्। **भाट्ट.** ३।४।८ पृ. ३२१. * संस्कारविशेषाणामनेकत्वात् न नागृहीतविशेषणान्यायः। तेन उभयविशिष्टे उभयोपलक्षिते वा काष्ठविशेषे एव शक्तिरित्यन्ये। **कौ.** * अग्निष्टोमादिशब्दानां ( शताग्निष्टोमं शतोक्थ्यं इ. ) **नागृहीतविशेषणान्यायेन** संस्थामात्रवाचित्वात् ज्योतिष्टोमे निरूढलक्षणाङ्गीकारेऽपि। **भाट्ट.** ८।३।४. * अथ भावनाऽन्यप्रवृत्तिपक्षे नागृहीतविशेषणान्यायेन प्रवृत्तेर्नियतं प्रत्याय्यत्वात् जातिवत् सैव लिङः शक्या अस्तु, न तु आज्ञाऽऽदिः अनियतो व्यापारः ... इति चेत्। **भाट्टालंकारः.** २९. * आकृत्यधिकरणव्युत्पादितेन ' नागृहीतविशेषणान्यायेन ' आद्यप्रवर्तनापरपर्यायाद्यानुष्ठानात्मकाद्यप्रयोगस्यैव प्रथमशब्दमुख्यार्थतया (न प्रथमयज्ञे प्रवृञ्ज्यात्) प्रथमप्रयोगाङ्गमेव प्रतिषेधः इति युज्यते। **कु.** ३।३।१७।२८. * क्रियाशक्तिरूपत्वात् कारकस्य क्रियां विना भावनाऽशक्तेर्वाच्यत्वाभ्युपगमे क्रियाविशिष्टस्यैव वाच्यत्वप्रसङ्गात् नागृहीतविशेषणान्यायेन क्रियाया एव वाच्यत्वावगतेः क्रियया कारकाक्षेपोपपत्तिमाशङ्क्य। **सु.** पृ. १४३१. * गायत्र्यादिशब्दानां चतुर्विंशत्याद्यक्षरसंख्यामात्रवाचित्वान्नागृहीतविशेषणान्यायेन लक्षणयाऽपि ऋक्षु प्रयोगोपपत्तेः तत्रापि न शक्तिः। **भाट्ट.** ८।३।६. * यूपादिशब्दानां तु संस्कारमपहाय क्वचिदपि प्रयोगाभावात् अगत्या संस्कारनिमित्तताऽङ्गीकरणम्। तत्रापि नागृहीतविशेषणान्यायेन

दृष्टादृष्टसंस्काररूपविशेषणेष्वेव शक्तिः, न तु तद्विशिष्टकाष्ठे इति केचित् । कौ. * षोडशिशब्देन नागृहीतविशेषणान्यायेन संख्यावचनेनापि तद्विशिष्टक्रतोरुपस्थापनेन ... । भाट्ट. १०।५।९ * द्रव्यकारकपक्षेऽपि निर्व्यापारस्य कारकत्वायोगात् शक्तिरहितस्य च व्यापारायोगात् शक्तिविशिष्टस्यैव कारकतया अभ्युपगन्तव्यत्वेन कारकाभिधानपक्षे **नागृहीतविशेषणान्यायात्** शक्तिमात्राभिधानापत्तेः श्रौतं द्रव्यशब्दसामानाधिकरण्यं न युज्यते । सु.पृ.१४४०. * यद्यपि तत्तत्संख्याकज्योतिष्टोमेऽपि (ज्योतिष्टोमपदस्य) प्रचुरप्रयोगोऽस्त्येव, तथापि नागृहीतविशेषणान्यायात् प्रचुरतया प्रयोगाच्च संस्थायामेव शक्तिः । ज्योतिष्टोमे तु निरूढलक्षणा प्रचुरप्रयोगात् । क्रत्वन्तरे तु ( अग्निष्टोमातिरिक्ते ) सांप्रतिकी ( लक्षणा ) क्वाचित्कप्रयोगात् । कौ. २।३।१०।२२ पृ. ७२. * व्यक्तिविशिष्टाकृतिमार्गोऽपि ( प्रत्युक्तः ) 'नागृहीतविशेषणा०' इति न्यायात् व्यक्तेः प्रथमग्रहणप्रसङ्गात् । वा. १।३।९।३३ पृ. ३०४. * **नागृहीतविशेषणान्यायस्य** ('यद्वैतदविशेषेण स्थितं क्रमवशादुभौ । प्रत्ययार्थं सह ब्रूतः प्रकृतिप्रत्ययाविति ॥' वा. पृ. ९०२ ) क्रमवशोक्तिसूचितस्य, 'उभौ' इत्यादिसूचितस्य च 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः, तयोः प्रत्ययार्थः प्राधान्येन' इति स्मरणस्य आख्यातेषु अपवादाभावोक्त्यर्थत्वेन अविशेषः । सु. पृ. १३७१. * नागृहीतविशेषणान्यायस्य लोकवेदाधिकरणव्युत्पाद्यस्य 'रथंतरमुत्तरयोर्गायति' इत्यादौ प्रयोजनं समस्त्येव । कौ., * नागृहीतविशेषणान्यायस्य विषयाविषयनिरूपणम्, सर्वत्र तावत् अनेकार्थबोधके पदे एकत्र शक्तिः, अन्यत्र आक्षेपः इति अनेकशक्तिकल्पनापरिहाराय अवश्यमभ्युपेतव्यम् । तत्रापि च गुरुभूतेऽपि प्रधाने शक्तिः, तेन च अप्रधानानामाक्षेपः इत्युत्सर्गः । यत्रोभयोरपि प्राधान्यम्, तत्र नागृहीतविशेषणान्यायः । दुर्बलस्यापि प्रधानस्य अभ्यर्हितत्वात् । यथैव आख्यातस्य भावशब्दवाच्यायां भावनायामेव शक्तिः कर्तुस्त्वाक्षेपः, तथैव कृत्तद्धितमतुबन्तादीनां नामसंज्ञत्वात् विभक्तिवाच्यसंख्यान्वययोग्यस्य सत्त्वपदाभिधेयस्य द्रव्यस्यैव प्राधान्यात् तद्वाच्यत्वावगतेः न कृत्यादौ विशेषणे शक्तिः । अत एव न तत्र नागृहीतविशेषणान्यायः । किन्तु यत्र जातिव्यक्त्योः गुणद्रव्ययोर्वा तृतीयाद्वितीयाऽऽदौ सत्त्वतावधारणात् उभयोः प्राधान्यं तत्रैव सः । ३।१।६।१२ पृ. १५९.

* **नागृहीतविशेषणान्यायबलेन** कर्तृकर्मविशिष्टसंख्याबोधकता हेतुत्वेन विवक्षिता । सु. पृ. १४३७.

**नागोष्ट्रन्यायः** । नागेन अजगरेण वेष्टितमुष्ट्रं रक्षन् कश्चित् बाणैरजगरं जघान इति लौकिकी गाथा । तथा निषेधवाक्यानि बाधावधित्वेन आत्मानं रक्षन्ति अनाम्नानं बाधन्ते । संग्रहः.

* **नागरिकभाषाभिज्ञतया** यः आगीणौ मातापितरावपि शुक्तवचनैरभिदधीत, स केन अन्येन वार्येत ? ( शुक्तवचनैः निष्ठुरवचनैः ) । 'परत्राविनयं कुर्वन् पितृभ्यां वार्यते सुतः । तयोरेवाविनीतस्य को भवेद्विनिवारकः ॥' वा. १।३।८।२७ पृ. २८५.

* **नाडिका** ( घटिका ) आकाशावयवविशेषातिक्रमफलकसूर्यादिगतिक्षणप्रचयात्मकस्य नाडिकादेः मुहूर्तादिवदेव नैपुण्येन स्वतः परिच्छेत्तुमशक्यत्वात् षष्ट्याः पानीयपलानां यत्र घटीपूरणफलकघटीछिद्रोर्ध्वगतिक्षणप्रचयात्मिका नाडिका । सु. पृ. ९७२, * नाडिका नभःषष्टितमभागातिलङ्घनफलः सूर्यादिगतिप्रचयः इति क्रियातिरिक्तकालाभाववादिनः । पृ. ९७०.

* **नादः** नाम ( वायवीय— ) संयोगविभागा नैरन्तर्येण क्रियमाणाः शब्दमभिव्यञ्जयन्तः नादशब्दवाच्याः । भा. १।१।६।१७.

* '**नादवृद्धिपरा**' ( १।१।६।१७ ) इति पाठपक्षे शब्दस्य वृद्धिः या उक्ता सा नादवृद्धिः परं विषयो यस्यास्तादृशी नादवृद्धिपरा ज्ञेया इति । एतत्पाठे प्रमाणं तु न्यायरत्नाकरे 'सूत्रं नादवृद्धिपरा इति' इत्युपन्यासः, 'वृद्ध्यसंभवात् नादवृद्धीतिसूत्रेण' इति च २२८ श्लोके ।

'नादवृद्धिः परा' इति पाठे तु परा पूर्वपक्षिणा प्रकृतिविकृतिभावोक्त्यनन्तरं उक्ता शब्दवृद्धिः नादवृद्धिः स्यात् । नेयं वृद्धिः शब्दस्य किन्तु नादस्येत्यर्थः । अत्र पाठे प्रमाणं तु 'तेन नादस्यैषा वृद्धिः न शब्दस्य' इति भाष्यमेव । अस्मिन्नेव पाठे भाष्यमिदमुपपद्यते नान्यपाठे । बृहत्यां ऋजुविमलायां च एवं सूत्रोपन्यासो-

ऽपि प्रमाणम्, कुतूहलवृत्तौ सूत्रोपन्यासो व्याख्या च स्पष्टैवात्र् । के.

**नानार्थत्वात् सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात् । १२।१।३।८॥**

सोमे अग्निष्टोमे यानि दर्शपूर्णमासप्रकृतीनि कर्माणि महावेद्यां वर्तन्ते, तेषां वेदिकर्म पृथक् स्यात् । वेदिः भेदेन कर्तव्या नानार्थत्वात् नानाविधः अर्थः प्रयोजनं ययोः वेद्योः तादृशत्वात् । दार्शपूर्णमासिकी हविरासादनार्था, सौमिकी तु प्रचारार्था । तत्र प्रसङ्गो न संभवति । तस्मात् सोमे दार्शपौर्णमासिकी वेदिः पृथक् कार्या इति पूर्वः पक्षः ।

**अकर्म वा कृतदूषा स्यात् । ९ ॥**

सोमे दार्शिक्या: वेदेः अकर्म । अग्निष्टोमे दार्शिकी वेदिः ऐष्टिककर्मकरणार्थे पृथक् न कर्तव्या । वाशब्देन पूर्वपक्षस्य व्यावृत्तिः । दार्शिकी वेदी सोमे कृता सती कृतदूषा स्यात् । कृता दूषा दूषणं यया सा कृतदूषा । कृतया दार्शिक्या वेद्या सौमिक्या वेदेः दूषणं स्यात् । तस्मान्न कर्तव्या इति सिद्धान्तः । के.

* नानार्थत्वात् सोमे० । सोमाङ्गभूतमहावेद्यैव ऐष्टिकहविरासादनादिकार्यस्य पृथगनुष्ठेयस्यापि अनुनिष्पादनात् तदङ्गभूतदार्शपूर्णमासिकवेदिनिवृत्तिः द्वादशे वक्ष्यते । कौ. २।१।५।१२ पृ. ८४.

**नानाऽहीनेषु प्रत्यहीनं चतुर्थे दिवसे षोडशिनो ग्रहणम् ॥**

**चतुर्थेचतुर्थेऽहन्यहीनस्य गृह्यत इत्यभ्यासेन प्रतीयेत भोजनवत् । १०।५।१४।५५॥**

**भाष्यम्**— षोडशिनं प्रकृत्य आमनन्ति, 'चतुर्थेचतुर्थेऽहन्यहीनस्य गृह्यते' इति । अत्रैषोऽर्थः सांशयिकः किमेकस्मिन्नहीने चतुर्थे दिवसे षोडशी अभ्यसितव्यः, उतैकस्मादहीनादहीनान्तरे चतुर्थेऽहनि गृह्यते इत्येवमभ्यसितव्य इति । किं प्राप्तम् ? एकस्मिन्नभ्यसितव्य इति । कुतः ? अहीनस्यैकस्येत्युच्यते । नानाऽहीनेषु चेत् इष्यते, सा लक्षणा भवति । अस्मिन् पक्षे श्रुतिः । अपिच वीप्माऽऽनर्थक्यं नानाऽहीनेषु चेत् स्यात् । चतुर्थेऽहन्यहीनस्य एतावतैव तत् सिध्यति । एकस्मिंस्तु वीप्सा अर्थवती भवति । तस्मादेकस्मिन्नहीने अभ्यसितव्यः । भोजनवत् । यथा चतुर्थेचतुर्थेऽहनि देवदत्तो भुङ्क्ते इति चतुर्थे भुक्त्वा ततश्चतुर्थे गम्यते एकस्मिन् पक्षे इति । एवमिहापि द्रष्टव्यम् । तस्मादेकस्मिन्नहीने इति ।

**अपिवा संख्यावत्त्वान्नानाऽहीनेषु गृह्यते पक्षवदेकस्मिन् संख्याऽर्थभावात् । ५६ ॥**

**भाष्यम्**— नानाऽहीनेषु वा चतुर्थेऽहनि गृह्यते, एवं संख्यावद्ग्रहणं भवति, चतुर्थेऽहनि, इति । एकस्मिन्नहीने एकं चतुर्थमहः, अन्यदष्टमं भवति । यदुक्तं श्रुतिशब्दो भविष्यतीति, अहीने इति । भवति सा हि श्रुतिः । न च तया श्रुत्या किंचित् सिध्यति, चतुर्थस्याभावात् । अस्मत्पक्षे लक्षणा, तया तु सिध्यति । अपिच, न लक्षणा । सामान्याभिप्रायमेकवचनम् । यदुक्तं वीप्साऽनर्थक्यमिति । न आनर्थक्यमापततीत्यशब्दार्थः कल्पनीयः । तस्मान्नानाऽहीनेषु ग्रहीतव्यः इति । पक्षवत् । यथा पञ्चम्यांपञ्चम्यां भुङ्क्ते इति पक्षान्तरं गम्यते । एवमिहापि द्रष्टव्यः । तस्मान्नानाऽहीनेषु ग्रहीतव्यः इति ।

**भोजने तत्संख्यं स्यात् । ५७ ॥**

**भाष्यम्**— यत्तु भोजनवदित्युक्तम्, अर्थात्तत् । तस्माच्चतुर्थादपि अन्यच्चतुर्थं तत्र कल्प्यते । चतुर्थादारभ्य यान्यहानि, तेषां चतुर्थमहीनस्य तदष्टमम् । शब्दलक्षणे कर्मणि शब्दाभिहितं गम्यते, न लोकाभिप्रायः । तस्माद्युक्तं भोजने लोकाभिप्रायानुष्ठानम् । अहीने तु शब्दाभिहितं गम्यते ।

**सोम**— षोडश्युत्तरे इतिवत् वीप्साया न विधेयत्वमित्युत्थितेः संगतिः । **सूत्रार्थस्तु**— चतुर्थेचतुर्थेऽहनि अहीनस्य गृह्यते इत्यत्र एकस्मिन्नेव अहीने अभ्यासेन ग्रहणं प्रतीयते, यथा 'देवदत्तः चतुर्थेचतुर्थे दिने भुङ्क्ते' इत्यत्र भोजनदिनापेक्षं चतुर्थत्वम्, तद्वदिहापि ग्रहणदिनापेक्षत्वात् चतुर्थस्य इति ।

वि— 'किं चतुर्थेऽहन्यहीनस्य ग्रहो नानागतेषु वा ।, वीप्सैकवचनाभ्यां स्यादेकस्मिन्नेव स ग्रहः ॥, चतुर्थाष्टमताऽऽपत्तेर्नानाऽहीनेषु स ग्रहः । जात्येकवचनं वीप्सा न्यायप्राप्तानुवादिनी ॥'

**भाट्ट**— अष्टरात्रादिरूपे अहीने चतुर्थेऽहनि षोडशिनं गृहीत्वा पुनरपि चतुर्थाच्चतुर्थे अष्टमे ग्राह्यः । अन्यथा वीप्साऽनुपपत्तेः अहीनान्तराभिप्रायत्वे न्यायप्राप्तत्वेन वीप्सावैयर्थ्यापत्तेः । **इति प्राप्ते**, अहीनस्य चतुर्थेऽहनि ग्राह्यत्वेन श्रुतः षोडशी न तस्याष्टमे ग्रहीतव्यः । नहि तदहीनस्य चतुर्थम्, अपितु चतुर्थस्य, अतश्च चतुर्थपदानुरोधात् अहीनान्तराभिप्रायेण वीप्सा न्यायप्राप्तानुवादः । विधाने वाक्यभेदापत्तेः । अहीनस्य इत्येकवचनं तु सामान्याभिप्रायेण बहुत्वलक्षणार्थम् ।

**मण्डन**— ' चतुर्थवीप्सा खलु बह्वहीने । '

**शंकर**— ' चतुर्थवीप्सा अन्याहीने । ' १५.

* **नानाकर्मलक्षणं** इति ( द्वितीयं ) अध्यायमाचक्षते । **भा.** २।१।१।१ पृ. ३७२.

* **नानाकार्यत्वान्न** विकल्पः । **भा.** ३।३।६।१२.

* **नानाछन्दस्के** गायत्रच्छन्दस इत्यादिपदघटितमन्त्रस्य विनियोगः । **भा.** ३।२।१८।४२–४३. * नानाछन्दस्के सोमे ऐन्द्रप्रदाने भक्षमन्त्रो नान्यत्र । कृत्वाचिन्ता । **वि.** ३।२।१९.

* **नानाजातीयेषु** ( ऐकादशिनेषु ) पशुषु सौत्रामण्यां च पाकभेदात् कुम्भीशूलवपाश्रपणीनां भेदः । **भा.** ११।४।१०।३७–३८.

* **नानात्वम्** । यद् यस्य ग्राह्यम्, गृहीते च तस्मिन् ग्राह्यान्तरावमर्शो नानात्वम् । **बृहती.** पृ. २२७ । न नानात्वं नाम अन्यदेव, किन्तु स्वभावत एव ये विलक्षणा अर्थाः, तेषु गृहीतेषु यदिदं वैलक्षण्यं विमृश्यते, तदिदं नानात्वम् । **ऋजु.** पृ. २२७.

**नानाप्रदानाधिकरणम्** । भिन्नगुणकदेवताभेदे प्रदानभेदः ॥

त्रीण्येतानि ( इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेत्, इन्द्रायाधिराजाय, इन्द्राय स्वराजे इति ) हवींष्यवदानैकत्वात् संप्रतिपन्नदेवताकत्वात् सहैव प्रदीयेरन् । इति प्राप्ते, विशेष्यस्यैकत्वेऽपि राजादिगुणभेदेन देवतापृथक्त्वात् अवदानादेर्वचनाद्यौगपद्येऽपि प्रदानानि भिद्येरन्नेव, एवं सति तिसृणामेवर्चां याज्यात्वमनुवाक्यात्वं च संगच्छते । **संकर्ष.** २।२।१५.

* **' नानाबीजेष्वेक**मुलूखलं विभवात् **' इति न्यायः ।** कृष्णाजिनास्तरणन्यायः । **भा** ५।२।७।१३.

**नानाबीजेष्वेकमुलूखलं विभवात् । ५।२।७।१३ ॥**

राजसूये नानाबीजेष्टिः ' अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाम्, सोमाय वनस्पतये श्यामाकं चरुम्, सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमाशूनां व्रीहीणाम्, रुद्राय पशुपतये गावीधुकं चरुम्, बृहस्पतये वाचस्पतये नैवारं चरुम्, इन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं महाव्रीहीणाम्, मित्राय सत्याय आम्बानां चरुम्, वरुणाय धर्मपतये यवमयं चरुम्' इति । एषां व्रीहिश्यामाकादीनां अवहननं कर्तव्यं भवति । तत्र कृष्णाजिनं अवस्तरणाय, उलूखलं मुसलं च अवघाताय, शूर्पं च परावपणाय विवेकाय च उपयुज्यते । तदेतदुलूखलादिकं प्रतिबीजं भिद्यते, किंवा एकमेव क्रमेण उपकुर्यात् इति विचारे सिद्धान्तमाह । सूत्रे उलूखलशब्दः कृष्णाजिनोलूखलमुसलशूर्पाणां ग्राहकः । तथा च सूत्रार्थः नानाबीजेषु अवहननाद्यर्थमुलूखलं उलूखलादि एकमेव स्यात् न तु प्रतिबीजं पृथक् । विभवात् प्रभुत्वात् नानाजातीयानामपि बीजानां अवहननादेः करणे समर्थत्वात् ।

**विवृद्धिर्वा नियमानुपूर्व्यस्य तदर्थत्वात् । १४ ॥**

राजसूये नानाबीजेष्टौ कृष्णाजिनं उलूखलं मुसलं शूर्पं चैकमेव क्रमेण सर्वबीजानामवहननार्थं स्यात् इति सिद्धान्ते उक्ते पूर्वपक्षमाह । वाशब्दः पक्षव्यावृत्त्यर्थः । विवृद्धिः उलूखलादेः स्यात् । प्रतिबीजं भेदः स्यात् । नियमानुपूर्व्यस्य ' कृष्णाजिनमवस्तृणाति, तस्मिन् उलूखलमधिवर्तयति, तस्मिन् बीजान्यावपति, मुसलमादत्ते, अवहन्ति, शूर्पे उद्वपति, परापुनाति, विविनक्ति, पात्र्यां तण्डुलान् प्रस्कन्दयति, त्रिष्फलीकरोति ' इति यत् नियमेन नियतत्वेन पदार्थानां आनुपूर्व्यं क्रमः उक्तः, तस्य तदर्थत्वात् तत्तदर्थपरत्वात् ते पृथक् पदार्थाः । ततश्च एकजातीयबीजस्य कृष्णाजिनास्तरणं कृत्वा अन्यजातीयबीजस्य तत् कर्तव्यम् । एवं अवहननाद्यपि । तच्च उलूखलादेर्भेदे सत्येव संभवति । तस्मात् प्रतिबीजं भिन्नमुलूखलादि इति पूर्वः पक्षः ।

अत्र **सुबोधिन्यां** नियमादानुपूर्व्यस्य इति पठित्वा आनुपूर्व्यस्य पाठक्रमस्य नियमात् प्रकृतौ क्लृप्तत्वात् इति व्याख्यातम् । तदर्थत्वात् इत्यस्य च उलूखलस्य हविरावापार्थत्वात् इत्यर्थ उक्तः । **कुतूहले** तु आनुपूर्व्यस्य पदार्थानुसमयेन अनुष्ठानक्रमस्य पाठेन नियमात् नियमनात् कृष्णाजिनास्तरणादिः पृथक् पदार्थः । कुतः ? तदर्थत्वात् 'कृष्णाजिनमास्तृणाति' इत्यादिपदैः तेषां पृथगेव अभिधेयत्वात् विधिभेदे पृथक्पदार्थत्वात् इति व्याख्यातम् । भाष्यं तु 'नियतं ह्यानुपूर्व्यं पाठकृतं सहत्वे सति उपपद्यते । पदार्थानां चानुसमयः । पृथक्पदार्थाश्च अधस्तरणादयः । यतीभावस्य ( समापनस्य ) पर्यवसानात् । अधस्तरणादेश्च पदैरभिधानात्' इति ।

**एकं वाऽऽतण्डुलभावाद्धन्तेस्तदर्थत्वात् ।१५॥**

राजसूये नानाबीजेष्टौ उलूखलादि प्रतिबीजं भिन्नं इति पूर्वपक्षे सूत्रेण प्राप्ते सिद्धान्तमाह । वाशब्दः पूर्वपक्षव्यावर्तनाय । एकमुलूखलं कृष्णाजिनोलूखलमुसलशूर्पं एकमेव सर्वबीजार्थं स्यात्, न प्रतिबीजं भिन्नम् । हन्तेः इति पदस्य पूर्वत्र च परत्र च अन्वयः । हन्तेः अवहननपदार्थस्य आ तण्डुलभावात् तण्डुलभावपर्यन्तमेकत्वात् । हन्तेः कृष्णाजिनास्तरणमुपक्रमः फलीकरणान्तश्च तस्यैव शेषः । हन्तेस्तदर्थत्वात् अवहननस्य तण्डलनिष्पत्त्यर्थत्वात् । तथा च तावानेकः पदार्थः । तथा च प्रतिबीजं अवहननपदार्थकाण्डानुसमयः प्रवर्तते । तेन एकमेव उलूखलादि सर्वबीजानां पर्यायेण अवहननादि कर्तुं शक्नोति इति न विवृद्धिः । **के.**

* **नानाबीजेषु** कृष्णाजिनास्तरणादितण्डुलप्रक्षालननिनयनान्तेन अनुसमयः । कृष्णाजिनास्तरणन्यायः द्रष्टव्यः । **भा.** ५।२।७।१३-१५.

* **नानाबीजाधिकरणम् ।** नानाबीजन्यायः द्रष्टव्यः । **के.**

* **नानाबीजाधिकरणन्यायस्य स्वरूपम्** 'सत्यपि विधिभेदे अवयवत्वेन विधानात् पदार्थान्यत्वं नास्ति' इति । **के.**

* **नानाबीजेष्टिरेवमाम्नाता तैत्तिरीयके ।** 'अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाम्, सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमाशूनां व्रीहीणाम्, रुद्राय पशुपतये गावीधुकं चरुम्, बृहस्पतये वाचस्पतये नैवारं चरुम्, इन्द्राय ज्येष्ठाय पुरुडाशमेकादशकपालं महाव्रीहीणाम्, मित्राय सत्याय आम्बानां चरुम्, वरुणाय धर्मपतये यवमयं चरुम्' इति ।

**काठकसंहितायाम्** ( १५।५।७ ) 'अग्नये गृहपतये आशूनामष्टाकपालः, सवित्रे प्रसवित्रे सतीनामष्टाकपालः, सोमाय वनस्पतये श्यामाकश्चरुः, बृहस्पतये वाचस्पतये नैवारश्चरुः, इन्द्राय ज्येष्ठाय हायनानामेकादशकपालः, मित्राय सत्यस्य पतये आम्बानां चरुः, वरुणाय धर्मणस्पतये यवमयो द्वादशकपालः, रुद्राय पशुपतये गावीधुकश्चरुः' इति ।

**मैत्रायणीये** ( २।६।१५ ) 'अग्नये गृहपतये आपतन्तानामष्टाकपालं निर्वपेत्, सोमाय वनस्पतये श्यामाकं चरुम्, सवित्रे प्रसवित्रे सतीनामष्टाकपालम्, बृहस्पतये वाचस्पतये नैवारं चरुम्, इन्द्राय ज्येष्ठाय हायनानामेकादशकपालम्, मित्राय सत्यस्य पतये नाम्बानां चरुम्, वरुणाय धर्मस्य पतये यवमयं चरुम्, रुद्राय पशुपतये गावीधुकं चरुम्' इति । अत्र आशवो व्रीहयः ये मासद्वयेनैव पच्यन्ते । गवीधुकाः तृणविशेषः । आम्बाः ( आंबेमोहोर इति भाषा ), सतीनां इति वर्तुलबीजानि । नाम्बाः आम्बाः एव । **के.**

**⌛ नानाबीजेष्टौ अन्त्यबीजसंबन्धिहविष्कृदाह्वानकाले एव वाग्विसर्गः ॥**

**वाग्विसर्गो हविष्कृता बीजभेदे तथा स्यात् । ११।३।७।१७॥**

**भाष्यम्**— राजसूये नानाबीजेष्टिः 'अग्नये गृहपतये आशूनामष्टाकपालं निर्वपेत्, सोमाय वनस्पतये श्यामाकं चरुम्, सवित्रे प्रसवित्रे सतीनामष्टाकपालम्' इति । 'नानाबीजेष्वेकमुलूखलं विभवात्' (५।२।७।१३) इत्युक्तम् । अतः तस्यां क्रमेणावहन्तिः क्रियते । प्रकृते च श्रूयते 'अपः प्रणेष्यन् वाचं यच्छति, तां सहविष्कृता विसृजति' इति । हविष्कृद्ग्रहणं च काललक्षणार्थं इत्युक्तम् 'तथाह्वानमपीति चेत्' ( ३।२।३।५ ) 'न कालविधिश्चोदितत्वात्' ( ३।२।३।६ ) इति । इह अनेको

हविष्कृदाह्वानकालः । तत्र पूर्ववैव विचारणा । किमन्त्ये प्रथमे वा हविष्कृत्काले वाग्विसर्गः कर्तव्यः, अथवा अन्त्ये एवेति । तथैव च पूर्वः पक्षः । प्राक् हविष्कृत्कालात् ये पदार्थाः, तेषां वाग्यमो धर्मः, स बाध्येत यदि पूर्वस्मिन् वाग्विसर्गः क्रियते । अथोत्तरस्मिन्, ततो हविष्कृत्कालादूर्ध्वं ये पदार्थाः, तेषां व्याभाषणकरणं धर्मः, तत् बाध्येत । तथैव चोत्तरः पक्षः । व्याभाषणस्याश्रुतत्वात् शिष्टे च वाग्यमस्य अभिप्रवृत्तत्वात् इति । अधिकरणप्रदेशोऽयम् ।

**सोम**— बीजान्तरावहननस्य विभिन्नकालतया हविष्कृदाह्वानकालभेदः इति विशेषशङ्कया उत्थानात् **संगतिः** । सूत्रे तथा स्यात् प्रासनवत् अन्ते स्यादित्यर्थः ।

**वि**— 'नानाबीजेषु यागेषु वाग्विसर्गश्च पूर्ववत् । शङ्किते तद्विधौ, न स्यादविधित्वे तदुत्तरम् ॥' उत्तरं चरमे एव काले ।

**भाट्ट**— दर्शपूर्णमासयोः प्रणीताप्रणयनोत्तरं विहितस्य वाग्यमस्य 'हविष्कृता वाचं विसृजति' इति वचनेन हविष्कृदाह्वानकाले विसर्गः श्रुतः । नानाबीजेषु च व्रीहिश्यामाकादिरूपेषु एकप्रयोगवर्तिनानायागसाधनेषु कृष्णाजिनास्तरणादिफलीकरणान्तानां अनुसमयस्य स्थापितत्वात् हविष्कृदाह्वानकालप्राग्भाविकृष्णाजिनास्तरणादीनां वाग्यमाङ्गकत्वात् तदनुरोधेनात्रापि अन्ते एव वाग्विसर्गः । **न च** इह वाग्विसर्गस्य विहितत्वात् हविष्कृदाह्वानोत्तरभाविपूर्वबीजसंबन्धिपदार्थानां वाग्विसर्गाङ्गकत्वप्रतीतेः अन्ते तत्करणे तत्र तद्बाधापत्तिः, वाग्विसर्गस्य विहितत्वेऽपि आरादुपकारकत्वेन विधेयत्वापत्तेः, तस्य उत्तरपदार्थाङ्गत्वे प्रमाणाभावात् । वस्तुतस्तु नात्र वाग्विसर्गविधिः, रागतः प्राप्तत्वात्, अपि तु वाग्यमापेक्षितकालविधिसमर्पणमेवेत्युक्तम् । **न च** तथापि सकृदाहूताया एव तस्या आपत्नीसंयाजान्तं हविष्करणार्थमवस्थानेन सर्वावघातकरणोपपत्तेः आद्यबीजावघातसमये एव हविष्कृदाह्वानात्तदैव वाग्विसर्गापत्तिरिति **वाच्यम्** । आह्वानस्य सकृत्करणेऽपि तदुपलक्षितस्य मुसलादानकालस्य अन्त्यबीजावघातसमयेऽपि सत्त्वात् तदवधिकवाग्यमस्योपपत्तेः । आपत्नीसंयाजान्तं जघनेन गार्हपत्यं अवस्थिताया अपि तस्या उत्करदेशे अवघातार्थं पुनःपुनः आह्वानोपपत्तेश्च । वक्ष्यते चात एव अग्रे प्रतिसवनं सवनीयेषु हविष्कृदाह्वानभेदः । अतो वाग्यमानुकूलप्रयत्नावृत्तिः इति सिद्धम् ।

**मण्डन**— 'अन्त्ये बीजे वाग्यमस्य प्रहाणम् ।'

**शंकर**— 'नानाबीजे वाग्विसर्गे ।' तन्त्रत्वम् ।

* **नानाबीजेष्टौ** उलूखलं पात्री च तन्त्रेण न तु नाना । कृष्णाजिनास्तरणादिप्रक्षालननिनयनान्तेनानुसमयः । **भा.** ५।२।७।१३–१५, * नानाबीजेष्टौ उलूखलं मुसलं शूर्पं चैकमेव । ५।२।७।१३. * नानाबीजेष्टौ एकमुलूखलं पर्यायेण । कृष्णाजिनास्तरणादिः फलीकरणान्तः एकः पदार्थः । शूर्पमुसलकृष्णाजिनानि तन्त्रेणैवोपकुर्वन्ति । **के.** ५।२।७।१३–१५. * नानाबीजेष्टौ द्रव्यभेदेन संस्कारावृत्तौ मन्त्रावृत्तिः । **वृ.** ११।४।१४।४४. * नानाबीजेष्टौ पेषणेऽपि 'कृष्णाजिनास्तरणादिपेषणान्तेन अनुसमयः, तेषामपि पेषणविध्येकवाक्यतया एकपदार्थत्वात्' । तथा च कृष्णाजिनं दृषत् उपलः तन्त्रेण एकः । **भाट्ट.** ५।२।७. * नानाबीजेष्टौ प्रतिबीजं अवघातमन्त्रस्यावृत्तिः राजसूये । नानाबीजन्यायः । **भा.** ११।४।१३।४३ ( ४६ के. ).

* **नानाबीजेष्ट्यधिकरणम्** । नानाबीजन्यायः द्रष्टव्यः । **के.**

**नानाबीजन्यायः** । नानाबीजाधिकरणम् । नानाबीजेष्टिन्यायः । नानाबीजेष्टौ प्रतिबीजमवघातमन्त्रस्यावृत्तिः राजसूये ॥

**द्रव्यान्तरे कृतार्थत्वात् तस्य पुनःप्रयोगान्मन्त्रस्य च तद्गुणत्वात् पुनःप्रयोगः स्यात् तदर्थेन विधानात् । ११।४।१३।४६॥**

**भाष्यम्**— राजसूये नानाबीजेष्टिः 'अग्नये गृहपतये आशूनामष्टाकपालं निर्वपेत्, सोमाय वनस्पतये श्यामाकं चरुम्' इत्येवमादिः । तस्यां अवहन्तिः समन्त्रकश्चोदकेन प्राप्यते । अत्रापि पूर्वेण न्यायेन सकृत् मन्त्रस्य प्रयोगः प्राप्तः । सर्वबीजानां वितुषीकरणं चिकीर्षितं तदभिसंधीयते इति । **तथा प्राप्ते, उच्यते** । द्रव्यान्तरे— बीजान्तरे पुनःप्रयोगः स्यान्मन्त्रस्य । कुतः ? कृतार्थत्वात् । पूर्वस्मिन् बीजे योऽवहन्तिः स कृतार्थः । संनिपत्योपकारी

हि सः। स च येन बीजेन संनिपतितस्तदेव संस्करोति। तदेव चेत् संस्करोति, उत्तरसंस्कारार्थं पुनः प्रयोक्तव्यः। तस्य पुनःप्रयोगान्मन्त्रस्यापि पुनःप्रयोगः। तद्गुणत्वात्। तस्यावहन्तेः स मन्त्रो गुणः, तदर्थेन विधानात्। तस्यापि असौ प्रतिकर्मावसायिना चोदकेन विहितः। तस्मात् प्रतिबीजं मन्त्रस्य आवृत्तिः।

**सोम**—**सूत्रार्थस्तु**-- द्रव्यान्तरेषु मन्त्रस्य पुनःप्रयोगः स्यात् पूर्वस्मिन् बीजे कृतार्थस्यावघातस्य बीजान्तरे पुनःप्रयोगात् मन्त्रस्य प्रतिकर्मावसायिना चोदकेन तदर्थत्वेनापि विधानात् तद्गुणत्वात् इति।

**वि**-- 'नानाबीजेषु तन्मन्त्रः ( अवघातमन्त्रः ) सकृद्वाऽसकृ, दग्रिमः। विशेषाग्रहणा, न्मैवमवघातस्य भेदतः॥'

**भाट्ट**— एवं तर्हि नानाबीजेष्वपि सत्यपि तण्डुलीभावभेदे सकृत्पठितमन्त्रस्य स्मृतेः सर्वावघातेषु उपकारकत्वोपपत्तेः नावृत्तिः। **इति प्राप्ते**, कृष्णाजिनास्तरणादिफलीकरणान्तेन अनुसमयस्योक्तत्वात् सकृन्मन्त्रपाठे तु असंबन्धिपरावपनादिपदार्थान्तरतन्मन्त्रादिना अवघातमन्त्रजन्यस्मृतेर्नाशात् आवृत्तिरेव तन्मन्त्रस्य।

**मण्डन**—'नानाबीजे पृथक्पृथक्।' अवघातमन्त्रः।

**शंकर**—'नानाबीजेषु तद्भिदा।' अवघातमन्त्रभेदः।

* समन्त्रकप्रथममुष्टिनिर्वापेण ये संस्कृतास्तण्डुलाः तेभ्योऽन्ये मुष्ट्यन्तरनिर्वापेण संस्कार्याः। अतस्तत्संस्कारसिद्धये **नानाबीजन्यायेन** मन्त्रावृत्तिः। **के.** ११।४।१५.

* **नानाबीजवत्।** यथा वा 'सहावघ्नन्ति' 'सह पिंषन्ति' इति क्वचित् नानाबीजेषु वचनात् सर्वाघातस्य एककालत्वात् 'इतरमन्यः' इति कर्त्रन्तरं प्राप्नोति। **रत्न.** ५।१।१३।२५.

**नानावृक्षरसन्यायः।** उक्तं च महोपनिषदि 'यथा पक्षी च सूत्रं च नानावृक्षरसा यथा। यथा नद्यः समुद्राश्च शुद्धोदलवणे यथा॥ चोरापहार्यौ च यथा यथा पुंविषयावपि। तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ॥' इत्यादि पूर्णप्रज्ञदर्शने प्रपञ्चितं माधवार्यैः। **साहस्री.** ८२२.

* **नानाशाखासु** विहिताग्निहोत्रादिकर्मणामैक्यम्। शाखाऽन्तराधिकरणम्। **बृ.** २।४।२।८-३०.

* **नान्तरीयकम्।** यद्विना यन्नोपपद्यते तत् तस्य नान्तरीयकं इत्युच्यते। **के.**

**नान्तरीयकन्यायः।** नान्तरीयमवश्यम्भावीत्यर्थः। यथा प्रतिबन्धकाभावे नान्तरीयककार्योत्पत्तिः अवश्यम्भाविनीत्यर्थ इत्युक्तम्। यथा च कश्चिदन्नार्थी शालिकलापं सपलालं सतुषमाहरति नान्तरीयकत्वात् स यावत् आदेयं तावदादाय तुषपलालान्युत्सृजति। तथा कश्चित् मांसार्थी मत्स्यान् सकण्टकान् सशकलानाहरति नान्तरीयकत्वात्। स यावदादेयं तावदादाय शकलकण्टकान्युत्सृजतीति, प्रकृतेऽप्येवमिति 'स्वरितात्संहितायामनुदात्तानाम्' ( पा० १।२।३९ ) इतिसूत्रमहाभाष्ये उक्तोऽयम्। **साहस्री.** ६१९.

* **नापितकर्तृकत्वं** नित्यं केशश्मश्रुवपनस्येति नाध्वर्योः क्षुरग्रहणापत्तिः। **वा.** ३।८।२।४.

[ इत उत्तरं **नामपदारब्धानि** सिद्धान्तवाक्यानि '**नामिक्यः विभक्तयः**' इत्यन्तानि निवेश्य ततः परं **नामधेयपदारब्धानि** निवेशितानीति ज्ञेयम्। **के.** ]

* **नाम** अतिदेशे प्रमाणम्। **मणि.** पृ. १३. * 'नाम च व्यवहारार्थमर्थस्याभ्युपगम्यते।' **वा.** १।३।८।२६ पृ. २७७. * नाम धर्मभेदे प्रमाणम्। **मणि.** पृ. १३, * 'सर्वमाख्यातजं नाम' इति स्मृतिः। पृ. १११. * **नाम्ना** अतिदेशः अभिहितः ( सप्तमस्य तृतीये पादे )। इदानीं आनुमानिकेन वचनेनातिदेश उच्यते। **वा.** ७।४।१।१ पृ. १५६९. * नाम्ना ( द्वादशाहगतप्रथमाहविषयकप्रायणीयनाम्ना ) गवामयने प्रथमेऽहनि न धर्मातिदेशः। **भा.** ७।३।२।५. * नाम्ना तत्र विशेषः प्रतीयते, यत्र कश्चिद्विशेषमुपादाय नामानि प्रवर्तन्ते। **वा.** २।२।५।१५ पृ. ५००. * नाम्ना ( अग्निहोत्रनाम्ना ) धर्मातिदेशः कौण्डपायिनामयनगते अग्निहोत्रे। **भा.** ७।३।१।१-४. * 'नाम्ना धात्वर्थमात्रं च संनिधाप्येत शक्तितः'। सामानाधिकरण्येन हि सर्वनामधेयानि धात्वर्थानां नामधेयत्वेन अवस्थितानि, न भावनायाः। **वा.** २।३।११।२४ पृ. ६१६. * नाम्ना

( अग्निहोत्रनाम्ना ) नित्याग्निहोत्रधर्माणां कौण्डपायिनामयनगते अग्निहोत्रे अतिदेशः । **के.** ७।३।१।१–४. ** नाम्ना (दर्शपूर्णमासगताज्यनाम्ना) पशुगतयूपसंबन्धिनि अञ्जनाज्ये धर्माणां नातिदेशः । **भा.** ७।३।७।१९, ** नाम्ना ( यूपनाम्ना ) यूपसंस्काराणां यूपैकादशिनगते उपशये नातिदेशः । ७।३।१३।३३–३४, ** नाम्ना ( सर्वपृष्ठनाम्ना ) षडहपृष्ठानां विश्वजिति सर्वपृष्ठे अतिदेशः । ७।३।३।६–११, ** नाम्ना ( अवभृथनाम्ना ) सौमिकावभृथधर्माणां वरुणप्रघासावभृथे अतिदेशः । ७।३।४।१३–१६, ** नाम्ना ( वैष्णवनाम्ना ) सौमिकातिथ्येष्टिगतवैष्णवधर्माणां राजसूये पूर्वत्रिकगतवैष्णवत्रिकपाले नातिदेशः । ७।३।६।१७, ** **नाम्नः** अर्थवादगतस्य नातिदेशकत्वम् । **भाट्ट.** ५।३।९. ** नाम्नः । ज्योतिरादौ च ' एतेन सहस्रदक्षिणेन यजेत ' इत्यादिगुणान्वयव्यापारेण ' एतेन ऋद्धिकामो यजेत ' इत्यादिफलान्वयव्यापारेण च श्रुतस्यापि आख्यातस्य भेदाभेदयोरव्यापारात् तदन्वितस्यापि नाम्नोऽपि भेदकत्वं अविरुद्धम् । **सु.** पृ. ७१२, ** नाम्नः पूर्वकर्मोपस्थापकत्वस्य पूर्वकर्मवाचित्वनिमित्तकत्वम् । आख्यातस्य च पूर्वकर्मविषयत्वं विना नाम्नः पूर्वकर्मवाचित्वानवधाणात् । पृ. ९५३. ** नाम्नः प्रयोजनं तु सर्वत्र व्यवहार एव । नहि अन्तरेण नामधेयं ऋत्विग्वरणादिषु ' अनेनाहं यक्ष्ये ' इति आख्यानोपायो लघुः कश्चिदस्ति । **वि.** १।४।२. ** **नाम्नां** कर्मभेदो गुणफलोपबन्धः संकल्पलाघवं च प्रयोजनम् । **मणि.** पृ. ५. ** 'नाम्नां द्विधैव संबन्धः सर्ववाक्येष्ववस्थितः । सामानाधिकरण्येन षष्ठ्या वा प्रतिपाद्यते ॥ ' **वा.** २।२।१।२३ पृ. ५३६. ** नाम्नां सप्रकारकप्रमितिजनकत्वेन प्रामाण्यम् । **मणि.** पृ. ११, ** **नामसु** प्रातिपदिकार्थप्राधान्यम् । पृ. १०५.

** **नामातिदेशः** इत्यत्र नाम त्रिविधं कर्मनाम संस्कारनाम यौगिकं चेति । **बाल.** पृ. ११७–११९. ** नामातिदेशः एकत्र मुख्यस्य हि नाम्नः अपरत्र गौणत्वे । न तु सर्वत्र प्रवृत्तिनिमित्तसत्त्वेन मुख्यत्वेऽपि । **भाट्ट.** ८।१।३ पृ. ५. ** नामातिदेशः प्रबलः । यथा— अष्टरात्रैकदेशे प्रथमाहे विश्वजिति स्वतन्त्रैकाहविश्वजिन्नाम्ना तद्धर्मातिदेशात् सर्वस्वं दक्षिणा इति भाष्यम् । वार्तिककारस्तु द्वादशशतं इत्येव सिद्धान्तितवान् । **के.** ६।७।८.

** **नामार्थस्य** स्वोत्तरविभक्त्यर्थेन अन्वयः क्लृप्तः । **रहस्य.** पृ. ८६.

**नामार्थयोरभेदान्वय इति न्यायः ।** नामात्र ' अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ', 'कृत्तद्धितसमासाश्च' इति सूत्रद्वयलक्षितप्रातिपदिकापरपर्यायत्वेन गृह्यते । अर्थः, अभिधेयः, वाच्य इति पर्यायाः । तयोरभेदस्तादात्म्यसंबन्ध इति भावः । अत एव पुरोवर्तिपदार्थं दृष्ट्वा वाचकजिज्ञासया कोऽयमिति प्रश्ने देवदत्तोऽयमित्युत्तरम् । अत एव ' रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः । शौर्यभङ्गः रावणस्य मदभङ्गः तु वालिनः ॥ ' इत्यादौ शब्दार्थयोरप्यभेदेन व्यवहारः । ' ओमित्येकाक्षरं ब्रह्म ' इत्यादावपि अभेदेनैव निर्देशः । अत्र द्विधा नियमः नामार्थयोरभेद एवेति, अभेदो नामार्थयोरेवेति । आद्ये राज्ञः सुतस्य धनमित्यादौ व्यभिचारः । द्वितीये तु स्तोकं पचतीत्यत्र । **साहस्री.** ४६३.

** नामार्थयोः भेदेन अन्वयस्य विभक्त्यर्थद्वारकत्वात् । **सोम.** ६।१।१३. ** नामार्थयोः भेदान्वयानुपपत्तिः । **मणि.** पृ. ११४. ** **नामार्थानां** यत्र कारकत्वेन विभक्त्युपस्थाप्यत्वम्, तत्रैव परस्परासंबद्धानां आख्यातसंबन्धः, कारकाणां मिथः संबन्धाभावात् । **सोम.** ६।४।६ पृ. ४८५.

** **नामार्थधात्वर्थयोः** अभेदातिरिक्तसंबन्धेन अन्वयस्य अव्युत्पन्नत्वात् । **मणि.** पृ. ११०.

** **नामोपदेशः** सङ्घस्य व्यवहारार्थः । पौर्णमासी, अमावास्या, वैश्वदेवं पर्व इत्यादि । **के.** १।४।११.

** **नामैकदेशेन** नामोपलक्षणस्य लोके सिद्धत्वात् भीमसेनोपलक्षणभीमशब्दवत् । **कणिका.** पृ. ३९२.

**' नामैकदेशे नामग्रहणम् ' इति न्यायः** एकप्रकरणत्वादितात्पर्यग्राहकप्रमाणसत्त्वे एव । यथा ज्योतिष्टोमप्रकरणगते ' वसन्तेवसन्ते ज्योतिषा यजेत ' इति वाक्ये ज्योतिःशब्देन ज्योतिष्टोमस्य ग्रहणम् । **सना. ध. प्र.** विवाहप्रकाशः पृ. १९१. ** नामैकदेशे नामग्रहणमिति

न्यायः । यथा– दत्तः–देवदत्तः, भामा–सत्यभामा, भीमः भीमसेन इत्यादि ज्ञेयम् । **साहस्री.** ६०१.

* **नामपदं** चाख्यातानुसारित्वात् यत्राख्यातं तत्र वर्तते । **वा.** ४।४।१।१२, * नामपदम् । ( निरूढानिरूढत्वेन द्विविधस्यापि नामधेयस्य विचारितत्वात् उत्तराधिकरणद्वया- ( १।४।३–४ )नर्थक्यमाशङ्क्ते– ) ननु सर्वत्र द्विप्रकारमेव नामपदं सांविज्ञायिकं ( रूढम् ) यौगिकं च । उभयमपि च अधिकरणद्वयेन ( १।४।१–२ ) प्रतिपादितम् । किमिदानीमवशिष्यते, येन पुनर्विचार्यते । उच्यते । यौगिकानामेव मत्वर्थलक्षणापरिहारेण अत्र चिन्ता ( ३ ) उत्तराधिकरणे तु ( ४ ) सांविज्ञायिकानां वाक्यभेदासंभवात् । ( तथा च निरूढानि नामपदानि सांविज्ञायिकानि, अनिरूढानि च यौगिकानि इति भेदः। के. ) । १।४।३।४ पृ. ३३२. * नामपदं सर्वं तावत् व्यक्त्याकृतिनिबन्धनम् । व्यक्तिवाचि तु यन्नाम, तदेकत्रैव वर्तते । देवदत्तादिवत् । **के.** * **नामपदानि** यान्युपादेयार्थानि तानि तावत् आख्यातपरतन्त्रत्वात् तदनुसारीणि सन्ति तद्वृत्तिं प्रतीक्षन्ते । 'प्रायेणाख्यातसंबन्धि नामेष्टं पारतन्त्र्यभाक्' । **वा.** २।२।२।२ पृ. ४६७. * **नामपदस्य** नहि आख्यातं वा कृत्यं वा अन्तरेण विधिशक्तिरस्ति । **सु.** पृ. ७७६. * नामपदस्य विधिशक्तिर्नास्ति । **वा.** १।४।२।३ पृ. ३३२.

* **नामप्रयोज्य**नामार्थविशेष्यकनामार्थप्रकारकाभेदसंसर्गकबोधत्वावच्छिन्नं प्रति एकाधिकरणवृत्तिप्रातिपदिकार्थताऽवच्छेदकनामद्वयसमभिव्याहारस्य द्वंद्वभिन्ननामद्वयसमभिव्याहारस्य वा तन्त्रत्वम् । **भाट्ट.** ६।१।१२.

* **नामयुक्तकर्मविधाने** सामानाधिकरण्यात् कदाचित् यज्यर्थाविशेषो नाम्ना निरूप्यते कदाचिन्नामार्थो यजिना । यो यत्र पूर्वतरप्रसिद्धार्थो भवति, स इतरं स्वविषये व्यवस्थापयति । यथा राजसूयेन इत्यत्र नाम यागायागविषयत्वेन उपप्लवमानं प्रकृतयागप्रसिद्धेन यजिना स्वविषयं नीयते । **वा.** २।२।३।३ पृ. ४७६.

**नाम–रूप–धर्मविशेष–पुनरुक्ति–निन्दाऽशक्ति–समाप्तिवचन–प्रायश्चित्ता–न्यार्थदर्शनाच्छाखाऽन्तरेषु कर्मभेदः स्यात् । २।४।२।८॥**

इह शाखाऽन्तराण्युदाहरणं काठकं कालापकं पैप्पलादकं इत्येवमादीनि । तत्र संदेहः किमेकस्यां शाखायां यत्किञ्चिदग्निहोत्रादि श्रूयते, तच्छाखाऽन्तरे पुनःश्रूयमाणं भिद्यते, उत न भिद्यते इति । पूर्वं प्रयोगभेदं प्रतिपाद्य इदानीं भेदापवादः क्रियते । अत्रायं पूर्वपक्षः । 'एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात्' इति न्यायेन अभ्यासात् कर्मभेदः प्रतिपादित एव । स चाभ्यासोऽपि अविशिष्ट एव । न च शाखाऽन्तरे गुणफलाद्यर्थान्तर............र्था पुनश्रुतिर्भवेत् । तेन कर्मैव विधेयम् । तच्च विहितविधानासंभवात् कर्मान्तरमेवेति । न च कर्मैकत्वेऽपि भिन्नाध्येतृबोधनेनैव शाखाऽन्तरपुनःश्रुतेरर्थवत्त्वात् नाभ्यासाद्भेद इति वक्तव्यम् । प्रतिशाखमध्येतृभेदनियमे प्रमाणाभावात् । यद्यपि 'स्वाध्यायमधीयीत' इति स्वाध्यायगतमेकत्वं श्रूयते, स्वाध्यायशब्देन च स्ववेदशाखा अभिधीयते, तथापि सामर्थ्यतोऽर्थज्ञानार्थत्वेन प्राप्तस्य स्वाध्यायस्य अध्ययनेन संस्कारविधौ उद्देश्यत्वात्, उद्देश्यविशेषणस्य च 'ग्रहं संमार्ष्टि' इतिवत् अविवक्षितत्वात् एकस्य नानाशाखाऽध्ययनमविरुद्धम् । किञ्च, यदि एकस्य एकशाखाध्ययनमेव नियतं भवेत्, तदा वेदान्तरीयशाखाऽध्ययनमपि न प्राप्नोति । तथा च सति 'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् । अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत् ॥' ( मनु. ३।२. ) इति व्याहन्येत । तेन पुनःश्रुतेरनन्यार्थत्वात् अभ्यासात्तावत् भेदः । किञ्च यत्र एकस्यामेव शाखायां कथञ्चित् विच्छेदमात्रेण अनुपादेयं प्रति उपादानात् अग्निहोत्रादीनां कर्मान्तरत्वम्, तत्र शाखाऽन्तरेषु सुतरामेव बुद्धिविच्छेदादनुपादेयं फलं प्रति उपादानात् प्रकरणान्तरादपि कर्मभेदः । तथा काठकादिकर्मनामभेदादपि भेदः, एकत्रैवार्थे अनेकशब्दस्यान्याय्यत्वात् । तथा गुणादपि भेदः । एकस्यां शाखायामग्नीषोमीयमेकादशकपालमामनन्ति, अपरस्यां द्वादशकपालम् । तदुक्तम्– रूपात् इति । तथैकस्यां कारीरीवाक्यमधीयानास्तैत्तिरीया भूमिभोजनमाचरन्ति, अपरस्यां नेति । तदुक्तम्–– धर्मविशेषात् इति । तथा कस्यांचित् उदितहोमनिन्दा, कस्यांचित् अनुदितहोमनिन्दा । तदुक्तम्–

निन्दावचनादिति । तथा प्रतिशाखं नानाधर्मान् संकलय्य न कश्चिद्विरोधात् अनुष्ठातुं शक्नोति, कर्मभेदे तु शक्नोतीति । तदुक्तम्—अशक्तेश्चेति । तथा कस्यांचित् अनुदितहोमव्यतिक्रमे प्रायश्चित्तमामनन्ति, कस्यांचित् उदितहोमव्यतिक्रमे । तदुक्तम्– प्रायश्चित्तविशेषादिति । तदत्र सर्वत्रैव परस्परविरोधात् पूर्वत्र असंभवद्गुणादेव भेदः । तेनात्राभ्यासप्रकरणान्तरसंज्ञागुणैर्भाष्योक्तपञ्चलिङ्गदर्शनैश्च शाखान्तरेषु कर्मभेद एवेति । **एवं प्राप्ते, अभिदध्महे ।**

**एकं वा संयोगरूपचोदनाख्याविशेषात् ।९॥**

अयमभिप्रायः । भवेदेवं यदि प्रत्यभिज्ञानसिद्धमत्र कर्मैकत्वं न भवेत् । तथाहि, शाखाऽन्तरेऽपि सैव संज्ञा, तदेव द्रव्यदैवतम्, ते एव गुणादयः, तदेव च फलम्, स एव धात्वर्थावच्छिन्नभावनाविषयविधिः । तदेवं प्रत्यभिज्ञासमूहसिद्धे कर्मैकत्वे···यद्यपि किञ्चिदधिकं न्यूनं वा प्रतीयेत, तथापि गोर्गडुनि जाते लाङ्गूले वा छिन्ने प्रत्यभिज्ञासिद्धमेकत्वं नोज्झति तथात्रापीति । तदुक्तम् '**सर्वत्र प्रत्यभिज्ञानात् संज्ञारूपगुणादिभिः । एककर्मत्वविज्ञानं न शाखास्वपगच्छति ॥**' इति (वा.पृ.६३५)। न चान्यत् भेदकारणमस्ति । नन्वभ्यास एव भेदप्रमाणमित्युक्तम् । मैवम् । एकैका हि शाखा स्वाध्यायशब्दवाच्या प्रतिपुरुषं व्यवस्थाप्य अध्ययनविधिना प्रमाणीकृता । प्रमाणीभूतानेकवाक्य...... तः प्रतीयमानं कर्माभ्यासतो भिद्यते । न चोभयशाखागतं वाक्यमेकस्य प्रमाणम्, येनानर्थक्यभिया कर्म भिन्द्यात् । तदुक्तम् '**स्वाध्यायग्रहणेनैका स्वशाखा परिगृह्यते । एकार्थानां विकल्पश्च कर्मैकत्वे भविष्यति ॥**' इति । (वा. पृ. ६३५)। ननु सामर्थ्यतः अर्थज्ञानार्थतया प्राप्तं स्वाध्यायमुद्दिश्य अध्ययनसंस्कारविधौ एकत्वमविवक्षितमित्युक्तम् । अतः कथमेकस्मिन् पुरुषे शाखाऽन्तरस्य अप्रामाण्यमित्युच्यते । स्यादेवं यदि अध्ययनविधेः प्राक् स्वाध्यायस्यार्थपरत्वनिश्चयो भवेत्, किन्तु लोकानुसारेण शक्त्यवधारणमात्रम् । अध्ययनविधितस्तु उच्चारणतात्पर्याधीनमर्थपरत्वमिति अर्थवादाधिकरणे एव प्रपञ्चितम् । तेन लोकानुसारेण शक्त्यवधारणे जातेऽपि उच्चारणतात्पर्यमन्तरेण स्वाध्यायस्य अर्थपरत्वानिश्चयान्न सामर्थ्यविनियुक्तस्वाध्यायोद्देशेन अध्ययनसंस्कारविधिः, किन्तु स्वाध्यायकर्मकस्यैव अध्ययनस्यार्थज्ञानं प्रति उपादीयमानत्वात् स्वाध्यायस्यापि उपादेयत्वमिति तद्गतमेकत्वं विवक्षितमेवेति एकैव शाखा एकस्याध्येतुः प्रमाणमिति नाभ्यासात् कर्मभेद इति । वेदान्तरीयशाखाऽध्ययनं तु वचनवशादेव । न चैवं वेदान्तरीयशाखावगताग्निहोत्रादिकर्मणां अभ्यासाद्भेदप्रसङ्गः, समुच्चयापादकवचनवशेन सुतरामभेदावगतेः । तथाहि, कर्मावबोधं प्रति तत्रापि उपादीयमान एव समुच्चीयते इत्येकः कर्मप्रयोगः । तद्गतसाहित्यार्थे त्रिवेदीमेलोद्भवे एकस्मिन्नेव कर्मणि वेदभेदेन समुच्चयावगमात् । एतेन प्रकरणान्तरगुणयोरपि भेदकत्वं प्रत्युक्तमेव । काठकादिसंज्ञा तु न कर्मणः, किन्तु कठेन प्रोक्तमिति प्रवचननिमित्ता हि सा । न च कर्म प्रोच्यते, किं तर्हि ? ग्रन्थ एव । भवतु वा कर्मणः संज्ञा, तथापि उत्पत्तिसंयोगिनी हि संज्ञा भेदिका । तदुक्तम् 'संज्ञा चोत्पत्तिसंयोगात्' इति । न चेयं तथेति न कर्मभेदिका । लिङ्गदर्शनानि तु सूत्रभाष्यवार्तिकानुसारेण कर्मैकत्वाविरोधेन व्याख्येयानि । तदुक्तम् '**तस्मात्तदेवेति मते न कर्म भिन्नं कथञ्चित्प्रतिशाखमिष्टम् । न कारणं सप्तममस्ति चान्यदतो यथोक्तैव तु भेदसिद्धिः ॥**' इति । (वा. पृ. ६४६)। **प्रयोजनम्**—पूर्वपक्षे यथाशाखं व्यवस्थिताङ्गानुष्ठानम् । सिद्धान्ते तु सर्वशाखाविहिताङ्गानुष्ठानमिति । **सूत्रं तु**—एकमेव कर्मफलसंयोगात् द्रव्यदेवतधात्वर्थभावनाविषयविधिसंज्ञानामविशेषात् प्रत्यभिज्ञास्फुटत्वादित्यर्थः । **तौता.**

**नाम–रूप–धर्मविशेष–पुनरुक्ति–निन्दा–अशक्ति-समाप्तिवचन–प्रायश्चित्त–अन्यार्थदर्शनात् शाखाऽन्तरे कर्मभेदः स्यात् । २।४।२।८ ॥**

पूर्वग्रन्थेन शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणान्तराणि षट् कर्मभेदकानि प्रमाणान्युक्तानि । उत्तराधिकरणे तु अन्यान्यपि कानिचित् भेदकारणानि आशङ्क्य निराकरोति । तत्र भेदकारणान्तरबोधकं पूर्वपक्षसूत्रमिदम् ।

**तत्र नामभेदात्** कर्मभेदः । काठकं एकं कालापकं अन्यत् । तस्मात् काठकं कठशाखोक्तमग्निहोत्रं कालापकाग्निहोत्रात् भिन्नं स्यात् । एकत्वे उभयत्र विधानानर्थक्यम् ।

**रूपभेदात्** कर्मभेदः। एकस्यां शाखायां अग्नीषोमीयमेकादशकपालमामनन्ति, अन्यस्यां द्वादशकपालम्। एवं भिन्नरूपत्वात् कर्मणो भेदः।

**धर्मविशेषात्** कर्मभेदः। 'मारुतमसि मरुतामोजः।' इत्यादि कारीरेष्टिमन्त्रब्राह्मणं अधीयानाः तैत्तिरीयाः बोधायनसूत्रानुसारिणः भूमौ भोजनमाचरन्ति, बोधायनीयेभ्योऽन्ये तु तैत्तिरीयाः कारीरेष्टिमधीयाना अपि भूमिभोजनं नाचरन्ति। तस्मादेतादृशात् धर्मविशेषात् धर्मभेदात् कर्मापि भिद्यते।

**पुनरुक्तेः** कर्मभेदः। अग्निहोत्रादि कर्म प्रतिशाखं प्रतिपाद्यते। कर्मैकत्वे तु इयं प्रतिशाखं पुनरुक्तिः नोपपद्येत। तस्मात् पुनरुक्त्या अभ्यासेन कर्मभेदः सिध्यति।

**निन्दया** कर्मभेदः। 'उदिते होतव्यम्' इति प्रस्तुते अनुदितहोमः निन्द्यते 'प्रातःप्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्। दिवाकीर्त्यमदिवा कीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषाम्॥' इति अनुदिते सूर्ये 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा' इत्यभिधानं अनृतं संपद्यते इत्यर्थः। अन्यस्यां तु शाखायां अनुदितहोमप्रस्तावे उदितहोमो निन्द्यते 'यदुदिते सूर्ये प्रातर्जुहुयात्। यथाऽतिथये प्रद्रुताय शून्यायावसथायाहार्यं हरन्ति। तादृगेव तत्'। अस्यायमर्थः– 'अग्निं वाव आदित्यः सायं प्रविशति। उद्यन्तं वाव आदित्यं अग्निरनु समारोहति' इति पूर्वमुक्तम्। अतो यजमानस्य गृहे सूर्यः अग्निं प्रविष्टः रात्रौ वसति। उदयकाले तु अग्निं विहाय गच्छति। ततश्च यथा अतिथये प्रद्रुताय वैमुख्येन गृहात् दूरात् गताय आहार्यमन्नं शून्याय आवसथाय अतिथिरहिते शून्ये गृहे सप्तम्यर्थे चतुर्थी। किंवा अतिथिशून्याय केवलायैव जडाय गृहाय दातव्यम्, तादृक् स उदितहोमः संपद्यते। इति। तस्मात् उभयनिन्दया उदितानुदितहोमौ भिन्नौ भवतः। एवं निन्दया कर्मभेदः।

**अशक्त्या** कर्मभेदः। शतशो वेदशाखासु विहितानां भिन्नभिन्नानामङ्गानामेकस्मिन् कर्मणि उपसंहारे मनुष्यस्य न शक्तिः। कर्मभेदे तु कथंचित् संभवति।

**समाप्तिवचनभेदेन** कर्मभेदः। मैत्रायणीशाखायां अग्निचयनमन्त्रसमाम्नाये अन्वारोहा नाम स्थण्डिलारोहणमन्त्रविशेषा अन्ते पठ्यन्ते। क्वचित् शाखायां तु न ते मन्त्राः सन्ति। तत्र अध्येतारो याज्ञिकाश्च इत्थं व्यपदिशन्ति अन्वारोहेषु मैत्रायणीयानामग्निः समाप्यते, इतरेषां तु अन्यत्र समाप्यते इति। तस्मादपि कर्मभेदः।

**प्रायश्चित्तभेदात्** कर्मभेदः। केचित् उदितहोमव्यतिक्रमे प्रायश्चित्तमामनन्ति 'यस्याग्निहोत्रमहुतं सूर्योऽभ्युदियात्' इत्यादिना। एवं अनुदितहोमेऽपि। व्युद्वत्वे हि प्रायश्चित्तम्। न च कर्मैकत्वे उभयथा व्युद्धिः संभवति। तस्मात् कर्मभेदः।

**अथ अन्यार्थदर्शनं** कर्मभेदकम्। यथा क्वचिच्छाखायां द्वादशाहसत्रे श्रूयते 'यदि पुरा दिदीक्षाणा एतमेव बृहत्सामानमुपेयुः उपेतं ह्येषां रथंतरम्। अथ यदि अदिदीक्षाणा रथंतरसामानमुपेयुः' इति। यदि पुरा पूर्वं दिदीक्षाणाः दीक्षावन्तः कृतप्रथमसोमाः स्युः, तदा एतमेव अतिरात्रं बृहत्सामानं उपेयुः। हि यस्मात् प्रथमसोमे रथंतरमेभिः प्रयुक्तम्। यदि तु अदिदीक्षाणाः अकृतप्रथमसोमाः, तदा रथंतरसामानमुपेयुः। 'न रथंतरसामानमकृत्वा बृहत्सामानमाहरेत्' इति नियमात्। तदिदं अनिष्टप्रथमसोमानामपि द्वादशाहसत्रवचनं प्रतिशाखं कर्मभेदमवगमयति। अथ **द्वितीयमन्यार्थदर्शनम्**। तैत्तिरीयके यूपैकादशिन्यां श्रूयते 'यत् पक्षसंमितां मिनुयात् कनीयांसं यज्ञक्रतुमुपेयात्, पापीयसी अस्यात्मनः प्रजा स्यात्। वेदिसंमितां मिनोति, ज्यायांसमेव यज्ञक्रतुमुपैति, नास्यात्मनः पापीयसी प्रजा भवति' इति। पक्षः अग्निचयनवेदेर्यः पक्षः, तं समशो दशधा विभज्य मध्ये अग्निष्ठं यूपं पार्श्वयोश्च पञ्चपञ्च इति एकादशयूपपङ्क्तिं यदि निखनेत् तथा कनीयांसं अल्पतरं यज्ञक्रतुं प्राप्नुयात्, किञ्च अस्य यजमानस्य आत्मनः सकाशात् पापीयसी दरिद्रतरा प्रजा भवति। तस्मात् वेदिसंमितां अग्निकवेदिपूर्वार्धतिर्यक्प्रमाणं दशधा समं विभज्य पूर्ववत् यूपैकादशिनीं मिनुयात्, तेन यज्ञादेः ज्यायस्त्वसिद्धिः। सेयं पक्षसंमितायाः निन्दा, वेदिसंमितायाश्च स्तुतिः शाखान्तरे कर्मभेदं गमयति। अथ **तृतीयमन्यार्थदर्शनम्**–ज्योति-

ष्टोमातिरात्रे 'द्वे संस्तुतानां विराजोऽतिरिच्येते' इति, शाखान्तरे तु 'तिस्रः संस्तुतानां विराजोऽतिरिच्यन्ते' इति श्रूयन्ते। संस्तुताः स्तोत्रियाः। विराट् इति एकमनेकं वा दशकं गृह्यते। सोऽयं द्वयोस्तिसृणां वा अतिरेकः शाखान्तरेषु कर्मभेदे एकः संभवति इति। अथ **चतुर्थम**न्यार्थदर्शनम्— सारस्वते सत्रे श्रूयते 'ये पुरोडाशिनः ते उपवसन्ति, ये सांनाय्यिनस्ते वत्सान् धारयन्ति' इति। ये यजमानाः पुरोडाशिनः अनिष्टप्रथमसोमतया केवलैन्द्राग्नपुरोडाशद्रव्यकदर्शेष्टिमन्तः। ये तु सांनाय्यिनः इष्टप्रथमसोमाः, ते वत्सान् धारयन्ति मातृसकाशं न गमयन्ति दोहाय। तदिदं अनिष्टप्रथमसोमानामपि सारस्वतसत्रदर्शनं कर्मभेदमवगमयति। अथ **पञ्चमम्**— उपहव्ये नाम सोमे 'अग्निष्टोमो रथंतरसामा, अश्वः श्यावो दक्षिणा' इत्येकस्यां शाखायां श्रुतम्, शाखान्तरे तु 'उपहव्य उक्थ्यो बृहत्सामा, अश्वः श्वेतो दक्षिणा' इति श्रुतम्। तच्च शाखाभेदेन कर्मभेदे एवोपपद्यते, न कर्मैक्ये। तदेवं नामादिभिः कारणैः शाखाऽन्तरे भिन्नासु शाखासु उक्तानां कर्मणां भेदः स्यात्।

**एकं वा संयोगरूपचोदनाऽऽख्याऽविशेषात्। ९ ॥**

नामरूपधर्मविशेषादिभिः अग्निहोत्रादिकर्मणां भेदः इति पूर्वपक्षं वाशब्दो व्यावर्तयति। नामादिभेदेन शाखाऽन्तरेषु न कर्मभेदः। किन्तु सर्वशाखाप्रत्ययं सर्वब्राह्मणप्रत्ययं च एकं कर्म संयोगस्य रूपस्य चोदनायाः आख्यायाश्च अविशेषात् अभेदात्। तत्र संयोगः प्रयोजनस्य। एकस्यां शाखायां अग्निहोत्रस्य कर्मणो यत् फलं स्वर्गः, तदेव अन्यस्यामपि शाखायामुद्दिष्टम्। एवमेकफलकत्वात् सर्वासु शाखासु एकमेवाग्निहोत्रं कर्मेति ज्ञायते। एवं सोमरसेन्द्रवाय्वादिद्रव्यदेवतात्मकस्य कर्मरूपस्य अभेदो भवति शाखाभेदेऽपि। एवं यजेत इति धात्वर्थानुरक्तभावनात्मिकायाः चोदनायाः सर्वशाखासु अविशेषः। ज्योतिष्टोमादिसमाख्यायाश्च शाखाभेदेऽपि न विशेषः। तस्मात् शाखाभेदेऽपि संयोगरूपचोदनाख्यानां भेदाभावात् शाखाभेदेऽपि अग्निहोत्रस्य कर्मणो न भेदः। एवं ज्योतिष्टोमादेरपि अभेदो ज्ञेयः। तथा च सर्वशाखाप्रत्ययमेकं कर्म।

**न नाम्ना स्यादचोदनाऽभिधानत्वात्। १० ॥**

यदुक्तं पूर्वपक्षिणा काठककालापकादिनामभेदात् कर्मभेद इति तत्राह सिद्धान्ती। भिन्नेनापि ईदृशेन नाम्ना न कर्मभेदः स्यात्। अचोदनाऽभिधानत्वात्, चोदना कर्मोत्पत्तिवाक्यम्। तद्गतमभिधानं नामधेयं चोदनाभिधानम्। तादृशत्वाभावात् काठकादिनाम्नः। उत्पत्तिवाक्यगता संज्ञा कर्म भिनत्ति। काठकादिसंज्ञा तु नोत्पत्तिवाक्यगता। अतो न सा कर्म भेत्तुं शक्नोति। तथा च काठकादिनाम्ना न कर्मभेदः।

**सर्वेषां चैककर्म्यं स्यात्। ११ ॥**

काठकादिनाम्ना न कर्मभेद इत्यत्रैव हेत्वन्तरमाह। यदि शब्दभेदात् भेदो भवेत्, तर्हि शब्दैक्यात् कर्मैक्यं स्यात्। तथा च काठकशब्दैक्यात् काठकोक्तानां सर्वेषां अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमानां कर्मणां ऐककर्म्यं स्यात्। तच्चानिष्टम्।

**कृतकं चाभिधानम्। १२ ॥**

काठकादिनामभेदात् न कर्मभेदः इत्यत्रैव हेत्वन्तरमाह सिद्धान्ती। काठकादि अभिधानं कृतकं इदानीन्तनम्। यतःप्रभृति कठस्य प्रकृष्टं वचनं ततःप्रभृति काठकं इति नाम प्रवृत्तम्। न च कृतकेन अनादीनां कर्मणां भेदः कर्तुं शक्यते। तस्मात् न नाम्ना भेदः।

**एकत्वेऽपि परम्। १३ ॥**

रूपभेदात् कर्मभेदः इति यदुक्तं तत्रोत्तरमाह सिद्धान्ती। एकत्वेऽपि कर्मैकत्वे सत्यपि परमुत्तरं कर्मभेदकारणत्वेन पूर्वपक्षिणा उक्तं संभवति। कर्मैकत्वेऽपि वचनात् व्रीहियववत् विकल्पेन अग्नीषोमीयस्य पुरोडाशस्य एकादशकपालत्वद्वादशकपालत्वयोरुपपत्तिः। तस्मात् न रूपभेदादपि कर्मभेदः।

**विद्यायां धर्मशास्त्रम्। १४ ॥**

भूमिभोजनादिधर्मविशेषात् कर्मभेद इति यदुक्तं पूर्वपक्षिणा तत्रोत्तरमाह सिद्धान्ती। धर्मशास्त्रं कारीरीवाक्याध्ययनकाले भूमिभोजनादिव्रतोपदेशकं विद्यायाम्,

न कर्मणि । अध्ययनधर्मः एषः न कर्मधर्मः । अतो न तेन कर्मभेदः सेद्धुमर्हति ।

आग्नेयवत् पुनर्वचनम् । १५ ॥

पुनरुक्त्या कर्मभेदः इति यदुक्तं तत्रोत्तरमाह सिद्धान्ती । पुनर्वचनं शाखाऽन्तरे विहितस्य साङ्गस्य ज्योतिष्टोमादेः कर्मणः अन्यस्यां शाखायां पुनरुक्तिः विद्यमानापि आग्नेयवत् न कर्मभेदिका । 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इति पुनर्वचनं ऐन्द्राग्नस्तुत्यर्थत्वात् यथा न कर्मभेदस्य कारणं तद्वत् ।

अद्विर्वचनं वा श्रुतिसंयोगाविशेषात् ।१६॥

पुनरुक्त्या कर्मभेदः इति यदुक्तं पूर्वपक्षिणा तत्र भङ्ग्यन्तरेणोत्तरमाह सिद्धान्ती । वाशब्दः प्रकारान्तरार्थः । अद्विर्वचनं नैव तत् द्विर्वचनम् । नैव सा पुनरुक्तिः । एकं पुरुषं प्रति पुनःपुनः कथने स्यात् पुनरुक्तिः । भिन्नं पुरुषं प्रति पुनर्वचने तु नैव सा पुनरुक्तिर्नाम । श्रुतिसंयोगाविशेषात् भिन्नैः पुरुषैः सह तत्तच्छाखायाः संयोगात् । श्रुतिसंयोगस्य भिन्नैः पुरुषैः सह तत्तच्छाखायाः संयोगस्य विशेषत्वात् । तस्मात् तत्तच्छाखासु अग्निहोत्रादिकर्मणः भिन्नं पुरुषं प्रति उक्तिः न द्विर्वचनं न द्विरुक्तिः न पुनरुक्तिः । तस्मात् तादृश्या पुनरुक्त्या न कर्मभेदः ।

वाक्यासमवायात् । १७ ॥

अत्र वार्तिकम् "अत्रान्तरे भाष्यकारस्य सूत्रं भ्रष्टम् 'वाक्यासमवायात्' इति । तदेवं व्याख्येयम्, 'नैकस्मिन् पुरुषे शाखान्तरवाक्यं समवैति' इति"। तथा च वाक्यस्य शाखाऽन्तरवाक्यस्य एकस्मिन् पुरुषे असमवायात् संबन्धाभावान्न पौनरुक्त्यम् । तस्मात् पौनरुक्त्याभावादेव पूर्वपक्षिणा यदुक्तं पुनरुक्त्या कर्मभेद इति तत् मूलत एव निरस्तम् ।

अर्थासंनिधेश्च । १८ ॥

अर्थ्यते प्रधानेन इति अर्थः अङ्गकाण्डम् । तस्य सर्वस्य अङ्गकाण्डस्य एकस्यां शाखायामसंनिधेः संनिधेरभावात् एकैकस्यां शाखायां केषांचिदेव अङ्गानां विधानात् सर्वासु शाखासु मिलित्वा एकैकं कर्म उच्यते इति सर्वशाखाप्रत्ययमेकं कर्म । इति सिद्धान्ते हेत्वन्तरपरं सूत्रम् । 'अथवा पौनरुक्त्यपरिहारार्थमेव सूत्रम् । तत्र नाम पुनरुक्तता भवति, यत्र पूर्वोक्तोऽर्थः तस्यैव पुंसः संनिहितो भवति । न तु इह शाखाऽन्तरगतस्य संनिधानं इत्यपुनरुक्तता' इति वार्तिकम् ।

न चैकं प्रति शिष्यते । १९ ॥

चशब्दः समुच्चये । शाखाभेदेषु एकस्यापि कर्मणः पुनःपुनरुक्तेः कर्मभेदः इति यदुक्तं पूर्वपक्षिणा तत् निरस्यति विधान्तरेण सिद्धान्ती । अग्निहोत्रादि कर्म प्रतिशाखं नैकमेव पुरुषं प्रति शिष्यते विधीयते । किन्तु अर्थिमात्रं प्रति सर्वशाखासु विधीयमानं एकमेकं पुरुषमुपतिष्ठते । तत्र एकस्य अनेकशाखाश्रवणात् पुनर्वचनतः प्रतिशाखं कर्मभेदे एकार्थत्वात् समुच्चयानुपपत्तौ विकल्पः स्यात् । ततो वरं प्रत्यभिज्ञया कर्मैक्ये सति शाखानामेव पुरुषव्यवस्थया तदाश्रयणं इति एकस्य अनेकशाखाऽध्ययनासंभवात् न पुनरुक्तिः ।

समाप्तिवच्च संप्रेक्षा । २० ॥

कर्मभेदहेतुं समाप्तिवचननिरासार्थमेव सूत्रम् । नहि प्रतिशाखं साङ्गोपाङ्गमेकैकं कर्म पठितम् । क्वचित् कानिचिदङ्गानि अन्यत्र ततो न्यूनानि वा अधिकानि वा पठ्यन्ते । तत्र यत्र यावत् पठितम्, तत्रैव तच्छाखायां तत् कर्म समापितम् । संप्रेक्षा उत्प्रेक्षा व्यपदेशोऽपि 'अत्रास्माकं कर्म समाप्यते' इत्येवंरूपः तत्र भवति । न च तावता तावदेव तत् कर्म इति निश्चेतव्यम् । ऐतरेयके हि द्वादशाहगतानि होतुरेव शस्त्राण्युक्तानि न मैत्रावरुणादीनाम् । न च तावता मैत्रावरुणादीनां शस्त्राणि नैव सन्तीति वक्तुं युक्तम् । तथाच यथा समाप्तिः अनियता तथा संप्रेक्षाऽपि अनियतैवेति क्रमप्राप्तम् । सर्वथाऽपि समाप्तिवत् संप्रेक्षाऽपि न कर्मभेदिकेति निश्चेतुं शक्यते। अत्र वार्तिकम्– असमाप्तिवत् इति वा च्छेदः । (न चैकं प्रति शिष्यते समाप्तिवत् इति सूत्रसंहितायां अकारप्रश्लेषेणापि विच्छेदसंभवः । इति सुधा. ) ।

एकत्वेऽपि पराणि निन्दाऽशक्तिसमाप्तिवचनानि । २१ ॥

पूर्वपक्षिणा कर्मभेदकानि यानि उक्तानि तत्र निन्दाऽऽदित्रयं कर्मभेदाभेदयोः समानत्वात् नाहत्य भेदसाधक-

मित्याह सिद्धान्ती । पराणि पुनरुक्तेः परस्तात् पठितानि निन्दा च अशक्तिश्च समाप्तिवचनं चेति त्रीणि कर्मणामेकत्वेऽपि उपपन्नानि इति न भेदसाधकानि । तथाहि, नहि निन्दा निन्द्यं निन्दितुं प्रयुज्यते किं तर्हि निन्दितादितरत् प्रशंसितुम् । तत्र न निन्दितस्य प्रतिषेधो गम्यते किन्तु इतरस्य विधिः । तत्र एकस्मिन् अग्निहोत्रहोमे प्रातःकालीने द्वौ कालौ विहितौ सूर्योदयात् प्राक् पश्चाच्चेति । तौ विकल्प्येते । अतो न कश्चित् विरोधः । **तथा** एकस्मिन्नपि वेदे असमर्थानां विहितं कृत्स्नमङ्गजातं उपसंहर्तुं अशक्तिः । समर्थानां तु सर्वशाखाभ्योऽपि आगमितमधिकं विधिं उपसंहर्तुं शक्तिरस्तीति । तेन एककर्मत्वेऽपि न विरुद्धमिति । **तथा** एकस्मिन्नपि कर्मणि किञ्चिद्वस्तु समाप्तमिति कृत्वा समाप्तिशब्दः प्रयुज्यते । यथा आध्वर्यवे समाप्ते हौत्रे वा 'संतिष्ठते अग्निष्टोमः' इति भवति । न च तावता सर्वोऽग्निष्टोमः समाप्तो भवति ।

**प्रायश्चित्तं निमित्तेन । २२ ॥**

निमित्तेन उदितानुदितकालातिक्रमेण यत् प्रायश्चित्तमुक्तं तेन कर्मभेदः सिध्यतीति यदुक्तं तस्य कः परिहार इति । आभाषान्तं सूत्रम् । अथवा निमित्तेन निमित्तविशेषेण प्रायश्चित्तं भविष्यति । न च तावता कर्मभेदसिद्धिः, कर्मैक्येऽपि संभवात् । इति सामान्यपरिहारसूत्रमिदम् ।

**प्रक्रमाद्वा नियोगेन । २३ ॥**

पूर्वपक्षोक्तकर्मभेदसाधकप्रायश्चित्तहेतोः विशेषरूपेण निरासमाह सिद्धान्ती । वाशब्दः उक्तसामान्यपरिहारवैलक्षण्यार्थः । नियोगेन वैकल्पिकानां पदार्थानां प्रयोगादौ एकतरनिर्धारणेनैव प्रयोगस्य प्रक्रमात् उपक्रमात् उदिते होष्यामीति निर्धार्य प्रक्रान्ते प्रातरग्निहोत्रहोमे उदयात् प्रागेवानुष्ठिते सति दोषः । एवं अनुदिते होष्यामीति प्रक्रम्य उदितहोमप्रयोगेऽपि । अत्र उभयथाऽपि प्रायश्चित्तविधानं कर्मैकत्वेऽपि उपपद्यते । तस्मात् प्रायश्चित्तविधानात् न कर्मभेदः ।

**समाप्तिः पूर्ववत्त्वात् यथाज्ञाते प्रतीयेत । २४॥**

'एकत्वेऽपि पराणि०' इति सूत्रे (२१) पराणि इति सामान्यतः परिहार्यत्वेन उपक्षिप्तानि । सिंहावलोकितन्यायेन पुनः समाप्तिं उपपादयति । समाप्तिः मैत्रायणीयानां अन्वारोहेषु अग्निसमाप्तिवचनम्, यथाज्ञाते यावत् पदार्थजातं तच्छाखायामाम्नातम्, तद्विषयतया प्रतीयते । पूर्ववत्त्वात् शब्दप्रयोगस्य तात्पर्यपूर्वकत्वात् । तात्पर्यं चात्र तच्छाखाविहितपदार्थजातसमाप्तिपरत्वम् । इति कर्मैकत्वेऽपि न विरोधः । 'समाप्तिवच्च संप्रेक्षा' ( २० ) इत्यत्र कर्मैकत्वे लिङ्गमुपपादितम्, इह तु कर्मैकत्वे विरोधः परिहृतः इत्यपौनरुक्त्यम् ।

**लिङ्गमविशिष्टं सर्वशेषत्वान्नहि तत्र कर्मचोदना, तस्माद् द्वादशाहस्याहारव्यपदेशः स्यात् । २५ ॥**

पूर्वपक्षोक्तं प्रथमं लिङ्गदर्शनं निराचष्टे । यत् लिङ्गमुक्तं अनिष्टप्रथमसोमानामपि द्वादशाहसत्रवचनमिति, तत् अविशिष्टं ममेव तवापि अनुपपन्नम् । कुतः ? सर्वशेषत्वात् ताण्डके सर्वशाखागतज्योतिष्टोमानुवादेन प्राथम्यविधानात् । नहि तत्र ताण्डके अपरस्यापि ज्योतिष्टोमस्य चोदना उत्पत्तिरस्ति, येन तत्रत्यज्योतिष्टोममात्रविषयं प्राथम्यविषयं स्यात् । तस्मात् कर्मभेदपक्षेऽपि अनिष्टप्रथमसोमानां द्वादशाहे दर्शनस्य विरोधात् तत्परिहारार्थम् 'यदि पुरा द्वादशाहेन दिदीक्षाणाः, यदि पुरा द्वादशाहेन अदिदीक्षाणाः' इति चाध्याहारेण द्वादशाहस्य पक्षद्वयेऽपि आहारस्य अनुष्ठानस्य व्यपदेशः स्यात् ।

**द्रव्ये चाचोदितत्वाद् विधीनामव्यवस्था स्यात्, निर्देशाद् व्यवतिष्ठेत, तस्मान्नित्यानुवादः स्यात् । २६ ॥**

द्वितीयं लिङ्गदर्शनं निराह । द्रव्ये चयनाग्निरूपे वेदिसंमितत्वस्य अचोदितत्वात् चोदनाया अभावात् पक्षसंमितत्वस्य विधेः आर्थिकत्वेन, वेदिसंमितत्वस्य विधेः स्तुतिकल्पनया कल्पितस्य, रथाक्षान्तरालत्वस्य विधेश्च श्रौतत्वेन अव्यवस्था विधीनां स्यात् संभाव्येत । संभावनायां लिङ् । ननु रथाक्षान्तरालवाक्यस्य तर्हि कावकाशः ? तत्राह— निर्देशात् अनग्निचित्ये सर्वस्तोमादिक्रतौ यूपैकादशिन्याः निर्देशात् तत्र व्यवतिष्ठेत । तत्र तद्वाक्यस्य साकल्यम् । तस्मात् वेदिसंमितत्वरथाक्षान्तरालत्वयोर्विहितत्वात् पक्षसंमितायाः नित्यानुवादः स्यात् 'नान्तरिक्षे न दिवि' इतिवत् ।

**विहितप्रतिषेधात् पक्षेऽतिरेकः स्यात् । २७ ॥**

द्वित्रस्तोत्रियातिरेकरूपं तृतीयं लिङ्गदर्शनं निराचष्टे । अतिरात्रे विहितस्य षोडशिग्रहस्य पुनः प्रतिषेधात् पक्षे ग्रहणपक्षे तिसृणाम् अग्रहणपक्षे च द्वयोः अतिरेकः स्यात् । तथा च अतिरात्रकर्मणः अभेदेऽपि अतिरेकभेदः संभवति । तथाहि, षोडशिग्रहणपक्षे, बहिष्पमाने नव स्तोत्रिया ऋचः, चतुर्षु आज्यस्तोत्रेषु माध्यंदिने पवमाने च पञ्चदशस्तोमकत्वात् मिलित्वा पञ्चसप्ततिः, पृष्ठस्तोत्रेषु चतुर्षु, आर्भवे च पवमाने सप्तदशस्तोमकत्वात् पञ्चाशीतिः, अग्निष्टोमस्तोत्रे त्रिषु उक्थ्यपर्यायेषु षोडशिनि च एकविंशस्तोमकत्वात् पञ्चोत्तरं शतम्, अतिरात्रस्तोत्रेषु द्वादशसु पञ्चदशस्तोमकत्वात् अशीत्युत्तरं शतम्, रथंतरे नव । तत्र सर्वेषां मेलने ( ९+७५ +८५+१०५+१८०+९=४६३ ) त्रिषष्ट्युत्तरशतचतुष्टयोपजननात् दशकेन भागे दत्ते तिस्रः अवशिष्यन्ते । षोडशिग्रहणाभावपक्षे तु एकस्याः षोडशिग्रहार्थायाः एकविंशतेः अगणने द्विचत्वारिंशदुत्तरचतुःशतोपजननात् दशकेन भागदाने द्वे अवशिष्येते इति ।

**सारस्वते विप्रतिषेधात् यदेति स्यात् । २८ ॥**

अनिष्टप्रथमसोमानामपि सारस्वतसत्रदर्शनं इति चतुर्थमन्यार्थदर्शनं उच्छिनत्ति । सारस्वते सत्रे मित्रावरुणयोरयनाख्ये विप्रतिषेधात्, सर्वेषामेव ज्योतिष्टोमविकाराणां क्रतूनां अग्निष्टोमपूर्वकत्वेन ‘ये पुरोडाशिनः’ इति पुरोडाशदर्शनविरोधस्य कर्मभेदवादिमतेऽपि दुर्वारत्वात् सर्वैरेव तद्विरोधवारणाय ‘यदा’ इति पदं अध्याहर्तव्यं स्यात् । यदा पौर्णमास्यां पुरोडाशिनः, यदा अमावास्यायां सांनाय्यिनः इत्यर्थो वक्तव्यः । तथा च नेदमन्यार्थदर्शनं कर्मभेदसाधकम् ।

**उपहव्ये प्रतिप्रसवः । २९ ॥**

पञ्चममन्यार्थदर्शनं निरासाय सूत्रकारोऽनुवदति । प्रतिप्रसवः अप्रतिप्रसवः इति उभयथा छेदः । वार्तिकेन नञ्सहितः पाठः सूचितः इति सुधा. । प्रतिप्रसवः पुनर्विधानम् । उपहव्ये रथंतरबृहत्साम्नोः शाखाद्वयविहितयोः प्रकृतितः प्राप्तत्वात् कर्मभेदे तत्तच्छाखास्थोपहव्ये व्यवस्थया तत्तत्सिद्ध्यर्थं प्रतिप्रसवः पुनर्विधानं इति पूर्वपक्षी ब्रूते । अप्रतिप्रसवः प्रतिप्रसवाभावः पुनर्विधानानर्थक्यं इति सिद्धान्ती ब्रूते ।

**गुणार्था वा पुनःश्रुतिः । ३० ॥**

एवमाभाष्य उत्तरमाह । वाशब्दः शङ्कानिवृत्त्यर्थः । पुनःश्रुतिर्गुणार्था स्यात् । यदा रथंतरसामा तदा अश्वः श्यावो दक्षिणा, यदा बृहत्सामा तदा अश्वः श्वेतो रुक्मललाटः इति दक्षिणाविशेषरूपगुणार्था गुणविधानार्था पुनःश्रुतिः इति ।

**प्रत्ययं चापि दर्शयति । ३१ ॥**

सर्वशाखाप्रत्ययमेकं कर्म इत्यत्र प्रमाणमाह । चापि अपिच इति निपातसमुदायः पूर्वोक्तैः प्रमाणैः समुच्चयार्थः । सर्वास्वपि शाखासु एकस्यैव कर्मणः प्रत्ययं विधानं दर्शयति वेदः । मैत्रायणीयानां समिदादयः प्रयाजा न समाम्नायन्ते गुणास्तु श्रूयन्ते ‘ऋतवो वै प्रयाजाः समानीय होतव्याः’ इति । तथा येषां शाखिनां ‘कुटरुरसि’ इति अश्मादानमन्त्रो नाम्नातः तेषामपि ‘कुक्कुटोऽसि इत्यश्मानमादत्ते, कुटरुरसि इति वा’ इति । तस्मादेकं कर्म इति प्रतीमः ।

**अपिवा क्रमसंयोगाद् विधिपृथक्त्वमेकस्यां व्यवतिष्ठेत । ३२ ॥**

अपिवाशब्दः प्रत्यवस्थानार्थः । शाखान्तरेषु कर्मभेद एक इति पूर्वपक्षी प्रतिपादयति । न प्रतिशाखं एकमेव कर्म । विधिशब्दः कर्मव्युत्पत्त्या विधेयपरः, एकस्यां इति पदे च वीप्सा विवक्षिता । एकैकस्यां शाखायां सर्वासु शाखासु इत्यर्थः । कर्मणां क्रमेण संयोगात् संबन्धात् विधिपृथक्त्वं विधेयपृथक्त्वं कर्मपृथक्त्वं व्यवतिष्ठेत । सर्वाङ्गोपसंहारे क्रियमाणे तु क्रमकालपरिमाणभेदापत्तिः । भेदे तु स्वशाखाविहितानामेव अङ्गानां पाठादिबोधितः क्रमः पूर्वाह्णादिकालः अङ्गपरिमाणं चानुगृहीतं भवति ।

**विरोधिनां त्वसंयोगादैककर्म्ये तत्संयोगाद् विधीनां सर्वकर्मप्रत्ययः स्यात् । ३३ ॥**

तुशब्दः पूर्वपक्षं व्यावर्तयति । ऐककर्म्ये सर्वशाखासु एककर्मत्वे सति विधीनां सर्वशाखास्थानां विधिपदोक्तानां विधेयानामङ्गानां तत्संयोगात् तेन एकेन कर्मणा संयोगावगतेः विरोधिनां पूर्वपक्षोक्तानां क्रमकालपरिमाणानां

असंयोगात् संयोगाभावात् सर्वप्रत्ययः सर्वशाखास्थानामङ्गानां एककर्माङ्गत्वप्रत्ययः स्यात् । तस्मात् सिद्धः शाखाऽन्तरे उत्पत्तिप्रयोगभेदवत् विनियोगभेदोऽपि । ततश्च सर्वशाखाप्रत्ययमेकं कर्म इति सिद्धान्तः । के.

* **नामलक्षणम्** 'येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि' ( सूत्रम् ) । येषां शब्दानां उत्पत्तौ उच्चारणोत्पत्तौ स्वे अर्थे प्रयुज्यमानानाम् ( न तु लाक्षणिकादीनाम् ) रूपमुपलभ्यते, यत् सकृदुत्पन्नं कालान्तरं तिष्ठति, न क्रियेव उत्पन्नमात्रं विनश्यति, तानि नामानि द्रव्यगुणशब्दाः । ... ते द्रव्यगुणशब्दा इति वक्तव्ये तानि नामानीति सूत्रितं अतो नामानीत्येषां पर्यायशब्दः । भा. २।१।१।३.

* **नामशब्दः** ईषदर्थे । सु. पृ. १३५. * **नामशब्दाः** धातवश्च बहवः प्रतिदेशं अर्थभेदेषु व्यवस्थिता दृश्यन्ते । तथा चोक्तम् 'शवतिर्गतिकर्मा कम्बोजेष्वेव दृष्टः, विकारापन्नं आर्याः प्रयुञ्जते 'शवम्' इति मृतशरीराभिधानम्, इत्यादि' । वा. १।३।४।९ पृ. २१७.

* **नामसंबन्धः** पदत्रयाद्विना नावकल्पते । वा. ३।१।७।१४ पृ. ७१०.

* **नामिनाम्नोः** संबन्धः औत्पत्तिक इत्युक्तम् । भा. ६।८।१०।४१.

* **नामिक्यः विभक्तयः** वृक्षः वृक्षौ वृक्षाः, शुक्लः शुक्लौ शुक्लाः इत्येवमादयः । भा. २।१।१।३.

* **नामधेयं** अग्निहोत्रशब्दः ( १।४।३ ) पुनरुच्चार्यमाणो धर्मातिदेशकः कुण्डपायिनामयने । वा. ७।३।१।१, * नामधेयं अप्रसिद्धार्थे आख्यातवशं भवेत् । शा. ४।४।११. * नामधेयं अर्थवादस्थं न धर्मातिदेशकं इत्यष्टमे वक्ष्यामः । रत्न. ५।३।९।२१–२५. * नामधेयं 'आज्यम्' इति स्तोत्रविशेषस्य । के. १।४।२।३. * नामधेयं आदितस्तावत् आख्यातपरतन्त्रत्वात् नैव भेदाभेदयोर्न्याप्रियते । के. * नामधेयं कश्चिद् वेदभागः उद्भिद् बलभिद् इत्यादिः । के. * नामधेयं गोशब्दः यागस्य 'गवाभिचर्यमाणो यजेत' । वि. १।४।५. * नामधेयं ग्रहविशेषयोः अदाभ्यांशुशब्दौ । के. २।३।९।२०. * नामधेयं चित्रापदं यागविशेषस्य 'चित्रया यजेत पशुकामः' इति । वि. १।४।३. * नामधेयं चोदकात् बलीयः । कुतः ? प्रत्यक्षत्वात् । प्रत्यक्षं नामधेयम्, चोदकं तु आनुमानिकम् । भा. ७।४।३।१५ । नामधेयं श्रूयमाणं लक्षणया शक्नोति इतिकर्तव्यतामवगमयितुमात्मीयाम् । चोदकस्तु उपमितलक्षितप्रापणेन अवगमयति । टुप्. * नामधेयं दर्विहोमशब्दः कर्मणः, न गुणविधिः । भा. ८।४।१।१,५–९, * नामधेयं दर्विहोमशब्दः जुहोतिचोदनानाम्, न तु यजतिचोदनानाम् । ८।४।३।४, * नामधेयं दर्विहोमशब्दः स्मार्तानां स्थालीपाकादीनां वैदिकस्य च वास्तुहोमादेः । ८।४।२।२–३. * नामधेयं धर्मे प्रमाणम् । मणि. पृ. १३. * नामधेयं न 'आग्नेयोऽष्टाकपालः' इति आग्नेयादिशब्दाः, किंतु गुणविधयः । वि. १।४।७. * नामधेयं निरूढानिरूढत्वेन द्विविधम् । सु. पृ. ४३०. * नामधेयं बहिष्पवमानशब्दः स्तोत्रविशेषस्य । वि. १।४।३. * नामधेयं ( तत् ) यच्च यजमानतत्पुत्रादीनां नामग्रहणम्, यथा सुब्रह्मण्यायां 'देवदत्तो यजते' इत्यादि । स न मन्त्रः । वा. २।१।९।३४ पृ. ४३७. * नामधेयं यागस्य उद्भिदादिशब्दाः उद्भिद् बलभिद् विश्वजित् इति । वि. १।४।२. * नामधेयं यागपरिच्छेदकतया धर्मे प्रमाणम् । के. १।४।१. * नामधेयं यागविशेषस्य आघारशब्दः 'आघारमाघारयति' । भा. १।४।४।४. * नामधेयं यागविशेषस्य श्येनशब्दः । वि. १।४।५. * नामधेयं लक्षणया धर्माणां ग्राहकमुक्तम् । भा. ७।३।२।५, * नामधेयं वाजपेयशब्दः यागविशेषस्य । वाजपेयाधिकरणम् । १।४।५।६–८. * नामधेयं वैश्वदेवशब्दः चातुर्मास्यप्रथमपर्वणः । वि. १।४।११, * नामधेयं संदंशशब्दः यागविशेषस्य 'संदंशेनाभिचरन् यजेत' । १।४।५. * नामधेयं समित् तनूनपात् इत्यादयः शब्दाः । 'समिदादिशब्दकत्वात्तु यजीनां समिदादिशब्दाः वाचकाः ( यागविशेषाणाम् ) उपपद्यन्ते' । भा. ९।२।२०।६०. * नामधेयं स्तोत्रविशेषस्य पृष्ठशब्दः । वि. १।४।३.

* **नामधेयस्यापि** वेदत्वेन अंशत्रयान्तःपातावसायात् । ( विधिः अर्थवादः मन्त्रः इत्यंशत्रयम् । तत्र कर्मपरिच्छेदकतया विधौ अन्तर्भावः ) । सु. ३९४, * नामधेयस्य गुण-

फलोपबन्धोपयोगित्वेन अर्थवत्त्वं भविष्यति (इति चेन्न), विधित एव यागविशेषावधारणसिद्धेः गुणफलोपबन्धोऽपि सेत्स्यति इति। पृ. ३९४. * नामधेयस्य विध्यंशे करणे अन्तर्भावः। वि. १।४।१. * **नामधेयानां** कर्मभेदो गुणफलोपबन्धः संकल्पलाघवं च प्रयोजनम्। **मणि.** पृ. ५. * नामधेयानां विधेयार्थपरिच्छेदकतया अर्थवत्त्वम्। **मीन्या.**

**नामधेये गुणश्रुतेः स्याद्विधानमिति चेत्। १।४।६।६॥**

अस्ति वाजपेयो 'वाजपेयेन स्वाराज्यकामो यजेत' इति। तत्र गुणविधिः कर्मनामधेयमिति संदेहः। उद्भिदधिकरणे यौगिकशब्दानां मत्वर्थलक्षणादोषेण, चित्राऽधिकरणे च सांविज्ञायिकशब्दानां वाक्यभेददोषेण नामधेयत्वे व्युत्पादिते यौगिकसांविज्ञायिकशब्दयोरेव उदाहरणविशेषेषु अपवादमाशङ्क्य तत्प्रख्यतद्व्यपदेशाभ्यां तन्निराकरणे कृते, इदानीं उद्भिदधिकरणचित्राधिकरणसिद्धान्तहेत्वाक्षेपेण पुनः प्रत्यवतिष्ठते। अत्रायं पूर्वपक्षिणोऽभिसंधिः। सामानाधिकरण्येन हि गुणविधाने मत्वर्थलक्षणादोषो भवति, न तु वैयधिकरण्येन। तेनेह 'वाजपेयेन स्वाराज्यकामो यजेत' इति तन्त्रोच्चारितोऽयं यजिः 'यागेन स्वाराज्यं वाजपेयेन तु यागम्' इत्येवं संपत्स्यते, मत्वर्थलक्षणा च न भविष्यति। तदुक्तम् '**करणेषूपदिष्टेषु याऽर्थात् साध्यत्वकल्पना। तस्यां गुणविधानेन नास्ति मत्वर्थलक्षणा॥**' इति। (वा. पृ. ३३७)। न च एवं सति विरुद्धत्रिकद्वयापत्तिलक्षणो वाक्यभेदोऽपि। यतो गुणत्वेन प्रधानत्वेन वा एकपदोपात्तस्य पुनरुपादाने पदावृत्तिलक्षणो वाक्यभेदो भवति। इह तु गुणप्रधानसाधारणरूपेण तन्त्रोच्चारितस्यैव उभयरूपप्राप्तेः न पदावृत्तिलक्षणो वाक्यभेदः। एवम् 'पञ्चदशान्याज्यानि' इत्यत्रापि तन्त्रोच्चारिताज्यपदोपनीतस्याज्यस्य स्तोत्रपञ्चदशसंख्याऽन्वयसहिष्णुत्वात् कुतो वाक्यभेदः?। एवं च सति उद्भिदधिकरणचित्राधिकरणोक्तमत्वर्थलक्षणावाक्यभेदयोरसंभवात् प्रसिद्धिबलवत्त्वेन प्रयोजनवत्तया च प्रवृत्तिविशेषकरत्वेन च गुणविधित्वमेव युक्तम्। तदुक्तम् 'करणेषूपदिष्टेषु' इति। **ननु** एवं सति उद्भिदादिवाक्यान्येव उदाहृत्य विचारयितुमुचितम्, वाजपेयोदाहरणं कुतः? **सत्यम्**। तान्यप्यत्रोदाहरणान्येव। किन्तु **वाजपेयवाक्यमपि** परिशोधितं भवति इत्येतदर्थमुदाहृतम्। **तेन नामधेयत्वेन** सिद्धान्त्यभिमतेषु पदेषु अवश्यं कस्यचिदुद्भिदादिषु वाजपेयलक्षणस्य गुणस्य श्रुतस्य अस्मदुक्तन्यायेन विधानमेव। **इत्येवं प्राप्ते, अभिधीयते।**

**ऐकशब्द्ये परार्थवत्। ८॥**

अयमभिप्रायः। भवेदेवं यदि अत्रापि यजिपदावृत्तिलक्षणो वाक्यभेदो न भवेत्। तथाहि, 'वाजपेयेन स्वाराज्यकामो यजेत' इत्यत्र यद्यपि यजिना गुणप्रधानसाधारणो यागरूपोऽर्थोऽभिहितः, तथापि न तद्रूपं वाक्यार्थान्वययोग्यम्। तेन वाक्यार्थान्वययोग्यं यद्रूपमस्य तत्परत्वमेव यज्युच्चारणस्य वक्तव्यम्। तच्च रूपं फलसंबन्धाय साधनत्वेन गुणरूपं तावदवश्याभ्युपेतव्यम्। एवं विधेयमुपादेयं च। न च तेन रूपेण गुणसंबन्धः संभवति, गुणस्यापि साधनत्वेनान्वयात्। ततश्च गुणसंबन्धाय साध्यत्वेन प्रधानरूपमपि वक्तव्यम्। एवमुद्देश्यमनुवाद्यं च। न चैकोच्चारणस्य विरुद्धगुणप्रधानाद्युभयपरत्वं संभवति इति यजिपदोच्चारणावृत्तौ पदावृत्तिलक्षणो वाक्यभेदो दुष्परिहर एव। यत्र पुनः प्रधानरूपपरं गुणरूपपरं वा एकमेवोच्चारणं नानापदार्थसंबन्धयोग्यम्, तत्रागृह्यमाणविशेषत्वात् भवतु तन्त्रत्वमुच्चारणस्य। यथा 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इत्यत्र द्रव्यगुणसंबन्धाय क्रयस्य प्रधानत्वेनैव तन्त्रोच्चारणम्। यथा च 'दशापवित्रेण ग्रहं संमार्ष्टि' इत्यत्र दशाग्रहसंबन्धाय संमार्गस्य गुणत्वेन तन्त्रोच्चारणमिति। तदुक्तम् '**तन्त्रत्वमैकरूप्येण भवेत्तुल्योपकारतः। उपकारान्यथात्वे तु भवत्यावृत्तिलक्षणम्॥**' (वा. पृ. ३३८) इति। प्रसिद्ध्यादयश्च नामधेयत्वेऽपि अविशिष्टा एव। अतो वाजपेयादिपदानामपि नामधेयत्वमेवेति। **प्रयोजनं** पूर्वपक्षे वाजपेयशब्दस्य यवागूवचनत्वात् ओषधिद्रव्यत्वेन दार्शपूर्णमासिकविध्यन्तप्रवृत्तिः। सिद्धान्ते तु नामधेयत्वेन द्रव्यदेवताऽभावात् अव्यक्तचोदनात् सौमिकविध्यन्तप्रवृत्तिरिति। **भाष्यकारेण** पुनः सर्वनामधेयानामेव यथायथं गुणफलोपबन्धः प्रयोजनमुक्तम्। तदुक्तं भाष्य-

कारेण 'नामधेयमपि गुणफलोपबन्धेनार्थवत्' इति (भा. १।४।१।२ पृ. ३२६)। सूत्रं तु— ऐकशब्द्ये सुकृदुश्चरितशब्दाभिधेयत्वे परार्थवत् परसंबन्धवत् उद्देश्यत्वमनूद्यमानत्वं प्रधानत्वं च स्वार्थत्वेन उपादेयत्वं विधेयत्वं गुणत्वं चेति विरुद्धत्रिकद्वयापत्तिरेव सूत्रिता इति प्रतिपत्तव्यम्। **तौता.**

**नामधेये गुणश्रुतेः स्याद् विधानमिति चेत्। १।४।५।६ ॥**

'वाजपेयेन स्वाराज्यकामो यजेत' इति वाजपेयशब्दः किं गुणविधिः, कर्मनामधेयं वेति विचारे पूर्वपक्षमाह। नामधेये नामधेयत्वेन संभाविते वाजपेयादिशब्दे गुणश्रुतेः गुणस्य अन्नाख्यस्य वाजस्य श्रुतेः तस्यैव विधानं स्यात्।

**तुल्यत्वात् क्रिययोर्न। ७॥**

वाजपेयशब्दो गुणविधिः इति यदुक्तं पूर्वपक्षिणा तत् न। क्रिययोः वाजपेयशब्दलभ्ययवाग्वादिद्रव्यकायाः अस्याः वाजपेयक्रियायाः दर्शपूर्णमासक्रियायाश्च तुल्यत्वात् तुल्यत्वप्रसङ्गात् 'सप्तदशदीक्षो वाजपेयः' 'सप्तदशोपसत्को वाजपेयः' इति दीक्षोपसद्दर्शनं नावकल्पेत। गुणविधित्वपक्षे अयं दोषः प्रसज्येत। तस्मान्न गुणविधिः।

अथवा न गुणविधिः। कुतः? क्रिययोः वाजपेयक्रियायाः ज्योतिष्टोमक्रियायाश्च तुल्यत्वात् वाजपेये दीक्षाणामुपसदां च दर्शनमुपपद्यते। तस्मात् कर्मनामधेयम्।

**ऐकशब्द्ये परार्थवत्। ८॥**

हेत्वन्तरेण गुणविधिपक्षं निरस्यति। पूर्वसूत्रात् नेतिपदमनुवर्तते। 'यजेत' इति ऐकशब्द्ये सति तस्य परार्थवत् उच्चारणं न युक्तं इति सूत्राक्षरार्थः। यजेत इति अपूर्वविधित्वेन उपादेयत्वेन गुणत्वेन च अभिहितस्य यागस्य, परार्थवत् गुणविधानार्थवत् अनुवादत्वेन उद्देश्यत्वेन प्राधान्येन च अभिधानं न युक्तं विरुद्धत्रिकद्वयप्रसङ्गात् इति भावः। तस्मान्न वाजगुणविधिः। किन्तु कर्मनामधेयं वाजपेयशब्दः। **के.**

* सर्वेष्वेव कर्मनामधेयेषु अर्थसमन्वयेन अनुवादभूतो नामशब्दो वर्तते न लौकिकार्थतिरस्कारेण परिभाषामात्रेण वृद्धिगुणवत्। यथा अग्निहोत्रं श्येनः ज्योतिष्टोमः इति। एवं द्वादशाहः इति अर्थान्वयेन नामधेयं नार्थाभावेन। **भा.** १०।६।१३।४१.

* **नामधेयाधिकरणे** विधिस्तुतिस्मृतिवत् नामधेयत्वमपि प्रामाण्यद्वारं भवति वा न वा इति चिन्तयिष्यते। उद्भिदधिकरणं द्रष्टव्यम्। **सु.** पृ. ११५. * वार्तिककाराणां पदार्थोपस्थितेः पदशक्तिसाध्यत्वात् तदर्थं सर्वत्र पदाध्याहाराङ्गीकारेऽपि नामधेयान्वये व्युत्पत्त्यन्तराश्रयणमस्त्येव। तथा च स्वयमेव व्युत्पादितं **नामधेयाधिकरणे। अद्वैत.** २।२।६१०—६११

* **नामधेयाधिकरण—सिद्धान्ताभिन्नानार्थस्यापि** सूत्रस्य आवृत्त्या 'ततश्च अन्यथा क्रियाऽर्थत्वासंभवात् पारिशेष्यात् गुणविधिः' इत्यध्याहारेण एतदधिकरणपूर्वपक्षेऽपि योजना शक्या इति मत्वा तन्निरासार्थत्वेन अपिवाशब्दो व्याख्यातः। सु. पृ. ४०२. * आद्याधिकरणोक्त- (**नामधेयाधिकरणोक्त-**) उत्पत्तिशिष्टगुणविधि—नामधेयत्वरूपप्रकारद्वयस्य (वैश्वानराधिकरणे) अपवादात्। **कौ.** १।४।१२।१७.

* **नामधेयत्वं** गुणविधित्वेन बाध्यते निरूढेषु। **बाल.** पृ. १४५. नामधेयत्वं च निमित्तचतुष्टयात्। १ मत्वर्थलक्षणाभयात् उद्भिद् शब्दो नामधेयम् 'उद्भिदा यजेत पशुकामः'। २ वाक्यभेदभयात् चित्राशब्दो नामधेयम् 'चित्रया यजेत पशुकामः'। ३ तत्प्रख्यशास्त्रात् अग्निहोत्रशब्दो नामधेयम् 'अग्निहोत्रं जुहोति' 'समिधो यजति'। ४ तद्व्यपदेशात् श्येनशब्दो नामधेयम् 'श्येनेनाभिचरन् यजेत'। उत्पत्तिशिष्टगुणबलीयस्त्वात् 'वैश्वदेवेन यजेत' इति वैश्वदेवशब्दो नामधेयं इति केचित्। **के.** * नामधेयत्वं तत्प्रख्यशास्त्रात्। तत्र हि विधित्सितो गुणोऽन्यतः प्राप्तः अग्निर्देवता। मिश्रास्तु— यः शब्दो यत्र कर्मणि यद्गुणसंबन्धं बोधयति, स चेत् संबन्धः शास्त्रान्तरप्रतिपन्नः तदा तस्य शब्दस्य तन्नामधेयत्वं तत्प्रख्यशास्त्रात्। तच्च शास्त्रान्तरं विधिर्वा अर्थवादो वा। अग्निहोत्रशब्दे विधिः। वैश्वदेवशब्दे चार्थवादः। ज्योतिष्टोमशब्देऽपि अर्थवाद एव। **मीन्या.**

* **नामधेयत्वेन** गुणविधित्वं बाध्यते यौगिक–प्रसज-द्वाक्यभेद–तत्प्रख्य–तद्व्यपदेशेषु । **बाल. पृ. १४५.**

* धातुसामानाधिकरण्यं विना **नामधेयत्वायोगः** । **सु. पृ. ३९६.**

* **नामधेयन्यायः** । नामधेयप्रामाण्याधिकरणम् । उद्भिदधिकरणं द्रष्टव्यम् । **भा. १।४।१।१** वर्णकं १,२.

* **नामधेयपादः** नाम प्रथमाध्यायस्य चतुर्थः पादः । **के.** * **नामधेयपादे** ( १।४ ) नामधेयानां धर्मप्रमोपयोगोऽस्ति न वा इति इह विचारार्थः । तत्सिद्ध्यर्थं च एषां विध्यादित्रयान्यतमान्तःपातोऽस्ति, उत नेति चिन्तनीयम् । **सु. पृ. ३९३.** * आद्येऽधिकरणे ( **नामधेयप्रामाण्याधिकरणे** ) गुणविधित्वनामधेयत्व-रूपान्यतरप्रकारेण सर्वेषामुपपदानां प्रामाण्यं साधितम् । **कौ. १।४।८।१०** पृ. २३४.

* **नामधेयबलीयस्त्वं** चोदकनामधेययोर्विरोधे सिद्धान्तितं सप्तमान्त्ये । **सु. पृ. ४८१.**

* **नामधेयभेदात्** कर्मभेदः । **के. २।१।१।१.**

* अपूर्व**नामधेयसंयोगो** भेदहेतुः । **सु. पृ. ९४५.**

* **नायनशक्तिः** अङ्गुलिभिन्ना एकमपि भिन्नमिव गृह्णाति ( चन्द्रादिकम् ) । **बृहती. पृ. २२८.**

**नारिकेलजलन्यायः** । नारिकेले जलं कथमायातं इति न ज्ञायते तद्वत् । **संग्रहः.**

**नारिकेलफलाम्बुन्यायः** । यथा दृढावयवसंयोग-वति नारिकेलफले कथं जलमायातमिति न तर्कगोचर-तामेति, तथा आगता लक्ष्मीर्नैव लक्ष्यते । उक्तं च 'आगता लक्ष्यते नैव नारिकेलफलाम्बुवत्' इति । लक्ष्मीरिति शेषः । **साहस्री. २६८.**

* **नारिष्ठाधिकरणप्रतिपाद्यः न्यायः** 'आगन्तुका-नामन्ते निवेशः' इति । **के. ५।२।९।१७–२०.**

* **नारिष्ठन्यायः** । उपहोमन्यायः इति बिन्दौ द्रष्टव्यम् । **के. ५।२।९।१७–२०.** * अभिषेचनीये चोदकप्राप्त-मङ्गजातं **नारिष्ठन्यायेन** प्रथमं समाप्य पश्चात् विदेव-नादयः कर्तव्याः इति पूर्वः पक्षः । **वि. ५।२।१०.**

* **नारिष्ठहोमः** प्रकृतौ प्रधानहोमादूर्ध्वं विहितः 'नारिष्ठान् होमान् जुहोति' इत्युक्तत्वात् 'दश ते तनुवो यज्ञ यज्ञियाः' इत्यादयस्तत्र मन्त्राः । **वि. १०।४।१.**

* **नारिष्ठहोमाः** सर्वेष्टिषु सर्वपशुबन्धेषु प्रवर्तमाना दृष्टाः । **भा. ८।४।५।१८,** * **नारिष्ठहोमेभ्यः** पराञ्चः उपहोमा नक्षत्रेष्टिषु । ५।२।९।१९, * **नारिष्ठहोमेऽपि हि** जुहोतिचोदना 'नारिष्ठान् जुहोति' इति । ८।४।५।१९, * **नारिष्ठहोमेषु** प्रकरणेन वषट्कारः प्राप्नोति तन्मन्त्र-पदैरेकवाक्यत्वात् स्वाहाकारः । वाक्यं च प्रकरणात् बलीयः । ८।४।५।१७.

**नारिष्ठहोमादीनां आतिदेशिकानां नक्षत्रे-ष्ट्यादौ उपदिष्टैरुपहोमादिभिः समुच्चयः ॥**

**प्रकृतिलिङ्गासंयोगात् कर्मसंस्कारं विकृता-वधिकं स्यात् । १०।४।१।१॥**

**भाष्यम्**— अस्ति अग्निः 'य एवं विद्वान् अग्निं चिनुते' इति । तत्र नक्षत्रेष्टिः 'अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत्, सोऽत्र जुहोति अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहा, अम्बायै स्वाहा, नितत्न्यै स्वाहा, अभ्रयन्त्यै स्वाहा, मेघयन्त्यै स्वाहा, वर्षयन्त्यै स्वाहा, चुपुणीकायै स्वाहा' इति । सन्ति तु प्रकृतौ नारिष्ठहोमाः 'नारिष्ठान् होमान् जुहोति' इति । तत्र संशयः किं नारिष्ठहोमानां निवृत्तिः, अथवा अनिवृत्तिः समुच्चय इति ।

तथा श्येने श्रूयते 'लोहितोष्णीषा लोहितवसना निवीता ऋत्विजः प्रचरन्ति' इति । अस्ति प्रकृतौ 'निवीतं मनुष्याणाम्, प्राचीनावीतं पितॄणाम्, उपवीतं देवानाम्, उपव्ययते देवलक्ष्ममेव तत् कुरुते' इति । तदिह चोदकेन प्राप्तम् । तत्र संशयः किमुपवीतस्य निवृत्तिः, उत अनिवृत्तिः समुच्चय इति ।

तथा पृष्ठ्ये षडहे श्रूयते 'मध्वाशयेत् घृतं वा' इति । अस्ति तु प्रकृतौ 'पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इति । तदिह चोदकेन प्राप्तम् । तत्र संशयः, किं तस्य निवृत्तिः उतानिवृत्तिः समुच्चयः इति । किं प्राप्तम् ? तस्य निवृत्तिरिति । प्रत्यक्षश्रुता उपहोमादयः चोदकप्राप्तानां आनुमानिकानां निवर्तका इति । अपिच प्रकृतिलिङ्गसंयोगो भवति जुहोति, निवीताः प्रचरन्ति, आशयेत् इति । यथा

'शरमयं बर्हिर्भवति' इति, शराः कुशान् निवर्तयन्ति। **एवं प्राप्ते, ब्रूमः।** अनिवृत्तिः समुच्चय इति। कुतः? प्रकृतिलिङ्गासंयोगात्। प्राकृतेन लिङ्गेन कार्येण संयोगः एषामुपहोमादीनां नास्ति। स हि प्रत्यक्षदर्शनेन वा भवति यथा 'नैवारश्चरुः' इति। अभावे विधानेन वा भवति यथा 'जुहूषा वा एतर्हि वाग् भवति, यर्हि पृष्ठ्यः षडहः संतिष्ठते, न बहु वदेत्, नान्यं पृच्छेत्, नान्यस्मै प्रतिब्रूयात्, मध्वाशयेत् घृतं वा' इति। विकारेण वा यथा 'नैर्ऋतश्चरुर्नखावपूतानाम्' इति। स्वशब्देन वा भवति यथा 'परिधौ पशुं नियुञ्जीत' इति। प्रतिषेधेन वा भवति यथा 'न गिरागिरेति ब्रूयात्, यद् गिरागिरेति ब्रूयात् आत्मानं तदुद्गाता गिरेत्, ऐरं कृत्वोद्गेयम्' इति। अन्येन वा येनावगम्यते प्रकृतं कार्यं अभिनिर्वर्तयन्ति इति। तदिह न किञ्चिदपि अस्ति। न चैतावता निवृत्तिः, इदं प्रत्यक्षश्रुतमिदं चोदकेन प्राप्तमिति। प्रकृतिलिङ्गसंयोगे निवृत्तिर्भवति नान्यथा। **ननु** इदानीमेवोक्तं भवतीह प्रकृतिलिङ्गसंयोगः जुहोति, निवीताः प्रचरन्ति, आशयेत् इति। उच्यते। प्राकृतानां जुहोत्यादीनां जुहोत्याद्यन्तराणि इमानि विधीयन्ते। तत्र तावत् जुहोतिः अदृष्टार्थः, कथमसौ गम्येत प्राकृतस्यार्थे वर्तते इति। **तथा** उपवीतं अदृष्टार्थं कथं तस्य कार्ये निवीतं वर्तते इति गम्यते। **तथा** व्रतं वृत्त्यर्थम्, मध्वशनं घृताशनं च तस्मिन्नर्थे वर्तते इत्येतत् न ज्ञायते एव। तस्मान्नास्ति प्रकृतिलिङ्गसंयोगः। अथोच्यते, नैवोपहोमा जुहोत्यन्तरम्, प्राकृते होमे मन्त्रो विधीयते इति। तच्च न। विधायकस्याभावात्। 'सोऽत्र जुहोति' इति परिसमाप्ते वाक्ये केवलस्य मन्त्रस्य आम्नानम्, नास्ति वचनं एवं जुहोतीति। भिन्नान्येतानि वाक्यानि, 'सोऽत्र जुहोति' इति विधिवाक्यम्, 'अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहा' इत्येवमादीनि मन्त्रवाक्यानि। तस्मात् न मन्त्रविधानार्थं जुहोतेः पुनःश्रवणम्। होमविधानार्थे श्रुतिर्विधायिका भवति, मन्त्रविधाने वाक्यम्। तस्मादपि न मन्त्रविधानम्। अतः समुच्चयः। उभयमपि प्रमाणेन प्राप्तम्, प्रत्यक्षश्रवणं प्रमाणम्, चोदकोऽपि प्रमाणम्। नानाकार्यत्वात् नैतयोर्विरोधः। तस्मात् यथा प्रयाजादीन् न बाधन्ते, एवं नारिष्ठहोमानपि न बाधेरन्। अतः एवंजातीयकं कर्मसंस्कारं विकृतौ अधिकं स्यादिति।

**टुप्—** 'निवीता ऋत्विजः' इत्येतदनुदाहरणम्। कथम्? ज्योतिष्टोमे उपवीताभावात्। न (हि) प्रत्यक्षेण, न (अपि) चोदकेन ज्योतिष्टोमे उपवीतम् (अस्ति। यस्य निवीतेन बाधसमुच्चयौ चिन्त्येयाताम्)। तत्प्रकृतिकश्च श्येनः, न दर्शपूर्णमासप्रकृतिकः। (ननु अङ्गानि ऐष्टिकानि, तेषु उपवीतं प्राप्नोति, निवीतमपि तेषु प्रधानादवतीर्णम्। इति युक्ता चिन्ता, अत आह—) 'आनर्थक्यात् तदङ्गेषु' इति न्यायोऽत्र नास्ति (येन अङ्गेषु निवीतमवतरेत्)। प्रधाने हि असंभवन् (धर्मः) अङ्गे अर्थात् क्रियते। संभवति चात्र प्रधाने एव निवीतम्। तस्मात् भिन्नविषयत्वात् निवीतोपवीतयोर्व्यवस्था (न बाधः समुच्चयो वा)। तत् (तस्मात्) अनुदाहरणमिदम्। उपहोमाद्येव (तु) उदाहरणम्। ननु उपहोमानां प्रत्यक्षविधानात् चोदक एव नास्ति नक्षत्रेष्टौ यथा गृहमेधीयस्य आज्यभागयोः प्रत्यक्षाम्नानात्। यथा च सोमस्य प्रत्यक्षविधानात्। उच्यते। सर्वास्वेव विकृतिषु उपमानेन धर्मप्राप्तिः। न च सोमस्य केनचित् (धर्मवता कर्मणा) सादृश्यमस्ति। तस्मात् सोमे ये एव धर्मा विधीयन्ते, ते एव भवन्ति, नान्ये इति। नक्षत्रेष्टावपि (तुशब्दार्थे अपिशब्दः) प्रथमं तावत् उपकारापेक्षा भवति, ततः सादृश्येन धर्मप्राप्तिः। न च अपूर्वमङ्गं उपकारवत् दृष्टम्। सादृश्यं चास्याः आग्नेयेन (अस्ति)। तत्र प्रकारा अनन्तराः (अव्यवहिताः) आग्नेये विद्यन्ते। ते च उपकारमन्तरेण न संभवन्ति। तस्मात् प्रकारादनन्तरं उपकारा विद्यन्ते। तान् गृह्णाति विकृतिः। इमे चोपहोमाः नोपकारपूर्वकाः। तस्मात् प्राकृतमङ्गजातं प्रवर्तते। गृहमेधीये तु दृष्टोपकारौ आज्यभागौ पुनः श्रूयेते, तौ शक्तौ गृहमेधीयं निराकाङ्क्षीकर्तुम्। न च उपहोमानां श्रुत्याद्यभावात् स उपकारः शक्यते कल्पयितुम्। ननु श्रुत्याद्यभावात् अनङ्गत्वमेव उपहोमानां प्राप्नोति। उच्यते। सत्यं श्रुत्याद्यभावः (श्रुत्यादित्रयाभावः), किन्तु (प्राकृताङ्ग—) संदंशोपग्रहेण तेषां ग्रहणम्। (तथाहि,) पूर्वेऽपि पदार्थाः

प्राकृताः श्रूयन्ते, ( तथा ) परेऽपि ( प्राकृताः ) मध्ये उपहोमाः तस्मात् तेषाम् ( अपि आकाङ्क्षयैव ) ग्रहणम्। ( यत्रापि संदंशाभावः, तत्रापि क्रमादेव अङ्गत्वमिति )।

( पूर्वपक्षमाह– ) जुहोतिशब्दसामान्यात् स्थानसामान्याच्च ( इति प्रकृतिलिङ्गद्वयात् ) नारिष्ठबाधः । उच्यते । नात्र बाधः । कुतः ? कार्यापत्त्यभावात् । प्रत्यक्षेण तावत् कार्यापत्तिर्नास्ति यथा नैवारश्चरुः इति व्रीहीणां कार्ये नीवारा वर्तन्ते । ननु शब्देनेयं कार्यापत्तिः ( कथं प्रत्यक्षेणेत्युच्यते ? ), नहि, ( कथम् ?) नीवारप्रातिपदिकं नीवारान् ब्रवीति, तद्धितो विकारम्, चरुशब्दः चरुम्, बृहस्पतिशब्दः तस्य देवतासंबन्धम् । न केनचिच्छब्देन ( व्रीहि- ) कार्यापत्तिर्गम्यते । प्रत्यक्षेण त्ववगम्यते । ( तथाहि ) व्रीहयः पुरोडाशं निर्वर्तयन्ति, पुरोडाशो यागम्, एवं नीवाराः चरुं साधयन्ति, चरुश्च यागमिति (उभयेषामपि हविर्निर्वर्तकत्वं प्रत्यक्षम्)। न च अनुमानेन कार्यापत्तिः यथा नखावपूतानां चरुः इति । तत्र तुषकणविमोकं दृष्ट्वा फलम्, नूनं अवघातकार्ये वर्तते (नख–) अवपवनमिति ( अवहन्यते अनेन इत्यवघातः उलूखलमुसलम् । अवपूयते अनेन इति अवपवनं नखाः ) । न च प्रतिषेधेन कार्यापत्तिरनुमीयते यथा 'न गिरागिरेति ब्रूयात्' इति । ननु परस्परनिराकाङ्क्षं ( इदम् ) वाक्यद्वयं विधायक– ( द्वय– ) सद्भावात् 'ब्रूयात्, उद्गेयम्' इति ( अतः कथमिह एकस्य कार्ये अपरस्य विधानमिति ) । उच्यते । एवं सति वाक्यभेदः प्राप्नोति, विधायकशक्तिकल्पना च एकैकस्य ( स्यात् ) । तस्मात् गिरापदस्य प्रतिषिध्यमानस्य यत् कार्यं ( साधनाकाङ्क्षम् ) लक्ष्यते, तत्र इरापदं विधीयते । तस्मात् कार्यलक्षणार्थं गिरापदमुच्चार्यते, न प्रतिषेधार्थं वाक्यभेदादिदोषात् । न च ( अपि ) लक्षितलक्षणया कार्यापत्तिः यथा 'पृष्ठ्यः षडहः संतिष्ठते' इति । अत्र हि अभावः संस्था । ( तेन च ) अभावेन (संस्थाशब्दाभिधेयेन ) प्रतिषेधो लक्षणया गम्यते, प्रतिषेधेन ( च ) लक्षणया कार्यम् ( गम्यते ) । कार्ये ( च ) मध्वशनघृताशने ( विधीयेते ) । नापि स्वशब्देन कार्यापत्तिः यथा 'परिधौ पशुं नियुञ्जन्ति' इति । तस्मात् पञ्चप्रकाराऽपि कार्यापत्तिः नास्ति उपहोमानां येन बाधेरन् । **प्राकृतं येन वा केनचित् इति निरूपयन्ति** ( भाष्यमूले तु 'अन्येन वा येन अवगम्यते प्राकृतं कार्यमभिनिर्वर्तयन्ति' इति पङ्क्तिः । तस्या अयमनुवादो वार्तिके ) इति कोऽयं ग्रन्थः ? ( पञ्चकातिरिक्तकार्यापत्तिप्रमाणासंभवात् अनादरोक्तेन तु भाष्यम् । अथ नेदं होमान्तरम्, प्राकृते एव तु होमे मन्त्रविधानं इत्युच्यते, अत आह– ) न च होमानुवादेन मन्त्रविधानम् । शुद्ध एव हि होमो विधीयते अनेन वाक्येन 'सोऽत्र जुहोति' इति ( न तु अत्र मन्त्रग्रहणम् ) । द्वितीयेन तु ( वाक्येन ) मन्त्राः ( केवलाः पठिताः ) अग्नये ( स्वाहा ), कृत्तिकाभ्यः ( स्वाहा ) इत्यादिना । तयोः ( मन्त्रयोः ) संबन्धः प्रकरणेन ( भवति ) न वाक्येन । तस्मात् नारिष्ठोपहोमयोः समुच्चयः ।

**चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसंनिधानात् । २ ॥**

**भाष्यम्**— अथ यदुक्तम् 'शरमयं बर्हिर्भवति' इति यथा शराः कुशान् निवर्तयन्ति एवमिहापीति । अत्रोच्यते । युक्तं शरमये । भवति हि तत्र प्रकृतिलिङ्गेन संयोगः बर्हिःशब्देन एवंविशिष्टं वा बर्हिर्भवति, शरा वा बर्हिषः कार्ये वर्तन्ते इति । इह तु प्रकृतिलिङ्गासंयोगः । तस्मात् विषमं बर्हिषेति ।

**शा**— **'सति प्राकृतकार्यत्वे भवेद् बाधो न चास्ति तत् । साधारणं न होमत्वं तस्योपस्थापनक्षमम् ॥'** सर्वसाधारणं हि होमत्वं न नारिष्ठकार्ये उपस्थापयितुमर्हति । तस्मादुभयेषां अभ्युच्चयः ।

**वि**—'नक्षत्रेष्ट्युपहोमादिर्नारिष्ठादेर्निवर्तकः। समुच्चितो वा, कार्यैक्यादाद्यो, ऽन्यो, ऽपूर्वभेदतः ॥'

**भाट्ट**— 'अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत्' इति नक्षत्रेष्टिं विधाय उपहोमाः समाम्नाताः । 'सोऽत्र जुहोति, अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहा, अम्बायै स्वाहा, दुलायै स्वाहा, नितत्न्यै स्वाहा, अभ्रयन्त्यै स्वाहा, मेघयन्त्यै स्वाहा, वर्षयन्त्यै स्वाहा, चुपुणीकायै स्वाहा' इति । प्रकृतितश्च 'नारिष्ठान् जुहोति' इति नारिष्ठहोमाः प्राप्ताः । ते किं उपहोमैर्बाध्यन्ते उत समुच्चीयन्ते इति चिन्तायाम् । नारिष्ठहोमानां प्रकृतौ प्रधानो-

त्तरकालत्वात् अत्र शब्दबलेन प्रधानोत्तरभाविनामेषां समानस्थानकत्वेन एककार्यजनकत्वावगते: उपदिष्टैरुपहोमैः नारिष्ठहोमानां अतिदिष्टानां शरवत् बाधः इति प्राप्ते। शरा हि बर्हिःशब्दलक्षिते तत्कार्ये विहिताः युक्तं यत् तत्कार्यपृष्ठभावेन प्राप्स्यमानं बर्हिर्बाधन्ते, उपहोमास्तु नारिष्ठहोमकार्यापन्ना इत्यत्र न किंचित् प्रमाणमस्ति, प्रत्यक्षादेस्तावत् अदृष्टार्थेषु अप्रवृत्तेः। न च समानस्थानकत्वात् एककार्यत्वावगतिः, उपहोमवाक्ये अतिदेशप्रापितनारिष्ठकार्यस्य उपस्थापकपदाभावेन अनुद्देश्यत्वात् तदुद्देशेन उपहोमविध्यप्रतीतेः अतिदेशेन कार्यपृष्ठभावेन नारिष्ठानामपि प्राप्त्युपपत्तौ शरन्यायवैलक्षण्येन समानस्थानकत्वमात्रस्य अप्रयोजकत्वात्। न च उपहोमवाक्ये कर्मान्तरविधावेव प्रमाणाभावः, नारिष्ठानुवादेनैव मन्त्रविधानोपपत्तेः इति वाच्यम्। प्राप्तकर्मानुवादेन अनेकमन्त्रविधौ वाक्यभेदापादकगुणस्यैव भेदकत्वात्। एकं हीदं वाक्यं इतिकरणेन तैत्तिरीयशाखाम्नातेन मन्त्राणां जुहोतावेव अन्वयप्रतीतेः। अत एव स्वाहाकारान्तानां मन्त्राणां लिङ्गादेव नारिष्ठहोमेषु विनियोगप्रसक्तौ पुनर्विनियोगान्तरवैयर्थ्यप्रसङ्गादपि कर्मान्तरम्, तच्च एकवाक्योपादानावगतस्वाहाकारान्तमन्त्रसमुच्चयबलेन अनेकं आवृत्तं वा इत्यन्यदेतत्। न च तथापि उपदिष्टोपहोमैरेव विकृतेः निराकाङ्क्षत्वात् अतिदेशकल्पकत्वाभावेन नारिष्ठाप्राप्तिः। उपहोमानां अक्लृप्तोपकारकतया उपकारकाकाङ्क्षिण्या विकृत्या प्रथमं आतिदेशिकस्यैव ग्रहणेन नारिष्ठानां प्राप्त्युपपत्तेः। अत एव उपहोमादीनां वैकृतानां अन्यतराकाङ्क्षयैव ग्रहणं अनुपस्थितफलान्तरकल्पने गौरवात्। अत एव यत्र क्लृप्तोपकारकप्राकृताङ्गे पुनःश्रवणं विकृतिप्रकरणे, यथा गृहमेधीयाज्यभागादौ तत्रैव विकृतेः निराकाङ्क्षत्वापादनेन अतिदेशलोपः। यत्र वा संनिपत्योपकारकाङ्गसामग्रीपौष्कल्यम्। न तु अत्र द्वयमप्यस्ति। अतः उपहोमैः नारिष्ठानां न बाधः।

यत्तु अत्र भाष्यकारेण श्येने 'निवीता ऋत्विजः प्रचरन्ति' इत्याम्नातेन प्रयोगाङ्गभूतकर्तृसंस्कारकेण निवीतेन अतिदेशप्राप्तस्य सर्वकर्मार्थत्वेन विहितस्य चोपवीतस्य बाधमाशङ्क्य अदृष्टार्थत्वात् समुच्चय इति सिद्धान्तितम्। तदस्य अदृष्टार्थत्वे श्राद्धादावपि प्राचीनावीतेन सह उपवीतस्य समुच्चयापत्तेः यावज्जीवैकत्रिसूत्रनवतन्तुकयज्ञोपवीतधारणाश्रितप्रकारविशेषस्य उपवीतत्वनिवीतत्वादेः तत्तत्कर्माङ्गतया विहितस्य समुच्चयासंभवात् उपेक्षितम्।

यदपि 'संस्थिते षडहे मध्वाशयेत्' इति विहितमध्वशनेन प्राकृतपयोव्रतस्य तस्मिन्नहनि निवृत्तिमाशङ्क्य अदृष्टार्थत्वादेव समुच्चय इत्युक्तम्। तत् मध्वशनस्य देहवृत्त्यनर्हत्वेन पयोव्रतकार्यकारित्वानुपपत्तेः पूर्वपक्षोत्थानाभावात् सुत्यायां पयोव्रताभावाच्च उपेक्षितम्। अस्तु वा तदपि इहोदाहरणम्।

मण्डन-- 'उपहोमा न बाधन्ते।' नारिष्ठहोमान्।

शंकर -- 'उपहोमैर्न नारिष्ठा बाध्याः।'

* **नारिष्ठहोमपूर्वकत्वं** दर्विहोमानाम्। **भा.** ८।४। ५।२०.

* **नावनीतं** आज्यम्। पुराणनूतनयोः घृतयोर्नवनीतजन्यत्वे समानेऽपि योगरूढ्या नूतनमेव 'नावनीतम्' इति व्यवह्रियते। **वि.** १।४।१०.

ꕤ **'नाशः कारणलयः' इति न्यायेन** प्रलयेऽपि प्रपञ्चस्य सदात्मकत्वेन स्थित्युपदेशात्। **श्रीकर.** २।१। २७ ब्रसू.

ꕤ **नाशाधिकरणम्।** ६।४।२।३ ॥ इदमधिकरणम् 'दर्शपूर्णमासादौ स्विष्टकृदादिशेषकार्यार्थमवत्तस्य द्रव्यस्य नाशे शेषकार्यलोपः' इत्यत्र ( **मीको.** पृ. २०७३ ) द्रष्टव्यम्।

* 'यस्य पुरोडाशौ क्षायतः इत्यत्र एकदेशक्षाणे तु प्राक्तन**नाशाधिकरणन्यायेन** ( ६।४।२ ) आज्येन दग्धावशिष्टेन वा प्रयोगसमाप्तिमात्रम्। **भाट्ट.** ६।४।५.

* **नास्तिकैः** 'अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम्। बुद्धिपौरुषहीनानां जीविकेयं बृहस्पतिः॥' इति अग्निहोत्रादीनां दृष्टार्थत्वमुक्तम्। **सु.** पृ. १३५.

* **निकान्तः** नितरां कान्तः नितान्तं प्रियः। 'वत्सनिकान्ता हि पशवः'। **के.** २।३।६।१६-१७.

* **निकायः** इति संघातः औत्तराधर्येणावस्थित उच्यते। स येषां ते निकायिनः। यथा साहस्राः

साद्यस्क्राः । भा. ८।१।१२।१९. * निकायः एकेन शब्देन युगपदुपादानलक्षणः संघः । सु. पृ. ८६०.

* **निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् ( ८।१।१२।१९ ) इत्याष्टमिकन्यायात्** अतिदिष्टपूर्वाग्निष्टुद्धर्मकयागान्तरस्य पश्वर्थमनुष्ठानं इति सिद्धान्ते प्रयोजनम् । **कस्तूरि.** २।२।१२।२६.

**निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् । ८।१।१२।१९ ॥**

निकायः इति संघात उच्यते । स येषां ते निकायिनः साहस्राः साद्यस्क्राश्च । तत्र निकायिनां मध्ये पूर्वस्य पूर्वे पठितस्य प्रवृत्तिः उत्तरेषु निकायिषु स्यात् । निकायित्वसामान्यात् । पुनरपि साहस्राणां सहस्रदक्षिणासामान्यात् साद्यस्क्राणां च सद्यस्करणसामान्यात् । ततश्च प्रथमः साहस्र उत्तरसाहस्राणाम्, प्रथमः साद्यस्क्रश्च उत्तरसाद्यस्क्राणां प्रकृतिः । **के.**

* निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् । साद्यस्क्राः साहस्राः इति च एकेन शब्देन युगपदुपादानलक्षणसंघाख्यनिकायवतां अग्निष्टुदादीनामेकाहानां निकायित्वावान्तरसामान्येन सुसदृशत्वात् पूर्वस्याग्निष्टुतो विध्यन्तः रेवत्यादियागेषु उत्तरेषु प्रवर्तते इति अष्टमे 'निकायिनाम्' इत्यत्र वक्ष्यमाणत्वात् तदीयधर्मप्राप्तिः । **सु.** पृ. ८६०

* **निकायित्वं** सोमप्रकृतिलिङ्गम् । **बाल.** पृ. ११९.

* **निकृन्तनं** नखानां ज्योतिष्टोमे संस्कारो न फलप्रयुक्तः । तत्र फलश्रुतिरर्थवादः । तच्च क्रत्वर्थं यजमानार्थम् । **के.** ४।३।१।१-४.

ब्रह्मणः प्रधानत्वे अप्रधानत्वे वा ब्रह्मैव फलप्रदं इति श्रुतेरुपपत्तौ सत्यां '**निकृष्टे उत्कृष्टदृष्टिः कर्तव्या' इति लौकिको न्यायो** न बाधनीयः । **आभरणम्.** ४।१।४।५ ब्रसू.

**निकृष्टदृष्टिर्नोत्कृष्टे इति लौकिको न्यायः ।** आदित्यादिदृष्टयो ब्रह्मण्येव कर्तव्याः, न तु ब्रह्मदृष्टिरादित्यादिषु । न चैवंविधे अवधृते शास्त्रार्थे निकृष्ट०... न्यायोऽपवादाय प्रभवति, आगमविरोधेन तस्यैवापोदितत्वात् । **भामती.** ४।१।४।५ ब्रसू.

* **निखननं** यूपधर्मः, औदुम्बरीधर्मश्च । **के.**

* **निगदः** । 'नितरां गद्यमानत्वान्निगदो ह्येष गद्यते ।' ( तच्च परप्रत्यायनार्थत्वात् उच्चैष्ट्वम् ) । **वा.** ६।२। ५।१२ पृ. ७६२.

**निगदो वा चतुर्थं स्याद्धर्मविशेषात् । २।१। १४।३८ ॥**

अथ निगदा नाम किं यजूंषि ? उत यजुर्भ्योऽन्ये ? इति ऋक्सामयजुःशब्दपदार्थेषु निरूपितेषु निगदानामनुप्रसङ्गेनैव 'उच्चैर्निगदेन' इत्येवमादिवेदवाक्यगतनिगदपदार्थो निरूप्यते । अत्रायं पूर्वपक्षिणोऽभिसंधिः 'उपांशु यजुषा' इति यजुषामुपांशुधर्मशालित्वं प्रतीयते । अस्य च 'उच्चैर्निगदेन' इति विशेषः श्रूयते । स चास्य यजुष्ट्वे नोपपद्यते, विध्यनुवादयोरसंभवात् । विधित्वे सति 'उपांशु यजुषा' इति सामान्यशास्त्रप्राप्तमुपांशुत्वम् 'उच्चैर्निगदेन' इति विशेषशास्त्रेण बाधनीयम् । बाधश्च गत्यन्तरासंभवे भवेत् । तेन 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इत्यत्र कौण्डिन्यगतब्राह्मणत्वस्य प्रमाणान्तरसिद्धत्वात् भवतु गत्यन्तरासंभवेन बाधः, यजुष्ट्वस्य प्रमाणान्तरसिद्धत्वात् 'शेषे यजुःशब्दः' इति लक्षणस्य ऋक्सामनिगदशेषपरत्वेनापि संभवात् त्रिभ्योऽन्यत्वेनैव उपपत्तेर्न बाधसंभवः । न च यजुष्ट्वेऽपि परसंबोधरूपत्वेन निगदानां अर्थप्राप्तमुच्चैष्ट्वम् 'उच्चैर्निगदेन' इत्यनूद्यते । यजुष्ट्वे सति वाचनिकेनोपांशुत्वेन अर्थप्राप्तस्य उच्चैष्ट्वस्य बाधितत्वात् अनुवादासंभवात् । किञ्च, व्यपदेशभेदश्चापि अभियुक्तानां दृश्यते 'निगदा वर्तन्ते न यजूंषि, अथ यजूंषि न निगदाः' इति । अतो न यजूंषि निगदाः, किन्तु चतुर्थमेव निगदा इति मन्त्रजातमिति । **एवं प्राप्ते, अभिधीयते ।**

**यजूंषि वा तद्रूपत्वात् । ४० ॥**

अयमभिप्रायः, भवेदेवं यदि 'उच्चैर्निगदेन' इत्यत्र अनुवादो न संभवेत् । **न च** यजुष्ट्वे सति अर्थप्राप्तमुच्चैष्ट्वं उपांशुत्वविधिना बाधितत्वात् नानूद्यते इति **वाच्यम् ।** उपांशुत्वविधेर्निगदेषु प्रवृत्त्यसंभवात् । तथाहि, 'अग्नीदग्नीन् विहर बर्हिस्तृणाहि' इत्येवंरूपा हि निगदाः । ते च परसंबोधनार्थत्वेन प्रयोगेषूच्चार्यमाणेषु स्वकार्यक्षमा

भवन्ति । अवयवव्युत्पत्तेश्च नितरां गद्यन्ते इति निगदाः। न च उपांशुत्वेन उच्चार्यमाणाः तथा भवन्ति । न चोपांशुविधेरपि अनन्यगतिः, तद्व्यतिरिक्तयजुर्विषयत्वेनैव चरितार्थत्वात् । अतोऽयमुपांशुविधिः निगदेतरयजुर्विषय एवेति न तेन बाधितत्वात् उच्चैस्त्वस्य संभवः । 'अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रैविदा विदुः । ऋचः सामानि यजूंषि' इत्यृचो यजूंषि सामानीत्येवमात्मके वेदे त्रिष्वेव ऋग्यजुःसामसु मन्त्रत्वमुपपन्नं भवति । निगदा अपि मन्त्रा एव । अतः अपादबद्धत्वात् अगीतित्वाच्च परिशेषसिद्धयजुर्लक्षणयोगात् यजूंष्येव निगदाः। उच्चैष्ट्व-धर्मभेदश्चास्य परसंबोधनकार्यसामर्थ्यप्राप्तः एव स्तुत्यर्थ-मनूद्यमानः अनन्यत्वमापादयति । उपदेशभेदश्च ब्राह्मण-परिव्राजकन्यायेन धर्मभेदनिबन्धन एव । अतो यजूंष्येव निगदा इति । अत्र यद्यपि 'वेदो वा प्रायदर्शनात्' ( ३।३।१।२ ) इत्यत्र उपांशुत्वादीनां वेदधर्मत्वमाचक्षते, न जातधर्मत्वम्, तथापि तदीयपूर्वपक्षन्यायेन जातधर्मत्व-मभ्युपगम्य सामान्यशास्त्रमयोग्यं विशेषविषये न प्रवर्तते एवेति तत्प्रतिपादनार्थोऽयं विचारः । तेन अयमेव सामान्यविशेषन्यायात् अस्य भेदो यत्सामान्यशास्त्रं प्रवृत्ति-योग्यमपि विशेषशास्त्रदर्शनान्न प्रवर्तते । अत्र तु सामान्य-शास्त्रं विशेषप्रवृत्त्ययोग्यत्वादेव न प्रवर्तते इति । **प्रयोजनम्**-- यजुष्ट्वे सति यजुर्भ्रंशनिमित्तम् 'भुवः स्वाहा' इति प्रायश्चित्तम्, अयजुष्ट्वे नेति । **सूत्रं तु**-- यजूंष्येव निगदाः। तद्रूपत्वात् प्रश्लिष्टपठितत्वेन यजूरूपत्वा-दित्यर्थः । **तौता.**

**निगदो वा चतुर्थं स्याद्, धर्मविशेषात् । २।१।१३।३८ ॥**

निगदो नाम मन्त्रः किं यजुरेव, उत भिन्नमेव ऋक्सामयजुर्भ्यः इति विचारे पूर्वपक्षमाह । वाशब्दः पक्षविशेषद्योतनार्थः । निगदो नाम चतुर्थं मन्त्रजातं स्यात् । 'उपांशु यजुषा, उच्चैर्निगदेन' इति धर्म-विशेषात् । यजुर्मन्त्रधर्मात् उपांशुत्वात् भिन्नस्य धर्मस्य श्रवणात् निगदो न यजुः । न ऋक् न च साम इति निगदः चतुर्थमेव मन्त्रजातम् ।

**व्यपदेशाच्च । ३९ ॥**

एतानि यजूंषि, एते निगदाः इति भिन्नेन शब्देन व्यपदेशाच्च निगदो न यजुः । चकारः हेतुसमुच्चयार्थः ।

**यजूंषि वा तद्रूपत्वात् । ४० ॥**

निगदो नाम ऋग्यजुःसामभ्यो भिन्नं मन्त्रजातं इति पूर्वपक्षं वाशब्देन परिहरन् सिद्धान्तमाह । निगदा यजूंषि स्युः, न भिन्नं मन्त्रजातम् । तद्रूपत्वात् । तस्य यजुषः यत् रूपं प्रश्लिष्टपाठः ऋक्सामविलक्षणत्वं चेति, तदेव रूपं निगदानामपि इति निगदा न यजुर्भिन्नाः ।

**वचनाद्धर्मविशेषः । ४१ ॥**

सिद्धान्ती पूर्वपक्षहेतुं निरस्यति । यजुर्धर्मात् उपां-शुत्वात् निगदानां उच्चैष्ट्वं धर्म उक्तः इति योऽयं धर्म-विशेष उक्तः, स वचनात् स्यात् । वाचनिको धर्मभेदः न यजुर्भिन्नत्वं साधयितुं समर्थः । तस्मात् निगदा यजूंष्येव ।

**अर्थाच्च । ४२ ॥**

निगदरूपा मन्त्राः यजूंष्येव, उच्चैष्ट्वं तु तेषां न केवलं वचनात्, किन्तु अर्थाच्च । पुरुषान्तरज्ञापन-रूपात् प्रयोजनात् हेतोः तेषामुच्चैष्ट्वमुक्तम् । पर-संबोधनार्थानां यजुषां उपांशुत्वं नोपकारि । तस्मात् यानि यजूंषि न परसंबोधनार्थानि तेषामुपांशुत्वम्, येषां तु यजुषां परसंबोधनार्थत्वम्, तेषां निगदत्वं उच्चैष्ट्वत्वं च । गदतिर्वचनार्थः पाठवचनः, निशब्दः प्रकर्षस्य वक्ता । प्रकर्षश्चात्र उच्चैस्त्वावच्छिन्नत्वम् । तस्मात् यजुर्विशेषा एव निगदाः ।

**गुणार्थो व्यपदेशः । ४३ ॥**

निगदा नाम मन्त्रा यजुर्विशेषा एव । यत्तूक्तं पूर्व-पक्षिणा यजूंषि निगदाः इति व्यपदेशभेदात् भेद इति तत्राह सिद्धान्ती, व्यपदेशः भिन्नो व्यपदेशो गुणार्थः प्रत्येतव्यः । उच्चैष्ट्वगुणार्थः गुणनिमित्तको व्यपदेशभेदः ब्राह्मणपरिव्राजकन्यायेन ।

**सर्वेषामिति चेत् । ४४ ॥**

यदि उच्चैष्ट्वगुणाभिप्रायेण यजुषामेव केषांचित् निगदत्वं स्यात्, सर्वेषामपि निगदत्वं स्यात् । ऋचां साम्नां च उच्चैष्ट्वमेवोक्तं इति तेषामपि निगदत्वं स्यात् इति चेत् कस्यचिदाशङ्का ।

**न ऋग्व्यपदेशात् । ४५ ॥**

यजुषामेव केषांचित् उच्चैष्ट्वेन गुणेन निगदत्वं स्यात् । ऋचां साम्नां च उच्चैष्ट्वेन निगदत्वं स्यात् इति यदुक्तं पूर्वपक्षिणा तन्न । 'अयाज्या वै निगदाः, ऋचैव यजन्ति' इति अयाज्यात्वेन निगदान् निन्दित्वा ऋचां व्यपदेशो विधानं कृतम् । नहि तमेव निन्दित्वा तस्यैव विधिरवकल्पते । तस्मात् न ऋचां उच्चैष्ट्वेऽपि निगदत्वप्रसङ्गः । अपादबद्धे गदतिर्वर्तते । अपादबद्धं हि वाक्यजातं गद्यमित्युच्यते । ऋक् च पादबद्धा । ततश्च निगदा नाम यजुर्विशेषा एव इति त्रिविधत्वमेव मन्त्राणाम् । **के.**

* **निगदा** नाम मन्त्राः न चतुर्थः प्रकारः, किन्तु यजुरन्तर्गता एव ते । परप्रत्ययनार्था मन्त्रा निगदाः । के. २।१।१३।३८–४५. * निगदा यजुर्भेदा एव । ते च 'अग्नीदग्नीन् विहर' इत्यादयः परसंबोधनरूपाः । **बाल.** पृ. ५८. * निगदाः याजुषाः । **वि.** २।१।१३. * 'अयाज्या एव **निगदाः** ऋचैव यजतीति हि । निषिद्धमपि याज्यात्वं प्रशंसार्थमिहोदितम् ॥' **वा.** ३।२।५।१२ पृ. ७६२. * यानि च यजूंषि उच्चैरुच्चार्यन्ते ते निगदाः । निशब्दः प्रकर्षस्य वक्ता गदतिर्गदनार्थः पाठवचनः । **भा.** २।१।१३।४२. * **निगदानां** उच्चैष्ट्वं धर्मः । **वि.** २।१।१३. * **निगदेषु** उपांशुत्वं उच्चैष्ट्वेन बाध्यते । **बाल.** पृ. १३२.

* **निगदाधिकरणम् ।** गदतेः अपादबद्धाक्षरसमूहवाचकत्वात् निशब्दस्य च प्रकर्षवाचित्वात् उपांशुत्वाभावमात्रस्यैव प्रकर्षत्वात् अवयवयोगेन उपांशुत्वभिन्नस्वरप्रयुक्तापादबद्धमन्त्राक्षरत्वं निगदपदशक्यताऽवच्छेदकम् । अतो न ऋचि अतिव्याप्तिः । अतो न रूढत्वेन ज्योतिरादिपदवत् भेदकत्वं संज्ञायाः (निगद इति) । वस्तुतस्तु निगदत्वस्य अखण्डोपाधिरूपस्य यजुष्ट्वावान्तरव्याप्यस्यैव निगदपदशक्यताऽवच्छेदकत्वेन कल्प्यत्वात् मनुष्यब्राह्मणसंज्ञयोरिव व्याप्यव्यापकभावेन निगदयजुःसंज्ञयोः एकस्मिन्नप्युपपत्तेः न भेदकत्वापत्तिः । प्रयोजनं वाचःस्तोमे 'सर्वा ऋचः सर्वाणि यजूंषि सर्वाणि सामानि पारिप्लवं शंसति' इति विहिते शंसने निगदानां यजुष्ट्वेन शंसनम् । **कौ.** २।१।१४।४६.

**निगदाधिकरणम् ।** निगदा नाम मन्त्राः यजुर्विशेष एव उच्चैष्ट्वधर्मवन्तः ॥

**निगदो वा चतुर्थं स्याद्, धर्मविशेषात् । २।१।१३।३८॥**

**भाष्यम्**— निगदा न यजूंषि । कुतः ? धर्मविशेषात् । 'उच्चैर्ऋचा क्रियते, उच्चैः साम्ना, उपांशु यजुषा, उच्चैर्निगदेन' इत्येष धर्मविशेषः। उच्चैर्निगदेन इत्यनूद्यते । यदि यजुषो निगदत्वं स्यात्, न च तस्योच्चैस्त्वं धर्मो दृश्येत । दृश्यते तु । तस्माच्चतुर्थं मन्त्रजातं निगदो नाम ।

**वा**— शेषे यजुःशब्दः इत्येतद्व्यावर्तनार्थो वाशब्दः । चतुर्थं मन्त्रजातं निगदः स्यात्, धर्मान्यत्वात् । यदि तावत् 'उच्चैर्निगदेन' इति विधिः, ततो यजुर्धर्मबाधो मा भूदित्यर्थान्तरत्वम् । अथानुवादः स नैव प्राप्नोति व्यतिरेकेण विनेति भेदः ।

**व्यपदेशाच्च । ३९ ॥**

**भाष्यम्**— व्यपदेशोऽपि भवति, यजूंषि वर्तन्ते, न निगदाः, निगदा वर्तन्ते, न यजूंषीति । तस्मादपि मन्त्रान्तरम् ।

**यजूंषि वा, तद्रूपत्वात् । ४० ॥**

**भाष्यम्**—यजूंष्येव निगदाः । कुतः ? तद्रूपत्वात् । तदेवैषां रूपम्, यद् यजुषाम्, प्रश्लिष्टपाठ ऋक्सामलक्षणविलक्षणता च ।

**वा**— 'अहे बुध्निय मन्त्रं मे गोपाय' इति त्रिष्वेव मन्त्रत्वस्योपसंहारात्, वेदे च मन्त्रसामानाधिकरण्येन निगदशब्दप्रयोगात्, यजुष्ट्वापरित्यागेनैव च धर्मविशेषव्यपदेशभेदसिद्धेः, परिशेषसिद्धयजुर्लक्षणयोगाच्च यजूंष्येव निगदाः ।

**वचनाद्धर्मविशेषः । ४१ ॥**

**भाष्यम्**— वचनात् प्रत्यायनसामर्थ्यात् । अस्ति हि पुरुषान्तरप्रत्यायनसामर्थ्यं केषांचिद् यजुषाम् ।

**वा**— न्यायप्राप्तोच्चैर्धर्मानुवादत्वज्ञानात् न विधानादिति व्याख्यातम् । यं तु एते अर्थं वदन्ति तमुपांशुत्वेन शक्नुयुर्वक्तुमिति वचनादित्युच्यते ।

**अर्थाच्च । ४२ ॥**

**भाष्यम्**— अस्ति च तैः पुरुषान्तरैः प्रत्यायितैः प्रयोजनम् । नोपांशूच्चार्यमाणाः पुरुषान्तरं प्रत्याययेयुः । तस्मात् धर्मविशेषोऽर्थवान् । यानि च यजूंषि उच्चैरुच्चार्यन्ते, ते निगदाः । कुतः ? निशब्दः प्रकर्षस्य वक्ता । यथा प्रकर्षेण रक्तं नितरां रक्तमित्युच्यते । गदतिर्गदनार्थः पाठवचनः । एष एव हि प्रकर्षः, यदुच्चैस्त्वावच्छिन्नत्वम् । ननु वाचनिको गुणो यजुषामुपांशुत्वम् । नेति ब्रूमः । गुणो नाम स भवति, यः स्वकार्यं कुर्वतामुपकारे वर्तते । न च परसंबोधनार्थानां यजुषामुपांशुत्वं साहाय्ये वर्तते । तद्धि स्वकर्मक्रियाविघातं करोति । तेन पुरुषान्तरसंबोधनार्थमुच्चैस्त्वं गुणः । इतरार्थं तु वचनं भविष्यति । इतराणि यानि यजूंषि न परसंबोधनार्थानि, तेषु उपांशुत्वं निवेक्ष्यते ।

**वा**— अस्ति च 'अग्नीत् अग्नीन् विहर' इत्यादिवचनेन अर्थः अन्यथा अनुष्ठानानुपपत्तेरिति धर्मविशेषप्राप्तिः । तथा च निगदशब्दावयवव्युत्पत्तिसिद्धिः । वाचनिकमपि च उपांशुत्वमनुपकारत्वेन अनङ्गत्वात् निगदव्यतिरिक्तयजुर्विषयं विज्ञायते ।

**गुणार्थो व्यपदेशः । ४३ ॥**

**भाष्यम्**— अथ यदुक्तं व्यपदेश इति, स चैकत्वेऽपि गुणतो भवति । यथा, 'इतो ब्राह्मणा भोज्यन्ताम्, इतः परिव्राजकाः' इति । एवमुच्चैस्त्वेन गुणेन तान्येव यजूंषि व्यपदिश्यन्ते निगदा इति ।

**वा**— ब्राह्मणपरिव्राजकवत् गुणेन व्यपदेशभेदः ।

**सर्वेषामिति चेत् । ४४ ॥**

**भाष्यम्**— यदि य उच्चैर्गद्यते स निगदः, ऋगपि निगदः प्राप्नोति ।

**वा**— अतिप्रसङ्गद्वारेण गुणस्य व्यपदेशनिमित्ततां व्यभिचारयति ।

**न, ऋग्व्यपदेशात् । ४५ ॥**

**भाष्यम्**— न ऋचो निगदा इति व्यपदिश्यन्ते । 'अयाज्या वै निगदा ऋचैव यजन्ति' इति पृथक्त्वनिमित्ता हि व्यपदेशा भवन्ति । उच्यते । व्यपदेशो लिङ्गम्, प्राप्तिरुच्यतामिति । अपादबद्धे गदतिर्वर्तते, अपादबद्धो हि गद्य इत्युच्यते ।

**वा**— न तावदतिप्रसङ्गोऽस्ति, निगदं निन्दित्वा ऋचो विधानात् । नहि तमेव निन्दित्वा तस्यैव विधिरवकल्पते । न च व्यभिचारित्वम् । गदतिवशेन यजुष्ट्वे सति धर्मविशेषस्य व्यपदेशभेदनिमित्तत्वात् ।

**सोम**— प्रयोजनं तु यजुष्ट्वे यजुर्भ्रेषप्रायश्चित्तम् 'सर्वाणि यजूंषि' इति वाचःस्तोमे पारिप्लवशंसने विनियोगश्च । यजुर्भेदे तु न तदुभयमिति । **सूत्रार्थस्तु**— निगदश्चतुर्थं मन्त्रजातं स्यादेव उच्चैस्त्वरूपधर्मविशेषात् इति ।

**वि**— 'प्रोक्षणीरासादयेति निगदस्त्रिविधाद् बहिः । यजुर्वोच्चैस्त्वधर्मस्य भेदादस्य चतुर्थता ॥, परप्रत्यायनार्थत्वादुच्चैस्त्वं यजुरेव सः । तल्लक्षणेन युक्तत्वात् त्रैविध्यमिति सुस्थितम् ॥'

**भाट्ट**— निगदसंज्ञकानां मन्त्राणां संज्ञाभेदात् 'उपांशु यजुषा । उच्चैर्निगदेन' इति विप्रतिषिद्धधर्मभेदाच्च भेदो यजुर्भ्यः । **इति प्राप्ते**, 'ऋचः सामानि यजूंषि' इति वेदे त्रयाणामेव मन्त्रभेदानां संकीर्तनात् 'मन्त्र एव खल्वयं निगदभूतो भवति तस्माद्यजुः' ( षब्रा. १–२ ) इति च लिङ्गात् निगदानां यजुष्ट्वमेव । संज्ञा तु ब्राह्मणपरिव्राजकन्यायेन अभेदेऽप्युपपन्ना । निगदत्वं च यजुष्ट्वावान्तरधर्मः । न तु नितरामुपांशुस्वरातिरिक्तस्वरेण गद्यमानत्वम् । 'नमः प्रवक्त्रे' इत्यादिनिगदेषु उपांशु पठ्यमानेष्वव्याप्तेः । न च धर्मभेदात् भेदः, विशेषविहितेन उच्चैस्त्वेन सामान्यविहितस्य उपांशुत्वस्य अन्यपरत्वावसायात् । 'उपांशु यजुषा' इत्यस्य वेदोपक्रमानुरोधेन यजुर्वेदविहितकर्ममात्रे उपांशुत्वविधायकत्वस्य वक्ष्यमाणत्वेन भवन्मतेऽपि संकोचस्यावश्यकत्वाच्च । न चैवमुपक्रमवशेन यजुःपदे वेदलक्षणावत् निगदपदेऽपि यजुर्वेदलक्षणापत्तेः एकस्मिन् कर्मणि धर्मद्वयविकल्पापत्तिः, 'वायोर्यजुर्वेदः' इत्युपक्रमस्य यजुःपदे एव लक्षणातात्पर्यग्राहकत्वात् । अन्यथा 'वायोर्निगदवेदः' इत्यपि किं नावक्ष्यत् । अतश्च 'उच्चैर्निगदेन' इति स्वतन्त्र एव निरर्थवादकोऽयमुच्चैस्त्वनियमविधिः विशेष-

एवान्वयः । ६।३।१ पृ. २५०, * निमित्तस्य विनियोगान्वयित्वं यावज्जीवाधिकरणे स्थापितम् । ६।५।१ पृ. २८४. * यत्संबन्धाच्च प्राक् निमित्तत्वमेव नोपजायते, भवति तत् **निमित्तस्यापि** विशेषणम्, यथा आर्त्यधिकरणे वक्ष्यते– मृष्यामहे हविषा विशेषणं इति । **वा.** २।३।१।१ पृ. ५७१. * **निमित्तानाम**नेकेषां युगपत् संनिपाते नैमित्तिकसाहित्यं युक्तम् । यथा– युगपत् अनेकचण्डालादिस्पर्शादौ नैमित्तिकस्य तन्त्रेण सकृदनुष्ठानम्, यथा वा युगपदनेकगृहदाहादौ । **भाट्ट.** ५।२।२, * निमित्तानां सर्वेषां ज्ञातानामेव नैमित्तिकप्रयोजकत्वं विज्ञानेश्वरादिभिः निरूपितम् । **समयमयूखः.** * **निमित्ते** प्राप्ते नैमित्तिकं कर्तव्यं भवति । **भा.** ६।४।४।१०,१२. * न च शक्यं **निमित्ते** सति नैमित्तिकेन न भवितुम् । **भा.** ३।२।१।१ पृ. ७४६.

**निमित्तानन्तरमेव नैमित्तिकमिति न्यायः ।** ( स्पष्टोऽर्थः ) । **साहस्री.** ५६८.

* **निमित्तानुरोधेन** अग्निहोत्रादिकर्मणां आवृत्तिः । **भा.** ६।२।८।२७–२८.

* **निमित्तापनये** तन्नाम अपनीयते यदपनेतुं शक्यते अन्यत्र च योजयितुम् । **वा.** ३।५।१८।४६.

* **निमित्तापाये** नैमित्तिकस्याप्यपायः । अकृतव्यूहाः पाणिनीयाः इति परिभाषायाः कैयटमतेन तात्पर्यमिदम् । लोकन्यायसिद्धश्चायमर्थः । तथाहि, लोके निमित्तं द्विविधं दृष्टम्, कार्यस्थितौ नियामकं तदनियामकं च । आद्यं यथा न्यायनये अपेक्षाबुद्धिः, तन्नाशे द्वित्वनाशाभ्युपगमात् । वेदान्तिनये प्रारब्धस्य विक्षेपस्थितिनियामकत्वं च प्रसिद्धमेव । द्वितीयं यथा, दण्डादि । तन्नाशेऽपि घटनाशादर्शनात् । शास्त्रे लक्ष्यानुरोधात् व्यवस्था । **प. शेखर.** पृ. २२७.

**निमित्तापाये नैमित्तिकस्याप्यपायः इति न्यायः ।** ( निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायः ) । यथा— 'चिद्धीदं सर्वम्, सद्धीदं सर्वम्, सर्वं खल्विदं ब्रह्म, ब्रह्मैवेदं सर्वम्' इत्यादिश्रुतिभिः 'हरिरेव जगज्जगदेव हरिर्हरितोऽपि जगन्नहि भिन्नतनुः' इत्याद्याप्तोक्तिभिश्च इदं सर्वं ब्रह्मैव, ब्रह्मकार्यत्वात् । मृत्कार्यभूतो घटो मृद्यथा । इदं सर्वं ब्रह्मैव ब्रह्मण्यारोपितत्वात्, शुक्तिरजतवदित्यादियुक्तिभिर्मृदादिदृष्टान्तैश्च सम्यग्विचार्यमाणे सर्वं ब्रह्मैवास्तीत्येवं श्रुतिस्मृतियुक्तिदृष्टान्तानुभवैर्जगतो ब्रह्ममात्रत्वे सिद्धे जगतः कार्यत्वं निवृत्तम् । तन्निवृत्त्या ब्रह्मणोऽपि निमित्तापायेति न्यायेन कारणत्वं निवृत्तमेव भवतीति कश्चिद्वादी । **साहस्री.** ५३०.

* निमित्तापाये नैमित्तिकस्याप्यपायः । यथा ज्योतिष्टोमे रथंतरपृष्ठत्वे उपवती प्रतिपत्, बृहत्पृष्ठत्वे च अग्रियवती प्रतिपत् । गोसवसंसवयोस्तु पृष्ठं उभाभ्यामेव निष्पद्यते तत्र उपवत्यग्रियवत्योरुभयोरप्यपायः । **के.** १०।५।१६। ५९–६१.

**निमित्ताभावान्नैमित्तिकस्याप्यभावः इति न्यायेन** आत्मतत्त्वज्ञानवतो न कर्मविधिप्रतिपत्तिः । **उप.साहस्री.** पद्य. १।१७ रामतीर्थः, * ननु न मोक्षार्थिनः ज्ञानेन प्रयोजनमस्ति, कृतकर्मणां संसारनिमित्तानां फलभोगानन्तरनाशे सति 'निमित्ता० भावः' **इति न्यायात्** अयत्नलभ्यत्वान्मोक्षस्य । पद्य. १।५ रामतीर्थः.

* **निमित्ताक्षिप्त**—प्रत्यवायजनकाकरणप्रतियोगित्वं प्रधाने एव, न तु साङ्गे । **भाट्ट.** ६।३।१ पृ. २५०.

* **निमित्तानुपूर्व्याच्च** नैमित्तिकानुपूर्व्ये क्रमानुरोधः । **भा.** ३।५।१३।३९.

* **निमित्तावृत्तौ** क्रत्वर्थानां नैमित्तिकानामावृत्तिः । **भा.** ६।२।९।२९, * **निमित्तावृत्तौ** गुर्वनुगमनादीनामावृत्तिः । ६।२।१०।३०. * **निमित्तावृत्तौ** नैमित्तिकस्याप्यावृत्तिः । यथा– यावज्जीवाग्निहोत्रे, यावज्जीवदर्शपूर्णमासयोश्च, 'भिन्ने जुहोति' 'स्कन्ने जुहोति' इत्यादौ च । **वि.** ६।२।८–९. * **निमित्तजन्यदोष**नाशफलसंवलितपुरुषार्थाधिकारविधिः प्रत्यक्षविधिर्द्विविधः विहितातिक्रमनिमित्तकः निषिद्धाचरणनिमित्तकश्चेति । तत्राद्यो यथा 'योऽमावास्यां पौर्णमासीं वाऽतिपातयेत् अग्नये पथिकृते अष्टाकपालं निर्वपेत्' इत्यादि । निषिद्धाचरणनिमित्तको यथा 'यद्येकं यूपमुपस्पृशेत् एष ते वायो इति ब्रूयात्' इत्यादिः । **बाल.** पृ. १४, * निमित्त-

जन्यदोषनाशेतरफलसंवलितपुरुषार्थाधिकारविधिः 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इत्यारभ्य 'यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव तेजस्वी' इत्याद्यन्तः जातेष्टिविधिः। पृ. १५.

* **निमित्ततः** वाचनिको व्यवस्थितविकल्पो यथा 'दन्तजाते एकाहः, अनुजातं अपत्यं यस्मात्तादृशे त्र्यहः, कृतचूडे चतुरहः, उपनीते दशाहः' इति विरोधाधिकरणे वार्तिककृतोक्तः। **बाल.** पृ. १६०, * निमित्ततः वाचनिको व्यवस्थितविकल्पो यथा 'दशाहं शावमाशौचं सपिण्डेषु विधीयते। अर्वाक् संचयनादस्थ्नां त्र्यहमेकाहमेव वा॥' पृ. १६०, * निमित्ततः वाचनिकी व्यवस्था यथा 'यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्' इति। स्मार्तेऽपि 'नृणामकृतचूडानामशुद्धिर्नैशिकी स्मृता। निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते॥' इति मनुः। पृ. १९, * निमित्ततः विशेषग्रहणं वैश्यनिमित्तकसप्तदश्येन नित्यपाञ्चदश्यस्य प्रसङ्गसिद्धौ। पृ. १४७, * निमित्ततः व्यवस्थारूपः प्रतिषेधो यथा 'स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके' इति। पृ. ३५.

* यच्च यत् प्रतीत्य उपजायते तत्र तस्य **निमित्तत्वं** इत्यवधार्यते। **वा.** २।१।१।५ पृ. ३९२.

* **निमित्तत्वकारक**त्वाभावेऽपि अनुष्ठापकत्वसत्त्वात् भावनाऽन्वयः। **मणि.** पृ. ११३.

* **निमित्तत्वप्रयोजकत्वयोः** सिद्धसाध्यरूपता। निमित्तत्वं सिद्धं प्रयोजकत्वं साध्यम्। यस्मिन् विद्यमाने सति क्रियते, तन्निमित्तम्। यस्य सिद्ध्यर्थं क्रियते, तत् प्रयोजकम्। **वि.** ९।१।१ वर्णकं ३.

* प्राक् सिद्धिं विना **निमित्तत्वायोगात्**। **सु.** पृ. ९५६.

𝕏 **निमित्तनैमित्तिकावृत्तिन्यायः**। 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' यावच्छब्दः सामस्त्यं वदन् निमित्तत्वपक्षे पतितः 'निमित्त० न्यायेन' जीवनगतसामस्त्यस्य नैमित्तिकसंबन्धित्वेन प्राप्तत्वात् स्वार्थानुवादको भवति। **कौ.** २।४।१।२ पृ. १०२.

* **निमित्तनैमित्तिकभावस्तु** अनादित्वेऽपि शब्दार्थयोरिव इह (संबन्धेऽपि) अविरुद्धः। **वा.** ३।३।६।१३.

* **निमित्तफलयो**रेकत्रासंभवात्। कथमेकत्रासंभवः? निमित्तफलयोरनुपादेयत्वात् ते प्रतिकर्म उपादीयेते। तत्र अन्यतरोपादाने कृतार्थत्वात् एकं प्रति उपादीयते। उभयोपादाने वाक्यभेदः। निमित्तस्य श्रुतत्वात् तत्प्रति उपादीयते। **वा.** ६।३।१।२ पृ. १४०८.

* **निमित्तभावश्च** नैव वचनात् भविष्यतीति। यद्धि येन प्रयुज्यते, भवति तत् तस्य निमित्तम्, यथा आरामपोषकस्य आरामो वेतनदाने प्रयोजको निमित्तं च। आरामे सति तस्मै वेतनं दीयते वेतनेन समर्थो भवति आरामं रक्षितुम्। **भा.** ९।१।१।१ वर्णकं २.

* **निमित्तभेदाच्च** नैमित्तिकभेदसिद्धिः। **वा.** ३।७।९।२४.

* **निमित्तरूपोद्देश्य**विशेषणस्यापि ईप्सितोद्देशविशेषणस्येव ग्रहैकत्वाधिकरणन्यायेन अविवक्षा। **भाट्ट.** ६।४।६.

* **निमित्तविधिः** मन्त्रः नास्त्येव। **बाल.** पृ. ६५.

* **निमित्तविधिसरूपः** अर्थवादः 'यां वा अध्वर्युश्च यजमानश्च देवतामन्तरितः तस्या आवृश्च्यते यत् प्राजापत्यं दधिग्रहं गृह्णाति शमयत्येवैनाम्'। **बाल.** पृ. ५५.

* 'पञ्चदश सामिधेनीरनुब्रूयात्' 'सप्तदश वैश्यस्य' इति उभयत्रापि सामानाधिकरण्यादेकवाक्यत्वे कृते विनियोगे सति **निमित्तविशेषसंयोगात्** साप्तदश्यं बलीयो भवति। **वा.** ३।३।७।१४ पृ. ८४०.

* **निमित्तविशेषण**मविवक्षितम् 'यस्योभयं हविरार्तिमार्च्छेत्' इत्यत्रैव उभयत्वम्। **आचारमयूखः.** पृ. ५८. * निमित्तविशेषणमविवक्षितम्, यथा अभ्युदयेष्टौ 'निरुप्तं हविरभ्युदेति' इत्यनेन निरुप्तहविर्विशिष्टचन्द्रोदयो निमित्तमुक्तम्, तत्र निर्वापो विशेषणम्, तदविवक्षितम्, निर्वापात् प्रागपि चन्द्रोदये सति अभ्युदयेष्टिः कर्तव्या भवति। यथा वा– 'यस्य सर्वाणि हवींषि नश्येयुः... आज्येन... यजेत' अत्र सर्वत्वं अविवक्षितम्, अवत्तमात्रस्य नाशेऽपि आज्यम्। **के.** ६।४।१,६।५।३ (विस्तरे द्रष्टव्यम्). * **निमित्तविशेषणाना**मविवक्षा

इति हविरार्त्यधिकरणे ( ६।४।९।२८-२९ ) सिद्धम् । चू. ६।५।३।१३.

* **निमित्तसंपातो** यत्र भवति तत्र किं अन्यनिमित्तको भक्षः समुच्चीयते अथ विकल्प्यते अथवा बाध्यते इति विचारः । समुच्चयः सिद्धान्तः । **वा.** ३।५।१२।३३.

* **निमित्तसंयोगो** विशेषः प्रकरणं सामान्यम् । विशेषविधिना चाविशेषविधिर्बाध्यते । **भा.** ३।६।३।१०.

* **निमित्तसूत्रम्** । प्रथमपादार्थप्रतिज्ञा 'तस्य निमित्तपरीष्टिः'(१।१।३।३) इति सूत्रेण क्रियते । ग्रन्थकारपक्षे तु (शा.) निमित्तसूत्रस्य नातीव प्रयोजनम् । **सोम.** १।२।१ पृ. २. * येन विना निमित्तप्रतीतिर्न पर्यवस्यति तदेव **निमित्तस्वरूपान्तर्गतम्**, इतरत्तु प्रथमावगतमपि अनपेक्षितत्वात् अविवक्षितम् । **सोम.** ६।४।६ पृ. ४८५.

**निम्नगाप्रवाहन्यायः** । अन्यत्र प्रवृत्तस्य जन्मान्तरीयध्यानादिरूपचित्तप्रवाहस्य निम्नगाप्रवाहन्यायेन अन्यत्र नयने अतिक्लेशः । **संग्रहः.**

* निम्नगाप्रवाहन्यायः । यथा नदीप्रवाहपतिताः कीटाद्या आवर्तादावर्तान्तरमाशु व्रजन्तः शर्म न लभन्ते, तथा जन्मतो जन्म व्रजन्तो जीवाः स्वकर्मभ्रान्ताः सुखं नैव लभन्ते । उक्तं च पञ्चदश्याम् 'कुर्वते कर्म भोगाय कर्म कर्तुं च भुञ्जते । नद्यां कीटा इवावर्तादावर्तान्तरमाशु ते ।। व्रजन्तो जन्मनो जन्म लभन्ते नैव निर्वृतिम् । सत्कर्मपरिपाकान्ते करुणानिधिनोद्धृताः । प्राप्य तीरतरुच्छायां विश्राम्यन्ति यथासुखम् ।।' इति । **साहस्री.** १५१.

* **निम्बत्वक्** चन्दनगन्धस्यैव अभिव्यञ्जिका, न तु गन्धान्तराणाम् । **कु.** १।१।६।१३.

* **नियतनिमित्तकं** नैमित्तिकं वैदिकं कर्म, यथा 'यावज्जीवमग्निहोत्रं जुहोति' 'वसन्तेवसन्ते ज्योतिषा यजेत' । **बाल.** पृ. ८५, * **नियतनिमित्तकः** नैमित्तिकपुरुषार्थाधिकारविधिः 'यावज्जीवमग्निहोत्रं जुहुयात्' इति । पृ. १४.

* **नियतपदक्रमा** हि मन्त्रा भवन्ति । **भा.** १।२।४। ३१-२.

* **नियमोऽपि** ( यावज्जीविकाभ्यासरूपः ) न कर्मधर्मः, कर्तृधर्मोऽसौ इत्युक्तम् 'कर्तुर्वा श्रुतिसंयोगात्' इति ( २।४।१।२ ) । **भा.** ८।१।१३।२१, * नियमः कर्तव्यतयोपदिश्यते । यश्च कर्तव्यः स कल्याणोदयः । यो न कर्तव्यः स पापोदयः । ६।२।५।२०.

**नियमस्तु दक्षिणाभिः श्रुतिसंयोगात्** ( वि. ३।७।१७ ) **इति न्यायः** । ऋत्विग्वाक्येन शुद्धवरणविधौ ऋत्विक्पदानर्थक्यापत्तेः एकेनैव च वरीतव्येन नैराकाङ्क्ष्यात् विकल्पेन अध्वर्य्वादिवाक्यानां वरीतव्यसमर्पकत्वापत्तेः ऋत्विग्विशिष्टविधौ तु 'नियमस्तु' इति न्यायेन अध्वर्य्वादीनामेव ऋत्विक्त्वावधारणात् वरीतव्यविशेषज्ञानसिद्धेः । **सु.** ३।७ पृ. २३.

**नियमस्तु दक्षिणाभिः श्रुतिसंयोगात् । ३।७।१७।३६ ॥**

ज्योतिष्टोमे ऋत्विजः सप्तदश इति समधिगतं प्राक् । इदानीं कतमे ते सप्तदश इति चिन्त्यते । सप्तविंशतौ येकेचित् सप्तदश इति उत्सूत्रस्य पूर्वपक्षस्य निरासार्थः तुशब्दः । न अनियमः किन्तु नियम एव । स तु दक्षिणाभिः सह श्रुतीनां अग्नीदादिशब्दानां संयोगात् सामानाधिकरण्यरूपात् संबन्धात् अवगन्तव्यः । 'द्वादशशतं दक्षिणा' इति प्रस्तुत्य 'ऋत्विग्भ्यो दक्षिणां ददाति, प्रथममग्नीधे ददाति, ततो ब्रह्मणे, ततो होत्रे' इत्यादिना 'प्रतिहर्त्रे अन्ततः' इति दक्षिणावाक्ये 'ऋत्विग्भ्यः' इत्यनेन अग्नीधे ब्रह्मणे, इत्यादीनां सामानाधिकरण्यं श्रूयते । तेन चमसाध्वर्युवर्जिताः सप्तदशैव दक्षिणाभिः संबद्धाः श्रुताः । तस्मात् ते एव सप्तदश ऋत्विजो नाम ।

**उक्त्वा च यजमानत्वं तेषां दीक्षाविधानात् । ३७ ॥**

सिद्धान्ते हेत्वन्तरप्रतिपादनार्थं सूत्रम् । सत्रे 'ये ऋत्विजस्ते यजमानाः' इति ऋत्विजामेव यजमानत्वमुक्त्वा तेषाम् 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारम्, ततो होतारम्, ततस्तं प्रतिप्रस्थाता दीक्षयित्वा अर्धिनो दीक्षयति, ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारमुद्गातुः, मैत्रावरुणं होतुः । ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति, अग्नीधं ब्रह्मणः, प्रतिहर्तारमुद्गातुः, अच्छावाकं होतुः । ततस्तमुन्नेता दीक्षयित्वा

पादिनो दीक्षयति, पोतारं ब्रह्मणः, सुब्रह्मण्यमुद्गातुः, ग्रावस्तुतं होतुः । ततस्तमन्यो ब्राह्मणो दीक्षयति ब्रह्मचारी वा आचार्यप्रेषितः' इति वाक्येन दीक्षायाः विधानात् तेषामेव ऋत्विक्त्वमवगम्यते । तस्मात् चमसाध्वर्युवर्जिता ब्रह्मादयः ऋत्विजः सप्तदशैव । चकारो हेत्वन्तरसमुच्चयार्थः । **के.**

* **नियमः** दर्शपूर्णमासतन्त्रगतदेवतान्यतमदेवतायाः उपांशुयाजे । **भा.** १०।८।१६।४९–५०. * 'नियमः परिसंख्या वा न व्यावर्त्याद् विनेष्यते । नित्यतामात्रकारी तु नियमः किं न लभ्यते ॥' **वा.** १।३।८।२७ पृ. २८२.

**नियमो बहुदेवते, विकारः स्यात् । ९।३। १३।४२॥**

'स एतान् पशून् आदित्येभ्यः कामायालभते' 'वैश्वदेवं धूम्रमालभेत' इत्यादयो बहुदेवत्याः पशवः । अग्नीषोमीये प्रकृतिपशौ अध्रिगुप्रैषे मेधपतिशब्दः एकवचनान्तो द्विवचनान्तश्च 'मेधपतिभ्यां मेधम्' 'मेधपतये मेधम्' इति । तौ च बहुदेवतेऽपि चोदकेन प्राप्तौ । तत्र किं द्विवचनान्तः ( 'मेधपतिभ्यो मेधम्' इति ) बहुवचनान्तत्वेन ऊहितव्यः एकवचनान्तस्तु निवर्तते, किंवा उभावपि विकल्पेन निविशेते इति विचारे पूर्वपक्षमाह । बहुदेवते पशौ द्विवचनान्तस्यैव अतिदेशः इति नियमः । तत्र च विकारः बहुवचनान्तत्वेन ऊहः स्यात् इति ।

**विकल्पो वा, प्रकृतिवत् । ४३ ॥**

पूर्वपक्षं वाशब्देन व्यावर्तयन् सिद्धान्तमाह । सत्यं द्विवचनान्तो मेधपतिशब्दः ऊहितव्यः । एकवचनान्तस्यापि तु प्रकृतिवत् प्रकृतौ इव विकल्पः स्यात्, सोऽपि विकल्पेन प्रवर्तेत । गणाभिप्रायेण एकवचनं न विरुध्यते । तस्मात् द्वावपि विकल्पेन प्रवर्तेते इति सिद्धान्तः । **के.**

* नियमः वैदिकस्य वैदिकमेव निमित्तं इति । अस्य क्षामवत्यादौ व्यभिचारः । **पराक्रमः.** २२।२. * **नियमाश्च** मानसं कर्म । **भा.** १०।२।१८।४९. * **नियमेन** उपसंहार्यस्य उपसंहारविषये प्राप्तौ उपसंहारः विधिः । बाल, पृ. १७, * नियमेन तत्र चान्यत्र च प्राप्तौ परिसंख्याविधिः 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' । पृ. २६. * **नियमस्य** अन्याश्रितस्य अन्यार्थत्वे 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इत्युदाहरणम् । **सु. पृ.** ३२१. * नियमस्य अभिप्रवृत्तस्योत्सर्गे आचारविरोधः स्यात् । **भा.** ११।३।६।१४, * नियमस्य यावज्जीविकत्वस्य दार्शपौर्णमासिकस्य सौर्यादौ नातिदेशः । ८।१।१३।२०–२२.

* **नियमांशो** अपूर्वे अवघातस्य, स्वयं तु दृष्टफलकत्वान्नापूर्वजनकता । **वि.** २।१।३.

* **नियमादृष्टम्** । 'दृष्टे सत्यपि सर्वत्र नियमादृष्टमिष्यते । क्रत्वर्थे पुरुषार्थे च तत्संयोगपृथक्त्वतः ॥' **वा.** १।३।८।२७ पृ. २८३.

* **नियमादृष्टार्थेन** अत्यन्तादृष्टार्थे बाध्यते, अप्राप्तबाधः । **वा.** ३।३।७।१४ पृ. ८६०.

* **नियमापूर्वं** क्रियाकृतं न भवति । **वा.** २।१।१।१ पृ. ३७१. * नियमापूर्वम् । नियमस्य दृष्टफलकत्वाभावात् तज्जन्यमपूर्वमेव कल्पनीयम् । अवघातनियमजन्यं यथा । **के.** २।१।३.

* **नियमार्थः** एष वादः 'यदाहवनीये जुहोति' इति । अन्तरेणापि च वचनं आहवनीये होमः अन्यत्र च प्राप्तः । तदेतत् नियमशासनम् । **भा.** १२।२।१।३. * नियमार्थः क्वचिद्विधिः (६।३।४।१६) । 'सकलसोमधर्मासंभवे विकलान् सोमधर्मानुत्पादयेत् पूतीकगतान्' इति । वक्ष्यति हि 'नियमार्थ०' इति । **वा.** ३।६।१५।४०. * नियमार्थः तृतीयसवने व्याघारणे आज्यविधिः । **संकर्ष.** ३।२।१८. * अप्राप्तो विधीयमानो **न नियमार्थो** भवति । **वा.** ६।३।४।१६. * **नियमार्थाः** कर्तृदेशकालविषयः । **भा.** ४।२।९।२३–२४.

**नियमार्था गुणश्रुतिः । ३।६।१५।४०॥**

अग्निष्टोमे 'यदि सोमं न विन्देत पूतीकानभिषुणुयात्' इति सोमस्य प्रतिनिधिः पूतीको नाम साक्षात् श्रुत एव । स पूतीकः किं सोमेन समानविधानो न वेति विचारे नेति पूर्वपक्षे उत्सूत्रे प्राप्ते सिद्धान्तसूत्रमिदम् । गुणस्य यागगुणस्य पूतीकस्य श्रुतिः नियमार्था । सोमाभावे सोमसदृशे अनेकस्मिन् द्रव्ये प्राप्ते पूतीकस्य

नियमः कृतः, पूतीक एव सोमसदृशो ग्राह्यो नान्य इति। स च पूतीकः सोमत्वेनैव प्रतिनिधीयते न यागद्रव्यत्वेन। तस्मात् सोमेन समानविधानः पूतीकः। सर्वे सोमधर्माः क्रयादयः चोदकेन विनैव आदित एव पूतीकस्य विधीयन्ते इत्यर्थः। गुणश्रुतिः इत्यत्र पुनःश्रुतिरिति कुतूहले पाठः। अर्थस्तु स एव। **के.**

* **नियमार्था श्रुतिरिति** चेन्न, श्रुतिप्राप्तानां नियमेन निवर्तयितुमशक्यत्वात्। सर्व एव तावत् नियमः अन्यव्यावृत्तिफलत्वादन्याय्यः। तथापि तु यत्र अर्थाक्षिप्तावस्थानि वस्त्वन्तराणि भवन्ति तत्र एकश्रवणवशेन इतरन्निवर्तते। **वा.** २।२।१६।२८ पृ. ५६४. * नियमार्था श्रुतिर्भविष्यति। कोऽयं नियमः? अनियतस्य नियतता। **भा.** ४।२।९।२४। यत्पक्षे विधिमन्तरेण प्राप्नोति तत् श्रूयमाणं अनियतांशे प्रविशत् नियमोऽभिधीयते। **टुप्.**

* **नियमपरिसंख्ययोः** इतरपरिवर्जनाविशेषेऽपि यत्र प्रयोगे समादेरप्राप्तिः (समे यजेत) तत्रापि प्रापणस्य शास्त्रेण अकरणे विध्याक्षेपात् प्राप्नुवतो विषमादेः वर्जनालाभेन प्रथमोपस्थितत्वात् विधेयसमादिगततया प्रत्यासन्नत्वात् भावरूपत्वेन लघुशरीरत्वाच्च अप्राप्तांशपरिपूरणमेव फलम्, विषमादिनिवृत्तिस्तु तद्वैपरीत्यात् अप्राप्तांशपरिपूरणरूपनियमानुनिष्पादित्वाच्च न फलम्, परिसंख्यायां तु उभयोरपि नित्यप्राप्तत्वेन अप्राप्तांशपरिपूरणस्य फलत्वासंभवात् इतरपरिवर्जनमेव फलम्, एवं च 'समे एव यजेत' इति एवकारेण फलविवरणं अयोगव्यवच्छेदार्थम्, न तु परिसंख्यायामिव अन्ययोगव्यवच्छेदार्थमिति नियमपरिसंख्ययोः फलभेदात् अवर्जनीयः तृतीयो विधिप्रकारः। **सोम.** ४।२।९.

* **नियमपरिसंख्याविधी** प्रायेण विनियोगविषयावेव। **मणि.** पृ. ९९.

* **नियमविधानार्था** द्रव्येषु गुणश्रुतिः। 'वायव्यं श्वेतमालभेत' 'सोमारौद्रं चरुं निर्वपेत् शुक्लानां व्रीहीणाम्' 'नैर्ऋतं चरुं निर्वपेत् कृष्णानां व्रीहीणाम्' इत्यादौ। **भा.** ४।२।१०।२५.

* **नियमविधिः** अदृष्टार्थे एव। यथा– प्रकृतौ वैकल्पिकयोः बृहद्रथंतरयोः अदृष्टार्थयोः अन्यतरस्य क्वचिद्विकृतौ नियमः श्रूयते। **बाल.** पृ. २४, * नियमविधिः अवघातादिसंस्कारविधिः। **भा.** ४।२।११।२६, * नियमविधिः कर्तृदेशकालविधिः। 'अग्निहोत्रस्य यज्ञक्रतोरेक ऋत्विक्' 'दर्शपूर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विजः' 'चातुर्मास्यानां यज्ञक्रतूनां पञ्च ऋत्विजः' 'पशुबन्धस्य यज्ञक्रतोः षड् ऋत्विजः' 'सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदश ऋत्विजः' इति। 'समे दर्शपूर्णमासाभ्यां यजेत' 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इति। 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इति। **भा.** ४।२।९।२३–२४. * नियमविधिर्द्रव्यस्य 'सोमेन यजेत' इति। **वि.** ४।२।९. * नियमविधिः। 'नियमः पाक्षिके सति' यत्र तु प्रागवचनात् पाक्षिकी प्राप्तिः संभाव्यते, तत्र अप्राप्तिपक्षं पूरयन् यो विधिः प्रवर्तते, स नियन्तृत्वात् नियम इत्युच्यते यथा 'व्रीहीनवहन्ति' इति। तण्डुलनिष्पत्त्यर्थाक्षेपादेव तत्सिद्धेर्न तत्प्राप्तिमात्रं विधेः फलम्, किं तर्हि अप्राप्तांशपूरणम्। तदप्राप्तिपक्षे च तण्डुलैरुपायान्तराणि आक्षिप्येरन्। पूरणे तु सति या तेषां निवृत्तिः असौ अर्थात् न वाक्यात् न च तद्वारणं नियमः। **वा.** १।२।३।४ पृ. १५२. * नियमविधिः प्रतिप्रसवविधिना बाध्यते। **बाल.** पृ. १४४. * नियमविधिर्बलीयान्। **पराक्रमः.** ४०।२. * नियमविधिः यथा वाजपेये 'यजुर्युक्तं रथमध्वर्यवे ददाति' अत्र अध्वर्यवे एवेति। **वि.** १०।३।२०. * नियमविधिः वाजपेयादिविकृतौ वैकल्पिकानां प्राकृतानां मध्ये अन्यतमपुनःश्रुतौ। **भा.**१०।७।१६।५१–५७. *नियमविधिः वायव्यपशौ श्वेतगुणस्य 'वायव्यं श्वेतमालभेत'। **वि.**४।२।१०. * **नियमविधिना** अपूर्वविधिर्बाध्यते। यथा 'उपांशु यजुषा' इति निगदेषु अपूर्वविधित्वापत्तेः यजुरन्तरेषु नियमविधिरेव। **बाल.** पृ.१४३, * नियमविधिना परिसंख्याविधिर्बाध्यते, यथा 'ऋतौ भार्यामुपेयात्' इति। पृ. १४३.

* **नियमविधिभेदाः** सर्वे। 'विधिरपि द्विविधः' इति बिन्दौ बालमीमांसाप्रकाशे द्रष्टव्यम्। **के.**

* **नियमविधिविवेचनं** मणिकृतम् 'विधिः त्रिविधः' इति बिन्दौ मणिग्रन्थे द्रष्टव्यम्। **के.**

* **नियमविधिसंभवे** अपूर्वविध्ययोगात् । **सोम.** ६।७।९.

* **नियमशासनं** यत्र अनियमप्रसङ्गः, तद्विषयो विज्ञायते । **भा.** १२।२।१।३.

* **नियमसंभवे** अनियमानुपपत्तिः । **सु.** पृ. ५२५.

* **नियामकं** न आनन्तर्यम् । **भा.** ३।१।१४। २४-२५.

* **नियुत्वद्वाक्यस्य** नियुत्वत्त्वगुणकवायुदेवताकश्वेतद्रव्यककर्मान्तरविधिपरत्वम् ( एतमेव सन्तं वायवे नियुत्वते आलभेत इति ) । **सोम.** १।२।१ पृ. ५.

* **नियोगः कार्याभिधायी लिङादिः ।** आचार्यादिवाक्येषु 'देवदत्त समिधमाहर' इत्यादिषु प्रवर्तमाने देवदत्ते पार्श्वस्थ एवमवधारयति 'बुद्धिपूर्विकेयमस्य प्रवृत्तिः, यच्चाहं बुद्ध्वा प्रवृत्तस्तदयमपि मदविशेषात्, अहं च न क्रियामात्रात् प्रवृत्तः, नापि फलमात्रावगमात्, नापि फलसाधनत्वावगमात्, किन्तु कार्यावगमात् । स्नानपानादिकाऽपि क्रिया यावन्मया कार्यतया नावगता, तावदहं न प्रवृत्तः । न च या श्रेयःसाधनता सैव कार्यता । श्रेयः प्रति साधनत्वमन्यत्, अन्यच्च कृतिं पुरुषप्रयत्नं प्रति प्राधान्यं साध्यत्वलक्षणं कार्यत्वम्, क्लेशात्मनस्तु कर्मणः फलसाधनत्वानुविधायिनी कार्यता, इति मन्दा न भेदं प्रतिपन्नवन्तः । तथा सुखस्य फलसाधनतां विना कार्यावगतिरस्ति, अतः फलसाधनताऽतिरिक्तकार्यबोधात् प्रवृत्तिर्मम इति देवदत्तोऽपि तदवगमादेव प्रवर्तते इति कल्पयति । तदवगमश्चास्य शब्दानन्तरं भवन् शब्दनिबन्धन एवेति कार्याभिधायितां लिङ्शब्दस्य कल्पयति । तच्च कार्यं अन्वितमभिधेयं इति स्थिते 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादिषु वाक्येषु षष्ठाद्यराद्धान्तानुसारेण स्वर्गकामपदेन नियोज्यतया स्वर्गकामः समर्पणीयः इति स्थितम् । यश्च कार्यमवबुध्यते स नियोज्यः । स्वर्गकामस्य च तस्मिन्नेव कार्ये बोद्धृतया अन्वयः, यदेव तस्य काम्यमानसाधनतामनुभवितुं क्षमते । न च क्रिया क्षणभङ्गिनी कालान्तरभाविनि फले हेतुर्भवति । तेन सा कार्यतया नियोज्येन सह नान्वीयते, यत्तु कालान्तरस्थायि कार्यम्, तदेव तेन सह अन्वयं गन्तुमर्हति, इति क्रियाऽतिरेकि मानान्तरावेद्यमेव लिङादयः कार्यमभिदधति । तच्च मानान्तरापूर्वत्वात् अपूर्वमित्युच्यते । ननु तस्यापि कार्यस्य कुतः सिद्धिः ? यागादेरिति चेत्, अनन्तरभाविता तर्हि फलस्य प्रसक्ता, क्रियाऽनन्तरभाविनस्तस्य फलहेतुत्वात् । उच्यते । अनन्तरभावित्वेऽपि तस्य न फलमनन्तरं भविष्यति, सहकारिण्यपेक्षया विलम्बनोपपत्तेः । न च सहकारिण्यपेक्षायां कारणभावहानिः । किं तत् सहकारि इति चेत्, देशकालादिकमिति ब्रूमः । न च तस्य विशेषज्ञानमन्तरेण किञ्चिद्दुष्यति । न च फलजनकतया गुणभावात् अपूर्वस्य वाक्यार्थत्वहानिः, स्वानुगुणनियोज्यलाभाय फलानुकूलताऽवलम्बनात् । यथा आत्मन एव संविदधानः स्वामी गर्भदासस्योपकरोति, तद्वदेतदपि । ततश्च अन्विताभिधाने स्थिते कार्याभिधायिता लोके नियोगस्य लिङादेरवगतेति । **ऋजु.** पृ. २८७-८८.

* **नियोगः** नियुज्यते अनेन इति व्युत्पत्त्या नियोगशब्दाभिधेयो लिङादिः । **ऋजु.** पृ. ९६. * **नियोगः** विधिः प्रेरणा शब्दभावना इत्येकोऽर्थः । **बाल.** पृ. ७५. * एकश्चायं **नियोगः** अनुबन्धभेदात् भिद्यते । **बृहती.** पृ. ९९. * न च कामाधिकारे **नियोगो** यागस्य कर्तव्यतां वदति, फलत एव कर्तव्यतासिद्धेः । **ऋजु.** पृ. २९, * यस्मिन्नर्थे पुरुषो नियुज्यते स विषयः इति नैव कर्मणि प्रेरकतया विषयिभावः । किं तर्हि ? यत्र कर्मणि पुरुषो नियुज्यते कार्यं बोध्यते इति । कार्यबोधनमेव हि पुरुषस्य नियोजनम् । एतदुक्तं भवति, कर्मणि यागादौ कार्यभूतो नियोगः प्रतीयते, न पुनः कर्मण्येव प्रेरयति । पृ. ३०. * विधवा**नियोगोऽपि** ब्रह्मचारिणोऽनुचितः । **सु.** पृ. १८५.

⌛ **'नियोगेन विकल्पेन द्वे वा सह समुच्चिते । संबन्धः समुदायो वा विशिष्टा वैकयेतरा ॥'** ( **वा.** १।३।९।३० पृ. २९३ ) **इत्यनेन न्यायेन** बहुप्रकारावचनव्यक्तीराशङ्क्य । **सु.** पृ. ७४२.

* **नियोगस्य** । प्रमाणान्तरावगम्येऽपि हि लौकिकेऽर्थे नैव नियोगस्य साध्यसाधनसिद्ध्यपेक्षा अवसीयते । **बृहती.** पृ. १५८.

* **नियोगापरपर्याय–** विधिविषयभूत– पुंस्यापारलाभात्। सु. पृ. ७९६.

* **नियोगवाक्यार्थमतोपन्यासः, तत्खण्डनं च (कणिका.)**। कार्याभिधायिता तावल्लिङादीनामवगता आचार्यवाक्येषु 'माणवक समिधमाहर' इत्यादिषु। तथाहि एतद्वाक्यश्रवणानन्तरं प्रवर्तमानं समिदाहरणे माणवकमुपलभ्य पार्श्वस्थो व्युत्पित्सुरेवमवधारयति, बुद्धिपूर्वेयं अस्य प्रवृत्तिः, स्वतन्त्रप्रवृत्तित्वात्, मदीयप्रवृत्तिवत्। यच्चाहं बुद्ध्वा प्रवृत्तस्तद्वदेवायं मदविशेषात्। अहं च न क्रियामात्रावगमात् नापि फलमात्रावगमात् नापि फलसाधनत्वावगमात्, किन्तु कार्यतावगमात्। न खल्वन्ततोऽर्भकः स्तनपानादिकामपि क्रियां कार्यतया यावन्नावगतवानस्मि न तावत् तस्यामपि प्रवृत्तः। न च या श्रेयःसाधनता सैव कार्यता, परस्परपरिहारस्थितिलक्षणविरोधाधारत्वात्। नह्यस्ति संभवः, यदेव समीहितं प्रति साधनत्वम्, तदेव कृतिं पुरुषप्रयत्नं प्रति साध्यत्वमिति। क्लेशात्मनस्तु कर्मणः फलसाधनताऽन्वयिनी कार्यता इति केचित् अभेदं प्रतीतवन्तः। तथा सुखस्य फलसाधनतां विना च कार्यताऽवगतिरस्ति। अतः फलसाधनताऽतिरिक्तकार्यताबोधात् प्रवृत्तिर्ममेति माणवकोऽपि तदवबोधादेव प्रवृत्त इति निश्चिनोति। तदवबोधश्चास्य आचार्यवचनानन्तरमुपजायमानः तन्निबन्धन एवेति कार्याभिधायितां शब्दस्य कल्पयति। तच्च कार्यमन्वितमभिधेयमिति स्थितौ सत्याम् 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यादिषु वाक्येषु षष्ठाद्यराद्धान्तानुसारेण स्वर्गकामपदेन नियोज्यतया स्वर्गकामः समर्पणीय इति स्थितम्। यश्च कार्यमवबुध्यते स नियोज्यः। स्वर्गकामश्च साध्यस्वर्गकामविशिष्टः। स च तस्मिन्नेव कार्ये नियोज्यतया अन्वेति, यदेव तस्य काम्योपायतामनुभवितुं शक्नोति। न च क्रिया क्षणभङ्गिनी कालान्तरभाविफलहेतुरिति न कार्यतया नियोज्येन सहान्वेति। यत्कालान्तरस्थायि कार्यम्, तदेव तेन सहान्वयं गन्तुमर्हतीति क्रियाऽतिरेकि मानान्तरावेद्यमेव लिङादयः कार्यमभिदधतीति। तच्च मानान्तरापूर्वतया अपूर्वमिति च कार्यतया अवगम्यमानं आत्मनि पुरुषं नियुञ्जानं नियोग इति च व्यपदिश्यते। न च क्रियाऽनन्तरं भवदपि देशकालादिसहकार्यपेक्षया अनन्तरमेव स्वर्गादि भावयति। न च फलजनकतया गुणभावादपूर्वस्य वाक्यार्थत्वहानिः, स्वानुगुणनियोज्यलाभाय फलानुकूलतावलम्बनात् स्वामिवत्। यथा आत्मन एव संविदधानः स्वामी गर्भदासस्योपकरोति, तथैतदपि। न चैवं वेदे एव व्युत्पत्तिः। लोकव्युत्पत्तेरेव वेदवाक्यानुसारेण अपूर्वपर्यन्तगमनात्। न च अनेकार्थाभिधायिता लिङादीनां न प्रतीयते। वदति हि माणवक आचार्यचोदितः प्रवर्तितः कार्यमवबोधित इति यावत्। न खल्वन्यथा चेतनः प्रवर्तयितुं शक्यते। यतस्तदेवं प्रैषादीनां लोके प्रतीतेः कार्यावबोधमन्तरेण च प्रवृत्त्यनुपपत्तेस्तद्गतस्य संबन्धग्रहः तदुपग्रहमपोह्य च वेदे पर्यवसानात्।

ननु प्रैषादयोऽप्यवगम्यन्ते लोके, तत् कथं कार्याभिधायकत्वमेव लिङादीनाम्? उपाधय एते, न तु शब्दार्थाः। ते एव चोपाधयः ये तटस्थाः प्रयोगदर्शनमात्राच्छब्दार्थे विशेषे व्यवस्थापयन्ति, यथा हरिपदाभिधेयस्य पशुत्वमुपाधिः। तथाहि। पशुत्वं तटस्थमेवाभिधानाविनिवेशादिति हरिपदार्थे इति हर्तृत्वं पशौ एव नियच्छति। एवं प्रैषादयोऽपि अभिधानाविनिवेशिन एव कार्ये विशेषे व्यवस्थापयन्ति, न पुनरभिधेया इति संबन्धग्रहणसंभवादुपपन्नं नियोगाभिधानं लिङादीनामिति। पृ. ५२–५३.

सत्यं कर्तव्यताभिधायिनो लिङादयः, कर्तव्यता तु क्रियाया एव, नापूर्वस्य, लोकाधीनावधारणत्वात् शब्दसामर्थ्यस्य। तस्या एव च कार्यतया प्रवृत्तिहेतुत्वेन स्वात्मनि मानान्तरेण विदितत्वात्। ननु अपूर्वस्य तस्य मानान्तरागोचरत्वात् कर्तव्यतामात्रविदितसंगतीनां लोके लिङादीनां स्वर्गकामपदसंबन्धात्, वेदे अपूर्वविशेषप्रतिलम्भ इति चेत्? अस्तु तावत् अस्यैव तु कर्तव्यस्य लिङाद्यर्थता, न पुनः क्रियाया अपि लौकिक्या इति कुतस्त्यम्? अनेकार्थत्वस्य अन्याय्यत्वात्। लक्षणस्यापि च कर्तव्यायां क्रियायां लौकिकस्य लिङादीनां प्रयोगस्योपपत्तेः अपूर्वकर्तव्यतानान्तरीयकत्वात्। क्रियाकर्तव्यतायाः असाधितायाः क्रियायाः तत्साधनत्वानुपपत्तेः,

लौकिकप्रयोगाविरोधात् । अपूर्वकर्तव्यतायास्तु लौकिकक्रियाकर्तव्यतानान्तरीयकत्वानुपलब्धेः वैपरीत्यानुपपत्तेः । अत्यन्तप्रयोगाभ्यासात् लाक्षणिकस्यापि वाचकत्वाभिमानात् अपूर्वाभिधाननियोगसिद्धिरिति चेत् ? ननु अनेकार्थत्वमन्याय्यं इत्येतदेव कुतः ? अनेकशक्तिकल्पनागौरवात् इति चेत् ? ननु अपूर्वमपि नैकविधप्रधानाङ्गवर्ति नानेति कथमैकार्थ्यं लिङः ? कृतिव्याप्यतायाः प्रवृत्तिनिमित्तस्य सर्वत्राविशेषात् रूपभेदेऽपि अपूर्वाणामेकशक्तिरस्या लिङः एकहायन्यादिशब्दवदिति चेत् ? हन्त भोस्तपस्विन्या क्रियया किमपराद्धम् ? यदस्यां कर्तव्यतारूपायां अभिधानाय कः पतिरिव लिङादिः शक्त्यन्तरमुत्कोचं रोचयते । शब्दसाम्येऽपि कर्तव्यताभेदात् अयमदोष इति चेत् ? न । भेदाभावात् ।

**यदि मन्येत**, यद्यपि कर्तव्यताशब्दसाम्यं तथापि कृतिं प्रति ईप्सिततमता कर्तव्यता अपूर्वस्य तदुद्देशेन पुरुषप्रयत्नस्येति कृतेः प्रवृत्तेः । सैव च लिङादिप्रवृत्तिनिमित्तम् । न चैवंरूपा क्रियाकर्तव्यता, तस्या दुःखतया तां प्रति प्रधानभावानुपपत्तेः । ओदनाऽऽद्यर्थप्रवृत्तकृतिव्याप्यतालक्षणौदनादिहेतोः तस्याः कर्तव्यता, सा तु अन्यत्वान्न शक्त्यन्तरमन्तरेण लिङादिगोचर इति । **तन्न ।** विशेषाभावात् क्रियाकर्तव्यतायाः । न खलु अपूर्वमुद्दिश्य कृतिः प्रवर्तितुमर्हति । सा हि पुरुषप्रयत्नः । स च इच्छानुशयीति तदेवोद्दिश्येत । यदिच्छाकर्म तदेव च तस्याः कर्म यत्सुखम्, सुखानुशयित्वादिच्छायाः । न च अपूर्वं सुखमिति कथमिष्टम् ? अनिष्टं चेत्, कथं तदुद्देशेन कृतेः प्रवृत्तिः ? शब्दात्तथावगतेः असुखमपि अनिष्टमपि अपूर्वं कृतिं प्रति प्रधानमिति चेत् ? तत्किं शब्दः अवगमयतीति अनग्निरप्यस्तु धूमः ? आनन्दस्वभावं वा विज्ञानम्, 'विज्ञानमानन्दम्' इति श्रुतेः । प्रमाणान्तरविरोधान्नैवमिति चेत् ? न । इहापि तस्य साम्यात् । समिदादिविषयस्य अपूर्वस्य अननुष्ठेयस्य अनुष्ठेयाधिकारापूर्वपरत्वेन कर्तव्यतात्वाभ्युपगमनात् । स्वर्गाद्यनुकूलत्वात् अपूर्वस्य असुखस्यापि इच्छाविषयत्वमिति कुतो मानान्तरविरोध इति चेत् ? न । क्रियायामपि समीहितसाधनतायाः तथाभावात् । नैमित्तिकनिषेधापूर्वयोश्च फलविरहिणोः तदनुपपत्तेः । एवं च नैमित्तिकनिषेधापूर्वयोः नापूर्वसिद्धिर्लिङादीनाम् । निमित्तवतो निषिध्यमानक्रियाकर्तुश्च सिद्धविशेषणावच्छिन्नस्य नियोज्यस्य क्रियाकर्तव्यताऽवगमाविरोधात् । प्रधानाङ्गग्रामसहभावस्य अशब्दार्थभूतकल्पितापूर्वद्वारेणापि उपपत्तेः । अपिच साध्यस्वर्गविशिष्टोऽपि नियोज्यः कस्मात् क्रियामेव नावैति कर्तव्याम् ? तस्याः आशुतरविनाशिनीत्वेन तदनुकूलत्वाभावात् । तद्धि तदुत्पादानुकूलं यस्मिन् सति यदुत्पद्यते, नासति । न च आमुष्मिकं स्वर्गादि सति कर्मणि भवति चिरविनष्टे । तस्मिंस्तदुपपत्तेरिति चेत् ? किमिदानीमाग्नेयादिष्वपि न साधनत्वमधिकारापूर्वस्य, भाक्तो वा साधनभावस्तेषाम् ? नहि तस्य भाक्तत्वे इतिकर्तव्यतासंबन्धो घटते । न जातु उपचरितवह्निभावो माणवको दाहपाकयोरुपयुज्यते । तेषां च विषयत्वमेकम्, नाना च करणत्वं भवद्भिरभ्युपेयते । तयोर्भिन्नप्रस्थानोपधारूपत्वात् । प्रतिपत्त्यनुबन्धो हि विषयो यथाप्रतीति व्यवतिष्ठते । तत्रोच्चारिताश्च आग्नेयादयः 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति सकृदवगतेः तथैव विषयभावमनुभवन्ति इत्येकमेव एषामधिकारापूर्वं प्रति विषयत्वम् । उत्पत्त्यनुबन्धस्तु करणत्वम् । स च स्वरूपाधीनः, न प्रतिपत्त्यधीनः । स्वरूपं चैषामाग्नेयादीनाम् 'यदाग्नेयोऽष्टाकपालः' इत्यादिभ्यो अभिन्नभावमवगतमिति तदनुवर्तिनी साधनताऽपि भिन्नैव । न चैवं अन्योन्यनिरपेक्षाणामुपायभावः । यथाश्रुतकरणाधीनसिद्धित्वात् परमापूर्वस्य । बहूनि च अस्य करणानि श्रूयन्ते, इति नैकोपायसाध्यता भवितुमर्हति । अनेककरणसाध्यत्वं च एकस्या अपि क्रियाया लोकेऽपि दृष्टमेव । यथा अश्वेन दीपिकया खड्गपाणिभिरग्रेसरैः संचरते राजा प्रदोषे इति । अवान्तरव्यापारभेदादश्वादीनां साधनानां भेद इति चेत् ? इहापि उत्पत्त्यपूर्वाण्येव अवान्तरव्यापाराः । ते च प्रत्याग्नेयादि भिद्यन्ते इति समानम् । एवंच आज्यौषधसांनाय्येषु न संकरो धर्माणाम् । परमापूर्वप्रयुक्तत्वेऽपि अवान्तरव्यापारोत्पत्त्यपूर्वभेदेन साधनभावस्य भेदात् अपूर्वसाधननिवेशितत्वात् च तेषाम् । अन्यथा तदभेदे संकरप्रसङ्गात् । तस्मात् यथैव अधिकारापूर्वोत्पत्तिसमये आग्नेयादीनामसतामपि शब्दावगतसाधनभावानां

उत्पत्त्यपूर्वाणि अवान्तरव्यापाराः शक्तयो वा तथा, फलं प्रति अवगतसाधनभावायाः क्रियायाः अवान्तरव्यापारः शक्तिर्वा अपूर्वं भविष्यति। कथमन्यसमवेता अन्यस्य शक्तिः, असति वा व्यापारवती। अवान्तरव्यापार इति चेत्? आग्नेयादीनामपि परमापूर्वसाधनानामवान्तरव्यापारेषु शक्तिषु वा उत्पत्त्यपूर्वेषु तुल्यत्वात् पर्यनुयोगस्य। अनपेक्षशब्दावगतसाधनभावानां आग्नेयादीनां असहभुवामन्यसमवेतान्यपि असमानकालान्यपि उत्पत्त्यपूर्वाणि व्यापाराः सामर्थ्यं वेति चेत्? तत् किम् 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति लोकानुसारतः साध्यस्वर्गवैशिष्ट्येन क्रिया कार्या नावगम्यते, स्वविशेषणं वा साध्यरूपं प्रत्ययस्यानानुकूल्यम्, येन तद्घटनाय अवान्तरव्यापारः सामर्थ्यं वा क्रियाया नापूर्वमास्थीयेत? फलसाधनसाधनं न फलसाधनं क्रियेत्यपि मिथ्या, फलप्रवृत्ताया एव तस्यास्तत्साधनत्वात्। यथा परमापूर्वसाधनप्रवृत्तानामाग्नेयादीनां उत्पत्त्यपूर्वसाधनत्वम्, सस्यागमोद्देशेन प्रवृत्तस्यैव कृषिकर्मणो भूपाटनादिसाधनत्वम्। न च परमापूर्वं प्रति उत्पत्त्यपूर्वाणामेव साधनत्वम्, नाग्नेयादीनामिति सांप्रतम्। नहि 'दर्शपूर्णमासाभ्याम्' इति च 'यजेत' इति चोत्पत्त्यपूर्वाणामभिधानम्, अपि तु षण्णामाग्नेयादीनां कालविश्लेषसंबन्धेनोत्पन्नानां अनूदितानां समुदायिनाम्। न चैषामुत्पत्तिवाक्यान्येव यथास्वं उत्पत्त्यपूर्वाणि प्रति कारणत्वमधिगमयितुमीशते। अधिकारवाक्यसंनिधिसमाम्नातानां तदुत्पत्तिवाक्यानां अधिकारापूर्वप्रत्यभिज्ञाशङ्कया द्रागिव अपूर्वान्तरप्रत्ययाजननात्। उत्पन्नानूदितानां तु पश्चादाग्नेयादीनामधिकारापूर्वं प्रति अधिगतविषयकरणभावानामपरस्परं संभवतां तदनुपपत्तेः। तत्सिद्ध्यर्थमुत्पत्त्यपूर्वाणि कल्पितानि प्रत्ययवाच्यान्यपि कार्यरूपाण्यपि नाग्नेयादीनां साधनानां प्रधानं प्रति स्वकरणतामापादयितुमर्हन्ति। तैराग्नेयादिभिः परमापूर्वे जनयितव्ये अवान्तरव्यापारतया तत्कल्पनात्। तथैव च लिङर्थत्वव्यवस्थापनात् प्राधान्यानुपपत्तेः, प्रधानद्वयसंबन्धस्यैकत्र दुरधिगमत्वात्। तस्माद्यथा तव आग्नेयादीनामुत्पत्त्यपूर्वावान्तरव्यापाराणां परमापूर्वे फलं च एककृतिकर्मे तथा विवृद्धं साध्यं प्रत्येक एव करणभावः, तथा ममापि अपूर्वावान्तरव्यापाराया एव क्रियाया अपि स्वर्गानुकूलतेति साध्यस्वर्गविशिष्टोऽपि शक्त एव क्रियाकर्तव्यतामवबोद्धुम्। न च यो यत्कामः स तदुपायमेव कार्यमवैति, नानुपायं इत्यस्य ऐकान्तिकत्वमिति निवेदयिष्यते। दर्शितं च **भावनाविवेके**। कर्तृसमीहितोपायस्य कर्तव्यताज्ञानालम्बनतायां फले चाप्रसङ्ग इत्युपरिष्टान्निवेदयिष्यते। तस्मान्न स्वर्गकामादिसंबन्धात् मानान्तरापूर्वाभिधानसिद्धिर्लिङादीनाम्।

नापि लोके 'माणवक! संध्यामुपास्व' इत्याचार्यवचनानन्तरं माणवकस्य प्रवृत्तिमुपलभ्य तस्याश्च कार्यावगमाधीनत्वात् संध्योपासनकर्मणश्च दुःखतया तदनुपपत्तेः तदतिरिक्ते कार्ये मानान्तरावेद्ये लिङादेः संगतिग्रहः इति चतुरस्रम्। क्रियाया एव कर्तव्यतोपपत्तेः। दुःखतया अनुपपत्तिरिति चेत्? एवं तर्हि वरं तस्या एव हिताहितप्राप्तिपरिहारयोरन्यतरोपायतापरिकल्पनम्, तादृश्या एव तस्या आत्मनि प्रवृत्तिहेतोरुपलब्धेः। तदेतदपि अतिपेलवम्। तस्मात् मानान्तराविषयत्वेन अपदार्थत्वाच्च नैव वाक्यार्थत्वं नियोगस्यापूर्वस्येति सिद्धम्। **कणिका**. पृ. ५२–५३, ५५–६०.

* **नियोगविधिः**। 'गुरुनियोगात् अपतिः अपत्यलिप्सुः देवरात् गुरुप्रेरितात् ऋतुमती इयात्' इत्यागमः। **वा.** १।३।३।७ पृ. २०८. * **नियोगविधेरपि** एकापत्यविषयत्वात् अनेकोत्पादनानौचित्यम्। **सु.** पृ. १८५.

* **नियोगविधिवादः**। उपोद्घातभूतमन्विताभिधानं प्रसाध्य अपूर्वं कार्यं वेदवाक्यानामस्तीति साधयितुकामः पूर्वपक्षं तावदाह–'**ननु व्युत्पत्त्यपेक्षेषु शब्देष्वर्थाभिधायिषु। कथं मानान्तरावेद्यं कार्यमाहुर्लिङादयः॥**' अपूर्वाधिकरणे लिङाद्यर्थः अपूर्वमित्युक्तम्। प्रमाणान्तरायोग्यं चापूर्वमिष्यते। यच्च प्रमाणान्तरायोग्यं तत्र संबन्धग्रहणमशक्यम्, संबन्धिग्रहणपूर्वकत्वात्। तस्य विशिष्टार्थव्यवहारदर्शनेन एतद्विषया शब्दशक्तिरनुमीयते। तदेव च संबन्धग्रहणम्। यच्च न प्रतीतौ तद्विषयो व्यवहारः अवसीयते, तदनवसायेन च तद्विषया बुद्धिरनुमीयते, तदनुमाने च कुतः शब्दस्य शक्तिः कल्प्यते। अपूर्वं च न प्रमाणान्तरगोचरः। न च शब्दादेव तदवगम्य संबन्धा-

वधारणम्, इतरेतराश्रयत्वात्। अवसितशक्तेरेव बोधकत्वात्, अवबोधकत्वादेव (च) शक्त्यवगमात्। **स्यान्मतम्**, लिङादेः शब्दस्यायं महिमा, यदनवसितशक्तिरपि स्वार्थमवगमयतीति। **तदिदमप्रमाणम्।** क्रियामात्रकार्यावबोधकत्वाङ्गीकारेण लिङादेर्लोकतो व्युत्पत्तिसंभवे शब्दान्तरवैलक्षण्येन अगृहीतसंबन्धस्यैव वाचकत्वकल्पनाऽनुपपत्तेः। वेदवाक्यात् अपूर्वकार्यावगतेरेवं कल्प्यते इति चेन्न। तस्या एवासिद्धत्वात्। क्रियैव कार्यतया वेदवाक्येभ्योऽवगम्यत इति व्युत्पत्तिबलेन प्रामाणिकम्, मनोरथमात्रविजृम्भितं तु अपूर्वं कार्यं प्रतीयते इति। तस्मादगृहीतसंबन्धो लिङादिः कथमपूर्वं कार्यमभिधत्ते। तथा च कथं वाक्यार्थः। अभिधेय एव ह्यर्थोऽभिभवति (?) एवम् '**शब्दान्तराण्यपि कथं तेनादृष्टेन कुत्रचित्। वदिष्यन्त्यन्वितं स्वार्थं व्युत्पत्तिपथदूरगम्॥**' तस्मिन्नप्रतीयमाने तदन्वितस्याप्रतीतेः सूत्रसंबन्धावधारणानुपपत्तेः दूरनिरस्तं शब्दान्तराणां तदन्वितस्वार्थबोधकत्वमिति।

राद्धान्तमुपक्रमते '**अत्रोच्यते यदा नाम वृद्धेनैकेन भाषिते। जलं चैत्राहरस्वेति चैत्र आहरते यदा॥ तदा व्युत्पिपसमानोऽन्यस्तत्रैवमवगच्छति॥**' बुद्धिपूर्वा प्रवृत्तिरियमीदृशी। लिङादियुक्तवाक्यश्रवणात् प्रयोज्यवृद्धस्य विशिष्टार्थविषयां प्रवृत्तिं दृष्ट्वा व्युत्पित्समानो बालः एवमाकलयति, 'येयं स्वाधीना अस्य प्रवृत्तिः, सा मद्वद्बुद्धिपूर्विका' इति। पुनश्च तस्यायं विमर्शो जायते 'अहं बुद्ध्वा प्रवृत्तो यत् तदेषोऽपि, यस्याः प्रवृत्तेर्हेतुभूता बुद्धिः, सा यद्विषया सती मम प्रवृत्तिहेतुः, तद्विषयैवास्यापि' इति व्युत्पित्सोरनुमा जायते। तदेवमनुमानद्वयमेतत् 'वृद्धस्य स्वतन्त्रा प्रवृत्तिः धर्मिणी, बुद्धिपूर्विका इति साध्यो धर्मः। स्वतन्त्रप्रवृत्तित्वात् मदीयस्वतन्त्रप्रवृत्तिवत्' इति। तथा 'वृद्धस्य प्रवृत्तिहेतुभूता बुद्धिः धर्मिणी, यद्विषया बुद्धिर्मम प्रवृत्तिहेतुभूता, तद्विषयैवास्यापीति साध्यो धर्मः। प्रवृत्तिहेतुभूतबुद्धित्वात् मदीयप्रवृत्तिहेतुभूतबुद्धिवत्'। पुनश्च तस्यायं विमर्शः प्रवर्तते। पदस्य (यदस्य) तु शब्देन बोध्यते अनेन मम, मानान्तरेण तु यद्विषया सा बुद्धिः प्रवृत्तिहेतुभूता, तद्वत् स्वस्थानेन शब्देन बोध्यते, तद्भावे सति अवगमात्। मम तु मानान्तरेण तद् बोध्यते इत्ययमावयोर्विशेषः। येन यत् बुद्ध्वा प्रवृत्तिर्मम, तदस्यानेन शब्देन बोध्यते इति शब्दस्य प्रवृत्तिहेतुभूतार्थो बोधकतामवधारयति।

पुनश्च कोऽसौ प्रवृत्तिहेतुभूतोऽर्थः शब्दाभिधेयः इति निर्धारयितुं स्वात्मनि प्रतिपन्नं प्रवृत्तिहेतुभूतमर्थमनुसंधत्ते— '**तत्र बुद्ध्वा प्रवृत्तोऽहं किं तावत् स्वयमन्यदा॥**' शब्दनिरपेक्षः स्वयमहं प्रवर्तमानः किं बुद्ध्वा प्रवृत्तः इति जिज्ञासते। अन्यदेत्यनेन व्युत्पत्तितः प्रागवस्थोच्यते। अव्युत्पन्नेन बालेन यत् आत्मनि प्रतीतिकारणतया प्रतीतम्, तदेव व्युत्पन्नस्यापि तेन कल्प्यते, नान्यदित्यर्थः। तेन 'शब्द एव प्रवृत्तिहेतुभूतो विधिस्तद्व्यापारो वा' इति निरस्तं भवति। तयोर्बालेनात्मनि प्रवृत्तिकारणत्वेन दर्शनात्। अतिमन्दतया चेमौ पक्षौ न साक्षादुपन्यस्य निरस्तौ। तथाहि। लिङादिशब्दस्वरूपस्य प्रवर्तकत्वे सर्वे एव तच्छ्राविणो नियमेन प्रवर्तेरन्, न चैवं दृश्यते, कस्यचित् कदाचित् प्रवृत्तिः। लिङादिव्यापारस्य तु प्रवृत्तिहेतुत्वाश्रयणं देवाः प्रतिपद्यन्ताम्। पिशितचक्षुषो मानुषा वयं नेयतीं प्रमाणभूमिमवगाहितुं क्षमाः। शब्दभावना लिङादिव्यापाररूपा पुरुषप्रवृत्तिभवनानुकूला स्वज्ञापितकरणिका अर्थवादोदितप्राशस्त्यलक्षणा इतिकर्तव्यतायोगिनी प्रेरणाऽऽत्मिका कल्प्यते। स्वाध्यायाध्ययनविधिना हि सर्वे विधायकाः स्वाध्यायशब्दवाच्याः स्वात्मा च नियुज्यन्ते भावयेदिति। तत्र किमित्यपेक्षायां पुरुषप्रवृत्तिः संबध्यते। केनेत्याकाङ्क्षायां विधिज्ञानमेव योग्यतया करणत्वेन अङ्गीक्रियते। ज्ञाता हि शब्दभावना प्रवृत्तिं प्रसूते, योग्यतया एव अर्थवादसमुत्थप्राशस्त्यज्ञानं इतिकर्तव्यतांशे निविशते। अवसीदन्ती हि विधिशक्तिः प्राशस्त्यज्ञानेन उत्तभ्यते इति तस्याः पुरुषव्यापाररूपस्वर्गादिभाव्यावच्छिन्ना भावार्थकरणिका श्रौतस्मार्ताचारप्राप्तपदार्थावगमजनितकरणोपकारवती अर्थभावना समानप्रत्ययवाच्या विषयभूता। तत्र लिङादेस्तादृशो व्यापारो विद्यते इत्यत्र न किञ्चन

प्रमाणम् । लिङादिशब्दानन्तरभाविनी प्रवृत्तिरेव प्रमाणमिति चेन्न, तन्निबन्धनत्वेन प्रवृत्तेः अन्यत्राद्दष्टत्वात् । तन्निबन्धना हि प्रवृत्तिर्दृष्टा । तदेव तां दृष्ट्वा शक्यमनुमातुम् । न पुनरप्रतिपन्नपूर्वकारणभावं (व–) शब्दव्यापारविशेषः । पृ. २५–२७.

लिङादिशब्द एव प्रमाणमिति साहसम्, अगृहीतसंबन्धस्य शब्दस्यावाचकत्वात् । अनवधारिते हि संबन्धिनि संबन्धबोधवैधुर्यात् । यत् च तत्र स्वाध्यायाध्ययनविधिना सर्वे विधायका आत्मा च नियुज्यन्ते, पुरुषं हि विधिः प्रेरयति यश्च येन प्रेर्यते ते अचेतना न युज्यन्ते न चाचेतनानां नियोज्यत्वमपि संभवति । अनियोज्यत्वे किं तत्र युज्यते । तदप्यनुपपन्नम् । शब्दभावनासु सर्वशब्दानां स्वतः एव सकर्तृत्वात् विनियोगानपेक्षणात् । अथ न पुरुषप्रेरणे विनियुज्यन्ते किं त्वर्थविबोधने । तदपि न घटते । तत्रापि नियोज्यानपेक्षायास्तुल्यत्वात् । अध्ययनविधेश्च अक्षरसंस्काररूपाध्ययनविधायकत्वाभ्युपगमः । तथा चाहुः 'द्रव्यादीनां पुनः कस्मिन् स्वाध्यायोऽन्तर्गतो भवेत् । संस्कार्यगणनायां च युक्तैवाक्षरसंस्क्रिया ॥ स्वाध्यायो हि स्फुटं कर्म साक्षात्संस्क्रियते हि सः ॥' इति । संस्कारविधिश्च न संस्कार्यं नियुङ्क्ते प्रमाणान्तरावसितोपयोगस्य शेषित्वात् । संस्कारपर्यवसायी तु संस्कारविधिर्न संस्कार्यस्य कार्यं कल्पयेतेति । आत्मा चाध्ययनविधिना नियुज्यते विनियुज्यते वेति प्रतिपत्तिद्वयस्यापि असंभवात् अनुपपन्नम् । कथं च पुरुषप्रवृत्तिः तस्या भाव्या । न तावदनन्तरनिष्पत्तेः, विधिज्ञानस्य करणत्वाभावे अप्रसङ्गात् । क्रियाफलं हि तदा पुरुषप्रवृत्तिः स्यात् । न च क्रिया स्वफलप्रसवाय करणमपेक्षते, न च गमनं संयोगविभागारम्भे करणापेक्षम् । स्यान्मतम् । शब्दो विधिज्ञानं जनयित्वा तत्करणानुगृहीतः प्रेरणारूपं स्वव्यापारमारभते इति न करणत्वाभावः क्रियानिष्पत्तावेव करणत्वात् । तदिदमलौकिकम् । नहि कस्यचिद् वस्तुनः स्वज्ञानमुत्पादनहेतुः इति प्रतीतम् । एवं च अर्थवादोदितप्राशस्त्यस्यापि इतिकर्तव्यतात्वं विध्वस्तम् । योग्यतया हि तस्य तथाभावः । न च प्रेरणोत्पत्तौ शब्दकर्तृकायां करणीभूतज्ञानानुग्रहयोग्यता तस्य शक्यतेऽवगन्तुम् । पुरुषकर्तृकायां प्रवृत्तौ तस्य योग्यताऽवगमः, (प्र–) शस्ते प्रवृत्तिदर्शनात् । स्यान्मतम् । अप्रशस्त- (स्ते) पुरुषप्रवृत्त्यसंभवे प्रेरणैव नोपपद्यते । तदसत् न फलसंभवायत्ता क्रियानिष्पत्तिः क्रियानिष्पत्त्यायत्तैव फलसिद्धिरिति लोके प्रतीतम्, अत एव तस्मिन् पक्षे निष्फलेऽपि प्रेरणसिद्धेः प्रवृत्तिः स्यात् । अथ फलमपि इतिकर्तव्यतापदनिवेशि प्राशस्त्यवद् अतस्तदभावे प्रेरणा (न) निष्पद्यते इति चेत् । तर्हि फलमेवास्तु इतिकर्तव्यतांशपरिपूरकम्, किं प्राशस्त्येन । सत्यमेतत्, अस्ति तावत् तदपीति न त्यज्यते । एवं तर्हि अश्रुतप्राशस्त्ये तदपेक्षा मा भूत् । ततश्च तदपि देशादिकल्पनमघटमानं केवलस्य विधेः दर्विहोमवत् करणेतिकर्तव्यताकल्पना । कल्पनामात्रमेव, दर्विहोमवदिति च सिद्धो दृष्टान्तः । तत्र श्रौतद्रव्यदेवतास्मृत्याचारप्राप्ताचमनादीतिकर्तव्यतामात्रेण उपकारप्राप्तेरभिमतत्वात् । नहि एकस्यैव वस्तुनः अनुग्राहकता अनुग्राह्यता च स्वात्मन्युपपद्यते । अथ शब्दः प्रेरणां करोत्येव प्रवृत्तिस्तु न तावन्मात्रेण, किन्तु तज्ज्ञाने सति । एवं तर्हि ज्ञानफलमेव प्रवृत्तिरस्तु, न प्रेरणाफलम्, तस्मिन् सति भावात्, असति चाभावात् । तथा च सति शब्दभावना विधिरिति न सिद्धम् । किञ्च शब्दः अम्बरगुणः इति प्राप्यकारीन्द्रियवादिना अभ्युपेयं अन्यथा नभसः श्रोत्रभूतस्य, शब्दस्य च प्राप्त्यसंभवात् संयोगसमवाययोरन्यतरस्य प्राप्तिरूपत्वात् संयोगस्य अन्यतरकर्मजस्य उभयकर्मजस्य संयोगजस्य (च) द्रव्यत्वे शब्दस्य नभसा सहासंभवात् तस्य त्रैविध्यनियमात् पारिशेष्यात् समवायः प्राप्तिरित्याकाशगुणः शब्दः । न च तस्य व्यापारसंभवः, द्रव्याश्रितत्वाद्व्यापाराणाम् । कथं तर्हि शब्दस्याभिधानलक्षणो व्यापार आश्रीयते । यथा तत्, तथा श्रूयताम् । यत्तत् आत्मनि अर्थविषयज्ञानं शब्दविषयज्ञानानन्तरं जायते, तच्छब्दकर्तृर्थतया यदा विवक्ष्यते, तदा तत् अभिधानमित्युच्यते । परस्थे व्यापारे भवत्येव कर्तृता परिस्पन्द इवात्मनः इति न कश्चिद्दोषः । कथं चासौ शब्दव्यापारः अर्थभावनाविषयः । एकप्रत्ययवाच्यत्वादिति चेत् । तदुक्तम्

'विधिभावनयोश्चैकप्रत्ययग्राह्यता कुतः । धात्वर्थात् प्रथमं तावत् संबन्धोऽध्यवसीयते ॥' इति । तन्न । प्रत्ययस्य भावनाऽभिधानमस्मिन्पक्षे दुर्घटं यतः । ननु च सर्वाख्यातानां भावनावचनता करोतिसामानाधिकरण्यात् अध्यवसीयते ! तथाहि भवत्यर्थस्य कर्तुः प्रयोजकव्यापारो भावना । सैव च कृतिः । भाव्यमानस्य क्रियमाणत्वात् तस्य कृतिकर्मत्वात् । 'किमकार्षीदपाक्षीत्, किं करोति पचति, किं करिष्यति पक्ष्यति' इति प्रश्नोत्तरदर्शनात् । करोत्यर्थः सर्वाख्यातैरभिधीयते इति गम्यते । अन्यथा करोत्यर्थविषयप्रश्ने तदुत्तरानुपपत्तिः । तत्रापि सत्यामपि प्रकृतौ घञन्तादिषु करोत्यर्थानवबोधात्, आख्यातप्रत्ययसंनिधाने च तदवगमात् आख्यातानामेव सोऽर्थ इति निश्चीयते । तदसत् । किं करोतीत्यस्य प्रश्नस्य यद्ययमर्थः 'यत् करोति तत् किम्' इति तत्र चेत् पचतीत्युत्तरं स्यात्, तदा पाकं करोतीति स्यात् तस्मिन्नर्थे पचतीति वर्तते । तथा च सिध्येत् आख्यातानां करोत्यर्थता । न चैतदेवम् । अनवगते हि धातुवाच्ये व्यापारविशेषे तद्विशेषः एव एवं पृच्छयते, तत्र पचतीत्युत्तरम् । तथा च न सिध्यति धात्वर्थातिरिक्तकरोत्यर्थवचनता आख्यातानाम् । सर्वधात्वर्थाश्च कस्यचित् अभूतस्य भवने अनुकूलतां भजन्तः करोत्यर्थतामापन्नाः करोतिना प्रष्टुं निर्देष्टुं च शक्यन्ते इति तद्विषयप्रश्नोत्तरे एवैते । किञ्च, धातुवाच्यव्यापारविशेषविषयत्वेनापि प्रश्नोत्तरयोरुपपत्तौ तदतिरिक्तकरोत्यर्थवाचकता आख्यातानां न शक्यते वक्तुम् । अपिच सप्रयत्नक्रियेषु देवदत्तादिषु व्यापारभेदसंभवात् घटेतां प्रश्नोत्तरे व्यतिरिक्तकरोत्यर्थविषये, 'किं करोति' इति प्रश्ने गच्छतीति चोत्तरे गमनातिरिक्तव्यापाराभावात् अनुपपत्तिरेव स्यात् । धात्वर्थविशेषविषयत्वे तत्राप्युपपत्तिः । अथ संयोगविभागौ धात्वर्थः, परिस्पन्दस्तु विभक्त्यर्थ इति, तत्रापि धात्वर्थव्यतिरिक्तव्यापारसंभवात् नानुपपत्तिः । तन्न । परिस्पन्दस्यैव गमिवाच्यत्वात् केवले संयोगे विभागे वा गमेः प्रयोगः, स्थाणौ श्येनेन वियुक्ते संयुक्ते वा अप्रयोगात् । नापि द्वयोः, उत्पत्य निपतिते श्येने स्थाणौ प्रयोगप्रसङ्गात् । एकक्रियाक्षणजन्यौ संयोगविभागौ गमिवाच्याविति यद्युच्येत । तर्हि क्रियैवास्तु वाच्या किमसावुपाधिकोटौ निवेश्यते । एवं हि उपाधिसमाश्रयणगौरवमेव परिहृतं भवति । अपिच वृद्धव्यवहारात् शब्दार्थनिर्णयः । न चाख्यातानां भावनावचनत्वमन्तरेण कस्यचित् वृद्धव्यवहारस्यानुपपत्तिः । प्रश्नोत्तरे तु संबन्धज्ञानोत्तरकालभाविनी । अतो न तद्वशेन संबन्धिनिरूपणा । कर्त्रादिसंख्यामात्रवाचितया आख्यातप्रयोगोपपत्तौ नाधिकं वाच्यं शक्यं कल्पयितुम् । अपिच पाकं करोति देवदत्त इत्यत्र तावत् पच्यर्थं पाकशब्दो ब्रवीति, तदनुगुणं प्रयत्नं करोतिराचष्टे । आख्यातं तु केवलकर्तृसंख्यां वक्तीति सिद्धं तन्मात्रवाचित्वम् । अतः अन्यत्रापि तथैव वर्तते इति युक्तम्, एवं च 'पचति देवदत्तः' इत्यस्य यत् विवरणं पाकं करोतीति, तदप्यनुपपन्नम् । पचतीत्यत्र यः पुरुषप्रयत्नो यत्संबन्धेन पच्यर्थः साध्यभूतः, तं करोतिना प्रकृतिभूतेनोपादाय विवरणोपपत्तिः । यत्रापि प्रयोगः 'गमनं करोति' इति न प्रयत्नः अपरोऽस्ति, तत्रापि गमनस्य साध्यतां दर्शयितुं गौणः करोतिप्रयोगो द्रष्टव्यः, पक्षद्वयेऽपि तुल्यत्वात् । यस्तु देवदत्त ओदनं पचतीत्यादौ वृद्धव्यवहारे एव प्रकृत्यर्थातिरिक्ते प्रयत्ने प्रयोगात् आख्यातानां तदर्थतामाह । स इत्थं शिक्षयितव्यः । वत्स किं न वेत्सि 'अनन्यलभ्यः शब्दार्थः' इति । इह च प्रकृत्यर्थाक्षेपेणापि प्रयत्नप्रतिपत्त्युपपत्तेर्न शक्यते तद्वाचकता आख्यातानामाश्रयितुमिति । ननु प्राभाकरा अपि भावनावाचकतां कथमाख्यातप्रत्ययस्येच्छन्ति । उच्यते । न सर्वाख्यातप्रत्ययानां भावनावचनत्वमभ्युपेमः, किन्तु कार्याभिधायिनो लिङादयः कार्यस्य अन्यथा अनभिधानात् कृत्यभिधायिनः इष्यन्ते । कृतिसंबन्धि हि कार्यं कृत्यनभिधानेनाभिहितं स्यात् । नह्यस्ति संभवः कृतिश्च नाभिधीयते कार्यं च नाभि (अभि) धीयते इति । अथ मतम् । यथा दण्डीत्यत्र प्रत्ययेन दण्डो नाभिधीयते, अथ च तद्विशिष्टपुरुषप्रतीतिः । इत्येवमिहापि भवेदिति । तन्न । तत्रापि अप्रतीते दण्डे न तद्वति प्रत्ययः । अस्ति च तत्र प्रकृतिभूतो दण्डशब्दः, स च तस्य प्रत्याययिता । न चेह तथा संभवति, प्रकृतीनां पुरुषव्यापाराभिधाननियमात् । पुरुषो हि चेतनः कार्ये लिङादिभिरवबुध्यते,

न चासौ प्रकृतिसंबन्धि स्वयं कार्यं बोद्धुमलमिति तदीयकृत्यभिधानमेषितव्यम् । तस्य च कृतिः प्रयत्नरूपा, न च संबन्ध्यननुभवे तदभिधायिनः ( अनुभवः ) इति न दण्डिन्यायस्यायं विषयः । **स्यान्मतम्** । यथा लिङां ( तिङां ) कर्त्रादिसंख्यामात्रवचनता क्रियाऽऽक्षेपेण च कर्त्रादीनां प्रतीतिः, तथेहापि क्रिया प्रयत्नमाक्षिपति मा भूत्तस्य लिङ्वाच्यतेति । **तदसत्** । यद्यपि प्रकृत्यर्थभूतया क्रियया प्रयत्नः आक्षिप्यते । तथापि तदायत्तसिद्धिकृतया कथमपूर्वं गम्यते । प्रयत्नाभिधाने तदवच्छिन्नतया अभिधीयमानं तदायत्तसिद्धिकमवगम्यते, नान्यथा । न च कृत्यनवच्छिन्नं स्वरूपमात्रेण पूर्वमभिहित कृतिमाक्षेप्तुमलम् । अवगतसंबन्धं हि वस्तु आक्षिप्यते । न च शब्दमन्तरेण अपूर्वस्य प्रयत्नसंबन्धावगमे कारणान्तरमस्ति । अतः कथं तत् प्रयत्नमाक्षिपेत् । तस्मादपूर्वकार्याभिधायिनां प्रयत्नाभिधानं अवश्याश्रयणीयमिति **विषयकरणीये** निपुणतरमुपपादितम्, इत्यलमतिप्रसङ्गेन । तत्र न क्रियामात्रं तावदहं बुद्ध्वा प्रवृत्तः, न चापि फलमात्रकम्, न क्रियाफलसंबन्धमात्रं वा । क्रियाफलयोः साध्यसाधनताऽवगमेऽपि न प्रवृत्तिरुपपद्यते । तृप्तिहेतोर्भोजने अतीते वर्तमाने वा अप्रवृत्तिर्भविष्यत्यपि तत्साधने सामुद्रविदाख्याते इवानुष्ठानाभावात् । पुरुषाशयावगमस्तु प्रवृत्तिहेतुतया नाशङ्कितोऽपि, स्वतन्त्रप्रवृत्तौ बुभुक्षितोद्गीरोत्सारितत्वात् । किन्तु कार्यतां बुद्ध्वा प्रवृत्तो ममेदं कार्यमिति प्रतीत्य अहं सर्वत्र प्रवृत्तः । तथाहि '**आस्तां तावत् क्रिया लोके गमनागमनादिका । अन्ततः स्तनपानादिस्तृप्तिकार्यपि या क्रिया ॥** ( कारी अपि ) **सा यावन्मम कार्येयमिति नैवावधार्यते । तावत् कदाऽपि मे तत्र प्रवृत्तिरभवन्नहि ॥**'

**अत्रापर आह** । सत्यं कार्यावगमादेव प्रवृत्तिः । इष्टसाधनतैव तु कार्यता, न परा काचित् । सैव प्रवृत्तिहेतुर्विधिरुच्यते तदाह '**अपेक्षितोपायतैव विधिरिष्टो मनीषिभिः । ततो ह्यध्यवसायादिर्वा कस्मान्नाभिधानतः ॥**' तथा '**पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः । प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् ॥ कर्तुरिष्टाभ्युपाये हि कर्तव्यमिति लोकधीः । विपरीतं त्वकर्तव्यमिति तद्विषये ततः ॥**' ( इति ) । **तत्र** तावदिदमेव वक्तव्यम् । अतीतस्य वर्तमानस्य च इष्टसाधनताऽस्ति न च तत्कार्यतया अवसीयते, तेनान्या कार्यता अन्या चेष्टसाधनतेति । तथा च प्रवृत्तिरपि तन्मात्रावगमायत्ता न भवतीति । उपेक्ष्यैव तावत् तं फलसाधनताकार्यतयोर्भेदं विनिर्दिशति । फलसाधनता नाम या, सा नैव च कर्तव्या । '**कार्यता कृतिसाध्यत्वम्, फलसाधनता पुनः । करणत्वम्, फलोत्पादे भिद्येते ते परस्परम् ॥**' यद्यपि एकवस्तुनिवेशिता द्वयोः, तथापि स्वरूपभेदोऽस्त्येव । तदेव हि वस्तु फलं प्रति उपायभावात् फलसाधनमित्युच्यते, कृत्यधीनात्मलाभतया च कार्यमिति । किमिति इष्टाभ्युपायेष्वेव कर्तव्यताऽवगमोऽन्यत्र नेति, तत्राह '**किन्तु स्वयं क्लेशरूपं कर्म यत्कार्यतां व्रजेत् । फलसाधनता तत्र कारणं तेन कार्यता ॥ तद्भावभाविनी नित्यं तदात्मेव प्रतीयते ।**' स्वभावेन हि कर्माणि दुःखोत्पादहेतुभूतानि । तेषु कार्यत्वावगमः फलसाधनताऽवगमनिबन्धनः । कार्यता हि न कृत्यधीनसिद्धिमात्ररूपा, किन्तु कृतिं प्रति प्रधानभूतं सत् यत् तदधीनसत्ताकं तत् कार्यमुच्यते । तच्च कृतेः प्रधानम्, यत् अधिकृत्य कृतिः प्रवर्तते । न च दुःखं दुःखहेतुभूतं वा अधिकृत्य कृतेर्वृत्तिरुपपन्ना । नापि अदुःखं अदुःखहेतुं वा । किन्तु सुखं सुखहेतुं वा । तत्र न तावत् स्वयं सुखरूपं कर्म । सुखसाधनमपि चेन्न स्यात्, न तस्य कृतिं प्रति प्राधान्याभ्युपगमो घटते । अतः कर्मसु कार्यत्वावगमः फलसाधनताऽवगमनिबन्धनः, इति ज्ञापककोटिनिविष्टां फलसाधनतां कार्यता अनुरुध्यते, न त्वसौ तदात्मैव । तथा च असाधनस्यापि सुखस्यैवास्ति कार्यता । सुखं हि सर्वः कार्यतया अवैति, न तस्य फलसाधनतामपेक्षते । तेन साधनतोत्तीर्णकार्यताऽवगमेन मे प्रवृत्तिरिति निश्चित्य बुभुत्समानः चैत्रं प्रवर्तमानं दृष्ट्वाऽनुमिनोति, चैत्रोऽपि कार्यबोधात् प्रवर्तते इति । चैत्रस्य प्रवृत्तिर्धर्मिणी कार्यबोधनपूर्विकेति साध्यो धर्मः । बुद्धिपूर्वकत्वे सति प्रवृत्तित्वात् मदीयप्रवृत्तिवदिति । लिङादयश्च प्रवृत्तिहेतुभूतार्थाभि-

धायिनः कार्यमेवाभिदधते, तस्यैव अवगतस्य प्रवृत्त्यनन्तरकारणत्वात्। इच्छा यद्यपि प्रवृत्तिहेतुः, तथापि सा लिङादिवाच्या न भवति, तदवगमस्य प्रवृत्तौ अनपेक्षितत्वात्। उत्पन्ना हि सा प्रवृत्तिकारणं नावगता। ननु एवमपि कथं लिङादीनां कार्ये व्युत्पत्तिरिति, अत आह '**शब्दान्तराणि स्वार्थेषु व्युत्पद्यन्ते यथैव हि। आवापोद्वापभेदेन तथा कार्ये लिङादयः॥**' लिङादियुक्तवाक्यश्रवणे तद्भावभाविन्या प्रवृत्त्या विशिष्टकार्यावगतिमनुमाय वाक्यस्य तावत् हेतुतामध्यवस्यति। तत्रापि कोऽर्थभागः केन शब्दांशेनाभिहितः इति विवेचने लिङाद्यावापेन कार्यावगतिदर्शनात्, तदुद्धारे चादर्शनात् ते एव कार्यावगतिं कुर्वन्तीति शब्दान्तरवत् लिङादीनां कार्यवाचकत्वव्युत्पत्तिसिद्धिः।

ननु लोकव्यवहारात् लिङादयो वाचकतया व्युत्पाद्यमानाः प्रैषादिष्वेव वाचकतया व्युत्पत्तिमर्हन्ति, तत्रैव तेषां प्रयोगदर्शनादिति। '**कार्यमेव हि कर्तॄणां ज्यायःसमकनीयसाम्। प्रवृत्त्यापेक्षया (त्यपे) भेदात् प्रैषादिव्यपदेशभाक्॥**' प्रवर्त्यपुरुषापेक्षया ज्यायसा वक्त्रा प्रतिपाद्यमानं कार्यं 'प्रैषः' इति व्यपदिश्यते। समेन आमन्त्रणम्, हीनेन अध्येषणमिति। प्रैषादिप्रतिपादका अपि च लिङादयः। '**कार्यमेव हि सर्वत्र प्रवृत्तावेककारणम्। प्रवृत्त्यव्यभिचारित्वाल्लिङाद्यर्थोऽवधार्यते॥**' प्रवृत्तिर्हि बालेन स्वात्मनि कार्यावगमपूर्विका प्रतिपन्ना इति सर्वपुरुषानपि प्रवर्तमानान् दृष्ट्वा कार्यविगममेव (कार्यावगममेव) बालः कल्पयतीति प्रेष्यादीनामपि प्रवृत्तिः कार्यावगमनिबन्धनेति। कर्तव्यमेव हि प्रैषादिव्यपदेशयोगीति सिद्धम्। वस्तुतस्तु प्रैषादीनामपि प्रवृत्तिव्यभिचारित्वात्, कार्यस्य च प्रवृत्तिषु सर्वासु हेतुभूतत्वात् प्रैषादिष्वपि लिङादीनां कार्यमेवार्थ इति निश्चीयते। केन पुनः प्रमाणेन बालः स्वयं कार्यमवगच्छति यतः प्रवर्तेत इति अत आह–'**कृतिसाध्यं प्रधानं यत् तत् कार्यमवसीयते। तच्च मानान्तरेणापि वेद्यमोदनपाकवत्॥**' कृतौ सत्यां च भावादसत्यां चाभावादनुमानतः कृतिसाध्यता तावदवगम्यते। यदधिकृत्य कृतिः प्रवर्तते, तत् कृतिप्रधानम्। प्रयत्नश्च कृतिः। स च मानसप्रत्यक्षवेद्यः, इति विशिष्टे प्रयोजनताऽपि प्रयत्नस्य प्रत्यक्षवेद्यैव, तेन प्रत्यक्षानुमानाभ्यामवमन्यते। यथा च ओदनः पाकस्येति न किञ्चिदनुपपन्नम्। उपसंहरति '**एवं कार्यात्मकेऽप्यर्थे व्युत्पद्यन्ते लिङादयः। तदन्वितेषु स्वार्थेषु तथा शब्दान्तराण्यपि॥**'

एवमपि कथं मानान्तरावेद्यकार्यवाचिता लिङादीनामित्याशङ्क्य मीमांसामवतारयति '**संप्रधार्यमिदं त्वत्र तत् कार्यं किं क्रियात्मकम्। यद्वा तद्व्यतिरेकीति॥**' को नु निर्णय इत्यत्राह '**तत्र लोकानुसारतः। प्रमाणान्तरविज्ञेया क्रिया कार्येति यद्यपि। प्रतिभाति–।**' लोके हि लिङादियुक्तवाक्यश्रवणे विशिष्टक्रियाऽनुष्ठानदर्शनात् तद्विषया कार्यावगतिर्लिङादिभिः क्रियते इति युक्तम्, अवगतिप्रवृत्त्योरेकविषयत्वात्। नहि अन्यत् कार्यतया अवगम्य अन्यत्र बालः प्रवर्तते। किंच क्रियायां कार्यभूतायां लिङादियुक्तवाक्यप्रतिपाद्यमानायां शक्तिकल्पनालाघवं स्यादेव। तथाहि, धातुरेव कार्यभूतं स्वार्थं ब्रवीतु। तथा भूतार्थवाचिनस्तु धातोः परे लिङादयो भवन्तीत्याश्रयताम्। लिङादिश्रवणे तु तथाभूतार्थतया धातुः प्रयुक्तः इत्यवगम्य कार्यभूतधात्वर्थावगमः संपद्यते। यथा लिङादिभ्यो वर्तमानाद्यध्यवसायः। तेष्वपि वर्तमानेऽर्थे वर्तमानाद्धातोर्लडित्येव सूत्रार्थः। कर्त्रादिसंख्यामात्रवाचित्वमेव केवलं लडादीनामिव लिङादीनामप्यर्थ इति क्रियैव कार्यतया वेदेऽपि अवगम्यते इति यद्यपि विवेकसमर्थानामवगतिर्भवति। '**तथा वेदे, सिद्धान्तेऽवस्थिते सति। स्वर्गकामादयः कार्यो (कार्ये) नियोज्यत्वेन संगताः॥ स्वर्गकामादयः शब्दैर्वक्तव्या इत्यवस्थितम्।**' षष्ठाद्ये ह्येतदुक्तम्। लिङादिप्रयोगे तावत् कार्यावगतिरस्तीति निर्विवादम्। कृतिसाध्यं च कार्यं भवति। सति कर्तरि तस्यात्मलाभः। कर्तृलाभश्च स्वसंबन्धिकार्यविबोधे सति भवति, नान्यथा। तेन यद्यपि लोकानुसारेण क्रियाया एव कार्यतया बोध्यमानाया वाक्यार्थत्वात् तदन्वयित्वाच्च इतरेषामिति, पदार्थानां कारकत्वात् ऋते चान्यस्य क्रियाऽन्वयित्वासंभवात् लोहितोष्णीषन्यायेन (३।८।४) विशेषण-

निषादेष्टेश्च गृह्यत्वाभावादुपेक्षितम् । नहि गृहशब्दवाच्यदंपत्योर्हितमिति व्युत्पत्त्या अस्यापि गृह्यपदवाच्यत्वम्, अभियुक्तप्रसिद्धया गृह्यपदस्य गृह्यसूत्रोक्तकर्मस्वेव रूढत्वेन योगस्याप्रयोजकत्वात् । इतरथा गृह्यत्वापत्तेः ।

**मण्डन**—'यागं कुर्याल्लौकिकेऽग्नौ निषादः ।' ४.

**शंकर**—'स्थपतीष्टिस्तथैव स्यात् ।' तथैव उपनीतिवत् लौकिकेऽग्नौ । ४.

* **निषादस्थपतीष्ट्यादौ** आहिताग्नित्वस्य अनतिदेशः । राजत्वादेस्तु कर्तृविशेषणत्वात्, तस्य च प्रकृतौ अङ्गत्वात् विकृतौ अतिदेशः इष्ट एव । **भाट्ट.** ८।१।४ पृ. ८.

**निषादस्थपतिन्यायः** । रौद्रे चरौ निषादजातीयस्य स्थपतेरधिकारः ॥

**स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात् । ६।१। १३।५१ ॥**

**भाष्यम्**—'वास्तुमध्ये रौद्रं चरुं निर्वपेत्, यत्र रुद्रः प्रजाः शमयेत्' इत्येतामिष्टिं प्रकृत्य उच्यते 'एतया निषादस्थपतिं याजयेत्' इति । निषादस्थपतिं प्रति संदेहः किं अधिकृतानां अन्यतमः, उत अन्य एवेति । अन्यतमः इति ब्रूमः । स हि समर्थः विद्वत्त्वात् अग्निमत्त्वाच्च । अन्यः अविद्वत्त्वात् अनग्नित्वात् असमर्थः इति । ननु निषादस्थपतिशब्दः तत्र नोपपद्यते । उच्यते । न नोपपद्यते, निषादानां स्थपतिः इति षष्ठीसमासो भविष्यति श्रेष्ठो निषादानाम् । तस्मात् अधिकृताधिकारं एतच्छास्त्रमिति । एवं प्राप्ते, ब्रूमः । निषादः एव स्थपतिर्भवितुमर्हति । कस्मात् ? शब्दसामर्थ्यात् । निषादं हि निषादशब्दः शक्नोति वदितुं श्रवणेनैव । निषादानां तु स्थपतिं लक्षणया ब्रूयात् । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा । अथोच्यते, नैष दोषः । निषादशब्दो निषादवचन एव । षष्ठी संबन्धस्य वाचिकेति । तन्न । षष्ठ्यश्रवणात् । नात्र षष्ठीं शृणुमः । आह, लोपसामर्थ्यात् षष्ठ्यर्थोऽवगम्यते इति । सत्यमवगम्यते । न तु लोपेन । केन तर्हि ? निषादशब्दलक्षणया । तस्याश्च दौर्बल्यं इत्युक्तम् । समानाधिकरणसमासस्तु बलीयान् । तत्र हि स्वार्थे शब्दौ वृत्तौ भवतः । द्वितीया च विभक्तिः तन्त्रेण उभाभ्यां संबध्यते । तेन द्वितीयानिर्दिष्टो निषादो गम्यते । तत्र षष्ठ्यर्थे कल्पयन् अश्रुतं गृह्णीयात् । तस्मात् निषाद एव स्थपतिः स्यात् ।

**टुप्**— ( सिद्धान्तमाह— ) कर्मधारयोऽयम्, न षष्ठीतत्पुरुषः । ( कुतः ? ) एवं ( हि सति ) पदद्वयम् ( अपि ) स्वार्थवृत्तम् ( भवति ), इतरथा ( षष्ठीसमासे ) निषादशब्दो लक्षणया स्थपतौ अध्यारोपितः स्यात् ( किमिति लक्षणा इत्यत आह— ) सामानाधिकरण्यसमासप्रतिपत्त्यर्थम् । ( नीलोत्पलसमासेऽपि ) उत्पलशब्दस्यापि तदेवाधिकरणम् ( प्रतिपाद्यम् ) नीलशब्दस्यापि ( तदेव ) अतः ( ऐकाधिकरण्यात् एकार्थीभावलक्षणम् ) सामर्थ्यम् (सिध्यति), सामर्थ्याच्च समासः । षष्ठीसमासे च ( ऐकाधिकरण्यसिद्धयर्थम् ) लक्षणा ( आश्रयितव्या ) । अन्यथा ( यदि च निषादशब्देन निषाद एवोच्यते, स्थपतिशब्देन च स्थपतिरेव अर्थान्तरभूत उच्यते, ततः ) भिन्नाधिकरणत्वात् सामर्थ्याभावः, सामर्थ्याभावाच्च समासाभावः । तस्मात् ( समाससिद्धयर्थम् ) निषादशब्देन स्थपतिं यावत् गतव्यं इत्येषा लक्षणा । न चात्र षष्ठी विद्यते, अनुपलभ्यमानत्वात् । लुप्ता ( षष्ठी विद्यते ) इति चेत्, उच्यते । यदि अत्र अश्रवणेन ( कारणेन ) लोपः ( षष्ठ्याः कल्प्यते, ततः ) स्यादयः ( शब्दाः ) लुप्ताः इति किमिति न कल्प्यते ( अश्रवणाविशेषात् ) । तस्मात् लोपे नास्ति प्रमाणम् । ततो राजपुरुष इत्यत्रापि राजा चासौ पुरुषश्च इतीदृशो विग्रहः कर्तव्यः । तत्रापि षष्ठी अश्रवणादेव नास्ति । किन्तु स्वस्वामिसंबन्धात् ( राजपुरुषयोः, राजशब्दे ) षष्ठ्यर्थमध्यारोप्य तदा ( षष्ठीसमासवेलायाम् ) समासो भवति । राज्ञः पुरुषः इति ( विग्रह— ) वाक्यं अर्थप्रदर्शनार्थम् ( स्पष्टीकरणार्थमिति यावत् ) । तस्मात् स्थपतिशब्दे या ( द्वितीया— ) विभक्तिः, सा इतरत्र ( निषादशब्दे ) अनुषज्यते ( निषादं स्थपतिं इति ) अन्यस्याः ( षष्ठ्याः ) अश्रवणात् । अथवा समुदायात् ( समस्तात् निषादस्थपतिशब्दात् ) उत्पन्नत्वात् ( द्वितीया विनैव अनुषङ्गेण ) उभयत्रापि द्रष्टव्या । ( 'तस्मा-

न्नान्यो निषादार्थात् स्थपतिर्लक्षणाभयात् । भवेन्निषाद एवासौ स्थपतिः शब्दशक्तितः ॥ ' )

**लिङ्गदर्शनाच्च । ५२ ॥**

**भाष्यम्**—लिङ्गं दृश्यते 'कूटं दक्षिणा' इति निषादस्य द्रव्यं दर्शयति । कूटं हि निषादानामेव उपकारकं नार्याणाम् । एवं स्वमेव तत् निषादानामिति ।

**शा**—'ऐन्द्रं वास्तुमयं चरुं निर्वपेत्' इति प्रकृत्य श्रूयते 'एतया निषादस्थपतिं याजयेत्' इति । तत्र 'पक्षद्वयेऽपि शब्दोऽयं योगादेव प्रवर्तते । तत्र षष्ठीसमासत्वे विदुषः स्यादधिक्रिया ॥ आहिताग्नेश्च, यदि तु कर्मधारय इष्यते । अनाहिताग्नेरज्ञस्य प्रसज्येताधिकारिता ॥ तेन षष्ठीसमासोऽयमिति प्राप्तेऽभिधीयते । निषादपदमेवं तु स्थपतौ लक्षणां व्रजेत् ॥ नहि षष्ठी श्रुता, येन तत्संबन्धी विधिर्भवेत् । निषादपदमेवातः षष्ठ्यर्थं लक्षयेदिदम् ॥ कर्मधारयपक्षे तु न काचिदपि लक्षणा । निषाद एव स्थपतिरतः श्रुत्या प्रतीयते ॥ तेन श्रुतिबलादज्ञोऽनाहिताग्निश्च सन्नपि । निषाद एव स्थपतिः कर्मण्यत्राधिकारभाक् ॥'

**सोम**—पूर्ववैषम्येण प्रत्यवस्थानात् संगतिः । निषादो नाम ब्राह्मणात् शूद्रायामुत्पन्नः । स तु शूद्रधर्मयुक्तः । अत एव आपस्तम्बाचार्यैः 'हविष्कृदाधाव इति शूद्रस्य' इत्ययं निषाद एव शूद्रशब्देन व्यवहृतः । एवं च शूद्रयाजनस्य निषिद्धत्वात् अतिक्रान्तनिषेधानामेव याजकत्वं बोध्यम् ।

**वि**—'द्विजः स्थपतिरन्यो वा, द्विजः षष्ठीसमासतः ।, कर्मधारयमुख्यत्वान्निषादो रौद्रयागकृत् ॥'

**भाट्ट**—'रौद्रं वास्तुमध्ये चरुं निर्वपेत्' इति प्रक्रम्य 'एतया निषादस्थपतिं याजयेत्' इति श्रुतम् । तत्र यद्यपि निषादः स्थपतिर्यस्य इति बहुव्रीहौ पदद्वयेऽपि अन्यपदार्थलक्षणा इति स नाश्रीयते । तथापि निषादानां स्थपतिः इति षष्ठीतत्पुरुषे तदभावात्, विद्याऽऽक्षेपशक्तिकल्पनाभिया कर्मधारयाङ्गीकारेण स एवाश्रीयते । न च तत्रापि पूर्वपदे निषादसंबन्धिनि लक्षणा, कारणाभावात् । यद्यपि हि कल्सावयवार्थयोगेनैव उपपत्तौ न समासे विशिष्टार्थशक्तिकल्पना प्रामाणिकी तथापि कर्मधारये अभेदस्येव षष्ठीतत्पुरुषादावपि स्वस्वामिभावादिभेदसंबन्धस्य संसर्गविधयैव भानोपपत्तेः लक्षणायामनुपपत्त्यभावः । न च नैयायिकवत् अस्माकं नामार्थयोरभेदान्वय एव इत्यत्र प्रमाणमस्ति । राजा पुरुषोऽस्ति इत्यादौ सर्वत्र नामार्थस्य विभक्त्यर्थे, तस्य च आख्यातार्थे अन्वयाङ्गीकारेण परस्परान्वयस्य समासातिरिक्ते क्वापि अप्रसक्तत्वात् । अतः समासे एव प्रसक्तस्य तस्य संसर्गविधयैव भानोपपत्तेः न लक्षणा । इति प्राप्ते, समानाधिकरणपदस्थले राजा पुरुषोऽस्ति इत्यादौ क्रियाऽन्वयोत्तरं पार्ष्ठिकान्वयस्य अभेदसंबन्धेनैवानुभवात् राज्ञः पुरुषोऽस्ति इत्यादौ व्यधिकरणपदस्थले च भेदसंबन्धेनैव अनुभवात् लाघवेन नामप्रयोज्यतदर्थान्वयबोधस्य अभेदविषयकत्वमेव इति नियमकल्पनात् स्वस्वामिभावादिसंबन्धस्य षष्ठीतत्पुरुषादौ संसर्गविधया भानानुपपत्तेः अवश्यं पूर्वपदे स्वार्थसंबन्धिलक्षणामङ्गीकृत्य तस्य उत्तरपदार्थे अभेदेनान्वयः इत्यङ्गीकार्यम् । अत एव नामप्रयोज्यनामार्थविशेष्यकनामार्थप्रकारकाभेदसंसर्गकबोधत्वावच्छिन्नं प्रति एकाधिकरणवृत्तिप्रातिपदिकार्थताऽवच्छेदककनामद्वयसमभिव्याहारस्य द्वंद्वभिन्ननामद्वयसमभिव्याहारस्य वा तन्त्रत्वं इत्यपि बोध्यम् । तेन धवखदिरौ, नीलघटौ इत्यादौ नाभेदबोध इत्यपि बोध्यम् । न चैवं समासे संबन्धिनः अभेदेन अन्वयात् विग्रहे च राज्ञः पुरुष इत्यत्र षष्ठ्यर्थसंबन्धस्य भेदेनान्वयात् वृत्तिवाक्ययोः भिन्नार्थत्वापत्तेः एकविधानेन इतरनिवृत्त्यनापत्तौ विभाषासूत्रवैयर्थ्यापत्तिः इति वाच्यम् । एकतरबोधे इतरबोधस्य आवश्यकत्वेन अर्थैक्याभिप्रायात् । अतश्च षष्ठीतत्पुरुषे लक्षणाऽऽपत्तेः निषादश्चासौ स्थपतिश्च इति कर्मधारय एवायम् । तेन तावद्विषये विद्यामाक्षिप्य अनाहिताग्नेरपि निषादस्यैवाधिकारः । अत एव 'कूटं दक्षिणा स्वं हि तन्निषादानाम्' इति लिङ्गमपि संगच्छते । तत्र च परप्रयुक्तोपजीवित्वात् आहवनीयाद्यनाक्षेपेऽपि 'यत्र क्वचन होष्यन् स्यात् स पञ्चभूतसं—( भूसं— ) स्कारान् कृत्वा लौकिकाग्निं प्रतिष्ठापयेत्' इति स्मृतिवचनेन अग्न्यन्तराभावे होममात्रोद्देशेन

लौकिकाग्निविधानात् तमेव तत्तद्देशे स्थापयित्वा तस्मिन् इष्टिः कर्तव्या इति ध्येयम् ।

**मण्डन**-- 'स्थपतिस्तु निषादः स्यात् ।'

**शंकर**-- 'स्थपतेश्च निषादस्य ।' अधिक्रिया रौद्रेष्टौ ।

अत्र 'वास्तुमध्ये रौद्रं चरुम्' इति **भाष्यम्**। 'ऐन्द्रं वास्तुमयं चरुम्' इति **शा.** । 'वास्तुमयं वास्तुशाकबीजप्रकृतिकम्' इति **सोम.** । 'वास्तुशाकः वास्तुकं चन्दनबथुआ ( इति उत्तरापथे ) चन्दनबटवा ( इति दक्षिणापथे ) इति **अमरटीकायाम्** । 'वास्तुमयं रौद्रं चरुम्' इति, 'वास्तुशब्दः किञ्चित्प्रकृतिकद्रव्यविशेषमाह' इति च **विस्तरः** ।

* चशब्देन ब्रह्मलोक इत्यत्र **निषादस्थपतिन्यायोऽपि** कर्मधारयसमासग्रहणे सूचितः । **श्रीकर.** १।३।१५ **ब्रसू.**, * **निषादस्थपतिन्यायेन** शूद्रस्य औपनिषदब्रह्मवाक्यश्रवणाधिकारोऽस्तीत्याशङ्क्य निराकरोति । १।३।३६ **ब्रसू.** * 'ऊकालः' इत्यत्र **निषादस्थपतिन्यायेन** कलृप्तसमाहारद्वंद्वे अपरनिमित्तकत्वेन अन्तरङ्गत्वस्य बाधकत्वकल्पनायामेव दीर्घनिर्देशः उपपद्यते । **भूतिः.** पृ. १७०. * ननु शूद्राणामपि पुराणश्रवणादिना ज्ञानोत्पत्तेः निषादस्थपतिन्यायेन महावाक्यग्रहणाधिकारसंभवात् । **श्रीकर.** १।३।३४ **ब्रसू.** * यत्तु व्रीहित्वाद्यवच्छिन्नोद्देशेनैव प्रोक्षणादिविधिः शाब्दबोधे लक्षणाया अनङ्गीकारात्, पश्चात्तु निषादस्थपतिन्यायेन प्रोक्षणादिविशिष्टव्रीहीणां वाक्यान्तरकल्पनया अपूर्वार्थकत्वकल्पनं इत्युक्तं तन्न । **भाट्ट.** ९।१।१, * व्रीह्यादीनां आनर्थक्यपरिहारार्थं प्रोक्षणादिविशिष्टव्रीहीणामेव कल्पितवाक्यान्तरेण यागार्थत्वस्य अपूर्वार्थत्वस्यैव वा बोधोपपत्तौ निषादस्थपतिन्यायेन व्रीहिपदे यवादिसाधारण्येन अपूर्वसाधनत्वलक्षणायां प्रमाणाभावत् । ९।१।१.

* **निषादस्थपतिपदे** तत्पुरुषबहुव्रीह्यपेक्षया लक्षणाऽभावलाघवेन कर्मधारयः अङ्गीकृतः । अङ्गीकृतं च फलमुखं अध्ययनप्रयुक्तं गौरवं इत्याहुः । **मणि.** पृ. १५२.

* **निषादस्थपतिशब्दस्य** षष्ठीतत्पुरुषे कृते त्रैवर्णिकोऽपि संभवति तादृशः । कर्मधारये कृते तु निषादजातीयो धनिकः सः । तत्पुरुषाच्च कर्मधारयः प्रबलः । तथा च निषादजातीयस्यैव रौद्रयागाधिकारः । **के.** ६।१।१३।५१-५२.

* **निषिद्धस्य** प्रतिप्रसवविधिः, यथा ग्रहणे सूतकेऽपि श्राद्धविधिः 'स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके' इति अयं स्मार्तः । श्रौतोऽपि 'न हिंस्यात् सर्वभूतानि' इति निषिद्धस्य 'अग्नीषोमीयं पशुमालभेत' 'वायव्यं श्वेतमालभेत' इति । **बाल.** पृ. १६.

* **निषिद्धाचरण**जन्ययज्ञवैगुण्यपरिहारार्थम् 'भूर्भुवः स्वः स्वाहेत्याहवनीये जुहुयात्' । **वि.** १२।३।५.

* **निषिद्धद्रव्यस्य** प्रतिनिधित्वाभावः । **भा.** ६।३।६।२०.

* **निषेधः** अकर्तव्यत्वप्रतिपादनात्मकः । **सु.** पृ. ८, * निषेधः । अननूदितनिषेधायोगः । पृ. १३८०. * निषेधः अनृतवदनस्य क्रतुशेषः दर्शपूर्णमासयोः । **वि.** ३।४।८. * निषेधः जर्तिलयवाग्वादेः पयोहोमविध्यर्थवादः । अग्निहोत्रे । **भा.** १०।८।४।७. * निषेधः प्रवर्ग्यस्य अनूचानव्यतिरिक्तकर्तृके अग्निष्टोमप्रथमप्रयोगे एव । **वि.** ३।३।१७. * **निषेधाः** अनर्थहेतुकर्मणः सकाशात् पुरुषस्य निवृत्तिकरत्वेन पुरुषार्थानुबन्धिनः । **मीन्या.** * **निषेधेन** स्वविषये अनिष्टसाधनत्वाक्षेपः क्रियते । **भाट्ट.** ३।४।८ पृ. ३१८. * **निषेधस्य** अन्यार्थाश्रितस्य, अन्यार्थत्वे 'तदहर्मांसमैथुने वर्जयेत्' इति दर्शपूर्णमासप्रकरणाधीतो निषेध उदाहरणम् । **सु.** पृ. ३२१, * निषेधस्यापि विधिवत् वाक्यार्थरूपा भावना विषय एव, न तु धात्वर्थस्यैव विषयिणी । पृ. २०१, * निषेधस्य प्राप्तविषयत्वनियमः । पृ. १०४१, * निषेधस्य प्राप्त्यपेक्षत्वात् दुर्बलाया अपि प्राप्तेः निषेधेन अत्यन्तबाधायोगः दशमाधिकरणपूर्वपक्षसूत्रे वक्ष्यते (१०।८।१।१) । पृ. १३१८, * निषेधस्य फलं निषेध्यानिष्टासंयोगः । पृ. २६४, * क्रत्वर्थत्वपुरुषार्थत्वपक्षयोः द्वयोरपि श्रौतस्य **निषेधस्य** क्रतुवैगुण्यपरिहारफलकत्वम् । पृ. १३९५. * **निषेधेषु** नरकाद्भीतस्याधिकारः, न तु स्वर्गकामिनः । **वि.** ६।२।५. * निषेधेषु निवर्तना वाक्यार्थः । **मीन्या.**

* **निषेधातिक्रमे** पुरुषस्य प्रत्यवायः । कलञ्जन्यायः द्रष्टव्यः । **के.** ६।२।५।२०–२१.

* **निषेधानुमितस्य** अश्रुतपदप्रयोगस्य विकृतौ निवेशः । **संकर्ष.** ४।३।१९.

* **निषेधानुवादः** कार्यापत्तिप्रमाणम् । **बाल.** पृ. ८.

* **निषेधफलं** प्रदर्शनमात्रेणैव संबध्यते न विधिफलवत् कामपदोपबन्धं अपेक्षते । नहि कश्चित् संत्यक्तव्यमर्थं कामयते । **वा.** ३।४।६।१७.

* **निषेधफलविधिः** अर्थवादः ' तस्माद् ब्राह्मणाय नावगुरेत ' इति निषेधे ' यो ब्राह्मणायावगुरेत् तं शतेन यातयात् ' । तृतीये शंय्वधिकरणे । **बाल.** पृ. ५३.

* **निषेधविध्यर्थवादो** यथा ऐतरेयब्राह्मणे ' हिरण्यकशिपावासीन आचष्टे ' इति होतृकर्तृकस्य क्रत्वर्थस्य ' पुत्रकामा हाप्याख्यापयेरन् ' इति च पुरुषार्थस्य शौनःशेपाख्यानविधेः वाक्यशेषे ' नियोक्तारं न विविदुः ' ' विशसितारं न विविदुः ' इति शामित्रकर्त्रलाभोक्त्या ' मह्यमपरं शतं दत्त, अहमेनं विशसिष्यामि ' इति च लोभात् प्रवृत्त्युक्त्या शामित्रे दोषावगतेः निन्दया तन्निषेधः कल्प्यते । यद्यपि चात्र ' न हिंस्यात् ' इति सामान्यनिषेधः ऋत्विजां स्वाधिकारिकः पराधिकारिकेण सामाख्यानिकेन कर्तृत्वमात्रतया ऋत्विजः स्पृशताऽपि अबाधितः प्रवृत्तोऽस्ति । अत एव तृतीये ( ३।७।१३। २८–२९ ) ' शमिता च शब्दभेदात् ' इत्यधिकरणे वार्तिककृता उक्तम् ' अत एवार्त्विज्यं निन्दति ' इति, तथापि विशेषनिषेधः दोषविशेषार्थत्वेन अर्थवानेव इति । **बाल.** पृ. ५७.

**॥ निषेध्यबोधाद्विनिषेध्यबाध इति न्यायः ।** निषेध्यज्ञानान्निषेध्यस्य बाधो भवति, नान्यथेत्यर्थविषयेऽस्य प्रचार इति शंकरविजये । **साहस्री.** ८९३.

* **निष्कासः** नाम आमिक्षायाः पात्रलिप्तः कियांश्चित् भागः । स्थालीलिप्तः ओदनस्य भागश्च ( खरपुडी इति भाषायाम् ) । **के.** * निष्कासः पात्रलग्नः शेषः । **सोम.** ७।३।४. * निष्कासः प्रायणीयस्य उदयनीयनिर्वापार्थः ज्योतिष्टोमे । **भा.** ११।२।१६।६६–६८. * निष्कासः लेपः । ' वारुण्या निष्कासेन तुषैश्चावभृथमवयन्ति ' । वारुणी आमिक्षा । **वि.** ७।३।४. * निष्कासः वरुणप्रघासावभृथे, अर्थकर्मणा ह्यस्य गुणभूतस्य संयोगो विज्ञायते । **भा.** ११।२।१५।६५.

**॥ निष्कासस्यावभृथे तदेकदेशत्वात् पशुवत् प्रदानविप्रकर्षः स्यात् । ११।२।१५।६३॥**

वरुणप्रघासेषु ' वारुण्या निष्कासेन तुषैश्च अवभृथमभ्यवयन्ति ' इति श्रूयते । वारुणी वरुणदेवताका आमिक्षा, तस्याः निष्कासः भाण्डलिप्तो भागः । एतद्वचनोक्तस्य अवभृथे निष्कासस्य प्रदानविप्रकर्षः स्यात् । आवापस्थाने आमिक्षाया एको भागः यवपिष्टमयमेषसहितः प्रदत्तः । निष्कासरूपस्य तु भागस्य विप्रकर्षेण समिष्टयजुरूर्ध्वं विहारे एव प्रदानं कर्तव्यम् । अवभृथशब्दस्तु भक्त्या अनुवादमात्रम् । निष्कासस्य तस्या आमिक्षाया एव एकदेशत्वात् । पशुवत् । ' वपया प्रातःसवने चरन्ति, पुरोडाशेन मध्यंदिने, अङ्गैस्तृतीयसवने ' इति पशोर्भागानां यथा कालतो विप्रकर्षो भवति तद्वत् । इति पूर्वः पक्षः ।

**अपनयो वा प्रसिद्धेनाभिसंयोगात् । ६४ ॥**

सिद्धान्तमाह । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । निष्कासस्य पूर्वस्मात् कर्मणः सकाशात् अपनयः कर्तव्यः । अवभृथाख्ये अपूर्वे एव कर्मणि निष्कासस्य विनियोगः स्यात् । प्रसिद्धेन अवभृथशब्देन निष्कासस्य अभिसंयोगात् संबन्धात्, तादृशसंबन्धस्य वचनेनोक्तत्वात् । तथा च निष्कासादेः न प्रदानविप्रकर्षः किन्तु कर्मान्तरोपदेशोऽयम् ।

**प्रतिपत्तिरिति चेत् । ६५ ॥**

पूर्वपक्षी शङ्कते । निष्कासस्य आमिक्षाशेषत्वात् उपयुक्तशेषत्वात् अवभृथगमनं प्रतिपत्तिः स्यात्, नार्थकर्म इति चेत् ।

**न, कर्मसंयोगात् । ६६ ॥**

सिद्धान्ती उत्तरमाह, न प्रतिपत्तिः । कुतः ? कर्मसंयोगात् अर्थकर्मणा हि अस्य गुणभूतस्य निष्कासस्य संयोगात् संयोगविज्ञानात् निष्कासेन इति तृतीयासामर्थ्यात् । तस्मात् कर्मान्तरोपदेशः इति सिद्धान्तः । **के.**

* निष्कासावभृथाधिकरणम् । अवभृथधर्मककर्मान्तरस्य० ( मीको. भागः २ पृ. ७०३–७०५ ) इत्यत्र द्रष्टव्यम् । के. ११।२।१५।६३–६६.

ऽ निष्कासावभृथन्यायः । अवभृथस्य वरुणप्रघासगतस्य तुषनिष्कासद्रव्यकत्वम् ॥

**द्रव्यादेशे तद्द्रव्यः श्रुतिसंयोगात् पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् । ७।३।५।१७ ॥**

**भाष्यम्**— वारुणप्राघासिकोऽवभृथः सौमिकात् अवभृथात् धर्माणां ग्राहकः इत्युक्तम् । तत्रेदं चिन्त्यते । किं पुरोडाशद्रव्यकोऽसौ, उत तुषनिष्कासद्रव्यक इति । किं प्राप्तम् ? पुरोडाशद्रव्यक इति । कुतः ? नाम्ना पुरोडाशः प्राप्यते । ननु प्रत्यक्षश्रुतं तुषनिष्कासम् । सत्यं प्रत्यक्षश्रुतम्, न तु शक्यते विधातुम् । अवभृथोऽत्र विधीयते 'अवभृथं यन्ति' इति । यदि तुषनिष्कासं अपरं विधीयेत, ततो वाक्यं भिद्येत, अवभृथं यन्ति, तच्च तुषनिष्कासेन इति । तुषनिष्कासश्रवणमिदानीं किमर्थम् ? अनर्थकम्, संबन्धाभावात् । **एवं प्राप्ते, ब्रूमः** । द्रव्यादेशे तद्द्रव्यः । द्रव्यादेशे एतस्मिन् 'तुषनिष्कासेन अवभृथं यन्ति' इति, तद्द्रव्यः स्यात् तुषनिष्कासद्रव्यः । कुतः ? श्रुतिसंयोगात् । तुषनिष्कासं प्रत्यक्षश्रुतम्, पुरोडाशस्तु आनुमानिकः अतिदेशेन प्राप्यते । ननु पुरोडाशोऽपि प्रत्यक्षश्रुतो नाम्ना । यद्यपि प्रत्यक्षश्रुतः, सामान्येन तु प्राप्यते । तुषनिष्कासं तु विशेषेण । बाध्यते च सामान्यं विशेषेण । अपि च लक्षणया पुरोडाशो गम्यते, श्रुत्या तुषनिष्कासम् । श्रुतिलक्षणयोश्च श्रुतिर्न्याय्या । तस्मात् तुषनिष्कासद्रव्यकः इति । अथ यदुक्तं न संबध्यते अवभृथेन तुषनिष्कासम्, वाक्यभेदप्रसङ्गादिति । **तत्र ब्रूमः** । यदि अवभृथं विहाय तुषनिष्कासं विधीयेत ततो वाक्यभेदः स्यात् । तुषनिष्कासद्रव्यकोऽपूर्वः अवभृथश्चोद्यते । तथा सगुणकर्मविधानमविरुद्धम् । अविधीयमाने च तुषनिष्कासे तद्ग्रहणमनर्थकमेव स्यात् । तस्मात् तुषनिष्कासद्रव्यकः । पुरोडाशस्तु अनादेशे तत्प्रकृतित्वात् । यदि अत्र प्रत्यक्षश्रुतं न द्रव्यं स्यात् ततः पुरोडाशः तत्प्रकृतित्वात् स्यात् । अत्र तु प्रत्यक्षश्रुतं तुषनिष्कासम्, तस्मान्न पुरोडाशः ।

**शा**— '**अपूर्वकर्मविधिनाऽनेकेषामपि चोदनात् । अन्यथा तुषनिष्कासपदानर्थक्यदोषतः ॥ तद्विशिष्टविधिस्तेन पुरोडाशस्य बाधनम् । श्रुत्या हि तुषनिष्कासं विशेषेण च चोद्यते ॥**' अवभृथशब्देन तु गौणेन सर्वावभृथधर्मसाधारणेन च पुरोडाशस्य प्राप्तिः, तस्मात्तस्य बाधः ।

**सोम**— पूर्वोक्तकर्मान्तरप्रसङ्गात् इदम् । तुषनिष्कासशब्दस्य मुख्यत्वात् विशेषविषयत्वेन निरवकाशत्वात्, गौणेन धर्मान्तरे सावकाशेन अवभृथशब्देन प्राप्तस्य पुरोडाशस्य बाधात् न तस्य द्रव्यत्वम् । **सूत्रार्थस्तु**— द्रव्यस्य तुषनिष्कासस्य आदेशे तदेव द्रव्यं ग्राह्यं श्रुतिसंयोगात् । द्रव्योपदेशाभावे हि सौमिकावभृथप्रकृतित्वात् ततः पुरोडाशप्राप्तिः इति ।

**वि**— 'तत्र द्रव्यं पुरोडाशस्तुषनिष्कासकावुत ।, प्राप्तोऽवभृथशब्देन पुरोडाशोऽतिदेशतः ॥ तुषनिष्कासयोरत्र साक्षाच्छ्रुत्युपदेशतः । अतिदेशप्रापितस्य पुरोडाशस्य बाधनम् ॥'

**भाट्ट**— अतिदेशोऽपि च न तदीयद्रव्यस्य एककपालस्य अतिदेशः । औपदेशिकेन विशेषविहितेन च तुषनिष्कासद्रव्येण लाक्षणिकस्य सामान्यविहितस्य अतिदेशप्राप्तस्य द्रव्यस्य बाधात् । ( ७।३।४।१२–१६ इत्यत्रैव एतदन्तर्भूतमन्ते ) ।

**मण्डन**— 'साक्षाच्छ्रुतं द्रव्यमिह प्रदेयम् ।'

**शंकर**— 'तद्द्रव्यं न पुरोडाशः ।'

* अनुवषट्कारयागस्य प्रतिपत्तिकर्मत्वेऽपि **निष्कासावभृथवाजिनयागन्यायेन** इतिकर्तव्यताऽऽकाङ्क्षायां सोमजन्ययागत्वसादृश्येन अतिदेशोपपत्तेः । **कौ.** ३।२।१६।३८ पृ. २९७.

* **निष्कासशब्दः** शेषवचन एव, यत् उखायां लग्नं तदनेनोच्यते । **भा.** ११।२।१६।६७.

* **निष्केवल्यं** शंसति इति शस्त्रं प्रधानकर्म न गुणकर्म । **भा.** २।१।५।१३–२९.

* **निष्क्रयः** परकीयस्य द्रव्यस्य मूल्यार्पणेन आत्मसात्करणम् । **के.**

* **निष्ठान्ते** पुनर्नास्ति भावना । **वा.** ९।१।२।२.

* **निष्पक्वं** शिरसि प्रक्षेप्तुं ईषद्विलीनं नवनीतम् । **वि.** ३।४।७.

* **निष्प्रयोजनं** सप्रयोजनेन बाध्यते यथा निगदेषु उच्चैस्त्वेन 'उपांशु यजुषा' इति प्राप्तमुपांशुत्वम् । **बाल.** पृ. १३२.

* **निष्फलत्वं** काम्यस्य अङ्गवैकल्ये । वि. ६।३।२.

**नीरक्षीरन्यायः ।** यत्र सत्यासत्यविवेचनं तत्रास्य प्रवृत्तिः । यथा जलदुग्धे संमिश्रिते न प्रतीयेते, तथा तथ्यं ब्रह्म, वितथं मिथ्याभूतमज्ञानादि, ते च सम्यङ्मिलिते तादात्म्यं प्राप्ते स्तो न प्रतीयेते । यथा संमिश्रिते नीरक्षीरे हि इदं नीरमिदं क्षीरमिति पृथक्कर्तुं केऽपि पक्षिणो विना हंसं न शक्नुवन्ति, तथा चेदं तथ्यमिदमतथ्यमिति ज्ञातुं विवेकज्ञं परमहंसं विना न कोऽपि शक्नोति पण्डित इति भावः । उक्तं च 'क्षीरं ब्रह्म जगच्च नीरमुभयं तद्योगमभ्याहतं दुर्भेदं त्वितरेतरं चिरतरं सम्यग्विभक्तीकृतम् । येनाशेषविशेषदोषलहरीमासेदुर्षी शेमुर्षी सोऽयं शीलवतां पुनाति परमो हंसो द्विजात्यग्रणीः ॥' **साहस्री.** १२५.

* **नीलमुत्पलम् ।** कथं तर्हि भवत्यत्र संबन्धो नीलमुत्पलमिति ? उच्यते । भवति न तु श्रुतिलक्षणः, किन्तु वाक्यलक्षणः । उत्पलशब्दसंनिधाने तदपेक्षी नीलशब्दः तेनैकवाक्यतामभ्युपगच्छन् अजहत्स्वार्थवृत्तिः उत्पलविशेषाभिधानपरः उच्चार्यमाणः संबन्धमभ्युपैति । **भा.** ३।१।६।१२ पृ. ६८८.

**नीलेन्दीवरन्यायः ।** यथा 'नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याऽधरे पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोः । लीयन्ते कबरीषु बान्धवजनव्यामोहजातस्पृहा दुर्वारा मधुपाः कियन्ति तरुणि स्थानानि रक्षिष्यसि ॥' इति । **साहस्री.** २०९.

* '**नीलोत्पलवनेष्वद्य** चरन्तश्चारुसंरवाः । नीलकौशेयसंवीताः प्रनृत्यन्तीव कादम्बाः ॥' पुरुषकृतः पदसंघातोऽयम् । ( 'रामाः कौशेयसंवीताः कादम्बा इव शोभनाः' इत्युत्तरार्धे न्यायरत्नमालायाम् ) । **भा.** १।१।७।२४ पृ. ९५.

* **नीलीरोगाद्युपहतेन्द्रियस्य** चक्षुरस्त्येवेति परैर्दृश्यते, परेण तु नीयमानमुपलभ्य न पश्यतीति ज्ञायते । **वा.** १।२।४।३१ पृ. १४५.

* **नीवाराः** प्रतिनिधिभूताः व्रीहिभिः समानविधानाः । **भा.** ३।६।१४।३७–३८. * नीवाराः यदा 'इन्द्राय मरुत्वते नैवारमेकादशकपालं निर्वपेत्' इत्यादौ प्रकृतिद्रव्यत्वेनैव विहिताः, तदा सदनकरणमन्त्रे 'व्रीहीणां मेध' इत्यत्र 'नीवाराणां मेध' इत्यूहः कर्तव्यः । नीवाराणां प्रतिनिधित्वे तु नोहः इति नवमेऽधिकरणे वक्ष्यते । **के.** ९।३।१।१–२. * नीवाराः व्रीहीणां प्रतिनिधिः । **वि.** ६।३।११. * **नीवारैरपि** आग्नेयोऽष्टाकपाल इति इयं चोदना संपादयितुं शक्यते । **वा.** ६।३।४।१५. * नीवारैः ( व्रीहिस्थानीयैः ) योऽपि यागं कुर्यात् तेनापि चोदितमेव कृतम् । **भा.** ६।३।३।१२, * **नीवाराणां** व्रीहीणां च न प्रकृतिविकारभावः । ३।६।१४।३९. * नीवाराणां व्रीहिप्रतिनिधित्वे सदनकरणमन्त्रे व्रीहिशब्दस्यानूहः । **वि.** ९।३।९, * **नीवारेषु** जातितो व्रीहिशब्दार्थत्वाभावेऽपि आकारतो व्रीहिशब्दार्थत्वेन प्रोक्षणावघातादिविधयः साक्षादेव नीवारेषु प्रवर्तन्ते । ३।६।१४. * नीवारेषु प्राकृतव्रीहिस्थानापन्नेषु व्रीहिकार्याणामनुष्ठानम् । 'प्राकृतव्रीह्यादिस्थानापन्नेषु' इत्यत्राधिकरणम् । **भा.** ९।२।१२।३९, * नीवारेषु व्रीहित्वेन परिच्छिन्ना व्रीहिव्यक्तयः सन्ति, तासामर्थेन व्रीहिधर्माः क्रियन्ते । ३।६।१४।३८.

* **नीवारादिप्रतिनिधिष्वपि** मुख्यधर्मानुष्ठानं दर्शपूर्णमासादौ । **के.** ३।६।१४।३७–३९.

* '**नृणामकृतचूडानामशुद्धिर्नैशिकी स्मृता ।**' इयं निमित्ततो वाचनिकी व्यवस्था स्मार्ती । **बाल.** पृ. १९.

**नृपनापितपुत्रन्यायः ।** यत्र अतिनिन्द्येऽपि स्वकीये अतिरम्यताबुद्धिविवक्षा तत्रायमवतरतीति । यथा, इत्थं हि किल लौकिकी गाथा– कस्यचिन्नृपस्य भृत्यो नापित आसीत्, स कदाचित् प्रातरुत्थाय सर्वं पुरमन्विष्यातीव सुन्दरो बालो मे दर्शनाय त्वया अत्रानेय इति नृपेणाज्ञप्तः, स तु नापितो राजाज्ञां श्रुत्वा अखिलपुरमन्विष्य दृष्ट्वाऽपि च तत्रतत्रातिरम्यान् बालान् स्वसुत-

तुल्यान्न मत्वा तानपहाय स्वसुतमेव उपशान्तानलाङ्गाराभं काणं खल्वाटं कृशह्रस्वबाहुजङ्घं स्थूललम्बोदरं राजवेश्मनि नीत्वा राज्ञे निवेदयामास राजन् आनीतोऽयं अतिरम्यतमो बालः। दृष्ट्वा च तं कुरूपं नापितपुत्रं राजा उपहासं मयि कृतवानयं खल इति मत्वा चुकोप, उवाच च– अरे मूर्ख किमिदमिति। नापितश्च कुपितं राजानं ज्ञात्वा कृताञ्जलिपुटो भूत्वोवाच, राजेन्द्रमौले! तव चरणमुपलभे, नायमुपहासः किन्तु मे मनसीत्थमेव निश्चयः– मत्पुत्रसदृशो रम्यस्त्रिलोक्यामपि नास्ति, तव नगरस्य का कथेति। राजा च सत्यमीदृश्येव रागग्रहगृहीतचित्तदशेति कोपं तत्याजेति। तथा, यथा अतिकुरूपेऽपि स्वसुते रागातिशयवशान्नापितस्य सर्वोत्तमत्वधीः तथा केषाञ्चिदाधुनिकपाषण्डिमतानुयायिमन्दधियां प्राक्तनजन्मकुसंस्कारप्रयुक्तरागातिशयवशात् कस्मिंश्चिदतिक्षुद्रेऽपि मते सर्वोत्तमत्वधीः परिहृत्य च सनातनश्रौतस्मार्तपौराणिकोत्तममतानीति न्यायसंगतिरिति। **साहस्री. ७९.**

* **नेत्रे संमील्य हसति**, मुखं व्यादाय स्वपिति इति उपसंख्यानात् समानकर्तृत्वमात्रत्वाच्चित्वं क्त्वाप्रत्ययस्य। **सु. पृ. ८६७.**

* **नेत्रद्वयाञ्जनं** साङ्गमेकपदार्थः। तेन अनेकयजमानके अहीने एकत्र नेत्रद्वयेऽपि अञ्जनं कृत्वा यजमानान्तरे तत् कार्यम्। **भाट्ट. ५।२।३.**

* **नेमाधिकरणम्।** पिकनेमाधिकरणम्। **भा. १।३।५।१०.**

* **नेमशब्दः** अर्धवाची अनार्यप्रसिद्धेरेव। **के. १।३।५।१०.**

* **नेष्टा** नाम ऋत्विक् अध्वर्योः पुरुषः। तृतीयवर्गस्थोऽयम्। अयं तृतीयी तृतीयांशभाक् चतस्रो गाः लभते। **वि. ३।७।१७.**

* **नेष्ट्रीया** इति समाख्यानात् कर्म ज्ञायते। **भा. ३।७।२०।४१.**

* **नैचाशाखं** नाम नगरम्। **भा. १।२।४।३१–९.**

* **नैमित्तिकमतुल्यत्वात्०** (३।६।१३।३६) इति नैमित्तिकाधिकरणसिद्धान्तहेतुपरशब्देन 'अतुल्यत्वात्' इत्यनेन द्विरुक्त्यापादकं विध्ययौगपद्यमेव विवक्षितम्। **रसायनम्. पृ. १५६.**

**⌛ नैमित्तिकमतुल्यत्वादसमानविधानं स्यात्। ३।६।१३।३६॥**

क्षत्रियस्य वैश्यस्य च अग्निष्टोमे यजमानस्य सोमचमसस्थाने फलचमसः एव भवति। ये तु मानं क्रयः उपावहरणं अभिषवः इत्यादयः सोमधर्माः, तेषामपि किं फलचमसार्थेषु नैयग्रोधादिफलेष्वपि समानमेव विधानम्, उत चोदकेनैव प्राप्तिः इति संदेहे सिद्धान्तसूत्रमिदम्। नैमित्तिकं राजन्यवैश्यनिमित्तेन निर्वृत्तं फलचमसद्रव्यं सोमेन असमानविधानं स्यात् सोमेन सह समानं विधानं यस्य, तादृशं न स्यात्। क्रयादीनां धर्माणां विधानं सोमस्येव फलचमसस्य साक्षात् न स्यात्। कुतः? अतुल्यत्वात्, फलचमसस्य सोमेन तुल्यत्वाभावात् सोमो नित्यः, फलचमसो नैमित्तिकः। अतो धर्मा अपि क्रयादयः सोमे नित्याः, फलचमसे तु न तथा किन्तु चोदकेन स्युः। **के.**

* ननु फलचमसे सोमत्वाभावात् कथमनुच्छिष्टत्वं संभवतीति। न त्वेष दोषः, स्थानापत्त्या सोमधर्मलाभात्। वक्ष्यति हि **नैमित्तिकमतुल्यत्वाद**समानविधानं स्यात् इति। **वा. ३।५।२०।५३ पृ. १०२४.**

* नैमित्तिकमेव नित्यमपि क्वचित् यत्र संयोगपृथक्त्वं अग्निहोत्रहोमे दधि अग्नीषोमीयपशोर्यूपे खादिरश्च। **भा. ४।३।३।५–७.**

**⌛ नैमित्तिकं तूत्तरात्वमानन्तर्यात् प्रतीयेत। ९।२।५।२३॥**

अग्निष्टोमे 'यद्योन्यां गायति तदुत्तरयोर्गायति' इति श्रूयते। तत्र योनिभूतायाः ऋचः परस्तात् तच्छन्दस्के एव केचित् द्वे ऋचौ गृहीत्वा जायमाने तृचे साम गेयम्, उत उत्तरानामको यो ग्रन्थः छन्दोगानां प्रसिद्धः, तत्र पठिता ऋक् उत्तरा नाम। एवं च उत्तराग्रन्थे पठितयोर्द्वयोः ऋचोः योनिवत् गेयं इति विचारे सिद्धान्तमाह। नैमित्तिकम् 'तद्योन्यां तदुत्तरयोर्गायति' इति वचनप्राप्तं उत्तरात्वं आनन्तर्यात् उत्तरासंज्ञकग्रन्थपाठेन अव्यवहितयोः अनन्तरत्वात् प्रतीयेत। एवं च

'उत्तरयोर्गायति' इति उत्तराशब्दः संख्यावाचकः इति पूर्वपक्षी मन्यते, तन्न। किन्तु उत्तराग्रन्थपठिते योनेः उत्तरभूते एव ऋचौ उत्तराशब्देन ग्राह्ये इति सिद्धान्तः।

**ऐकार्थ्याच्च तदभ्यासः। २४॥**

अग्निष्टोमे 'उत्तरयोर्गायति' इति उत्तराशब्देन उत्तराग्रन्थपठिते एव द्वे ऋचौ ग्राह्ये। तादृशे एव च तृचे तस्य रथंतरादिसाम्नः अभ्यासः तदभ्यासः स्यात्। तृचशब्दस्य ऐकार्थ्यात् एकार्थत्वस्य उपपन्नत्वात्। एकग्रन्थपठिते ऋक्त्रये तृचशब्दः समञ्जसो भवति। न तु अन्यत्रान्यत्र पठितासु तिसृषु ऋक्षु। तस्मात् उत्तराशब्देन उत्तराग्रन्थपठितयोरेव ग्रहणं इति सिद्धान्तः। **के.**

**'नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषात्' (३।६।३।१० जै.) इत्यनेन न्यायेन** काम्योऽग्निर्नित्यस्य विकारको भविष्यति। **भा.** १२।४। ७।१७.

**नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषात्। ३।६।३।१०॥**

पूर्वोक्तस्यापवादस्यापवादोऽयम्। दर्शपूर्णमासप्रकरणे 'गोदोहनेन पशुकामस्य प्रणयेत्' इति, अग्नीषोमीये पशौ यूपं प्रकृत्य 'बैल्वो ब्रह्मवर्चसकामस्य' इति च श्रूयते। नित्याग्निहोत्रार्थं दर्शे सांनाय्यार्थं च यस्मिन् पात्रे गौर्दुह्यते तत् पात्रं गोदोहनं नाम। तत्र गोदोहनं बिल्वश्च किं प्रकृतौ निविशते, विकृतौ वा इति संदेहे प्रकृतेः चमसाख्येन पात्रेण खदिरादिना च निराकाङ्क्षत्वात् अव्यवहितपूर्वेण न्यायेन विकृतौ निवेशः इति उत्सूत्रे पूर्वपक्षे प्राप्ते सिद्धान्तयति सूत्रम्। तुशब्दः अपवादस्यापवादसूचकः। नैमित्तिकं पशुकामेन निमित्तेन निर्वृत्तं गोदोहनं प्रकृतौ दर्शपूर्णमासयोः तद्विकारः चमसविकारः चमसस्य बाधकं स्यात्। संयोगविशेषात् नित्यनैमित्तिकसंयोगभेदात् सामान्यविशेषसंयोगभेदाच्च। चमसो नित्यः, गोदोहनं नैमित्तिकम्। प्रकरणं सामान्यम्, निमित्तं च विशेषः। नैमित्तिकेन नित्यं विशेषेण च सामान्यं बाध्यते। एवं पशौ अपि यूपे खादिरपालाशरौहितकाः सामान्येनोक्ताः, बिल्वो विशेषविहितः काम्यत्वान्नैमित्तिकश्च। तस्मात् गोदोहनं बिल्वश्च प्रकृतौ एव निविशेते न विकृतौ। **के.**

* नैमित्तिकं नित्येन असमानविधानम्। **भा.** ३।६। १३।३६. * नैमित्तिकं नित्यात् प्रबलम्। 'असंजातविरोधं हि नित्यं सर्वं विधीयते। नैमित्तिकं तु तद्व्यासविषयत्वाद्विरुध्यते॥' 'किञ्च प्रयोगसामान्ये नित्यं सर्वं विधीयते। नैमित्तिकं विशेषे तु तस्मात् तद् बलवत्तरम्॥' **वा.** ३।६।३।१० पृ. १०३३. * नैमित्तिकं प्रकृतौ निविशते। **भा.** ३।६।३।१०.

*** नैमित्तिकं वा कर्तृसंयोगाल्लिङ्गस्य तन्निमित्तत्वात्। ३।३।१२।३३॥** वाशब्दः पूर्वपक्षोक्तस्य हेतोः प्रतिज्ञायाश्च व्यावृत्त्यर्थः। नैमित्तिकशब्दः प्रथमप्रयोगनिमित्तत्वसिद्धान्तप्रतिज्ञार्थः। कर्तृसंयोगात् इत्यस्य प्रथमशब्दस्य प्रयोगे एव कर्तृसंयोगोपपत्तेः इत्यर्थः। लिङ्गस्येति यज्ञशब्दसामानाधिकरण्याख्यस्य लिङ्गस्य इत्यर्थः। तन्निमित्तत्वात् प्रथमप्रयोगनिमित्तकत्वात् इत्यर्थः। (इति **सुधासंक्षेपः** प्रकृतसूत्रगतः)।

* नैमित्तिकं हि कर्म स्वरूपमात्रे न समवैति, किन्तु यस्मिन् प्रयोगे निमित्तमुपजनितं तस्मिन्नेव प्रयोगे। ततश्च प्रयोगान्तरे क्रियमाणे नास्ति साद्गुण्यम्। **सोम.** ६।५।१८.

**नैमित्तिकानि न नित्यत्वप्रयुक्तानि॥**

**नैमित्तिके विकारत्वात् क्रतुप्रधानमन्यत् स्यात्। ४।३।२।४॥**

**भाष्यम्**— अस्ति ज्योतिष्टोमे नैमित्तिकम् 'बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य' इति। तथा अग्नौ नैमित्तिकम् 'साहस्रं प्रथमं चिन्वानश्चिन्वीत, द्विसाहस्रं द्वितीयं, त्रिसाहस्रं तृतीयम्' इति। तथा दर्शपूर्णमासयोः श्रूयते 'गोदोहनेन पशुकामस्य प्रणयेत्, कांस्येन ब्रह्मवर्चसकामस्य, मार्तिकेन प्रतिष्ठाकामस्य' इत्येतानि नैमित्तिकानि। तेषु संदेहः किमेतान्येव नैमित्तिकानि नित्यार्थे, उत अन्यत् तत्र नित्यार्थे, इति।

किं प्राप्तम्? एतान्येवेति। कुतः? अत्र ब्रह्मसामादिभिरवश्यं भवितव्यम्। चोदितानि हि तानि, संनिहितानि साधनानि आकाङ्क्षन्ति। न चैषां सन्ति

विहितानि साधनानि। समीपतश्च नैमित्तिकानि उपनिपतन्ति। तैः प्रकृतैः संनिहितैरेतानि निराकाङ्क्षीक्रियन्ते' इत्येतन्न्याय्यम्। कथम्? नैमित्तिकं हि संनिहितं वाक्यादवगम्यते, नान्यत् श्रूयते। यावांश्च श्रुतस्योत्सर्गे दोषः तावानेव अश्रुतकल्पनायाम्। आह, ननु निमित्तार्थानि तानि प्रकृतानि। उच्यते। नैष दोषः। अन्यार्थमपि प्रकृतमन्येन संबध्यते। यथा शाल्यर्थं कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं पीयते, उपस्पृश्यते च। एवमिहापि द्रष्टव्यम्। अथवा अस्त्येवात्र अवान्तरवाक्यम्। यथा गोदोहनेन प्रणयेत्, इति। तद्कामसंबद्धं गोदोहनेन प्रणयनं प्रापयति। न च शक्यं श्रुतमुत्स्रष्टुम्। योऽप्ययं पशुकामस्येति शब्दः, स पशुकामसंबन्धं शक्नुयात् कर्तुम्, नावान्तरवाक्यस्यार्थं निवारयितुम्। न च गम्यमानं विना कारणेन अविवक्षितमिति शक्यं वदितुम्। भवन्ति च द्विष्ठानि वाक्यानि। यथा श्वेतो धावति, अलम्बुसानां यातेति। तस्मात् नैमित्तिकान्येव नित्यार्थे भवितुमर्हन्तीति। एवं प्राप्ते, ब्रूमः। नैमित्तिके श्रूयमाणे क्रत्वर्थमन्यत् स्यादिति। कुतः? विकारत्वात्। विशेषे श्रुतत्वादित्यर्थः। विशेषे हि तत्र नैमित्तिकं श्रूयते। तदसति तस्मिन् विशेषे, न भवितुमर्हति। यदुक्तमवश्यकर्तव्यानीति। नैष दोषः। अवश्यं कर्तव्यत्वात्करिष्यन्ते। यत्तु नान्यदेषां विहितं साधनमिति, सामान्यविहितं भविष्यतीति न दोषः। किं तत्? अभीवर्तो ब्रह्मसाम, अष्टादशमन्त्रगतोऽग्निः, वारणं प्रणयनपात्रम्। अथ यदुक्तम्, संनिहितैः प्रकृतैर्नैमित्तिकैर्ब्रह्मसामादीनि संभन्त्स्यन्ते इति। नेति ब्रूमः। नहि बार्हद्गिरादीनां प्रकरणम्। अथोच्येत, प्रकृतैः स्तोत्रादिभिः संबध्यन्ते इति। एतदपि नोपपद्यते। यद्यपि प्रकृतानि नित्यानि स्तोत्रादीनि, तथापि वाक्येन निमित्तसंयोगे श्रूयन्ते बार्हद्गिरादीनि। वाक्यं च प्रकरणाद्बलीयः।

यदुक्तम्, संनिधानात् वाक्यादवगतोऽयमर्थ इति, नैवंजातीयको वाक्यार्थः सामान्यपदार्थं बाधितुमर्हति। निमित्तसंयोगे हि बार्हद्गिरादीनामर्थवत्ता। तस्मात् तत्रतत्र अन्यन्नैमित्तिकात् नित्य इति। अथ यदुक्तम्– अवान्तरवाक्येन गोदोहनमपि प्रापितं न शक्यमुत्स्रष्टुम्, ऋते कारणादविवक्षितं कल्पयितुम्। द्विष्ठं हि तद्भवतीति। उच्यते। कारणादविवक्षितम्। किं कारणम्? नहीदं युगपद्भवति, परिपूर्णेन चार्थाभिधानं अवान्तरवाक्येन चेति। कथम्? प्रणयतीति प्रपूर्वे नयतौ विधिविभक्तिः स्वपदगतमर्थं श्रुत्या विदधाति। प्रणयनादिसंबन्धमपि गोदोहनादि श्रुत्या, वाक्येन च। यस्तु फलस्य गोदोहनादेश्च संबन्धः स हित्वा श्रुत्यर्थं केवलेन वाक्येन। अथ प्रणयनस्य गोदोहनादिसंबन्धम्, गोदोहनादेश्च फलेन संबन्धं विदधातीत्युच्यते। तत्र। द्व्यर्थाभिधानात् भिद्येत नितरां वाक्यम्। न चैतन्न्याय्यम्। यत्तु श्वेतो धावतीत्येवमादि, भवेत्तत्र विशेषानवगमादुभयार्थावगतिः। इह तु गम्यते विशेषः कमिपदोच्चारणम्। स इह श्रौतो मन्येत। यदि गोदोहनादेः क्रियासंबन्धो विवक्ष्यते, कमिपदं प्रमादो भवेत्। न चायं प्रमादः। न चावान्तरवाक्यार्थे विवक्षिते कमिपदसंबन्धोऽवकल्पते। तस्मान्न द्विष्ठं वाक्यम्। गोदोहनादिकमिसंबन्ध एव अत्राभिधीयते, न नित्यकार्ये भवितुमर्हतीति। एवं सर्वत्र।

टुप्— क्रत्वर्थानि चमसादीनि अदृष्ट्वा पूर्वः पक्षः। केचित्तु आहुः फलचमसमनालोच्य (अनादृत्य) पूर्वपक्षः (कृत्वाचिन्तेत्यर्थः। पूर्वपक्षमाह–) यद्यपि गोदोहनादीनि फलार्थानि (श्रुतानि) तथापि (संनिहितत्वात्) विपरिवर्तमानानि, तान्येव (अनुषङ्गेण संबध्यमानानि) क्रत्वर्थान्यपि। अथवा (विनैव अनुषङ्गेण) प्रकरणेन गृह्यन्ते। (विनाऽपि कृत्वाचिन्तया वचनमपि दृष्ट्वैव पुनः पूर्वपक्षद्वयमाह–) 'अथवा गोदोहनेन प्रणयेत्' इति 'गोदोहनेन पशुकामस्य' इति (च) वाक्यात् (उभयस्मात्) द्वावपि अर्थौ गम्येते क्रत्वर्थता पुरुषार्थता च। अथवा पशुकामपदाविवक्षया 'गोदोहनेन प्रणयेत्' इति श्रुत्यनुग्रहेण पूर्वः पक्षः। एवं प्राप्ते, ब्रूमः नैमित्तिके विकारत्वात् इति। यत् यस्मिन् विकारे (विशेषे इति मुद्रिते पाठः) श्रूयते, तत् तस्मिन् सत्येव भवितुमर्हति (नासति) अतो विना फलेन न युज्यते। सन्ति च चमसादीनि (फलादिभिः) अस-

युक्तानि तानि ( प्रणयनादेः साधनानि ) भविष्यन्ति । कामपदत्यागात् हि ( भवता ) श्रुत्यर्थोऽनुगृह्यते । नासौ परमार्थः श्रुत्यर्थः । ' **नैवंजातीयको वाक्यार्थः सामान्यपदार्थं बाधितुमर्हति**' (इति भाष्यं व्याचष्टे-) ' अपः प्रणयति ' इत्यस्य सामान्येन या पात्राकाङ्क्षा , न तां गोदोहनवाक्यं समर्थं निवर्तयितुम् । कथम् ? फलसाधनत्वेन निराकाङ्क्षं गोदोहनं कथं तस्य पात्राकाङ्क्षां निवर्तयेत् । तस्मात् सामान्याकाङ्क्षायां अबाध्यमानायां चमसेन सह ( प्रणयनम् ) संभन्त्स्यते । न च द्विष्ठानि ( द्व्यर्थानि ) वाक्यानि , ( किन्तु ) एक एवार्थो वाक्यस्य । ( इयांस्तु श्वेतो धावति इत्यादौ— ) एकस्य ( वक्तुः ) विवक्षा श्वेतगुणो धावति ( श्वेतगुणो निर्णेजको धावति ) निर्णेनेक्ति ( वासांसि इति ) अपरस्य विवक्षा श्वा इतो धावति ( द्रुततरं गच्छति ) इति । बार्हद्गिरादीनि द्वादशाहिकानि इहोदाहरणम् । ( भाष्यकारेण तु ज्यौतिष्टोमिकानि बार्हद्गिरादीनि उदाहृतानि, तत् अनादरोक्तम् । ज्योतिष्टोमे हि नौधनं ब्रह्मसाम— ) ।

शा— ' **ब्राह्मणेन निमित्तेन बार्हद्गिरमिति श्रुतम् । मृन्मयं च प्रतिष्ठायां नित्ये स्यातामतो न ते ॥** ' तस्मात् अन्यत् नित्यार्थम् ।

**सोम**— फलार्थत्वेऽपि क्रत्वर्थत्वात् पर्णताऽऽदेः फलश्रुतिरर्थवादः इत्युक्तमयुक्तं इति प्रत्यवस्थानात् **( आक्षेपिकी ) संगतिः । सूत्रार्थस्तु**— निमित्ते सति ततोऽन्यदेव क्रत्वर्थं स्यात् । नैमित्तिकस्य विकारत्वात् विशेषश्रुतत्वात् असति विशेषे तदयोगात् इति । नैमित्तिकग्रहणं च न्यायसाम्यात् काम्यस्याप्युपलक्षणम् ।

**वि**—' मृन्मये प्रणयेत् कामी नित्येऽप्येतदुतेतरत् । , आकाङ्क्षा संनिधिश्चास्ति तस्मान्नित्येऽपि मृन्मयम् ॥ , कामार्थत्वादयोग्यत्वं सामान्यविहितेन च । आकाङ्क्षाया निवृत्तत्वान्नित्यार्थमितरद् भवेत् ॥ '

**भाट्ट**— काम्यं गोदोहनादि कामाभावे नित्यप्रयोगे उपस्थितत्वेऽपि न ग्राह्यम् । तथा ' बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य ' इति ब्राह्मणाद्यधिकारकत्वे निमित्ते द्वादशाहसंबन्धिब्रह्मसामस्तोत्रोद्देशेन विहितम् ( द्वादशाहपदेन भाष्योक्तं ज्यौतिष्टोमिकत्वं निरस्तम् ) बार्हद्गिरादि नैमित्तिकं च निमित्ताभावे अनुलोमाधिकारके प्रयोगे न ग्राह्यम्, निमित्ताभावेऽप्यनुष्ठाने निमित्तसंबन्धस्य वैयर्थ्यापत्तेः । न च कामाभावे तत्साधनानुष्ठाने फलानुत्पत्तावपि क्रतुसाद्‌गुण्योपपत्तेर्न कश्चिद्विरोध इति वाच्यम् । तस्य क्रत्वर्थत्वे प्रमाणाभावेन तदनुष्ठाननैयत्ये प्रमाणाभावात् । क्रत्वपेक्षायाश्च अर्थाक्षिप्तयत्किञ्चित्साधनग्रहणेऽपि निवृत्त्युपपत्तेः । अत एव प्रबलप्रमाणेनाङ्गत्वे अवगतेऽपि प्राकृताङ्गानां विकृत्यङ्गत्ववदस्यापि नित्यप्रयोगार्थत्वमित्यपास्तम् । यदा तु कामनिमित्तसंबन्धरहितं वारणाभीवर्ताद्याम्नातमेव , तदा कः प्रसङ्गः काम्यनैमित्तिकग्रहणस्य । यत्र तु तन्नाम्नातम् , तत्रार्थाक्षिप्तस्य यस्यकस्यचित् ग्रहणम् । सिद्धोऽप्ययमर्थः प्रयोजयत्वरूपप्रयोजनकथनार्थमुच्यते इति न विरोधः ।

**मण्डन**— ' नित्ये गोदोहनं नहि । '

**शंकर**— ' काम्यनैमित्तिके नित्ये ' ( न इत्यनुवर्तते ) ।

* नैमित्तिकानि । नित्यकाम्यनैमित्तिकानि कर्माणि यथोपपत्तिकालानि । तेषां वसन्ते आहितेनाग्निना कार्यम् । **भा.** ११।३।२।२.

* **नैमित्तिकोऽर्थः** निमित्ते प्राप्ते कर्तव्यो भवति । **भा.** ६।२।८।२८, * नैमित्तिको देवताऽपनयः दर्शेऽभ्युदितेष्टौ । ६।५।१।१-९, * नैमित्तिकः फलचमसः, स सोमधर्मान् गृह्णाति । ३।६।१३।३६, * नैमित्तिको वा काम्यो वा नित्यमर्थं विकृत्य निविशते । १०।३। ५।३२, * नैमित्तिको वा नित्यो वा नित्यमर्थं विकृत्य निविशते । यथा अक्ष्यामये मुद्गौदनभोजनं निवातशय्या चेति । १०।५।२४।८१, * नैमित्तिकः वैश्वानरो द्वादशकपालश्चयने, न नित्यः । ४।४।६।१२-१३. * नैमित्तिकः सन् अदोषनिर्घातार्थः क्रत्वर्थः अधिकारविधिः, यथा— अश्वप्रतिग्रहेष्टिः जञ्जभ्यमानमन्त्रोक्तिश्च । **बाल.** पृ. १४, * **नैमित्तिकेन** नित्यस्य बाधः, यथा वैश्यस्य सामिधेनीसप्तदशत्वेन पाञ्चदश्यस्य । पृ. १३२. * **नैमित्तिकात्** काम्यं बलवत् ' आसन्नपुरुषार्थत्वात् विप्रकृष्टफलात् तथा । बलवत् शीघ्रकारित्वात् काम्यं नैमित्ति-

कादपि ॥ ' वा. ३।६।३।१० पृ. १०३३. * नैमित्तिकान्नित्यं-दुर्लभम् । वि. ३।६।३. * नैमित्तिकात् नित्यार्थमन्यत् । भा. ४।३।२।४. * नैमित्तिकस्य काम्येन बाधः वैश्यसामिधेनीसाप्तदश्यस्य एकविंशतित्वेन प्रतिष्ठार्थेन । बाल. पृ. १३३. * नैमित्तिकस्य नित्यस्य च न समानविधित्वम् । भा. ३।६।१३।३६, * नैमित्तिकस्य निरवकाशतया नित्यबाधकत्वं वक्ष्यते । भाट्ट. ६।५।१ पृ. २८७. * नैमित्तिकस्य फलापेक्षा न भवति । यथा गृहदाहनिमित्तिकाया इष्टेः । यथा वा सत्रसमापननिमित्तकस्य पृष्ठशमनीयस्य । के. १०।२।१२।४०-४१, * नैमित्तिकानामनित्यार्थत्वम् । वि. ४।३।२, * नैमित्तिकानामपि कामवचनेन पुनर्विधाने काम्यताऽपि । संकर्ष. ३।१।१६, * नैमित्तिकानां कत्वर्थानां निमित्तावृत्तौ आवृत्तिः । भा. ६।२।९।३०, * नैमित्तिकानां नित्यप्रयुक्तत्वं नास्ति । यथा ज्योतिष्टोमे ' बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य' इति नैमित्तिकमेव । अग्नौ च प्रथमं साहस्रं द्वितीयं द्विषाहस्रं तृतीयं त्रिषाहस्रं चिन्वीतेति नैमित्तिकमेव । दर्शपूर्णमासे च ' गोदोहनेन पशुकामस्य प्रणयेत्, कांस्येन ब्रह्मवर्चसकामस्य, मार्तिकेन प्रतिष्ठाकामस्य' इति नैमित्तिकमेव । ४।३।२।४. * नैमित्तिकानां पाथिकृतादीनां कर्मणां निमित्तानुसारेणानुष्ठानम्, न तत्र पाठक्रमो नियामकः । सोम. ५।३।१२. * नैमित्तिकानां प्रायश्चित्तानां यथानिमित्तं समुच्चयः । के. १२।३।६।१७.

**नैमित्तिके तु कार्यत्वात् प्रकृतेः स्यात् तदापत्तेः । १०।२।३०।७०॥**

' वायव्यं श्वेतमालभेत भूतिकामः ' इति श्रूयते । अत्र श्वेतगुणकः कश्चिदालभ्यत्वेन उक्तः, स कः इति विचारे सिद्धान्तमाह । नैमित्तिके गुणनिमित्तके श्वेतशब्दे श्रूयमाणे प्रकृतेः सकाशात् प्राप्तस्य अजस्यैव पशोः ग्रहणं स्यात् । कार्यत्वात् अजे एव श्वेतगुणस्य संपादयितुं शक्यत्वात् । तदापत्तेः तस्य अजस्यैव श्वेतगुणेन परिच्छेद्यत्वोपपत्तेः । तस्मात् वायव्यः श्वेतः अज एव नान्यः पशुः इति सिद्धान्तः । पूर्वसूत्रे अजभिन्नः पशुरुक्तः अत्र तु अज एवोच्यते इति पूर्ववैषम्यार्थस्तुशब्दः । के.

* ' नैमित्तिके तु कार्यत्वात् प्रकृते स्यात्तदापत्तेः ' इत्यधिकरणे वायव्यादिपशौ उपदिष्टश्वेतगुणस्य प्राकृताजादिजातेश्च समुच्चय उक्तः । बाल. पृ. १७७.

**नैमित्तिके तु प्रकृतौ तद्विकारः संप्रयोगविशेषात् । ( ३।६।३।१० )** इति तृतीयाधिकरणवक्ष्यमाणन्यायमाह-( ' पुरुषार्थसमासत्तेः काम्यं नित्यस्य बाधकम् ' पुरुषार्थसिद्ध्यर्थो हि सर्वः प्रयासः इति तत्प्रत्यासन्नं वस्तु बलीयो भवति । वा. १।४।११।२१ )। सु. पृ. ४८८.

**नैमित्तिके पुनराधाने श्रुतदक्षिणया सामान्यविहितैकादिदक्षिणाया बाधः ॥**

**अग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्यात्, वाक्यसंयोगात् ।१०।३।५।३०॥**

**भाष्यम्**— अस्ति पुनराधानम्, निमित्ते श्रूयते । भाग्ययशःश्रीकामानां पुनरादधीत । ' योऽग्नीनाधाय भाग्यज्यानिं पुत्रज्यानिं वा जीयेत, स पुनरादधीत ' इति । तत्र श्रूयते ' पुनरुत्स्यूतं वासो दक्षिणा, पुनरुत्सृष्टोऽनड्वान् ' इति । तथा, आधाने दक्षिणा- ' एका देया षड् देया द्वादश देयाश्चतुर्विंशतिर्देयाः शतं देयं सहस्रं देयमपरिमितं देयम् ' इति । तत्र संशयः किं पुनराधानेऽग्न्याधानदक्षिणानामनिवृत्तिः, समुच्चयः, अथाग्न्याधेयदक्षिणानां निवृत्तिरिति । किं प्राप्तम् ? अग्न्याधेयस्य नैमित्तिके पुनराधेये दक्षिणादानमधिकं स्यात् । प्राकृतीनामनिवृत्तिः, समुच्चय इति । कुतः ? एकस्मिन् वाक्ये उभय्यो दृश्यन्ते । ' उभयीर्ददाति, आग्न्याधेयिकीश्च पुनराधेयिकीश्च ' इति । तस्मादनिवृत्तिः, समुच्चय इति ।

**शिष्टत्वाच्चेतरासां यथास्थानम् । ३१ ॥**

**भाष्यम्**-- इदं पदोत्तरं सूत्रम् । कथं चोदकप्राप्तस्य प्रत्यक्षश्रुतस्य समुच्चयो भविष्यति । अत्रोच्यते । शिष्टत्वादितरासाम्, प्राकृतीनां वचनप्रामाण्यात् यथास्थानं समुच्चयो भविष्यतीति । प्रत्यक्षं हीदं शासनम्, आग्न्याधेयिकीर्दत्वा पुनराधेयिकीर्ददातीति । तस्मान्न बाधः प्राकृतीनां समुच्चय इति ।

**विकारस्त्वप्रकरणे हि काम्यानि । ३२ ॥**

**भाष्यम्**—तुशब्दः पक्षं व्यावर्तयति, न समुच्चयः, विकार इति । कुतः? काम्यं ह्येतत् पुनराधेयं श्रूयते । तदसति प्राकृते प्रकरणे, आम्नानमवकल्पते, न सति । यत्तत्रोच्यते वैकृतम्, तत् प्राकृतं बाधते इत्यर्थः । काम्यो वा नैमित्तिको वाऽर्थो नित्यमर्थं विकृत्य निविशते । यथा अक्ष्यामये मुद्गौदनभोजनं निवातशय्या चेति, नित्यं शय्यासनं भोजनं च विकरोति । प्रत्यक्षं हि वैकृतम् । आनुमानिकं च प्राकृतम् । तस्मात् वैकृतेन बाध्यते । अथ यदुक्तम्, वचनप्रामाण्यात् प्राकृत्यो भविष्यन्तीति । अत्रोच्यते । ता उभयीर्ददातीति नात्र विधिविभक्तिरस्ति । वर्तमानापदेशोऽयम् । प्रमाणान्तरमादाय अयमर्थः प्रापितः । उभयीर्दक्षिणा ददाति, आग्न्याधेयिकीः पौनराधेयिकीश्च । अग्न्याधेये आग्न्याधेयिकीः, पुनराधेये पौनराधेयिकीः । तदेतत् भूतानुवादमात्रम् । तस्मात् प्राकृतीनां निवृत्तिरिति ।

**टुप्**—( सिद्धान्तमाह— ) पुनरुत्सृष्टोऽनड्वान् इत्येतस्मात् वाक्यात् समुच्चयो न गम्यते, समुच्चयशब्दाभावात् (तस्मात् बाधः ) । ननु 'ता उभयीर्ददाति' इति समुच्चयः श्रूयते । उच्यते । अर्थवादोऽयम् (न विधिः)। 'अप्रकरणे हि काम्यानि' इत्यस्य सूत्रावयवस्य अयं ( भाष्य– ) ग्रन्थः, **तत् ( काम्याम्नानम् ) असति प्राकृते प्रकरणे** पुनरुत्सृष्टाम्नानं यदि भवेत्, ततो न बाधेत आधानदक्षिणाम्, अप्रकरणान्तरत्वात् ( उभयोरपि तुल्यप्रकरणत्वेन बाधासंभवात् )। असति तु आधानप्रकरणाम्नाने यत् तत्र नैमित्तिकम् ( पुनरुत्सृष्टत्वादि ) विधीयते तत् प्राकृतं नित्यं बाधमानमेव निविशते काम्याम्नानम् । ( अत्र आनन्दाश्रमीयात् भूयान् भेदः ) ।

**शङ्कते च निवृत्तेरुभयत्वं हि श्रूयते । ३३ ॥**

**भाष्यम्**—इतश्च प्राकृतीनां निवृत्तिः । कुतः? निवृत्त्याशङ्कादर्शनात्, शङ्कते हि निवृत्तेरिति गम्यते । कथम्? उभयत्वं हि श्रूयते । यद्वैकृतीर्ददाति दक्षिणा उभय्योऽपि तेन दक्षिणाः प्रत्ता भवन्ति । ननु उभय्योऽपि प्रदीयन्ते, यत उभय्योऽपि प्रत्ता भवन्तीत्याह । अग्न्याधेयिकीः अग्न्याधेये, पुनराधेयिक्यः पुनराधेये । तस्मात् प्राकृतीनां निवृत्तिरिति ।

**सोम**—पूर्वत्र यथा 'द्वादश जुहोति' इति वचनानुसारेण समुच्चयः, एवमिहापि वचनादेव समुच्चयः इत्युत्थितेः **संगतिः** । **सूत्रार्थस्तु**—अग्न्याधेयस्य नैमित्तिके गुणविकारे पुनराधेयदक्षिणादानम् 'उभयीर्ददाति' इति वाक्यसंयोगात् प्राकृतीभ्यः अधिकम्, न तु निवर्तकं इति । (तस्मात् पुनराधेये पुनराधेयिक्य एव दक्षिणा देयाः । अग्न्याधेयिक्यस्तु प्रथमाधाने एवेति भाष्यादिग्रन्थसिद्धान्तः ) ।

**वि**—'एकादिना समुच्चेयं पुनर्निष्कृत इत्यदः । बाधकं वा, समुच्चेयमुभयीरित्युदीरणात् ॥, आधानदक्षिणोपेतमुभयीरित्यनूद्यते । ददातीत्यविधायित्वात् कार्यैक्याद् बाधकं भवेत् ॥' ( 'उपदिष्टं अतिदिष्टस्य बाधकम्' इत्यधिकरणस्य न्यायः ) ।

**भाट्ट**—'भाग्ययशःश्रीकामानां पुनरादधीत' इति श्रुतम् । तथा 'योऽग्नीनाधाय भाग्यजानिं पुत्रजानिं वा जीयेत, स पुनरादधीत' इति च । अत्र प्रकरणात् पुनःशब्दयोगाच्च नाधानानन्तरम्, अपितु तस्यैव पुनःप्रयोगः काम्यो नैमित्तिकश्च । तत्र काम्यवाक्ये द्वन्द्वोपात्तत्वात् 'अध्वर्युयजमानौ वाचं यच्छतः' इतिवन्नानेकोद्देश्यता । नैमित्तिकवाक्ये तु जानिशब्दो हानिपरः जीयेत प्राप्नुयात् इत्यर्थः । अनुषङ्गेण वाक्यद्वयाङ्गीकारेऽपि न दोषः । पुनःप्रयोगावान्तरप्रकरणे च 'पुनरुत्स्यूतं वासो दक्षिणा, पुनरुत्सृष्टोऽनड्वान्' इति श्रुतम् । अत्रापि प्राप्तदक्षिणानुवादेन अनेकविधानानुपपत्तेर्वाक्यभेद इष्ट एव । पुनरुत्स्यूतं पाटितं सीवनेन कृतसंधानम्, पुनरुत्सृष्टः भग्नः सन् कृतसंधानः । अनयोश्च न्यायतो विकल्पे प्राप्ते वचनादिना समुच्चय इति ध्येयम् । वस्तुतस्तु अतिदेशप्राप्तेः पूर्वमेव अनेकविशिष्टैकदक्षिणाविधानान्न कश्चिद्दोषः । आधाने च 'एका देया षट् देयाः' इत्यादिना दक्षिणाऽन्तरमाम्नातम् । तदिह काम्यनैमित्तिकप्रयोगविशेषपुरस्कारेण विहितया दक्षिणया सामान्यविहिताया एकादिदक्षिणाया बाधः । न च 'दशभिः क्रीणाति' इतिवत् 'उभयीर्ददाति

अग्न्याधेयिकीः पुनराधेयिकीश्च ' इति वचनेन समुच्चयविधानादबाधः, अस्य पुनरुत्स्यूतादिवाक्यशेषतया तत्स्तावकत्वेन समुच्चयविधायकत्वे वाक्यभेदात् । न च ' उपरि हि देवेभ्यो धारयति ' इतिवत् सिद्धवन्निर्देशान्यथाऽनुपपत्त्यैव विध्यन्तरकल्पना । कथञ्चिदपि प्राप्तिसत्त्वे ' यज्ञोपवीती हि देवेभ्यो दोहयति ' इतिवत् कल्पकत्वानुपपत्तेः । अस्ति हि आद्येऽग्न्याधेयप्रयोगे तासां नैमित्तिकादौ चान्यासां दानेनोभयोः प्रयोगभेदेन समुच्चयप्राप्तिः । अतस्तदादायैव स्तुत्युपपत्तेर्विध्यन्तराकल्पनात् बाध एव युक्तः । ' दशभिः क्रीणाति ' इत्यादौ तु नैवमिति विशेषः । अत एव ' यद्वैकृतीर्ददाति उभयोरपि तेन दक्षिणाः प्रत्ता भवन्ति ' इति लिङ्गमप्युपपद्यते ।

मण्डन— ' प्राग्दक्षिणा नो पुनरादधातौ । '

शंकर— ' पुनर्निष्कृत एव च । ' रथः दक्षिणा ।

*** नैमित्तिके विकारत्वात् क्रतुप्रधानमन्यत् स्यात् । ४।३।२।४ ॥**

दर्शपूर्णमासयोः ' गोदोहनेन पशुकामस्य प्रणयेत् ' ' कांस्येन ब्रह्मवर्चसकामस्य ' इत्यादिना अपां प्रणयनादौ गोदोहनादिपात्रं नैमित्तिकं श्रूयते । किमिदं नैमित्तिकं नित्यार्थेऽपि स्यात्, उत नित्यार्थे अन्यत् इति विचारे इदं नैमित्तिकमेव नित्यार्थे स्यात् इति उत्सूत्रे पूर्वपक्षे सिद्धान्तसूत्रमिदम् । नैमित्तिके पश्वादिफलनिमित्तके गोदोहनादौ श्रूयमाणे सति क्रतुप्रधानं क्रत्वर्थं नित्यमित्यर्थः, अन्यत् वारणचमसरूपं पात्रं स्यात् । गोदोहनादेर्नैमित्तिकस्य चमसविकारत्वात् । तस्मात् गोहनादि कामनानिमित्तकं न नित्यम् । क्रतुप्रधानं इत्यत्र क्रतुसाधनं इति कुतूहले पाठः । स च प्राचीनपुस्तकस्थाक्षरवाचनभेदात् संजातः सन् उत्तरकालं पाठभेद एव संपन्नः । **के.**

* **नैमित्तिकी** चिकीर्षा नित्यां चिकीर्षां बाधते । सत्यां हि नित्यायां सा भवति । अतस्तामबाधमाना नैवोत्पद्यते । यदि न बाध्येत अनर्थकं स्यात् वैकृतं विधानम् । **भा.** १२।२।१३।३३, * नैमित्तिकी वैश्वानरेष्टिः चयने । ' यो वै संवत्सरं उख्यमभृत्वा अग्निं चिनुते... वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेत् ' इति । ४।४।६।१२–१३,

* नैमित्तिकी षष्ठी चितिः प्रतिष्ठार्था । ४।४।७।१४–१८.

* **नैमित्तिकीनामिष्टीनामनुष्ठाने** पाठक्रमो न नियामकः, यथानिमित्तमनुष्ठानम् । **वि.** ५।३।१२.

* **नैमित्तिकाधिकरणं** श्वेताधिकरणं वा । १०।२। ३०।६९ । अत्रत्यो न्यायस्तु ' यत्र साधारणगुणवचनः, तत्र चोदको न बाध्यते ' इति । इदम् ' अंशवदाभ्ययोः ' इत्यत्र द्रष्टव्यम् । **टुप्.** १०।२।२९।६८. (नैमित्तिकमतुल्यत्वात् । ३।६।१३।३६ इदमपि नैमित्तिकाधिकरणं **रसायने** तथोक्तत्वात् । पृ. १५६.) ।

* **नैमित्तिकार्थं** नित्यार्थं च दध्यादि । ' दध्ना जुहोति, दध्नेन्द्रियकामस्य जुहुयात् ' ' खादिरे बध्नाति, खादिरं वीर्यकामस्य यूपं कुर्वीत ' । संयोगपृथक्त्वन्यायः । **भा.** ४।३।३।५–७.

* **नैमित्तिकपञ्चशरावयागो** दर्शाङ्गः । **भा.** ६।४। १०।३०–३१.

* **नैमित्तिकप्रतिपदोः** ' युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्, एते असृग्रमिन्दवः इति बहुभ्यो यजमानेभ्यः ' इति ज्योतिष्टोमात् कुलायादौ उत्कर्षः । **भा.** ३।३।९।१७–१९.

* **नैमित्तिकप्रायश्चित्तानां** समुच्चयः । **वि.** १२।३।६.

* **नैमित्तिकयागाः** ' अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्, यो दर्शपूर्णमासयाजी सन् अमावास्यां वा पौर्णमासीं वाऽतिपातयेत् ' इत्यादयः । तत्र पाठक्रमापेक्षैव नास्ति । निमित्तजनने तन्नैमित्तिकं कर्तव्यम् । **वि.** ५।३।१२.

* **नैमित्तिकशास्त्राणि** नित्यशास्त्रप्रवृत्त्यनन्तरभावीनि । **रसायनम्.** पृ. १५६. * **नैमित्तिकशास्त्राणां** हि अयमर्थः ' निमित्तोपजननात् प्राक् अन्यथा कर्तव्योऽपि क्रतुः, निमित्ते सति अन्यथा कर्तव्यः ' इति । **शा.** ६।५।१९.

* **नैमित्तिकसान्नाय्यादेः** प्रकृत्यर्थता । **भा.** ३।६। ४।११–१३ पृ. १०३७.

* **नैयायिकाः** अनुमाननिरूपणस्य जगन्निर्मातृपुरुषधौरेयसिद्धिः प्रयोजनमिति वदन्ति । जन्यकृत्यजन्यं द्व्यणुकं सकर्तृकं कार्यत्वात् इत्यनुमानेन तत्सिद्धिरिति ।

मणि. पृ. ४२-४३. * नैयायिकास्तु यत्र शक्यलक्ष्ययोः उभयोरपि प्राधान्यम् 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र तत्रैव अजहत्स्वार्था लक्षणा इत्याहुः। बाल. पृ. १४२. * नैयायिकाः। प्रमायां गुणः भ्रमे दोषश्च कारणम्। प्रामाण्यं अप्रामाण्यं च परतः उत्पद्यते एवं ज्ञानान्तरेण गृह्यते। अर्थक्रियादिज्ञानेषु अगत्या स्वतः प्रामाण्यं गृह्यते इत्यङ्गीक्रियते। मणि. पृ. १४. * नैयायिकाः प्रमाणयोर्द्वयोर्द्वयोः सामग्र्योः एकविषयत्वेन विरोधे अन्योन्यप्रतिबन्धात् प्रमाणसंप्लव एव ज्ञानानुत्पत्तिलक्षणः इति वदन्ति। बाल. पृ. १३४. * नैयायिकाः शक्तिः 'अस्मात् पदात् अयमर्थो बोद्धव्यः इत्याकारिका ईश्वरेच्छा' इति वदन्ति। मणि. पृ. ७४, * नैयायिकाः संसर्गः विशेषणविशेष्यसमभिव्याहारगम्यत्वात् संसर्गमर्यादया लब्धः इति मन्यन्ते। पृ. १७३, * नैयायिकैः प्राचीनैः वायुप्रत्यक्षाभावेऽपि तन्निष्ठस्पर्शस्य प्रत्यक्षत्वं अङ्गीकृतम्। पृ. १६.

* नैयायिकमते संसर्गो वाक्यार्थः। बाल. पृ. ७३.

* 'नैर्ऋतं चरुं नखावपूतानाम्' इति राजसूये। नखेषु मुसलोलूखलधर्मः प्रोक्षणं कर्तव्यम्। वि. ९।२।१२. * 'नैर्ऋतं चरुं निर्वपेत् कृष्णानां व्रीहीणाम्' इत्यत्र कृष्णवर्णस्य विधिः, नानुवादः। भा. ४।२।१०।२५. * नैर्ऋते चरौ 'कृष्णानां व्रीहीणां नखनिर्भिन्नानाम्' इति नखेष्वपि अस्ति प्रोक्षणोहः, अपूर्वस्य प्रयोजकत्वात्। वि. ९।१।२. * नैर्ऋतीषु इष्टकासु चयने इष्टकाधर्मा न कर्तव्याः, स्थण्डिलनिर्वर्तकत्वाभावात्। संकर्ष. २।१।११.

* नैर्ऋतचरुविहितकृष्णव्रीहिभिः प्राकृतयवबाधः। भा. १०।७।१९।६४-७१.

* 'नैवारं चरुमुपदधति' (अग्निचयने) इत्यस्य स्थण्डिलनिर्वृत्त्यौपयिकयथाश्रुतचरूपधानविधानेन निराकाङ्क्षस्य 'बृहस्पतेर्वा एतदन्नं यन्नीवाराः' इत्युपधानरूपगुणकर्मानन्वयिदेवतासंबन्धप्रतिपादक-वाक्यशेषानुसारेण यागविधायकत्वं नाङ्गीक्रियते संयुक्तस्त्वर्थशब्देन० (२।३।७।१८) इत्यधिकरणे। पराक्रमः. ४४।५. * नैवारस्य सप्तदशशरावस्य चरोर्निर्वापे चतुःसंख्यानुग्रहः मुष्टिलोपश्च। (चतुर्भिः कुडवादिभिः शरावं पूरयित्वा निर्वापः। एवं सप्तदशवारम्) वाजपेये। भा. १०।२।२८।६४-६७.

* नैवारचरोः चितौ उपधानार्थता। चरूपधानाधिकरणम्। भा. २।३।७।१८. * नैवारचरौ प्रकृतिभूतनीवारेषु दार्शिकव्रीहिधर्माणां प्रोक्षणादीनामूहः कर्तव्यः। वि. ९।२।१२.

* नैष्ठिकब्रह्मचारिणा अपत्योत्पादनं अनाचारः। वा. १।३।३।७ पृ. २०३.

☙ नोपसर्जनन्यायः। 'प्रधानं यत् प्रकृतं तदेव सर्वनाम परामृशति नोपसर्जनम्' इति नोपसर्जनन्यायः। परिमल. ३।३।१।१ ब्रसू., * ननु नोपसर्जनन्यायो न सर्वनाम्ना परामर्शे प्रवर्तते। 'अथ शब्दानुशासनं केषां शब्दानाम्' इति महाभाष्यदर्शनात्, 'सर्वनाम्नाऽनुसंधिर्वृत्तिच्छन्नस्य' इति वामनसूत्राच्च इति शङ्कते। ३।३।१।१ ब्रसू. * उपलक्षणे हि नोपसर्जनन्यायबाधः स्यात्। कल्पतरुः. ३।३।१।१.

* नौधसं साम 'तं वो दस्म मृतीषहं०' इति तृचे गीयते। वि. १।४।३, * नौधसं साम बृहतीपङ्क्तिरूपऋग्द्वयात्मके सूक्ते प्रग्रथनेन तृचात्मके गीयते, तच्च माध्यंदिने पृष्ठस्तोत्रेषु तृतीयम्। ९।२।६ वर्णकं २.

☙ नौनाविकन्यायः। यथा यद्वोढ्वाह्योढ्वाहकभावस्तत्रायं प्रवर्तते। न चेदृशस्थले अन्योन्याश्रयदोषोऽनतरतीति। (उद्वाह्या नौः, उद्वाहकः नाविकः। उद्वाह्यत्वापेक्षमुद्वाहकत्वम्, उद्वाहकापेक्षं चोद्वाह्यत्वम्)। साहस्री. २१९.

☙ न्यग्रोधक्षेत्रन्यायः। न्यग्रोधः क्षेत्रं इति। भा. ११।१।८।३८। प्रकृतिरियं (स्वभावोऽयं) लोके यथा—'न्यग्रोधतले स्थातव्यम्' इति प्रथमे एव न्यग्रोधेऽवतिष्ठते। टुप्.

☙ न्यग्रोधबीजन्यायः। स्वल्पमपि सूक्ष्ममपि वस्तु सुपात्रभूतं यत्र बहुशो विस्तृतं भवेत्तत्रायं प्रवर्तते। यथा न्यग्रोधबीजं स्तोकमपि सुक्षेत्रे उप्तं सत् बहुविस्तीर्णतां याति, तथा प्रकृतेऽपि। साहस्री. ९८३.

* न्यग्रोधस्तिभीः—न्यग्रोधाङ्कुरान् न्यग्रोधफलानि वा क्षत्रियसोमे फलचमसार्थमाहरन्ति। वा. ३।५।१९।४७.

